I.1.2.10.

होपदधे स हाल्पकादिवासंचित आसाथ होवाचाहं[1] तामिष्टकां दास्ये या ममेत्या[2]
हीति तामभिहायावर्वहे तस्या आवर्हणमन्वग्निर्व्यवशशादाग्नेरनु व्यवशादमसुरा[3]
व्यवशेदुः स ताभिरेवेष्टकाभिर्वज्रान्कृत्वैषां[4] प्रजघान ततो देवा अभवन्परासुरा
भवति हैवात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं विद्वाꣳश्चित्रायामाधत्ते ॥१०॥
ते ह देवाः समेत्योचुश्चित्रं वा अभूम य[5] इयतः[5] सपत्नानवधिष्मेति तच्चित्राया- 17
श्चित्रात्वꣳ हन्ति ह[6] सपत्नꣳ हन्ति द्विषन्तं भ्रातृव्यं य एवं विद्वाꣳश्चित्रायामा-
धत्ते तस्मादप्येतद्राजन्यबन्धव उपेप्सन्ति[7] ते ह जिघाꣳसन्ति[8] वीव जिगीषन्त्ये-
तद्वपि ब्राह्मण आदधीत पाप्मा वै ब्राह्मणस्य सपत्नो हन्ति पाप्मानं परास्य
द्विषन्भ्रातृव्यो भवति य एवं विद्वाꣳश्चित्रायामाधत्ते ॥११॥ तानि ह वा एतानि 18-19
क्षत्राणि नानैव तेपुर्यथासौ वा सूर्यश्चन्द्रमा वा तेषाꣳ होद्यन्नेवादित्यः क्षत्रं वीर्यं
तेजः प्रलुलोप तद्धैषामाददे[9] ते ह देवा ऊचुर्न वा इमानि क्षत्राण्यभूवन्निति
तन्नक्षत्राणां नक्षत्रत्वमा वा एषामदितेति तदादित्यस्यादित्यत्वं तस्मान्न नक्षत्र-
माद्रियेत यदैवैष कदा चोदियादथादधीतैष[10] हि सर्वाणि क्षत्राणि यद्यु नक्षत्र-
कामः स्यादुपो आसीत नक्षत्रमहास्य भवति[11] नो एतस्यानुदयो[12] ऽस्ति तस्मा-
दप्युपैवासीत ॥१२॥ द्वितीयं ब्राह्मणम् ॥

K. I. 1. 3. M.II.1.3.

वसन्तो ग्रीष्मो वर्षा एते देवा ऋतवो ऽथ शरद्धेमन्तः शिशिर एते पितरो 1-2
य एवायमापूर्यते ऽर्धमास एते देवा यो ऽपक्षीयते[13] स पितरो ऽहरेव देवा रात्रिः

---

1 होवाचाहं B. C°. (ह । उवाच । आ । अहम् । ताम् । ; z होवाचाहं ?). 2 ममेत्या B. O. P. C. C°.(pr. m.). 3 व्यव° MSS. 4 °कृत्वैतान् M. 5 Thus P. (pr. m.), य इय्यतः M., य इहतः O. P. (sec. m.), य इहतः C., य इहतः C°., य इहतः My. 6 Thus M., हंतीह the other MSS. 7 उपेप्संति C°. P. C. 8 जिगाꣳसंति MSS. 9 Emended; °दधे MSS. 10 चोदीया° B. C. O. P. M. 11 भवति B. 12 एतस्यानुदयो C°. O. P. C. 13 पक्षीयते B.

पितरः समानस्याह्नः पूर्वाह्ण एव देवा अपराह्णः पितर एते हैवर्तवो[1] दे
पितरः स य एवं विद्वान्देवाः पितर इति ह्वयत्या[2] हास्य[2] देवा देवहूयं भ
पितरः पितृहूयमवन्ति हैनं देवा देवहूये[3] ऽवन्ति पितरः पितृहूये य एवं वि
3 न्देवाः पितर इति ह्वयति ॥१॥ तान्वा एतानुभयानसाववोद्यन्नभिरक्षति
ऽसौ तपति स यत्रोदङ्ङेति तर्हि देवानृतूनभिरक्षति तर्हि देवेष्वृतुषु भवत्यथ
4 दक्षिणैति तर्हि पितॄनृतूनभिरक्षति तर्हि पितृष्वृतुषु भवति ॥२॥ तस्माद्य
दङ्ङियात्तर्ह्येवादधीत[4] तर्हि वा एष देवानुपावर्तते तर्हि देवानभिरक्षति तर्हि दे
भवत्यपहतपाप्मानो वै देवा अप पाप्मानं हते ऽमृता देवा नामृतत्वस्याशा
सर्वमेवायुरेति श्रीर्देवाः श्रियं गच्छति यशो देवा यशो ह भवति तस्मात्तर्ह्या
धीताथ यत्र दक्षिणैति न तर्ह्यादधीत तर्हि वा एष पितॄनुपावर्तते तर्हि पि
भिरक्षति तर्हि पितृषु भवत्यनपहतपाप्मानो वै पितरो न पाप्मानमपहते म
5 पितरः पुरा ह्यायुषो म्रियते तस्मात्तर्हि नादधीत ॥३॥ तद्वै ब्रह्मैव वसन्तः
ग्रीष्मो विड्वर्षास्तस्माद्ब्राह्मणो वसन्त आदधीत ब्रह्म हि वसन्तः क्षत्रियो ग्री
क्षत्रं हि ग्रीष्मो वैश्यो वर्षासु भूमा हि विड् भूमा हि वर्षा यं[5] तु[5] ह
6 कामयेत तमभ्यादधीत ॥४॥ ब्राह्मणो यदि ह कामयेत ब्रह्मवर्चसी स्यामि
7 वसन्त आदधीत ब्रह्म वै वसन्तो ब्रह्मवर्चसी हैव भवति ॥५॥ यदि ह कामये
क्षत्रस्य प्रतिमा स्यां श्रिया यशसेति ग्रीष्म आदधीत क्षत्रं वै ग्रीष्मः क्ष
8 हैव भवति प्रतिमा श्रिया यशसा ॥६॥ यदि ह पुष्टिकामः स्याद्वर्षास्वादधी
9 भूमा वै विड् भूमो वर्षा बहुहैव प्रजया पशुभिर्भवत्येतन्नु यथर्तु ॥७॥ त
आहुरपहतपाप्मानो वा ऋतव इत्यसौ वा एतेषामुद्यन्त्सर्वं[6] पाप्मानमपहन्तीति त
द्यदुवैनं कदा चोपनमेदथादधीताथ[7] यजेत न श्वःश्वमुपासीत न वै मनुष्यः
स्तनं वेद को हि तस्मै मनुष्यो यः[8] श्वस्तनं विद्यात् ॥८॥ तृतीयं ब्राह्मणम् ॥

1 हैवर्तवो B. 2 ह्वयत्यास्य O.P. (pr.m.). 3 देवहूये C., देवहूये B. 4 °वोदङ्ङीया° B.O.P.(s. m.)C. 5 यंतु MSS. 6 एतेषामुद्यन्त्सर्वं O.P., एतेषामुद्यन्सर्वं C. 7 चोपनमेद°C°. 8 यत

स वै यदहरस्य श्वो ऽग्न्याधेयꣳ स्यात्तदहर्दिवैवाश्नीयान्मनो वै देवा मनु- 1-2
ष्यस्याजानन्ति ते हैनमेतद्विदुरग्नी आधास्यमानमेष नः प्रातर्यष्टेति[1] तस्य विश्वे
देवा गृहानभ्यागच्छन्ति ते ऽस्मिन्नेताꣳ रात्रिमुपवसन्ति तस्मादुपवसथस्तन्वा[2]
अनवक्लृप्तं यो मनुष्यान्वसतो[3] ऽत्यश्नादनवक्लृप्तमिदु तदसद्यो देवान्वसतो[3]
ऽत्यश्नात्तस्मान्नाश्नीयादित्याहुस्तदु[4] काममेवाश्नीयान्न वै व्रतचर्यानाहिताग्नेरस्ति[5]
मानुषो न्वा एष तावद्यावदग्नी नाधत्ते तस्मादु काममेवाश्नीयात् ॥१॥ तद्धैक 3
एताꣳ रात्रिमजमुपबध्नन्त्याग्नेयो ऽजो ऽग्नेः सर्वत्यायेति तदु तथा न कुर्याद्यद्य-
स्याज उपक्लृप्तः स्याच्छ्वो भूत एवैनमग्नीधे सꣳस्थितौ दद्यात्तेनैव तं काममाप्नोति
यस्तत्र कामस्तस्मात्तन्नाद्रियेत ॥२॥ तद्धैक एताꣳ रात्रिमेतमोदनं चातुष्प्राश्यं 4
पचन्ति छन्दाꣳसीदं प्रीणीम इति वदन्तो यथा येन वाहनेन स्यन्त्स्यन्त्स्यादिति
तत्सुहितं कुर्यात्तत्सुहितं चिकीर्षेदेवमेतदिति तदु तथा न कुर्याद्यद्वा[6] अस्यर्त्विज-
श्चानृत्विजश्चास्मिन्वसन्तो[6] ऽस्य कुल एताꣳ रात्रिमश्नन्ति तेनैव तं काममाप्नोति
यस्तत्र कामस्तस्मात्तन्नाद्रियेत ॥३॥ तस्य सर्पिरासेचनं कृत्वा सर्पिरासिच्या- 5
श्वत्थीस्तिस्रः समिधो घृतेनान्वज्य समिद्वतीभिर्घृतवतीभिर्ऋग्भिरभ्यादधति
शमीगर्भमिदमाप्नुम इति वदन्तस्तदु तथा न कुर्यात्संवत्सरꣳ ह तथा पुराभ्या-
दध्यात्तेन ह तं काममाप्नुयाद्यस्तत्र कामस्तस्मात्तन्नाद्रियेत ॥४॥ तदु होवाचे- 6
न्द्रद्युम्नो भाल्लवेयो यथान्यत्करिष्यन्नन्यत्कुर्यादिति यथान्यद्वादिष्यन्नन्यद्वदेदिति
यथान्येन पथैष्यन्नन्यं पन्थानं प्रतिपद्येतैवमेतद्य एतमोदनं पचादपराद्धिरिव वै
सा तस्मात्तन्नाद्रियेतेत्यनवक्लृप्तमु वाव तद्यद्यस्मिन्नृचा[7] वा यजुषा वाहुतिं वा

---

1 प्रातर्यष्टेति B. C. O. P. (cp. II. 1. 1. 6). 2 तस्मादुप° B. C.–°स्तंवा B. C. O. P. C°. My., °स्तन्वा M. 3 °न्वसतो B. C. O. P. 4 °त्याहुस्त-स्मादु B. (sec. m.). 5 °रस्ति MSS. 6 Thus (without accents) M., कुर्याद्यद्वास्यर्त्वि° all the other MSS. 7 Thus MSS.; z. तद्यस्मिन्नृचा.

जुहुयुः समिधं वाभ्यादध्युर्यत्तं[1] ततो ऽनु वा गमयेयुर्दक्षिणा वा [2]हरेयुरन्वाहार्य-
पचनो भविष्यतीत्यनु वा ह्येनं गमयन्ति दक्षिणा वा हरन्त्यन्वाहार्यपचनो
7 भविष्यतीति ॥५॥ तदाहुर्जागृयादेतां रात्रिमिति जाग्रति देवा देवानेवैतदुप-
वर्तते सो ऽभिश्रान्ततरस्तयास्वितरः[3] सदेवतरो[4] ऽग्नी आधत्त इति तदु कामं
स्वप्यान्न वै व्रतचर्यानाहिताग्नेरस्ति[5] मानुषो न्वा एष तावद्यावदग्नी नाध-
8 तस्मादु काममेव स्वप्यात् ॥६॥ तद्धैके ऽनुदिते मथित्वोद्यन्तमुपासत उदि-
प्राञ्चमुद्धरिष्याम इत्यहोरात्रयोः परिगृहीतये[6] प्राणोदानयोर्मनसश्च वाचश्चेति
तदु तथा न कुर्यादुभौ वा अस्यैतावनुदित आहितौ भवतो ऽनुदिते हि मथित्वा[7]
तत एव प्राञ्चमुद्धरति[8] य उ ह तमुदित आहवनीयं मन्थेत्स ह तत्पर्याप्नु-
9 यात् ॥७॥ तदु[9] क[9] उभौ[9] निर्मन्थ्यौ कुर्वीताहर्देवा रात्रिः पितरो ऽनपहत-
पाप्मानः पितरो न पाप्मानमपहते मर्त्याः पितरः पुरा ह्यायुषो म्रियते यं
9 ऽनुदित आधत्ते[10] ॥८॥ अथाहर्वै देवा अपहतपाप्मानो वै देवा अप पाप्मानं हते
ऽमृता देवा नामृतत्वस्याशास्ति सर्वमायुरेति श्रीर्देवाः श्रियं गच्छति यशो देवा
10 यशो ह भवति तस्माददित एवादधीत ॥९॥ तदाहुर्यन्नर्चा न यजुषा न साम्ना-
ग्निराधीयते[11] केन न्वग्निराधीयत इति स[12] ह[12] ब्रूयाद्ब्रह्मण एव[13] ब्रह्मणेति[13]
वाग्वै ब्रह्म तस्याः सत्यमेव ब्रह्म ता एताः सत्यमेव व्याहृतयो भूर्भुवः स्वरिति
11 सत्येन हैवास्याहितौ भवतः[14] ॥१०॥ भूरिति वै प्रजापतिरिमामजनयद्भुव इत्य-
न्तरिक्षं स्वरिति दिवमेतावद्वा इदं यावदिमे लोकाः सर्वेण हैवास्याहितौ

---

1 वाभ्यादध्यु° MSS. 2 हरेयु° without acc. the MSS. 3 ? सोभि-श्रांत° B. C., सोभिः श्रांत° C°. P., सोभिः । श्रांत° O, सोविश्रान्त° M. (perhaps better). 4 सदेवतरो B. O. C°. 5 °रस्ति MSS. 6 Thus acc. MSS. 7 मथित्वा B. 8 ? z. °मुद्धरति. 9 Uncertain; the MSS. (exc. M., which has: तदुतउभौ) read as given above; emend perhaps: तदु तदुभौ. 10 आधत्ते B. C. P. O. 11 °यते C°. 12 सह B. C°. 13 एव ब्रह्मणेति C°., एव ब्रह्मणेति B. C. O. P. My. 14 भवतः MSS. and thus also in k. 11-13.

भवतः ॥११॥ भूरिति वै प्रजापतिर्ब्रह्माजनयद्भुव इति क्षत्रꣳ स्वरिति विश- 12
मेतावद्वा इदं यावद्ब्रह्म क्षत्रं विट् सर्वेण हैवास्याहितौ भवतः ॥१२॥ भूरिति 13
वै प्रजापतिरात्मानमजनयद्भुव इति प्रजाꣳ स्वरिति पशूनेतावद्वा इदं यावदात्मा
प्रजा पशवः सर्वेण हैवास्याहितौ भवतः ॥१३॥ स भूर्भुव इत्येतैस्त्रिभिरक्षरै- 14
र्गार्हपत्यमादधाति द्वे परिशिनष्ट्ययातयामतायै[1] केन ह्यमुमादध्याद्यत्सर्वैराद-
ध्यात्ते एव द्वे इतराणि त्रीण्यन्वाप्यायन्ते तेनो तान्ययातयामानि भवन्ति
तान्यष्टावक्षराणि[2] संपद्यन्ते त्रीणीमानि पञ्चामून्यष्टाक्षरा गायत्री गायत्रमग्ने-
श्छन्दः स्वेनैवैनं तच्छन्दसाधत्ते ॥१४॥ देवानु ह वा अग्नी आधित्समानान- 15-16
सुररक्षसानि[3] ररक्षुर्नाग्निर्जनिष्यते नाग्नी आधास्यध्व इति तस्माद्रक्षाꣳसि ततो ह
देवा एतं वज्रं ददृशुर्यदश्वं तमुदयच्छꣳस्तेन[4] नाष्ट्रा रक्षाꣳस्यपहत्य तस्याभये
ऽनाष्ट्रे निवाते ऽग्निरजायत तस्माद्ब्रूयादग्निं [5]मन्थिष्यन्नश्वमानयेति ॥१५॥ स 16
पुरस्तादुपतिष्ठेत तथो वा एष एतं वज्रमुद्यच्छति तेन नाष्ट्रा रक्षाꣳस्यपहत्य तस्या-
भये ऽनाष्ट्रे निवाते ऽग्निर्जायते ॥१६॥ स पूर्ववाट् स्याद्वीर्यं वा अश्व एष वा 17
अपरिमितं वीर्यमभि वर्धते यः पूर्ववाड्यदि न पूर्ववाळपि य एव कश्चित्स्याद्यदि
नाश्वो ऽप्यनड्वान्त्स्यादेषो एवानडुहो बन्धुता ॥१७॥ तं यत्र [6]प्राञ्चमुद्धरिष्य- 18
न्त्स्यात्तद्ब्रूयादश्वेन पूर्वेण प्रेहीति वज्रो वा अश्वो वज्रेणैवैतत्पुरस्तान्नाष्ट्रा रक्षाꣳस्य-
पघ्नन्नभिन्दन्नेत्यथैतमभये ऽनाष्ट्रे निवाते हरति तं तथा हरेद्यथा प्रत्यङ् यजमा-
नमुपाचरेत्[7] ॥१८॥ एष वाव यज्ञो यदग्निः प्रत्यङ् हैवैनं यज्ञः प्रविशति तं 19
क्षिप्रं यज्ञ उपनमत्यथ यस्मादेष पराङ् भवति पराङ् हास्माद्यज्ञो भवति यो हैनं
तत्रानुव्याहरेत्पराङस्माद्यज्ञो ऽभून्नैनं यज्ञ उपनꣳस्यतीतीश्वरो ह तथैव स्यात्तस्मा-
देनं तथा हरेद्यथा प्रत्यङ् यजमानमुपाचरेत् ॥१९॥ एष वाव प्राणो यदग्निः 20

---

1 °ष्ट्ययातयामतायै B. C. O. P., °ष्ट्ययातयामतायै C°. 2 °व° O. P. C°.
3 आधित्समाना° B. C. O. P. M. My. आधित्स्यमाना° C°. 4 Thus acc. MSS.
5 मथिष्य° MSS. 6 प्रांचमु B. O. C. (pr. m.). 7 °मुपाचरेत् C°.

प्रत्यङ् हैवैनं प्राणः प्रविशति स सर्वमायुरेत्यथ यस्मादेष पराङ् भवति परा-
हास्मात्प्राणो भवति यो हैनं तत्रानुव्याहरेत्पराङस्मात्प्राणो ऽभूत्प्राण एनं
हास्यतीतीश्वरो ह तथैव स्यात्तस्मादेनं तथा हरेद्यथा प्रत्यङ् यजमानमुपाचरेद्यो
21 ऽयं पवते ॥२०॥ एष उ वाव यज्ञः प्रत्यङ् हैवैनं यज्ञः प्रविशति तं क्षिप्रं य-
उपनमत्यथ यस्मादेष पराङ् भवति पराङ् हास्माद्यज्ञो भवति यो हैनं तत्रानु-
व्याहरेत्पराङस्माद्यज्ञो ऽभून्नैनं यज्ञ उपनंस्यतीतीश्वरो ह तथैव स्यात्तस्मादे-
22 तथा हरेद्यथा प्रत्यङ् यजमानमुपाचरेद्यो ऽयं पवते ॥२१॥ एष उ वाव प्राणः
प्रत्यङ् हैवैनं प्राणः प्रविशति स सर्वमायुरेत्यथ यस्मादेष पराङ् भवति पराङ्
हास्मात्प्राणो भवति यो हैनं तत्रानुव्याहरेत्पराङस्मात्प्राणो ऽभूत्प्राण एनं
हास्यतीतीश्वरो ह तथैव स्यात्तस्मादेनं तथा हरेद्यथा प्रत्यङ् यजमानमुपा-
23-25 चरेत् ॥२२॥ तमश्वमाक्रमयति तं प्राञ्चमुत्क्रमयति तं पुनरावर्तयति वीर्यं वा
अश्वो नेदस्माद्यजमानात्पराङ् वीर्यमसदिति तमुदञ्चं प्राञ्चमवर्जति तमश्वस्य पदे
आधत्ते वीर्यं वा अश्वो वीर्य एवैनं तदाधत्ते तमुपस्पर्शयति तमुद्यच्छति तमुप-
स्पर्शयति तमुद्यच्छति तं तृतीयेनैव भूर्भुवः स्वरित्याधत्ते त्रयो वा इमे लोका-
26-27 स्तदेनेनेमांल्लोकान्व्यश्नुत[1] इमांल्लोकान्व्याप्नोति ॥२३॥ तदाहुः सकृदेवोपस्पृ-
श्याथ द्वितीयेनैवादध्यादिति यो वा अस्यामप्रतिष्ठितो भारमुद्यच्छतीति नैनमु-
द्यन्तुं शक्नोति[2] समेनं शृणाति स यत्सकृदुपस्पृशति तदस्यां प्रतिष्ठायां
प्रतितिष्ठति स[3] प्रतिष्ठितो[3] द्वितीयेनैव भूर्भुवः स्वरित्याधत्ते तथा न व्यथते
तद्धासुरिः पाञ्चिर्माधुकिरिति[4] दध्रिरे सर्वं वा एतदन्यादियसितामिति प्रथमेनैवैनं
वयं भूर्भुवः स्वरित्यादधामेति त उ ह ते तथा चक्रुरत एकतमेनाधाय[5] ॥२४॥
28 उल्मुकान्युपस्पृशति द्यौरिव भूम्ना भूमिरिव वरिम्णेति यथासौ द्यौर्बह्वी नक्षत्रैरेवं
बहुर्भूयासमित्येवैतदाह भूमिरिव वरिम्णेति यथेयमुर्वी भूमिरेवमुरुर्भूयासमित्येवै-

1 °श्नुत O. P. C. (pr. m.). 2 शक्नोति O. P. C. 3 स प्रति° MSS.
4 °र्माधुकि° B. C. C°. 5 °नाधाय O. P., °नाधाय B.

तदाह तस्मात्ते पृथिवि देवयजनि पृष्ठ इत्यस्या ह्येनं पृष्ठ आधत्ते ऽग्निमन्नादमन्ना-
द्यायादध इत्यन्नादो ऽग्निरन्नादो भूयासमित्येवैतदाह सैषाशीस्तां यदि कामयेत
जपेद्यद्यु कामयेतापि नैवाद्रियेत ॥२५॥ अथ सर्पराज्या[1] ऋग्भिरुपतिष्ठत आयं 29-30
गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रयन्त्स्वः ॥ अन्तश्चरति रोचना-
स्य[2] प्राणादपानती । व्यख्यन्महिषो दिवम् ॥ त्रिꣳशद्धाम विराजति वाक्पत-
ङ्गाय धीयते । प्रति वस्तोरह द्युभिरिति स यदेवास्याधानेन[3] वर्तुभिर्वा संभारैर्वा
नक्षत्रैर्वानाप्तं भवति तदेवास्यैतेन सर्वमाप्नोति तदु नाद्रियेतेयं वाव सर्पराज्ञी यद्धि
किं च सर्पति तस्येयमेव राज्ञी स यदेवास्यामाधत्ते तेनैवास्यैष कृत्स्नः सर्वः
समृद्ध आहितो भवति ॥२६॥ चतुर्थं ब्राह्मणम् ॥ प्रथमोऽध्यायः ॥

K. I. 2. 1. M.II.2.1.

उद्धृत्याहवनीयं पूर्णाहुतिं जुहोत्यन्नादं वा एतं जनयत आत्मनो यदग्निं 1-2
तस्मा एतदन्नमपिदधाति यथा वत्साय वा जाताय तरुणाय वा कुमाराय स्तन-
मपिदध्यादेवमस्मा एतदन्नमपिदधाति तेन शान्तः प्रीत उत्तराणि हवीꣳष्युपरमते
श्रप्यमाणानि शश्वद्धाध्वर्युं वा यजमानं वा प्रदहेद्यदस्मिन्नेतामाहुतिं न जुहुयुस्तौ
ह्यस्य नेदिष्ठमिव चरतः ॥१॥ तां वै पूर्णां जुहोति सर्वं वै पूर्णꣳ सर्वेणैवैनं 3-4
तच्छमयति स्वाहाकारेण जुहोत्यनिरुक्तो वै स्वाहाकारः सर्वं वा अनिरुक्तꣳ सर्वे-
णैवैनं तच्छमयति यामु वा अदः प्रजापतिः प्रथमामाहुतिमजुहोत्स्वाहाकारेण वै
तामजुहोत्सो स्विद्वा एषा निदानेन तस्मात्स्वाहाकारेण जुहोति तस्यां वरं ददाति
सर्वं वै वरः सर्वेणैवैनं तच्छमयति ॥२॥ तदाहुरेतामेवाहुतिꣳ हुत्वेत्यथोत्तराणि 5
हवीꣳषि नाद्रियेतेत्येतयैव तं काममाप्नोति यस्मै कामायोत्तराणि हवीꣳषि निर्व-
पेतेति ॥३॥ स यदग्नये पवमानाय निर्वपति प्राणं वा अस्मिꣳस्तद्दधात्यन्नं वै 6
प्राणो ऽन्नमु वा एषाहुतिस्तदेतयैवास्मिꣳस्तद्दधाति ॥४॥ अथ यदग्नये पावकाय 7

1 Thus C. P. (sec. m.). °राज्ञा B. C°. M., °राज्य O., °राज्या My.
2 रोचनास्य B. C°. C. (sec. m.). 3 °धानेन B.

निर्वपत्यन्नं वा अस्मिंस्तद्दधाति प्रत्यक्षं वा एषाहुतिरन्नं तदेतयैवास्मिन्
8-9 धाति ॥५॥ अथ यदग्नये शुचये निर्वपति वीर्यं वा अस्मिंस्तद्दधात्येतद्
अस्य वीर्यं शुचि य एषो ऽर्चिरुज्ज्वलति तदेतस्यामेव हुतायामुच्चैस्तरा
ज्ज्वलति वीर्यवत्तर इव भवति[1] तदेतयैवास्मिंस्तद्दधाति तस्मान्नाद्रियेत
स्तदु निर्वपेदेव परोक्षमिव वा एतत्तददस्तदिदमितीव[2] यावद्वा अजातो
10 मातुर्वैव तावत्प्राणमनु प्राणिति यथा वा ॥६॥ स यदग्नये पवमानाय निर्
11 प्राणो वै पवमानो जात एवास्मिंस्तत्प्राणं[3] दधाति ॥७॥ अथ यदग्नये पा
12-14 काय निर्वपत्यन्नं वै पावकं जात एवास्मिंस्तदन्नं दधाति ॥८॥ अथ यद
शुचये निर्वपति वीर्यं वा अस्मिंस्तद्दधाति यदो वा अन्नेन वर्धते ऽथ
करोति तदेनमेतदन्नेनैव वर्धयित्वाथास्मिन्नेतद्वीर्यं शुचि दधाति तस्मा
देव तद्वा एतत्समानमेव सद्विपर्यस्तमिव[4] यत्र ह वा अग्निर्देवेभ्यो मनुष्यानु
ववर्त[5] तद्धेक्षां चक्रे मैव सर्वेणेवात्मना[6] देवेभ्यो मनुष्यानुपावृत्सीति[7] स नि
स्तनूरपनिदध एषु लोकेषु तस्य यत्पवमानं रूपमासास्यां तत्पृथिव्यां नि
यत्पावकमन्तरिक्षे तद्यच्छुचि दिवि तदथ मनुष्यानुपाववर्त तदु ह्र्षयः प्रति
बुधिरे ये तर्हि मनुष्याणामृषय आसुरसर्वो वै नो ऽग्निरुपाववृतीति[8] तस्
51-16 एतानि[9] हवींषि निरवपन् ॥९॥ स यदग्नये पवमानाय निर्वपति[10] यैवास्
स्यां[10] पृथिव्यां तनूस्तामेव तेनाप्नोत्यथ यदग्नये पावकाय निर्वपति[10] यैवास्
न्तरिक्षे[10] तनूः पावका तामेव तेनाप्नोत्यथ यदग्नये शुचये निर्वपति[10] यैवास्
दिवि तनूः शुचिस्तामेव तेनाप्नोति तं सर्वं कृत्स्नमग्निमनपनिहितमा
केवलबर्हिः[11] प्रथमं हविर्भवति समानबर्हिषी उत्तरे इमे वै लोका एता

1 भवति C°. O. P. 2 एतत्सद्दद° B. 3 प्राणं B. O. 4 सद्विपर्य°...
5 °पाववर्त O. P., °पाववर्ते C°. 6 सर्वेणैवा° B., सर्वेणैवा° P. (pr. m.). सर्वे...
M. My. 7 °नुपावृ° O. 8 °रुपाववृतीति all exc. M: °रुपाववृ...
9 तस्मादेतानि B. O. 10 °पति यैवा° P. C., °पति यैवा° O. 11 केवल...
B. C. O. P. C°. (pr. m.).

हवींषि[1] सो ऽयमद्धातमामिव लोको बहुलतम[2] इव लेलयमिवेदमन्तरिक्षं[3] लेल-
येव द्यौरुभे चिदेनं प्रत्युद्यामिनी भवतामिति सभारतायै ॥१०॥ अष्टाकपाला 17-19
आग्नेयाः पुरोळाशा भवन्त्यष्टाक्षरा गायत्री गायत्रमग्नेश्छन्दः स्वेनैवैनं तच्छ-
न्दसाधत्ते तानि चतुर्विंशतिः संपद्यन्ते चतुर्विंशत्यक्षरा वै गायत्री गायत्र-
मग्नेश्छन्दः स्वेनैवैनं तच्छन्दसाधत्ते गायत्र्यौ[4] याज्यानुवाक्या भवन्ति गायत्र-
मग्नेश्छन्दः स्वेनैवैनं तच्छन्दसाधत्ते ऽथैष एवादित्यश्चरुरुपरिष्टाद्भवति प्रच्यावयत
इव ह वा एषो ऽस्मान्मनुष्यलोकाद्देवलोकमभ्यात्मानं य एतानि हवींषि
निर्वपत ऊर्ध्व इव हि समारोहन्नेतीयमु वा अदितिरियं प्रतिष्ठा तदस्यामेव
प्रतिष्ठायामन्ततः प्रतितिष्ठति ॥११॥ तस्य विराजौ संयाज्ये स्यातां विराडीय- 20-21
मित्यथो त्रिष्टुभौ त्रिष्टुब्भीयमित्यथो जगत्यौ जगती हीयमिति विराजौ[5] त्वेव
स्थितं तस्य धेनुर्दक्षिणा धेनुरिव वा इयं मनुष्येभ्यः सर्वान्कामान्दुग्धे सर्वान्वै
कामान्धेनुर्दुग्धे मातेव वा इयं मनुष्याणां च पशूनां च मातेव धेनुस्तस्मादस्य
धेनुर्दक्षिणैतन्न्वेकमयनम्[6] ॥१२॥ अथ द्वितीयमग्नय एवाष्टाकपालं पुरोळाशं 22
निर्वपति परोक्षमिव वा एतदग्नये पवमानायाग्नये पावकायाग्नये शुचय इत्यथास्यैवं
प्रत्यक्षमञ्जसाग्नी आहितौ भवतस्तस्य मूर्धन्वत्यौ याज्यानुवाक्ये भवतो ऽथैष
एवादित्यश्चरुरुपरिष्टात्तस्यैषैव बन्धुतैषा दक्षिणा ॥१३॥ प्रथमं ब्राह्मणम् ॥

K. I. 2. 2. M.II.2.2.

घ्नन्ति ह वा एतद्यज्ञं यदेनं तन्वते यद्राजानमभिषुण्वन्ति तत्तं घ्नन्त्यथ 1-2
यत्पशुं संज्ञपयन्ति यद्विशासति तत्तं घ्नन्त्युलूखलमुसलेन दृषदुपलेन हविर्यज्ञं
घ्नन्ति स एवं हतो यज्ञो न ददक्षे तं देवा दक्षिणाभिर्दक्षयां चक्रुस्तस्माद्दक्षिणा
नाम यदाभिरदक्षयंस्तस्मादु दक्षिणा दद्यात्स यद्दक्षिणा ददाति यदेव[7] हतस्य

---

1 हवींषि B. O. C. (pr. m.). 2 °तर M. 3 Thus C°. (sec. m.) and cp. IV. 8. 3. 12, लेलयमिवे° the other MSS. 4 गायत्र्यो C°. 5 विराजौ C°. 6 Thus, without acc. M. My., °णैतन्न्वेक° the other MSS. 7 यदेव C.O.P.C°.

3 यज्ञस्य व्यथते तदेवास्यैतद्दक्षिणाभिर्दक्षयत्यथ समृद्ध एव यज्ञः ॥१॥ ताः षट्
दद्यात्षड्वा ऋतवः संवत्सरस्य संवत्सरो यज्ञः प्रजापतिः स यावानेव प्रजापति-
4 र्यावत्यस्य मात्रा तावतीभिरेवैनमेतद्दक्षयति ॥२॥ अथो द्वादश दद्याद्द्वादश
मासाः संवत्सरस्य संवत्सरो यज्ञः प्रजापतिः स यावानेव प्रजापतिर्यावत्यस्य
5 मात्रा तावतीभिरेवैनमेतद्दक्षयति ॥३॥ अथो चतुर्विंशतिं दद्याच्चतुर्विंशतिर्वा
अर्धमासाः संवत्सरस्य संवत्सरो यज्ञः प्रजापतिः स यावानेव प्रजापतिर्याव-
त्यस्य मात्रा तावतीभिरेवैनमेतद्दक्षयत्येता आदिष्टाः कामं[1] यथाश्रद्धं[1] भूयसी-
6-7 र्दद्यात् ॥४॥ द्वया उ वाव देवा देवा अहैवान्यद्देवा अथेमे मनुष्यदेवा[2] य इमे
ब्राह्मणाः शुश्रुवांसो ऽनूचानास्तेषां द्वेधाविभक्तो[3] यज्ञ आहुतय एव देवानां
दक्षिणा मनुष्यदेवानां[4] ब्राह्मणानां शुश्रूपामनूचानानां स आहुतिभिरेव
देवान्प्रीणाति[5] दक्षिणाभिर्मनुष्यदेवान्ब्राह्मणाञ्छुश्रुषो ऽनूचानांस्त एनमुभये
देवाः प्रीताः सुधायां दधति यथो वै रेतो योनौ दध्यादेवमेतदृत्विजः स्वर्गे
लोके यजमानं दधति तेभ्य एतद्ददाति ये मेदं संप्रापिपन्नितीति[6] नु दक्षिणा-
8-9 नाम् ॥५॥ अथ देवाश्च ह वा असुराश्चोभये प्राजापत्या अस्पर्धन्त ते होभये
ऽनात्मान आसुर्मर्त्या ह्यासुरनात्मा[7] हि स यो मर्त्यस्तेषु हाग्निरेवामृतमास[8]
तमुभय उपाजीवंस्तेषां ह स्म यं घ्नन्ति तद्ध स्मैव स भवति ततो ह देवास्त-
नीयांस इव परिशिशिषिरे ते हार्चन्तः[9] श्राम्यन्तः[9] कथं सपत्नानसुरानभि-
10 भवेमेति ते हैतदेवाग्न्याधेयं ददृशुः ॥६॥ ते होचुर्हन्तेदममृतमन्तरात्मन्याधा-
येत्यमृता भूत्वास्तर्या स्तर्यान्त्सपत्नान्मर्त्यानसुरानभिभविष्याम इति ॥७॥ ते
होचुरुभयेषु वै नो ऽयमग्निरिति हन्तासुरेभ्यः प्रतिप्रब्रवामेति ते हासुरानेत्योचुः

1 कामं यथाश्रद्धं B. O. P. C. (pr. m.), कामं यथाश्रद्धं C°. (यथाश्रद्धं Madhy. II. 2. 2. 5, but यथाश्रद्धं XIII. 8. 4. 10). 2 मनुष्य° B. 3 द्वेधा° B. 4 मनुष्यदेवानां P. O. 5 प्रीणाति C°., प्रीणाति C. O. P. 6 °पन्नितीति O. P. 7 ह्यासुरनात्मा B., ह्यासुरनात्मा C°. 8 Thus MSS., z. °मृत आस ? 9 हार्चन्ताश्राम्यन्त M.

2.2.8.

वयमग्निं धास्यामहे ऽथैनं यूयं किं करिष्यथेति ते हासुरा असूयन्त इवोचुर-
नं वयं न्येव धास्यामह इत्यत्र तृणानि दहात्र दारूणि दहात्र माꣳसं पचा-
त्रौदनं पचेति सो ऽयमग्निर्येनेदं मनुष्या भुञ्जते यमिदमिमाः प्रजा उपजी-
वन्ति ॥८॥ अथैनं देवा[1] अन्तरात्मन्याधायामृता[1] भूत्वास्तर्या[2] स्तर्यान्त्सपत्ना- 14
न्मर्त्यानसुरानभ्यभवꣳस्तस्मै कमग्नी आदधीत नामृतत्वस्याशास्त्यस्तर्यो[3] हैव
भवति न हैनं तुस्तूर्षमाणश्चन स्तृणुते तस्माद्यदाहिताग्निश्चानाहिताग्निश्च स्पर्धेते
आहिताग्निरेवाभिभवत्यस्तर्यो[4] हि स भवति ॥९॥ तं यत्रादो मन्थन्ति तदेनं 15-17
जातमभिप्राणिति प्राणो वा अग्निर्जातमेवैनं तज्जनयत्यथोदनिति[6] तदेनमन्तरा-
त्मन्याधत्ते ऽथेतरमुज्ज्वलयतीह[7] होष्यामीह यद्य इह साधु[8] करिष्यामीति ॥१०॥
तद्धैकेषाभाग इव भवत्यन्वगान्निति तदु नाद्रियेत न वा अस्यैषो ऽनुगच्छति यो
ऽस्यान्तरात्मन्याहितो भवत्यनो व्ययासीद्रथो व्ययासीत् ॥११॥ अन्तरागादिति
हैकेषामाग इव भवति तदु[9] नो एवाद्रियेत न वा अस्यैतमनो वियाति[10] न रथो
वियाति[10] नान्तरेणैति[11] कश्चन यो ऽस्यान्तरात्मन्याहितो भवति ॥१२॥ ते वा 18
एते प्राणा एवाग्नयः प्राणोदानावेवाहवनीयश्च गार्हपत्यश्च व्यानो ऽन्वाहार्यपच-
नस्तस्य वा एतस्याग्न्याधेयस्य सत्यमेवोपचारः ॥१३॥ स यथा समिद्धमग्निं 19-20
घृतेनाभिषिञ्चेत्तस्य वै भूयो भूयस्तेजो भवति स श्वः श्वः श्रेयान्भवत्येवꣳ हैव
कीर्त्या यशसा श्रिया श्वः श्वः श्रेयान्भवति यो ऽग्नी आधाय सत्यं वदति ॥१४॥
अथ यथा समिद्धमग्निमुदकेनाभिषिञ्चेत्तस्य वै कनीयः कनीयस्तेजो भवति स
श्वः श्वः पापीयान्भवत्येवꣳ हैव कीर्त्या यशसा श्रिया श्वः श्वः पापीयान्भवति
यो ऽग्नी आधाय मृषा वदत्यरुणꣳ हौपवेशिं ज्ञातय ऊचुः[12] स्थविरो वा अस्यग्नी

1 देवाः अंतरा° O. P. 2 भूत्वास्तर्या C°. P. C. (sec. m.). 3 °शास्त्यस्तर्यो B. 4 °त्यस्तर्यो B., °त्यस्तर्यो O. P. C. (pr. m.). 5 °र्जातमेवैनं C°. 6 °स्यथोदनिति C°., °त्यथोदनिति C., °त्यथोदनिति O. P., °त्यथोदनिति B. 7 °लयंतीह C°. O. P. C. 8 MSS. without acc. 9 तद् O. 10 वियाति B. C. (pr. m.), वीयति C°. C. (sec. m.). 11 °णैति B. C°. C. (pr.m.). 12 ऊचु My.

आधत्स्वेति ॥१५॥ स होवाच तन्मैतद्ब्रूथ वाचंयम एवैधीति मा व्रते
ह्यग्नी आधाय मृषा[1] वदेन्नो वाचा वदतो[2] ऽमृषोद्यमस्ति[2] तस्मादु सत्यमेव
दिषेत्[3] ॥१६॥ द्वितीयं ब्राह्मणम् ॥

M.II.2.3. K. I. 2. 3.

1 वरुणो हैनद्राज्यकाम आदधे स राज्यमगच्छत्तस्माद्यश्चैतद्वेद यश्च न
राजेत्येवाचक्षते सोमो यशस्कामः स यशो ऽभवत्तस्माद्ये च सोमे ल
च न लभन्त उभय एवैनदागच्छन्ति यश एवैतद्द्रष्टुमागच्छन्ति यशो[4] ह
2-3 राज्यं गच्छति य एनदेवं विद्वानाधत्ते[5] ॥१॥ अग्ना उ ह वै देवाः
रूपाणि संनिदधिरे यानि च ग्राम्याणि यानि चारण्यानि विजयं वोपप
कामचारस्य वा कामायायं नो गोपिष्ठो गोपायत्विति वा तान्हाग्निर्नि
तान्त्संगृह्यर्तून्प्रविवेश[6] पुनरेम इति देवा एदग्निं[7] तिरोभूतं तेषाᳪ ह
4 किमिह[8] कार्यं[9] केह[10] प्रज्ञेति ॥२॥ ततो हैतत्त्वष्टा पुनराधेयं ददर्श तदा
ऽग्नेः प्रियं धामोपजगाम तस्मा एतान्यग्निरुभयानि रूपाणि प्रतिनिःससर्ज
च ग्राम्याणि यानि चारण्यानि तस्माद्वा आहुस्त्वाष्ट्राणि रूपाणीति त्व
5-6 सर्वᳪ रूपमुप तु हैवान्याः प्रजा यावच्छो यावच्छास्तिष्ठन्ते[11] ॥३॥ तस्मै
राधेयमादधीत तथा हैवाग्नेः प्रियं धामोपगच्छति तस्मा एतान्यग्निरुभयानि
प्रतिनिःसृजति यानि च ग्राम्याणि यानि चारण्यानि तस्मिन्नेतान्यु
रूपाणि दृश्यन्ते परमता वै सा स्पृहयन्ति[12] हास्मै तथा पुष्यति लो
अप्याग्नेयो ऽयं यज्ञो ज्योतिरग्निः पाप्मनो दग्धा सो ऽस्य पाप्मानं द

---

1 मृषा O. 2 वदतोमृषोद्यमस्ति MSS., r. perhaps वदतो मृषो
3 सत्यमेववाविव° B. 4 यशो B. 5 °धत्ते B. 6 Thus MSS., r. तानि
and तानि संगृह्य°. 7 एतदग्निं B. C. (pr. m.). My. 8 किमिह B. C. C°,
O. P. 9 कार्यं MSS. 10 केह B. C. (pr. m.), केह O. P. 11 C°. M.
यावत्स° the second time, but with a curve over त्स by a second h
°स्तिष्ठंते MSS. 12 स्पृह° O. P. C. (pr. m.).

I.2.3.4.

ज्योतिरेवेह श्रिया यशसा भवति[1] ज्योतिरमुत्र पुण्यलोकत्वा[2] ॥ ४ ॥ स वै 7-8
वर्षास्वेवादधीत वर्षा वै सर्व ऋतवो वर्षा हि वै सर्व ऋतवोऽथादो वर्षमकुर्मादो
वर्षमकुर्मेति वर्षाभिरेव संवत्सरान्त्संपश्यन्ति वर्षा हि वै सर्व ऋतवोऽथ वर्षा
उ सर्वेषामृतूनाꣳ रूपम् ॥ ५ ॥ भवति वै तद्वर्षासु यत्राहुर्ग्रीष्म एवाद्येति भवति
यत्राहुः शिशिर एवाद्येति वर्षाद्विदु वर्षेष्वथैतत्परोक्षमिव रूपं यदेव पुरस्ताद्वाति
तद्वसन्तस्य रूपं यत्स्तनयति तद्ग्रीष्मस्य यद्वर्षति तद्वर्षाणां यद्विद्योतते तच्छरदो
यद्वृष्ट्वोद्गृह्णाति तद्धेमन्तस्य वर्षाः सर्व ऋतव ऋतून्प्राविशदृतुभ्य एवैनमेत-
न्निर्मिमीते ॥ ६ ॥ आदित्यो वाव सर्व ऋतवः स यदैवोदेत्यथ[3] वसन्तो यदा
संगवोऽथ ग्रीष्मो यदा मध्यंदिनोऽथ वर्षा यदा न्यह्नोऽपराह्णोऽथ शरद्यदास्त-
मेत्यथ[4] हेमन्तः ॥ ७ ॥ स यत्र मध्यंदिनः स्यात्तर्ह्येवादधीत तर्हि वा एषोऽस्य 9-10
लोकस्य नेदिष्ठो भवति[5] नेदिष्ठादेवैनमेतन्मध्यान्निर्मिमीते छायो[6] वा अयं पाप्मा
मनुष्यमनुषक्तश्चरति सोऽत्र कनिष्ठो भवत्यधस्पदमिव ह्यसीति[7] कनिष्ठमेवैतत्सन्तं
पाप्मानमवबाधते ॥ ८ ॥ स वै कुशैरुद्धरति दारुभिर्वा अग्र उद्धरति दारुभिरग्रे 11
दारुभिरपरं जामि कुर्यात्समदं कुर्यादापो वै वर्षा आपः कुशा वर्षा ऋतून्प्रावि-
शदद्भिरेवैनमेतदद्भ्यो निर्मिमीते[8] ॥ ९ ॥ सोऽर्कपलाशाभ्यां व्रीहिमयमपूपं कृत्वा 12
यत्र गार्हपत्यमाधास्यन्भवति तन्निदधाति तद्गार्हपत्यमभ्यादधाति ॥ १० ॥ अर्क- 13
पलाशाभ्यामेव[9] यवमयमपूपं कृत्वा यत्राहवनीयमाधास्यन्भवति तन्निदधाति
तदाहवनीयमभ्यादधाति पूर्वाभ्यामेवैनमेतदग्निभ्यामन्तर्दधाति ॥ ११ ॥ तदु 14
नाद्रियेत रात्रिभिर्वाव सो[10] ऽन्तर्हितो[10] ऽथैतमाग्नेयं पञ्चकपालं पुरोळाशं नि-
र्वपति तस्य पञ्चपदाः पङ्क्तयो याज्यानुवाक्या भवन्ति पञ्चर्तव ऋतून्प्राविशदृतुभ्य
एवैनमेतान्निर्मिमीते ॥ १२ ॥ आग्नेयः सर्वो भवति तया ह्यग्नेः प्रियं धाम 15-17

---

1 भवति O.P.C. (pr. m.). 2 पुण्यलोकत्वा B. C. (pr. m.), पुण्यलोकत्वाद् M. 3 यदेवो° 4 °दास्तमे° B. 5 भवति B.C.O.P. 6 छायो(तसायो M.)MSS. 7 ? Thus MSS. ( exc.M.: वाटवसीति ), r. perhaps ह्यस्तीति ? 8 °मीते B. 9 अर्कपलाशा° C°. C. (pr. m.). 10 सोंतर्हितो C°. C.

त्वष्टोपागच्छदुपांश्वेनेन चरन्ति यद्वै ज्ञातिभ्यो वा सखिभ्यो वा निष्
करिष्यन्भवति तिर इव वै तेन बोभुवत्तिर इव स्विद्वा एतद्यदुपांशु वै
ऽन्यो यज्ञो ऽथैष निष्केवल्य एवाग्नेय उत्तममनुयाजमुच्चैर्यजति कृतं
18 तर्हि भवति सर्वो हि कृतमनुबुध्यते[1] ॥ १३ ॥ स यत्राध्वर्युरतिक्रम्याश्रा
समिधो यजेत्याग्नेयमेव तद्रूपं परोक्षमिव त्वग्नीन्यजेति हैव तत्र ब्रूयात् ॥ १
19 स यजत्यग्न आज्यस्य व्यन्तु वौषळित्यग्निमाज्यस्य वेतु वौषळित्यग्निरा
20 व्यन्तु वौषळित्याग्निराज्यस्य वेतु वौषळिति[2] ॥ १५ ॥ अथ स्वाहाग्निं स्वा
पवमानमिति यद्यग्नये पवमानाय ध्रियेरन्त्स्वाहाग्निमिन्दुमन्तामिति यद्यग्नय इ
मते ध्रियेरन्त्स्वाहाग्नीनाज्यपान्जुषाणा अग्नय आज्यपा[3] आज्यस्य व्यन्तु
21 ळित्येवमेतान्प्रयाजान्त्सर्वानाग्नेयान्करोति ॥ १६ ॥ अथाहाग्नये ऽनु
त्याग्नेयमाज्यभागं सो ऽन्वाहाग्निं स्तोमेन बोधय समिधानो अमर्त्यं
हव्या देवेषु नो दधदिति स्वपितीव स्विद्वा एतद्यदुद्वासितो भवति बोधय
22 नमेतत्समुद्दीपयति जुषाणो अग्निराज्यस्य वेत्विति यजति ॥ १७ ॥ अ
हाग्नये पवमानायानुब्रूहीति यद्यग्नये पवमानाय ध्रियेरन्त्सो ऽन्वाहाग्न आ
पवस आसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनामिति तथाहाग्नेयो[4]
सोमो वै पवमानो[5] नो[5] सौम्यादाज्यभागाद्यन्ति जुषाणो अग्निः प
23 आज्यस्य वेत्विति यजति ॥ १८ ॥ अथाहाग्नय इन्दुमते ऽनुब्रूहीति यद्य
इन्दुमते ध्रियेरन्त्सो ऽन्वाहेह्यू षु ब्रवाणि ते ऽग्न इत्थेतरा गिरः । एभिर्व
इन्दुभिरिति तथाहाग्नेयो[6] भवति सोमो वा इन्दुर्नो सौम्यादाज्यभागा
24 जुषाणो अग्निरिन्दुमानाज्यस्य वेत्विति यजति ॥ १९ ॥ अथाहाग्नये
ब्रूहीत्यग्निं यजेत्यग्नये स्विष्टकृते ऽनुब्रूह्यग्निं स्विष्टकृतं यजेति[7] ॥ २० ॥

1 °नुबुध्यते B. 2 °ळिति or लिति MSS. 3 आज्यपा O. C. (pr.
4 तथाहा° C., तथाहा° B. 5 पवमानो नो C°. 6 Thus O., तथाहाग्नेयो B., तथाहा
C. C°., तथाहाग्नेयो P. 7 यजेतेवषट्कृते जुहोति M.

यत्राध्वर्युरतिक्रम्याश्राव्याह देवान्यजेत्यग्नीन्यजेति हैव तत्र ब्रूयात् ॥ २१ ॥ स 26
यजत्यग्नेर्वसुवने वसुधेयस्य वेतु वौषळित्यग्ना उ वसुवने वसुधेयस्य वेतु वौष-
ळिति देवो अग्निः स्विष्टकृदिति स्वयमाग्नेयस्तृतीयो ऽनुयाजः ॥ २२ ॥ ता 27
वा एताः षड्विभक्तयश्चतस्रः प्रयाजेषु द्वे अनुयाजेषु षड्वा ऋतव ऋतूंन्प्राविशदृतु-
भ्य एवैनमेतन्निर्मिमीते तासां षण्णां विभक्तीनां द्वादश वा त्रयोदश वाक्षराणि
द्वादश वा वै त्रयोदश वा संवत्सरस्य मासाः संवत्सर[1] ऋतून्प्राविशदृतुभ्य[1] ए-
वैनमेतान्निर्मिमीते न द्वे चन सह करोति[2] जामि हि कुर्याद्यद्वे चित्सह कुर्याद्वेतु
व्यन्त्विति प्रयाजानां रूपं वसुवने वसुधेयस्य वेत्वित्यनुयाजानां हिरण्यं द-
क्षिणाग्नेयो ऽयं यज्ञो[3] ऽग्नेर्हि[3] रेतो[3] हिरण्यमनड्वान्वानड्वान्हि वहसाग्नेयो[4] ऽन्य-
वदग्धमिव[4] ह्यनळुहो वहो भवति देवानां हव्यवाहनो ऽग्निर्वहत्येष मनुष्येभ्यः
॥ २३ ॥ तृतीयं ब्राह्मणम् ॥ 27-28

K. I. 2. 4. M.II.2.4.

प्रजापतिर्ह वा इदमेक एवास स हेक्षां चक्रे कथं नु प्रजायेयेति सोऽश्रा- 1
म्यत्स तपो ऽतप्यत सो ऽग्निमेव मुखाज्जनयां चक्रे तस्माद्वा अग्निरन्नादो मुखाद्धि
जातो मुखेन ह्यन्नमद्यते ॥ १ ॥ स वा एषो ऽग्रे देवतानामजायत तस्मादग्निर्ना- 2
माग्निर्ह[5] वै नामैतद्यदग्निरित्याहुः स उ जातः पूर्वः प्रेयाय तद्धेवास्य द्वितीयम-
ग्नित्वं[6] पूर्वं हि यन्तमाहुरग्र एतीति ॥ २ ॥ तस्माद्ध प्रजापतिर्बिभयां चका- 3.4
रान्नादं वा इममजीजन आत्मनो[7] नो वा इहान्यदन्नमस्ति यं वा अयं नाद्या-
दिति काल्वालीकृतो हेयं तर्हि पृथिव्यास तद्धैवास्य मनस्यासाथैनमग्निर्व्यात्ते-
नोपपर्यावर्वर्त तस्य भीतस्य स्वो महिमापचक्राम वाग्घै स्वो महिमा वाग्घैवास्मा-
दुपचक्राम स आत्मन्येवाहुतिमियेष स[8] इत्युदमृष्ट तस्मादिदं चालोमकमिदं

---

1. Thus Mss., r. संवत्सरमृतून्प्रा°. 2. करोति Co. 3. यं यज्ञोग्नेर्हिरेतो Co. 4. °ग्नेयोग्न्यवदग्धमिव B. C., °ग्नेयोग्न्यवदग्धमिव O. P., °ग्नेयोग्न्यवदग्धमिव Co. 5. तस्मादग्निर्नामाग्निर्ह O. P. (Sec. m). Co. My. 6. ग्नित्वं O. My. 7. °त्मनो O. P. C. 8. स B. C.

च तन्नो एव विवेद घृताहुतिं वा पयआहुतिं वोभयं त्वेव तत्पयः ॥ ३ ॥
हास्मै न छदयां चकार केशमिश्रेव हास तामोषं[1] धयेति व्यौक्षत ओषध
संबभूवुस्तस्मादोषधयो नाम स द्वितीयमुदमृष्ट तन्नो एव विवेद घृताहुतिं
पयआहुतिं वोभयं त्वेव तत्पयः ॥ ४ ॥ सा हास्मै छदयां चकार स ह[2] प्र
पतिर्व्यचिकित्सज्जुहवानी३ मा हौषा३मिति तꣳ स्वो महिमाभ्युवाद[3] जुहु
स विदां चकार स्वो वै मा महिमाह[4] जुहुधीत्याहेति स स्वाहेत्येव जुहवां च
तत एवासा उदियाय यो ऽसौ तपति ततो ऽयं प्रबभूव यो ऽयं पवते त
ऽग्निः शान्तः पराङ् परावव्रतैष उ एव स्वाहाकारस्य बन्धुस्तस्मादप्येतर्हि स्वा
हेत्येव जुह्वति ॥ ५ ॥ स एवꣳ हुत्वा प्रजापतिः प्र चाजायताग्नेश्च मृत्यो
रत्स्यत आत्मानमत्रायतैवꣳ[5] ह वाव प्रजायत एवमग्नेर्मृत्योरत्स्यत आत्मानं त्रा
य एवमेतद्वेद ॥ ६ ॥ तं यत्रादो[6] ऽभ्यादधाति यथा मातुर्वोपस्थात्पितु
संभवेदेवꣳ हैव संभवति शरीरꣳ हैवास्य दहति तस्मादाहुर्नानाहिताग्निः संभ
तीति स यत्र हुत्वोपामृष्ट[7] ततो विकङ्कतः संबभूव स वा एष वृक्षो यज्ञि
यज्ञपात्र्यो[8] ह्येतद्धैव विचिकित्साया जन्म यः प्रजापतिर्व्यचिकित्सत्स वै
श्रेयस्यध्रियत[9] यः प्र चाजायताग्नेश्च मृत्योरत्स्यत आत्मानमत्रायत श्रेयसि
वाव ध्रियते विचिकित्सन्य[10] एवमेतद्वेद ॥ ७ ॥ ते वा एते वीरा देवानामज
यन्तायमग्निर्यो ऽयं पवते सूर्य आ ह वा अस्य वीरो जायते य एतान्वीरान्दे
वानां वेद ॥ ८ ॥ ते होचुरस्मान्प्रजापतिः पिताजीजनतेति[11] हन्त वयं तज्ज
यामहै यदस्मानन्वसदिति ते ह गायत्रेण तुष्टुविरे ऽपहिंकारेण[12] परिवत्

1 तामोषं Co. (sec. m.), तमोष M. 2 °पतिर्व्यचि° B. C. O. P., °पतिर्व्यचि° Co. 3 महिमाभ्युवाद Co. 4 महिमा Co. 5 आत्मानमत्रायत B. O. P. Co. (sec. m.). 6 तंयत्रादो B. C. O. P., तंयत्रादो Co. 7 हुत्वोपामृष्ट B. C. O. P. हुत्वोपामृष्ट Co. (sec. m.). 8 Thus, witout acc., M. only (cp. v. 6.7.7); यज्ञपात्रियो the other Mss. 9 °स्यध्रियत B. 10 विचिकि° Mss. 11 पिताजीजनदिति M. 12 °कारेण B. C. O. P.

यत्पर्यवृण्वन्त्सो ऽयꣳ समुद्र इयमेव पृथिव्यास्तावस्ते ह प्राञ्च उच्चक्रमुः पुनरेम इत्येद्रां[1] जाताꣳ सा हैनानुदीक्ष्य हिं चकार ते विदां चक्रुरेष वाव साम्नो हिंकार[2] इति ततो हार्वाक्सहिंकाराणि सामान्यपहिंकाराणि हैव ततः पुरा बभूवुस्तस्माद्ध गौरुपजीवनीया साम्नो हि हिंकारं बिभर्त्युपजीवनीयो ह वात्र भवति य एतꣳ साम्नो हिंकारं[2] वेद ॥९॥ ते होचुर्भद्रं वा इदमजीजनामहि[3] य इमामजीजनामहीत्यन्नꣳ ह्यजनयन्त न ह्यृतेऽन्नमस्ति यज्ञꣳ ह्यजनयन्त न ह्यृतेगुर्यज्ञस्तायते तद्धैतदेव यज्ञस्य नाम यदेतासां तस्माद्भद्रं[4] पुण्यमिति परिहरेदुपनामुको हैनं यज्ञो भवति बह्व्यो हास्यैता भवन्ति य एवं विद्वान्भद्रं[5] पुण्यमिति परिहरति[6] ॥१०॥ ताꣳ हाग्निरभिदध्यौ मिथुन्येनाꣳ स्यामिति ताꣳ संबभूव तस्याꣳ रेतः प्रसिषेच तत्पयो ऽग्नेर्हि वा एतद्रेतस्तस्मादेता आमाः सत्यः शृतं दुहते तस्मान्नानारूपाः सत्यः[7] सदृशमेव[7] दुहते ऽग्निसंकाशममग्नेर्हि रेतस्तस्मात्प्रथमदुग्धमुष्णमिव भवत्यग्निरेतसꣳ हि ॥११॥ ते होचर्जुहवामहा इदं प्रेदं जनयामहा इति स होवाचाग्निर्मह्यमेव प्रथमाय जुहुतेति मह्यमिति यो ऽयं पवते मह्यमिति सूर्यस्ते होचुरसंपादयन्तः प्रजापतिं पितरं प्रत्ययामेति[8] यशौ स आह तस्मै प्रथमाय जुहवामेति ॥१२॥ स होवाच प्रजापतिरग्नय एव प्रथमाय जुहुतेति स स्वꣳ रेतो ऽनुष्ज्या[9] प्रजनयिष्यत इति सूर्याय प्रातरित्यथ यदेव हूयमानस्य व्यश्नुषे तत्तवेतीमसुवाच यो ऽयं पवते तदप्येतर्हि तथैव जुह्वत्यग्नय एव सायꣳ सूर्याय प्रातरथयदेव हूयमानस्य व्यश्नुते तदेतस्य य एष पवते त एवं जुह्वतो देवा इमां प्रजातिं प्राजायन्त[10] येयमेषां प्रजातिरिमां जितिमजयन्येयमेषां[11] जितिरिमां विजितिं व्यजयन्ताग्निरेवेमं लोकमजयद्यो ऽयं

13.14

15

16

17.18

---

१ इत्येतद्रां B. M., इत्येद्रां the other MSS. २ हिंकार C°. ३ Thus, without acc., M., इममजी° the other MSS. ४ Thus M. only. तस्मान्मद्रं the other MSS. ५ विद्वान्मद्रं all. ६ परिहरति C°. ७ सत्यः सदृशमेव O. P. C. (pr. m.). ८ प्रत्ययामेति MSS. ९ नुष्ज्या B. O. P. १० प्राजायंत B. C. O. P. ११ जितिमजयन्येयमेषां P. °मजयंन्येयमेषां O., °मजयंन्येयमेषां C.

पवते सो ऽन्तरिक्षं दिवमेव सूर्यः स य एवं विद्वान्जुहोत्येता२ँ हैव प्र[...]
प्रजायत एतां जितिं जयत्येतेषा२ँ श्लोको भवति ॥१३॥ चतुर्थं ब्राह्मण[...]
द्वितीयो ऽध्यायः ॥

M.II.3.1. K. I. 3. 1.

1–3 सूर्यो ह वा अग्निहोत्र२ँ स यदेतस्या आहुतेरग्र उदैत्तस्माद्ध सूर्य ए[...]
होत्रं तद्यदस्तमिते जुह्वति य इदं तस्मिन्निह सति जुहवामेत्यथ[1] यत्पुरो[...]
ह्वति प्रातर्य इदं तस्मिन्निह सति जुहवामेति[1] स वा एषो ऽस्तंयन्नग्निमेव [...]
गर्भो भूत्वा प्रविशति तं गर्भं भवन्तमिमाः सर्वाः प्रजा अनु गर्भो भव[...]
ळिता[2] इव हि शेरते ऽसंजानाना अथ यद्रात्रिस्तिर एव तत्कुरुते तिर [...]
4–6 गर्भः ॥ १ ॥ स यत्सायं जुहोति गर्भमेवैनं तत्सन्तमभिकरोति[3] गर्भ२ँ [...]
माभिजुहोति तस्मादनश्नन्तो गर्भा जीवन्त्यथ यत्प्रातर्जुहोति प्रैवैनं तज्ज[...]
स एष तेजो भूत्वा विभ्राशमान[4] उदयते शश्वद्ध[5] नोदियाद्यदस्मिन्नेताम् [...]
न जुहुयुः स यथाहिस्त्वचो निर्मुच्येतैव२ँ रात्रेः सर्वस्मात्पाप्मनो निर्मु[...]
दयते[6] यथा ह वा अहिस्त्वचो निर्मुच्येतैव२ँ सर्वस्मात्पाप्मनो निर्मुच्यते[...]
एवमेतद्वेद तं जायमानमिमाः सर्वाः प्रजा अनु प्रजायन्ते विसृज्यन्ते[...]
7–8 यथार्थानाम्[8] ॥ २ ॥ तदाहुः पुरास्तमेतोरुद्धरेदित्येते वात्र रश्मयो विश्वे[...]
अथ यत्परं भाति प्रजापतिर्वैव स इन्द्रो वा ते हैते ऽस्तंयन्तो ऽग्निहो[...]
जुह्वतो गृहानभ्यागच्छन्ति[9] ते[9] ऽस्याहवनीयमेव[9] प्रविशन्ति स यथा [...]

---

1 Thus acc. both times B. only and the first time C. origin[...] जुहवामेति the other MSS. 2 Here perhaps we ought to write °लिता (...) as B. has it, °ळिता). 3 °भिकरोति B., °भिकरोति C. (cp. Bhāṣ. Sūtra 21). 4 विभ्लाशमान M. (cp. IV. 5. 1. 25). 5 नोदीया° MSS. exc. [...] 6 निर्मुच्योदयते B., निर्मुच्योदयते Co. 7 निर्मुच्यते O. 8 Thus all the MSS. exc. B: यथार्थान्, but here we find two small lines over the र्था, refer[...] to a marginal addition or correction ना. 9 °गच्छंतितस्याह° O[...] °गच्छंतितेस्याह° Co.

ऽस्यागमिष्यत आवसथमुपकल्पयेदेवमेतत्ते यस्योद्धृतमागच्छन्ति तस्य प्रवि-
शन्त्यथ यस्यानुद्धृतमप ह तस्मात्प्रयन्ति तस्मै वै व्यृध्यते यस्माद्वा अपप्रयन्ति
तामनु व्यृद्धिं यश्चैतद्वेद यश्च नानुद्धृतमस्याभ्यस्तमगादिति[1] सर्व एव निन्दति ॥
३ ॥ स यत्सायं जुहोत्यग्नावेवैभ्यस्तत्प्रविष्टेभ्यो जुहोत्यथ यत्प्रातर्जुहोत्यप्रेतेभ्य 9
एवैभ्यस्तज्जुहोति तस्माद्वयं मन्यामह उदितहोमिनो[2] व्यवच्छिन्नमग्निहोत्रमिति
होवाचासुरिर्यथा शून्यमावसथमाहरेदेवमेतदिति ॥ ४ ॥ द्वयमु वा इदं न 10
तृतीयमस्ति मूलि चैवामूलं च तदुभयं देवानाꣳ सन्मनुष्या उपजीवन्ति
मूलिन्य इमा ओषधयो ऽमूलाः पशवस्त इमे[3] ऽमूलाः पशवो मूलिनीरोष-
धीर्जग्ध्वापः पीत्वा तस्यैष उभयस्य[4] रसः संभवति ॥ ५ ॥ स यत्सायं जुहो- 11-12
त्यस्य रसस्य जीवनस्य देवेभ्यो जुहवामेति यदेषामिदꣳ सदुपजीवाम इति स
यत्ततो रात्र्याश्नाति हुतोच्छिष्टमेव तन्निरवत्तबल्यश्नाति हुतोच्छिष्टस्यो ह्यशिता-
ग्निहोत्रं जुह्वदथ यत्प्रातर्जुहोत्यस्य रसस्य जीवनस्य देवेभ्यो जुहवामेति यदेषा-
मिदꣳ सदुपजीवाम इति स यत्ततो ऽह्नाश्नाति हुतोच्छिष्टमेव तन्निरवत्तबल्य-
श्नाति हुतोच्छिष्टस्यो ह्यशिताग्निहोत्रं जुह्वत् ॥ ६ ॥ तद्वै समेवान्ये यज्ञास्तिष्ठन्ते 13
ऽग्निहोत्रमेव न संतिष्ठते ऽपि वै द्वादशसंवत्सरमन्तवदेवाथैतत्सायꣳ हुत्वा वेद
होष्याम्येव प्रातरिति प्रातर्हुत्वा वेद होष्याम्येव सायमित्येतस्यानुपस्थितिमन्व-
नुपस्थिता[5] इमाः प्रजाः प्रजायन्ते ऽनुपस्थितो ह वै श्रिया प्रजया प्रजायते य
एवमेतद्वेद तद्दग्ध्वाधिश्रयति शृतꣳ हि देवानाम् ॥ ७ ॥ तदाहुर्यदोदन्तमिव 14-15
स्यादथ जुहुयात्तर्हि ह्येतच्छृतं भवतीति तदु तथा न कुर्यादुप हैनत्स दहेद्यस्तथा
कुर्यादप्रजनिष्णु वै रेत उपदग्धं तस्मादधिश्रित्यैव जुहुयादग्नेरु वा एतद्रेतस्तेनो
वा एतच्छृतं यदग्ने रेतस्तस्मादधिश्रित्यैव जुहुयादथ यद्वैनदग्नावधिश्रयन्ति

1 °द्धृतमस्याभ्य° B. C. O. P., °द्धृतमस्याभ्य° C°. 2 Without acc. the MSS. (see k. 24). 3 Thus MSS. r. इमे. 4 उभयस्य B. C. C°. 5 °स्थिता C°.

16 तेनो एव भृतं तस्मादधिश्रित्यैव जुहुयात् ॥ ८ ॥ तदवज्योतयति भृतं
नीत्यपः प्रत्यानयत्यग्निरेतस्मं वा एतच्छान्तिरापः शान्तय एव तस्माद्य
सक्निपानं[1] चीरमभ्याभवेदुदस्तोकमाश्चोतयेत्येव[2] ब्रूयाच्छान्तये पयसश्चैव
येदः हि यदा वर्षत्यथौषधयो जायन्त ओषधीर्जग्ध्वापः पीत्वा तस्यै
17 यस्य[3] रसः संभवति तस्मादुदस्तोकं प्रत्यानयति ॥ ९ ॥ उद्वास्य चतु
चतुर्धाविहितः हीदं पयः समिधमादायोदाद्रवति समिद्धहोमाय सो
पूर्वामाहुतिं जुहोति यद्धोपसाद्य जुहुयाद्यथा यस्मा आहरिष्यन्त्स्यात्ततो
रेण निदध्यादेवः ह तदथ यदनुपसाद्य जुहोति यथा यस्मा आहरिष्यन्
णा[4] आहृत्यैवोपनिदध्यादेवं तदुपसाद्योत्तरां नानावीर्ये एवैने एतत्करोति
वै[5] वाक् चैते आहुती मनश्चैवैतद्वाचं च व्यावर्तयति तस्मान्मनश्च
18 समानमेव सन्नानेव ॥ १० ॥ स वै द्विर्जुहोति द्विरुपमृष्टे द्विः प्राश्नाति
रुम्नयति तद्दश दशाक्षरा वै विराड्विराळु वै यज्ञो विराजमेवैतद्यज्ञमभिसंपाद
19-20 ११ ॥ स यदग्नौ जुहोति तद्देवेषु जुहोति तस्माद्देवाः सन्ति यदुपमृष्टे तदु[10]
च पितृषु च जुहोति तस्मादोषधयश्च पितरश्च सन्ति यत्प्राश्नाति तन्म
जुहोति[6] तस्मान्मनुष्याः सन्ति मनुष्याननु पशवो देवाननु वयांसि
वनस्पतयो यदिदं किं चान्यदेवमित्रमाः प्रजा यज्ञ[7] आभजति या इमाः
21 भूताः ॥ १२ ॥ तदु होवाच याज्ञवल्क्यो न यज्ञो मन्तवा अग्निहोत्रं
इवैवेतीदः हि यदन्यस्मिन्यज्ञे स्रुच्यवद्यन्ति सर्वमेव तज्जुह्वत्यथैतद्धुत्वो
चामति[8] निर्लेढि तदस्य पाकयज्ञस्येवेति तद्वस्य तत्पशव्यमेव रूपं पशू
22-23 पाकयज्ञः ॥ १३ ॥ सा वा एषैकैवाग्र आहुतिर्या प्रजापतिरजुहोद्य

---

1 °सक्निपानं C. C°. My., °सक्नोपानं M., °सक्निमानं B., °सक्नि (pr. m.), °सक्नियपानं P. (sec. m.), °सक्नियानं O. 2 चीरमभ्याभवेदुद° O. P. 3 उभयस्य MSS. 4 आहरि° B. C. O. P. 5 ह वै M. 6 Th only, जुह्वति the other MSS. 7 यज्ञ B. 8 °थैतद्धुत्वो° B. O. P. 9 पशु

पश्चाध्रियन्तायमग्निर्यो[1] ऽयं पवते सूर्य एवमेषा द्वितीया हूयते[2] तद्यामग्रे जुहोति सा तस्यै देवतायै यस्या अग्निहोत्रमथ यां द्वितीयाꣳ स्विष्टकृद्भाजनमेव सा तस्मात्तामुत्तरतो जुहोत्येषा हि तस्य देवस्य दिङ्मिथुनायो वा एषा प्रजननाय[3] द्वितीया हूयते[2] ॥१४॥ ते वा एते आहुती भूतं च भविष्यच्च जातं च जनि- 24 ष्यमाणं चागतं चाशा[4] चाद्य च श्वश्च तद्वा एतद्द्वयमेवानु ॥ १५ ॥ आत्मा 25 वाव भूतो ऽद्धा वै तद्यद्भूतमद्धो[5] तद्यदात्मा प्रजैव भविष्यदनद्धा वै तद्यद्भवि-ष्यदनद्धो तद्यत्प्रजा[6] ॥ १६ ॥ आत्मा वाव जातो ऽद्धा वै तद्यज्जातमद्धो[7] 26 तद्यदात्मा प्रजैव जनिष्यमाणानद्धा वै तद्यज्जनिष्यमाणमनद्धो तद्यत्प्रजा[6] ॥ १७ ॥ आत्मा वा आगतो ऽद्धा वै तद्यदागतमद्धो तद्यदात्मा प्रजैवाशानद्धा[8] 27 वै तद्यदाशानद्धो तद्यत्प्रजा[9] ॥ १८ ॥ आत्मा वा[10] अद्याद्धा वै तद्यदद्याद्धो 28 तद्यदात्मा प्रजैव श्वो ऽनद्धा वै तद्यच्छ्वो ऽनद्धो[11] तद्यत्प्रजा[12] ॥ १९ ॥ तां[13] 29 संपादयतां मन्त्रेण प्रथमामाहुतिं जुहोति[14] स[14] आत्मानमभि[14] हूयते[15] ऽद्धा वै तद्यन्म-न्त्रो[16] ऽद्धो तद्यदात्मा तूष्णीमुत्तराꣳ सा प्रजामभि हूयते ऽनद्धा वै तद्यत्तूष्णी-मनद्धो तद्यत्प्रजा[17] ॥ २० ॥ स जुहोत्यग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायꣳ 30 सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातस्तद्वेतत्सत्येनैव हूयत इदꣳ हि यदा सूर्यो ऽस्तमेत्यथाग्निरेव ज्योतिर्भवति यदो वै सूर्य उदेत्यथ सूर्य एव ज्योतिर्भवति तदु ह वै देवान्मच्छति यत्सत्येन जुह्वति ॥ २१ ॥ तदु होवाच दक्ष आरुणये 31-33

---

1 Thus P. (pr. m.) only; पश्चाद्ध्रियंता° B. O. P. (sec. m.). C°. My., पश्चाद्ध्रियंता° M, पश्चात्ध्रियंता° C. 2 हूयते C°. 3 प्रजननाय B. C. O. P. 4 चाशा C°. 5 °तमद्धो C°. 6 तद्यत्प्रजा C°., तद्यत्प्रजा B. 7 तद्यज्जातमद्धो C°., तद्यज्जातमद्धो O. 8 प्रजैवाशा° B. C°. 9 तद्यत्प्रजा B., तद्यत्प्रजा C°. 10 वा C°. 11 नद्धो O., नद्धो P. 12 तद्यत्प्रजा B., तद्यत्प्रजा C. O. P. 13 Thus Mss., r. यां? 14 Thus MSS. (only जुहोति originally. C.), read probably जुहोति सात्मान°. 15 हूयते B. C. O. P. 16 तद्यन्मंत्रो B. C. (pr. m.). O. P. 17 तद्यत्प्रजा B., तद्यत्प्रजा C°.

ब्रह्मवर्चसकामस्यैनेन[1] जुहुयाद्वित्यग्निर्वर्चो ज्योतिर्वर्चः सूर्यो वर्चो ज्यो
ब्रह्मवर्चसी हैव भवति यस्यैवं जुह्वतीत्यस्त्युवेव[2] प्रजननस्येव रूपमग्नि
ज्योतिरग्निः स्वाहेति तदिदं ज्योती रेत उभयतो देवतया परिगृह्णात्यु
परिगृहीतꣳ[3] हि रेतः प्रजायत इत्युभयत एवैतत्परिगृह्य प्रजनयति
ज्योतिर्ज्योतिः सूर्यः स्वाहेति तदिदं ज्योती रेत उभयतो देवतया परिगृ
भयतः परिगृहीतꣳ[3] हि रेतः प्रजायत इत्युभयत एवैतत्परिगृह्य प्रजन
34. 35 २२ ॥ तदु होवाच जीवलश्चैलकिर्गर्भानेवारुणिः करोति न तु प्रजन
स[4] ह[4] स[4] एवमेव सायꣳ होतव्यं मेने ऽथ प्रातर्ज्योतिः सूर्यः सूर्यो
स्वाहेति तदिदं ज्योती रेतो बहिर्धा करोतीति होवाच बहिर्धा हि रेतः
36 भवतीति ॥ २३ ॥ तदाहुरग्निमेवैते सायꣳ सूर्ये जुह्वति[5] सूर्यं प्रातरग्नि
हि यदा सूर्यो ऽस्तमेत्यथाग्निरेव ज्योतिर्भवति यदो वै सूर्य उदेत्यथ सू
ज्योतिर्भवति तत्तदुदितहोमिनामेव नास्यैषा परिचक्षा तस्यै त्वेव देवतायै
जुह्वति यस्या अग्निहोत्रम्[6] ॥ २४ ॥ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति
स्वाहेत्यग्निः स्वाहेत्येव सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति न सूर्याय
37 सूर्यः स्वाहेत्येव तस्मादनेनैव जुहुयात् ॥ २५ ॥ सजूर्देवेन सवित्रेति
मत्प्रसवाय सजू रात्र्येन्द्रवत्येति रात्र्या मिथुनीकरोतीन्द्रो यज्ञस्य देवता
करोति जुषाणो अग्निर्वेतु स्वाहेति प्रत्यक्षं तस्यै देवतायै जुहोति यस्या
38 होत्रम्[7] ॥ २६ ॥ सजूर्देवेन सवित्रेत्येव प्रातः सवितृमत्प्रसवाय सजू
वत्येति वा सजूरह्नेन्द्रवत्येति वोषसा वाह्ना वा मिथुनीकरोतीन्द्रो
देवता सेन्द्रं करोति जुषाणः सूर्यो वेतु स्वाहेति प्रत्यक्षं तस्यै देवतायै

---

1 °स्यैनेन MSS. 2 Thus originally P., °स्तुवेव B. C. O. M. (sec. m.), °स्तु एव M. 3 °भयतः परिगृहीतꣳ B. C. O. P. 4 सहस MSS. जुह्वति C°. (but cp. जुहोति of the Mādhy. in the edition of the Indica). 6 °होत्रं B. C. (sec. m.). C°. 7 °होत्रं B. C. (sec. m.). C°. जुहोति O. P. C. (Pr. m.).

3.1.27.

स्या अग्निहोत्रम् ॥ २७ ॥ ते होचुः को न इदं जुहुयादिति ब्राह्मण[1] इति 39
ब्राह्मणेदं नो जुहुधीति किं मम ततः स्यादित्यग्निहोत्रोच्छिष्टमिति तद्धैतदग्निहो-
त्रोच्छिष्टं यत्स्रुचि परिशिष्यते ऽथ यत्स्थाल्यां यथा कौष्ठाद्वा[2] परीणहो वा
निर्मिमीतैवं[3] तत्तस्मात्तद्य एव कश्च पिबेन्न त्वब्राह्मणो ऽग्नौ ह्येनदधिश्रयन्ति ॥
२८॥ प्रथमं ब्राह्मणम् ॥

K. I. 3. 2. M. II. 4. 3.

तदु होवाच कहोळः[4] कौषीतकिरनयोर्वा एष द्यावापृथिव्यो रस इत्यस्य 1
रसस्य देवेभ्यो हुत्वाथाश्नानीति[5] तस्माद्वा आग्रयणेन यजेतेत्यथ[6] होवाच याज्ञ-
वल्क्यः ॥१॥ देवाश्च ह वा असुराश्चोभये प्राजापत्या अस्पर्धन्त ततो हासुराः 2
कृत्ययेव त्वद्द्विषेणेव त्वदिमा[7] उभयीरोषधीः प्रलिलिपुर्याश्च पशव उपजीवन्ति
याश्च मनुष्या उतेत्थं चिद्देवानभिभवेमेति ततो न पशव आलिशन्त न मनुष्या
आश्नंस्ता एता उभय्यः प्रजा अनशनेन नोत्पराबभूवुः ॥ २ ॥ तदु वै देवा 3
अस्पृण्वतानशनेन वा इमाः प्रजाः पराभवन्तीति हन्तासामोषधीनां कृत्यां
त्वद्द्विषं त्वदपहनामेति[8] केनेति यज्ञेनेति होचुर्यज्ञेन ह स्म वै तद्देवाः कल्पयन्ते
यदेषां कल्प्यमासर्पयश्च[9] ॥३॥ ते होचुः कस्य न इदं भविष्यतीति ते ह मम 4
ममेति न संपादयां चक्रुस्ते होचुरसंपादयन्तो हन्तास्मिन्नाजिमजामहा इति स य
उज्जेष्यति तस्य न इदं भविष्यतीति तथेति तस्मिन्नाजिमाजन्त ॥४॥ तद्धेन्द्राग्नी
उज्जिग्यतुस्तस्मादेतदैन्द्राग्नं यदाग्रयणमिन्द्राग्नी ह्यस्य भागधेयमुदजयतां तस्मादेषु
ऐन्द्राग्नो द्वादशकपालः[10] पुरोळाशो भवति ॥५॥ तौ ह यत्रेन्द्राग्नी उज्जिगित्वा- 5-6
ंसौ तस्थतुस्तद्ध विश्वे देवा अन्वाजग्मुः क्षत्रं वा इन्द्राग्नी विशो विश्वे देवा

1 ब्राह्मण Co. C. (pr. m.). 2 कौष्ट्रा° C. Co. 3 निमिमी° Co. 4 कहोळः B. C. (pr. m.), कहोलः My., कहोलः P. in text, with फो corr. in marg.; hence फोकहोलः O., कफोलः Co., कभोळः M. 5 °श्नातीति B. O. P. Co. 6 यजे° C. O. P. 7 त्वादिमा B. C. O. P. 8 त्वदपहनामेति Co. 9 कल्पमा° B. C. O. P. My., कल्पमा° Co., क्लृप्यमा° M. 10 दशक° M.

यत्र वै क्षत्रमुज्जयत्यन्वाभक्ता वै तत्र विट् तदेतद्विश्वान्देवानन्वाभजन्त्स
7 वैश्वदेवश्चरुर्भवति ॥६॥ स पुराणानाꣳ स्यात्क्षत्रं वा इन्द्राग्नी विशो विश्वे…
नेत्क्षत्रं[1] विशाभ्यारोहयाणीत्यथो अपि नवानामेव स्याद्यद्वा इतरः पुरो…
8 श्चरुरितरस्तेनैवानभ्यारूळ्हं[2] तस्मादपि नवानामेव स्यात् ॥७॥ त उ हो…
देवा अनयोर्वा अयं द्यावापृथिव्यो रस[3] ऐवेमे[3] अस्मिन्भजामेति तथेति…
आभ्यामेतं भागमकल्पयन्त्स एष द्यावापृथिव्य एककपालः स यदेककपालो
भवतीयं वै पृथिवी कपालꣳ[4] सेयमेकेवैव तस्मादेककपालो भवति ॥८॥
9 तदाहुर्नैककपालः स्यादस्त्यस्मिन्परिचक्षेतीदं नु यस्यै कस्यै च देव…
हविर्गृह्णन्ति सर्वत्रैव स्विष्टकृदन्वाभक्तः सर्वमेतं जुह्वति[5] सा न्वेव परिचक्षा…
10 पर्याभवति ॥९॥ तदाहुः पर्याभूद्वा अयं मोहिष्यतीदꣳ राष्ट्रमिति नास्य…
परिचक्षाहवनीयो वा आहुतीनां प्रतिष्ठा स यदाहवनीयं प्राप्यापि दश कृ…
पुनः पुनः पर्यावर्तेत कस्तेनार्थो ऽन्यस्तु यदाह किं[7] तत्संधर्युपेयात्तस्माद्…
स्यैव[7] यजेदेष वै प्रत्यक्षं द्यावापृथिव्यो रसो यदाज्यं तत्प्रत्यक्षमेवैने एतेन…
11-13 मेधेन प्रीणाति ॥१०॥ त एतेनेष्ट्वा देवा आसामोषधीनां कृत्यां त्वद्विषं त…
पाघ्नꣳस्तत आलिशन्त पशव आश्नन्मनुष्या[8] अथ यदेष एतेन यजते नाह…
तस्य कृत्ययेव त्वद्विषेणेव[9] त्वदोषधयः प्रलिप्ता भवन्तीति[10] देवा अकुर्वन्…
त्वेवैष एतत्करोति यमु चैव देवा यज्ञे भागमकल्पयꣳस्तमु चैवैभ्य एष एतत्…
तीमा उ चैवैतदुभयोरोषधीरनमीवा अकिल्बिषाः कुरुते ता अनमीवा अकिल्…
उपजीवन्ति तस्य प्रथमजो गौर्दक्षिणाग्र्यमिव हीदमित्येतत्तस्य कर्म य ई…

---

1 °क्षत्रं B. O. P. 2 °वानभ्यारू° B. C. (pr. m). O. P. 3 रस ऐवेमे C°., रस एवेमे B, रस एवेमे C. O. P. (रस ऐवेमे=रसः । आ । एव । इमे ।). 4 कपालꣳ mss. (but the following words=सा । इयम् । एका । इव । एव ।). 5 जुह्वति C°. 6 परिचक्षोथो C°., परिचक्षाथो M., परिचक्षातो the other MSS. 7 Thus MSS. exc. M. (:किन्तच्छन्तर्युपीया°). 8 आश्नन्म° C°., C. (pr. m) O. P. 9 त्वद्विषेणेव B. C. O. P. 10 भवंतीति C°. 11 अकुर्वन्निति C°.

वा स्याद्दर्शपूर्णमासाभ्यां वा यजेताथ यो ऽनीजानो ऽन्वाहार्यपचन एवौदनं चातुष्प्राश्यं[1] पचेत्तं ब्राह्मणेभ्य उपनिदध्यात् ॥११॥ द्वया वै देवा देवा अहै-वान्यद्देवा अथेमे मनुष्यदेवा य इमे ब्राह्मणाः शुश्रुवाꣳसो ऽनूचानास्तद्देवास्य यथा हुतमेवं भवति तत्र यच्छक्नुयात्तद्दद्यादग्निहोत्र उ हैके जुह्वति तदु तथा न कुर्यात्समदꣳ[2] ह स करोत्यन्यद्ध्येवाग्रयणमन्यदग्निहोत्रम् ॥१२॥ द्वितीयं ब्राह्मणम् ॥

K. I. 3. 3. M. II. 4. 2.

प्रजापतिꣳ ह वै भूतान्युपसेदुः प्रजा वै भूतानि विधेहि नो यथा जीवामेति तं देवा यज्ञोपवीतिनो दक्षिणं जान्वाच्योपसेदुस्तान्होवाच यज्ञो वो ऽन्नमित्यूर्ग्वो ऽमृतं वः सूर्यो वो ज्योतिरिति[3] ॥१॥ अथ हैनं पितरः प्राचीना-वीतिनः सव्यं जान्वाच्योपसेदुस्तान्होवाच मासि मासि वो ऽन्नमिति स्वधा वो मनोजवो वश्चन्द्रमा वो ज्योतिरिति[3] ॥२॥ अथ हैनं मनुष्याः प्रावृता एवो-पस्थं कृत्वोपसेदुस्तान्होवाच सायंप्रातर्वो ऽन्नमिति प्रजा वो मृत्युर्वो ऽग्निर्वो ज्योतिरिति[3] ॥३॥ अथ हैनं पशव उपसेदुस्तेभ्यो ह स्व[4] एषं[4] चकार यदि यूयं काले यद्यकाले लभाध्वै तर्ह्येवाश्नाथेति तस्मात्पशवो यदि काले यद्यकाले लभन्ते तर्ह्येवाश्नन्ति स्व[5] एषो[5] ह्येभ्यः कृतः ॥४॥ अथ हैनꣳ शश्वदप्यसुरा उपसेदु-स्तेभ्यो ह तमश्च मायां च प्रददावस्ति[6] ह्येवासुरमायेतीव पराभूतास्त्वेव ताः प्रजास्ता इमाः प्रजास्तथोपजीवन्ति यथाभ्यः प्रजापतिर्व्यदधात् ॥५॥ तन्न देवा अतिक्रामन्ति न पितरो न पशवो मनुष्या एवातिक्रामन्ति तस्मान्मनुष्याणां यो मेद्यत्यशुभे मेद्यति[7] वि हि ह्वर्छति न ह्ययनाय चन[8] भवत्यनृतꣳ हि कृत्वा मेद्यति तस्मादु सायंप्रातराश्येव[9] स्यात्स य एवं विद्वान्त्सायंप्रातराशी[10] भवति[10]

1 चातुःप्रा° C°. O. P. 2 °त्समदꣳ C°. 3 °रिति MSS. exc. C. (sec. m.). 4 Thus MSS., r. स्वैषं. 5 Thus MSS., r. स्वैषो. 6 प्रददावस्ति MSS. 7 मेद्यति C°. 8 चचन O. P. 9 सायं° C°. 10 °शी भवति B.

सर्वꣳ हैवायुरेति यदु ह किं च वाचा वदति तथा हैव तद्भवति देवसत्यꣳ
7 गोपायति ॥६॥ तद्धैतत्तेजो नाम ब्राह्मणं यो ऽस्य[1] शक्नोति व्रतं चरितुꣳ
मासि मासि पितृभ्यो ददद्यदहरेव[2] पुरस्ताच्चन्द्रमा नोदेति तदहर्ददात्येष
सोमो राजा देवानामन्नं यच्चन्द्रमाः स एताꣳ रात्रिं क्षीयते तत्क्षीणे देवाना
8 पितृभ्यो ददाति तथैभ्यो ऽसमदं करोति ॥७॥ सो ऽपराह्णे ददाति पूर्वाह्णो
9-10 देवानां मध्यंदिनो मनुष्याणामपराह्णः पितृणां तस्मादपराह्णे ददाति ॥८॥ अ
खलु प्राचीनावीती भूत्वा जघनेन गार्हपत्यं दक्षिणासीनः सव्यं जान्वा
तूष्णीमेवैतं चरुं गृह्णाति स तत एवोपोत्थायोत्तरेणान्वाहार्यपचनं दक्षि
तिष्ठन्नवहन्ति स सकृदेव फलीकरोति सकृद्ध्येव पराञ्चः पितरः स य
दिशꣳ सचन्त[3] एषा हि पितृणां दिक् श्रपयित्वैतं चरुमधिश्रित आज्यं प्रत्या
यत्यग्नौ वै देवेभ्यो जुह्वत्युद्धृत्य मनुष्येभ्य उप[4]निदधत्यथैवं पितृणां तस्मादा
11-12 श्रित आज्यं प्रत्यानयति ॥९॥ उद्वास्याग्नौ द्वे आहुती जुहोति देवान्वा
उपावर्तते य आहिताग्निर्दर्शपूर्णमासाभ्यां यजते ऽथेदं पितृभ्यो दास्यन्भवति
यानेव देवानुपावृत्तो भवति तेभ्य एवैतन्निह्नुते[5] स देवैरतिसृष्टः पितृभ्यो दद
स वा अग्नये चैव सोमाय च जुहोति[6] स यदग्नये जुहोति सर्वत्र ह्येवाग्निरन्
13 भक्तो ऽथ यत्सोमाय पितृदेवत्यो हि सोमः ॥१०॥ स जुहोत्यग्नये कव्यवा
नाय स्वाहा सोमाय पितृमते स्वाहेत्यभ्याधाय मेक्षणं जघनेनान्वाहार्यपच
सकृदेव[7] स्फ्येनोल्लिखति तद्वेदिभाजनꣳ सकृदुल्लिखति सकृद्ध्येव परा
14 पितरः[8] ॥११॥ अथोल्मुकं दक्षिणतो निदधाति यद्ध वा अनिधा[9]योल्मु
पितृभ्यो ददत्यसुररक्षसानि हैषां तद्विमथ्नते स यदुल्मुकं निदधात्यसुररक्ष
15 नामेवापहतये ॥१२॥ स निदधाति ये रूपाणि प्रतिमुञ्चमाना असुराः स

---

1 स्य C°. 2 ददद्य° B. C. C°. 3 सचत O. 4 उप C. (sec. m.) 5 °तंनिहुते C. O. P. C°. My. 6 जुहोति B. C. 7 °देव C. O. P. 8 पितरः MSS. 9 अनि° O. P.

I.3.3.13.

स्वधया चरन्ति । परापुरो निपुरो ये भरन्त्यग्निष्टांल्लोकात्प्रणुदात्यस्मादिति[1] ॥१३॥

अथावनेजयत्यसाववनेनिक्ष्वेति यजमानस्य पितरमसाववनेनिक्ष्वेति यजमानस्य पितामहमसाववनेनिक्ष्वेति यजमानस्य प्रपितामहं यथाशिष्यतो[2] ऽवनेजयेदेवमेतदथोपमूले दितानि सकृदाच्छिन्नानि भवन्त्यग्रमिव वै देवानां मध्यमिव मनुष्याणां मूलमिव पितॄणां तस्मादुपमूले[3] दितानि भवन्ति सकृदाच्छिन्नानि भवन्ति सकृद्ध्येव पराञ्चः पितरः ॥१४॥ 16-17

तानि दक्षिणा स्तीर्त्वा तेषु ददाति स इति ददातीति वै देवेभ्यो जुह्वतीति मनुष्येभ्य उद्धरन्त्यथैवं पितॄणां तस्मादिति ददाति ॥१५॥ 18

स ददात्यसावेतत्त इति यजमानस्य पित्रे ये च त्वामन्वश्च[4] इति वा हैक आहुर्याꣳश्च त्वमन्वङ्ङसीति[5] वा तदु तथा न ब्रूयात्स्वयꣳ ह्येव तेषाꣳ सह येषाꣳ सह्रासावेतत्त इत्येव यजमानस्य पित्रे ऽसावेतत्त इति यजमानस्य पितामहायासावेतत्त इति यजमानस्य प्रपितामहायेतः पराङ्[6] ददाति[6] सकृद्ध्येव पराञ्चः पितरः[7] ॥१६॥ 19

अथाहात्र पितरो मादयध्वं यथाभागमावृषायध्वमित्यत्र पितरो यथाभागमश्नीतेत्येवैतदाहाथ पराङ् पर्यावर्तते तिर इव वै पितरस्तिर इवैतद्भवति ॥१७॥ तदाहुरा तमितोरासीत[8] तावान्ह्यसुरिति[9] तदु मुहूर्तमेवासित्वोपपर्यावर्तेताथाहामीमदन्त पितरो यथाभागमावृषायिषतेत्याशिषुः पितरो यथाभागमित्येवैतदाह ॥१८॥ 20-22

अथावनेजयत्यसाववनेनिक्ष्वेति यजमानस्य पितरमसाववनेनिक्ष्वेति यजमानस्य पितामहमसाववनेनिक्ष्वेति यजमानस्य प्रपितामहं यथो जक्षुषो ऽवनेजयेदेवमेतत् ॥१९॥ 23

अथ नीविमुद्वह्य[10] नमस्करोति पितृदेवत्या वै नीविर्यज्ञ उ वै नमो यज्ञियानेवैतत्पितॄन्करोति षट्कृत्वो नमस्करोति षड् ऋतव ऋतवो वै पितर ऋतुष्वेवैतद्यज्ञं प्रतिष्ठापयति गृहान्नः पितरो दत्तेत्याहैषो हैतस्याशीः कर्मणो गृहाणामु ह वै पितर ईशते 24

1 °दिति MSS. 2 °शिष्यतो B. 3 °दुपमूले P. C°. 4 त्वाम° MSS. 5 त्वमन्वङ्ङसीति MSS. 6 पराग्ददाति M. 7 पितरो MSS. 8 °रासीत C°. 9 तावान्ह्यसुरिति O. 10 °द्वुज्य C°.

[1]तस्मादाह गृहान्नः पितरो दत्तेत्यथोखामवजिघ्रति स यजमानभागः पिण्डान्त्समवदधत्यग्नौ सकृदाच्छिन्नान्यभ्यादधति पुनरुल्मुकमप्यर्जति ॥२०॥

तृतीयं ब्राह्मणम् ॥

M.II.4.4

## K. I. 3. 4.

1-2 प्रजापतिर्ह वा एतेन यज्ञेनेजे प्रजाकामो बहुः प्रजया पशुभिः प्रजायेय श्रियं गच्छेयं यशः स्यामन्नादः स्यामिति स वै दक्षो नाम तद्यत्सो ऽयजत तस्माद्दाक्षायणयज्ञ इत्याख्यायत उत हैके वसिष्ठयज्ञ[2] इत्याचक्षत उ वा एकेन नाम्ना वसिष्ठस्तमेव[3] तदन्वाचक्षते[3] स एतेन यज्ञेनेष्ट्वा येयं प्रजापतेः प्रजातिर्या श्रीस्तद्बभूवैवꣳ ह वाव प्रजायत एवꣳ श्रियं गच्छति य एवं

3-4 विद्वान्यजते ॥१॥ तेनो ह वै तत ईजे प्रतिदर्शः[4] श्वैक्नः[5] स ये तं प्र... सुस्तेषाꣳ ह विवाचनमिवास[6] विवाचनमिव[6] ह वै भवति य एवं विद्वान् यज्ञेन यजते तमु[7] ह सुप्ला साञ्जयो ब्रह्मचर्यमाजगाम तस्माद्धुतं च यज्ञं च्यान्यं च पुनः सृञ्जयानाजगाम ते ह सृञ्जया विदां चक्रुर्यज्ञं[8] वै नो ऽनु... गमदिति ते होचुः स[9] ह[9] वै नो देवैरागमदिति यो नो यज्ञमनूच्यागमदिति त... सहदेवः[10] साञ्जयो ऽपि निवचनमिवास्त्यन्यद्वै सुप्ला नाम दध इति स...

---

1 During the printing an accident occurred and the text of this whole page 32 went astray together with the critical notes belonging to pages 32 and foll., up to I. 4. 1. 6. As the MSS. no longer were at my disposal, the text of this single page and the notes on this and the following ones have been but imperfectly restored. 2 Th... MSS.; वसिष्ठयज्ञ Mādhy. 3 °तमेतदन्वाचक्षते C. 4 प्रती° C. only. 5 श्वै... My., स्वैक्नः M., श्वैक्नः O., P. 6 विवचन °Mādhy. 7 तमु M. only. ... यज्ञं MSS., 9 Thus MSS., r. सह 10 सहदेवः OB.

यज्ञेनेष्ट्वा यैषा सृञ्जयानां प्रजातिर्या श्रीस्तद्धभूवैवꣳ ह वाव प्रजायत एवꣳ श्रियं गच्छति य एनेनैवं विद्वान्यजते ॥२॥ तेनो ह वै तत ईजे देवभागः श्रौतर्षः स उभयेषां कुरुसृञ्जयानां पुरोहित आस परमता वै सा यो[1] न्वेकस्य[1] राष्ट्रस्य पुरोहितो ऽसत्सेन्वु परमताथ किं यो द्वयोः परमतामिव ह वै गच्छति य एवं विद्वानेतेन यज्ञेन यजते ॥३॥ तेनो ह वै तत ईजे दक्षः पार्वतिः स ह राज्यमिव प्राप त इमे दाक्षायणा एदानमेत्र[2] राज्यमिव प्राप्ता राज्यमिव ह वै प्राप्नोति य एवं विद्वानेतेन यज्ञेन यजते तस्माद्वा एतेन यज्ञेन यजेत[3] तदन्वहमेकैकः पुरोळाशो[4] भवति[4] तथा हास्यानुपबाधासपत्ना[5] श्रीर्भवति स द्वे पौर्णमास्यौ यजते द्वे अमावास्ये[6] द्वन्द्वं वै मिथुनं मिथुनमेवैतत्प्रजननं क्रियते ॥४॥ 5-6

स पूर्वेद्युः पौर्णमास्या अग्नीषोमीयेण पुरोळाशेन यजते[7] ते द्वे देवते द्वन्द्वं वै मिथुनं मिथुनमेवैतत्प्रजननं क्रियते ऽथ प्रातराग्नेयः पुरोळाशो भवत्यैन्द्रꣳ सांनाय्यं ते द्वे देवते द्वन्द्वं वै मिथनं मिथुनमेवैतत्प्रजननं क्रियते ॥५॥ 7-8

अथ पूर्वेद्युरमावास्याया ऐन्द्राग्नेन पुरोळाशेन यजते[7] ते द्वे देवते द्वन्द्वं वै मिथुनं मिथुनमेवैतत्प्रजननं क्रियते ऽथ प्रातराग्नेयः पुरोळाशो भवति[8] मैत्रावरुणी पयस्या नेद्यज्ञादयानीत्येवाग्नेयः पुरोळाशो मित्रावरुणावेव द्वे देवते द्वन्द्वं वै मिथनं मिथुनमेवैतत्प्रजननं क्रियत एतद्धास्य तद्रूपं येन बहुर्भवति येन प्रजायते[9] ॥६॥ 9-10

1 ? Thus conjecturally; सा ययन्वेकस्य C. P. O, सा ययंन्वेकस्य B, सा ययान्वेकस्य My., साय इण्वेकस्य M. 2 Thus MSS. 3 यजेत MSS. 4 पुरोळाशा भवन्ति MSS. exc. M. 5 ? हास्यानुपबाधासपत्ना C. ( हास्यासपत्नानुपबाधा Madhy. ) 6 आमावास्ये P. O. 7 यजते MSS. 8 भवति O. 9 प्रजायते O.

11-12 अथ यद्वेव पूर्वेद्युः पौर्णमास्या अग्नीषोमीयेण पुरोळाशेन यजते यो
उपवसथे ऽग्नीषोमीयं पशुमालभते स एवास्य सो ऽथ प्रातराग्नेयः पुरोळा
भवत्यैन्द्रꣳ सांनाय्यं प्रातःसवनमेवास्याग्नेयः पुरोळाशो गायत्रꣳ हि प्रातःस
गायत्रमग्नेश्छन्दो माध्यंदिनमेवास्य सवनमैन्द्रꣳ सांनाय्यमैन्द्रꣳ हि माध्यंदि
13-14 सवनम् ॥७॥ अथ पूर्वेद्युरमावास्याया ऐन्द्राग्नेन पुरोळाशेन यजते[1] तृ
सवनमेवास्य स वैश्वदेवꣳ हि तृतीयसवनꣳ सर्वा हि देवता इन्द्राग्नी अथ प्रा
राग्नेयः पुरोळाशो भवति मैत्रावरुणी पयस्या नेद्यज्ञादयानीत्येवाग्नेयः पुरो
ऽथ यामेवामूमनूबन्ध्यां वशामालभते सैवास्य मैत्रावरुणी पयस्यैतदु पौर्णमा
चेष्ट्वामावास्येन च यावतीꣳ सौम्येनाध्वरेण जितिं जयति तावतीं जयति तन्
15-16 यज्ञो भवति ॥८॥ अथ यद्वेव पूर्वेद्युः पौर्णमास्या अग्नीषोमीयेण पुरो
यजत एतेन वा इन्द्रो वृत्रमहन्नेतेनो एव व्यजयत येयमस्य विजितिस्तथो
एष एतेन पाप्मानं द्विषन्तं भ्रातृव्यꣳ हन्ति तथो एव विजयते ऽथ प्रा
मावास्यꣳ सांनाय्यं वा आमावास्यं दूरे तद्यदमावास्येत्येनमेतद्वृत्रं जघ्नि
क्षिप्रमेतेन रसेनाप्रीणन्क्षिप्रꣳ ह वै पाप्मानमपहते य एवं विद्वान्पौर्णमा
संनयत्यथ यद्वेव पौर्णमास्याꣳ संनयत्येष वै सोमो राजा देवानामन्नं य
मास्तमेतत्पूर्वेद्युः पौर्णमास्या देवा अभिषुण्वन्ति प्रातर्भक्षयिष्यन्तस्तमेत
यन्ति यदपक्षीयते स यत्पूर्वेद्युः पौर्णमास्या अग्नीषोमीयेण पुरोळाशेन
ऽभिषुणोत्येवैनं तत्तस्मिन्नभिषुत एतꣳ रसं दधाति तं तीव्रीकरोति स्वद
ह[2] देवेभ्यो हव्यꣳ स्वदते[3] हास्य[3] देवेभ्यो हव्यं य एवं विद्वान्पौर्णमा

1 यजते MSS. 2 स्वदयतीह MSS. exc. M.: स्वदयति वा
3 स्वदते O. B.

संनयति ॥९॥ अथ पूर्वेद्युरमावास्याया ऐन्द्राग्नेन पुरोळाशेन यजते[1] दर्श- 17·18
पूर्णमासयोर्वै देवते स्त इन्द्राग्नी एव प्रत्यक्षं हास्य दर्शपूर्णमासाविष्टौ भवतो
य एवं विद्वान्यजतेऽथ प्रातराग्नेयः पुरोळाशो भवति मैत्रावरुणी पयस्या
नेद्यज्ञादुयानीत्येवाग्नेयः पुरोळाशोऽथैतावेवार्धमासौ मित्रावरुणौ य एवापक्षी-
यते स मित्रो य आपूर्यते स वरुणः ॥१०॥ तावेताꣳ रात्रिमुभौ सह[2]
समागच्छतस्तावेतदुभौ सह सन्तौ प्रीणाति सर्वꣳ ह वा अस्य प्रीतꣳ सर्वमाप्तꣳ
सर्वं जितं भवति य एवं विद्वान्यजते ॥११॥ तदेताꣳ रात्रिं मित्रो वरुणे रेतः 19·21
सिञ्चति तेन रेतसैतत्प्रजायते यदापूर्यतेऽथ यदेषात्र पयस्यावक्लृप्ततमामावास्या[3]
वै सांनाय्यभाजना[4] तत्पौर्णमास्याꣳ[5] संनयति[5] स यत्संनयेत्पौर्णमास्याꣳ संन-
येदमावास्यायां जामि कुर्यात्समदं कुर्यादेतद्वैवैनमेष एतदद्भ्यश्चौषधिभ्यश्च
संभृत्याहुतिभ्यो जनयति मिथुनाद्विद्वा एनं जनयति योषा पयस्या[6] रेतो वाजिनं
तद्वा अनुष्ठ्या यन्मिथुनात्प्रजायते ॥१२॥ अथ वाजिभ्यो वाजिनं जुहोत्यतवो 22-23
वै वाजिनो रेतो वाजिनमृतुष्वेवैतद्रेतः सिञ्चति तदृतवो रेतः सिक्तमिमाः प्रजाः
प्रजनयन्ति तत्पश्चा यज्ञस्य जुहोति पश्चाद्ध परीत्य योषां वृषाधिद्रवति तस्याꣳ
रेतः सिञ्चति तस्मात्पश्चा यज्ञस्य जुहोत्यग्ने वीहीति तत्स्विष्टकृद्भाजनं तदु प्राङेव
जुहोति ॥१३॥ अथ दिशो व्याघारयति दिशः प्रदिश आदिशो विदिश 24-25
उद्दिशो दिग्भ्यः स्वाहेति पञ्च दिश पञ्चर्तव ऋतूनेवैतद्दिग्भिर्मिथुनान्करोति[7]
पञ्चो एव भक्षयन्ति होता चाध्वर्युश्च ब्रह्मा चाग्नीच्च यजमान ऋतूनामेवैतद्रूपं

1 यजते O. B. 2 सह without acc. O. B. 3 °वास्या B. 4 सांना य्यभाजना B. 5 °स्यां संनयति B. 6 पयस्या B. 7 मिथुनांकृ° M.

कृत्वर्तुष्वेव रेतः प्रतिष्ठापयन्ति प्रथमो यजमानो भक्षयति प्रथमो परिगृह्णानीत्यथोत्तमो[1] मय्युत्तमꣳ रेतः प्रतितिष्ठादित्यपहूत स्वेति सोममेवैतत्कृत्वा भक्षयन्ति ॥ १४ ॥ चतुर्थं ब्राह्मणम् ॥ ऽध्यायः ॥

M.II.3.4. K. I. 4. 1.

1-2 अग्नौ ह वै देवाः सर्वान्पशून्त्संनिदध्रिरे ये च ग्राम्या ये च विजयं वोपपरैष्यन्त कामयारस्य वा कामायायं नो गोपिष्ठो गोपायद्वा तान्हाग्निर्निचकमे तान्त्संगृह्य रात्रिं प्रविवेश पुनरेम इति देवा तिरोभूतं ते ह विदां चक्रुरिह वै प्राविक्षद्रात्रिं वै प्राविक्षदिति तमेतस्यात्याꣳ रात्रा उपातिष्ठन्त देहि नः पशून्पुनर्नो देहि[2] पशूनिति ते पुनर्ददौ ॥१॥ 3 तस्मै कमग्नी उपतिष्ठेताग्नी वै दातारौ तावेवैतत्पशून् यदुपतिष्ठते तस्मात्सायमुपतिष्ठेत सायꣳ हि देवा उपातिष्ठन्त दत्तो पशून्य एवं विद्वानुपतिष्ठते ॥२॥ 4 अथ यस्मान्नोपतिष्ठेत सह[3] वा

1 °गृह्णामीत्य° MSS. exc. M.

2 देहि O. P. B.

3 सह O. P. B.

आसुर्देवाश्च मनुष्याश्च तद्ध स्म यन्मनुष्याणां न भवति तद्ध स्म देवान्याचन्त इदं वै नो नास्तीदं नो ऽस्त्विति ते देवास्तस्या याच्ञ्याया द्वेषेण तिर आसुस्तस्मान्नोपतिष्ठेत नेद्विनसानि नेद्द्वेष्यो ऽसानीति[1] ॥३॥ अथ यस्मा- 5
दुपैव तिष्ठेत यज्ञो वै देवानामाशीर्यजमानस्य स एष यज्ञो देवानां यदा-हुतिरथैषाशीर्यजमानस्य यदुपतिष्ठते स यद्देवास्यात्र तद्देवैतदात्मनि कुरुते तस्मादुपैव तिष्ठेत ॥४॥ अथ यस्मान्नोपतिष्ठेत यो वै ब्राह्मणं वा राजन्यं 6
वा शꣳसमानो ऽनुचरति गृहान्मे करिष्यतीति यो वै तत्र तं वाचा वा कर्मणा वा रिराधयिषति तस्मै वै स द्वेष्यं मन्यते ऽथ य एनमाह कस्मै नु मम त्वमर्थायासि यो मे न ददासीतीश्वरो वै स तं द्वेष्टी-तस्मान्नोपतिष्ठेत नेद्विनसानि नेद्द्वेष्यो ऽसानीत्यतत्स्विद्धा एनमेव याचते यदिन्द्धे यज्जुहोति[2] ॥५॥ अथ यस्मादुपैव तिष्ठेतोत वै याचंल्लभत[3] एव 7.8
दातारमुतो भर्ता नानुबुध्यते यदा वै भार्यो भर्तारमाह बिभृहि मेत्यथ वै स[4] तं[4] बिभर्ति[5] वा भार्यं वा मन्यते तस्मादुपैव तिष्ठेतेदं नु समस्तं यस्मा-दुपैव तिष्ठेत प्रजापतिर्वा एष एतद्भूत्वा यावदेनमनु यावत ईष्टे तस्य सर्वस्य

1 सानीति MSS.

2 जुहोति O. P. B.

3 Thus (without acc.) My., याचंलभत O. P. B.; याचन् लभत C.

4 सतं P. O. C. B.

5 Without acc. O. P. B. C.

रेतः सिञ्चति यदग्निहोत्रं जुहोति तदुपतिष्ठमानो भूमानमनुविकरोति[1]

9 नमनुप्रजनयति तस्मादुपैव तिष्ठेत ॥६॥ स वा उपवत्या प्रथमयोपतिष्ठ

वा उप सा वा इयं द्वयेनोप यद्धि किं च जायते ऽस्यामेव तदुपजायते

च न्यृच्छत्यस्यामेव[2] तदुपकीर्यते तदिदमह्ना रात्र्या भूयो भूय एव

10 भूम्नैवैतदत्त्रीयेण[3] प्रतिपद्यते ॥७॥ स आहोपप्रयन्तो अध्वरमिति यज्ञं

अध्वर उपप्रयन्तो यज्ञमित्येवैतदाह मन्त्रं वोचेमाग्नय इति मन्त्रं ह्यसौ

न्भवत्यारे अस्मे च शृण्वत इति यद्यप्यसदूरमस्यथ[4] न[5] इदमेव[5] शृण्वन्

11 दुमस्त्वित्येवैतदाह ॥ ८ ॥ अथाग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अ

अपां रेतांसि जिन्वतीति यथा याचन्कल्याणं वदेदामुष्यायणो वै त

12 वै त्वमेतस्मा असीति प्रमुमोदयिषन्नुपस्तुयादेवम्वेवैषा[6] ॥९॥ अथेन्द्रा

वा इन्द्रो य एष तपति स वा एषो ऽस्तंयन्नग्निमेव[8] प्रविशति तस्मादैन्द्राग्न

वामिन्द्राग्नी आहुवध्या उभा राधसः सह मादयध्यै । उभा दातारा

रयीणामुभा वाजस्य सातये हुवे वामित्युभौ मे दातारौ सह सन्तौ दत्ता

13 तदाह ॥१०॥ अथायं ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तं जानन्

आरोहाथा नो वर्धया रयिमिति पुष्टं[9] वै रयिः[10] स्वं त इदं यदस्माकं पु

14-15 भूयो भूय एव कुरु तन्नो वर्धयेत्येवैतदाह ॥११॥ अयमिह प्रथमो

धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः । यमप्नवानो भृगवो विरुरुचुर्वनेषु

विभ्वं विशे विश इति यथा याचन्कल्याणं वदेदामुष्यायणो वै त्वम

त्वमेतस्मा असीति प्रमुमोदयिषन्नुपस्तुयादेवम्वेवैषाथो यथैवैष तथैनमाह

र्होष विशे विशे[11] ऽस्य[11] प्रत्नामनु द्युतं शुक्रं दुदुहे अह्रयः । पयः स

---

1 °विकरोति O. P. 2 पृच्छत्य° B. 3 °दत्तव्येन (*sic*) M. 4 °स्मद्दूरमस्यथ C°. 5 न इदंमेव B., न इदमैव C°. 6 °स्तुयावदेव° B. 7 °ग्न्यैव C°. 8 स्तनयन्न° B. 9 पुष्टं C. O. P. 10 रयि B. O. P. My. C. (m.)

11 विशे । अस्य B. C. P. O. C°. My. (not M.).

मृषिमित्येषा वै परमा सनिर्यत्सहस्रसनिस्तस्या एवैतदवरुद्धये तस्मादाह पयः सहस्रसामृषिमिति ॥१२॥ तद्वा एतत्समाहार्य॑ षळृचं तस्योपवती प्रथमा प्रत्नवत्युत्तमावोचाम तद्यस्मादुपवत्यसौ वाव प्रत्नं यावन्तो ह्येव सनाग्रे[1] देवास्तावन्त एवाप्येतर्ह्येते उ वा अन्तरेण सर्वे कामास्ताभ्यामेवैतन्निवेदयति[2] ते हास्मै संजानाने सर्वान्कामान्त्संनमतः ॥१३॥ त्रिः प्रथमां जपति त्रिरुत्तमां त्रिवृत्प्रायणा हि यज्ञास्त्रिवृदुदयना यदु ह वा अग्निहोत्रं जुह्वद्वाचा वा कर्मणा वानृतं वा वदत्यनृतं वा[3] करोत्यात्मनो[3] हैव तदायुषो वा वर्चसो वा प्रजाया वावद्यति ॥१४॥ स उपतिष्ठते तनूपा अग्ने ऽसि तन्वं मे पाह्यायुर्दा अग्ने ऽस्यायुर्मे देहि[4] वर्चोदा अग्ने ऽसि वर्चो मे देहि[4] । अग्ने यन्मे तन्वा ऊनं तन्म आपृणेति यद्वेह वाचा वा कर्मणा वायुषो वा वर्चसो वा प्रजाया वावादाम तन्नः पुनराप्यायतामित्येवैतदाह तथा हास्य तत्पुनराप्यायते ॥ १५ ॥ इन्धानास्त्वा शत॑ हिमा द्युमन्त॑ समिधीमहीति शतं वर्षाणि जीव्यासमित्येवैतदाह यदाह शत॑ हिमा इति द्युमन्त॑ समिधीमहीति महान्त॑ समिधीमहीत्येवैतदाह वयस्वन्तो वयस्कृत॑ सहस्वन्तः सहस्कृतमिति वयस्वन्तो वयं भूयास्म वयस्कृत्त्वमसीत्येवैतदाह सहस्वन्तो वयं भूयास्म सहस्कृत्त्वमसीत्यग्ने सपत्नदम्भनमदब्धासो अदाभ्यमिति सपत्नाँस्त्वया पापीयसः करवामेत्येवैतदाह ॥१६॥ चित्रावसो स्वस्ति ते पारमशीयेति त्रिर्जपति रात्रिर्हि वै चित्रावसुरेषा हीमानि चित्राणि संगृह्येव वसति तस्मान्नक्तं नारकाच्चित्रं ददृशे तस्या ह स्मैवमृषयः पुरा स्वस्ति पार॑ समश्नुवते तथैनान्रात्र्या न नाष्ट्रा विवेद तथो वा अस्या एष एतत्स्वस्ति पार॑ समश्नुते तथैन॑ रात्र्या न नाष्ट्रा विन्दति तस्मादाह चित्रावसो स्वस्ति ते पारमशीयेत्येतावत्तिष्ठन्जपत्यथोपविशति ॥ १७ ॥ स जपति सं त्वमग्ने

16 17-18 19-20 21 22-23 24

1 सानाग्रे O. P. 2 °तंनिवेद° O. P., °तन्निवेद° C. 3 Thus P. (pr. m.) and M., वावकरोत्या° B. My. वावकरोत्या° C. O. P. (sec. m.). C°.
4 धेहि M.

सूर्यस्य वर्चसागथा इति यदेनꣳ सूर्यः प्रविशति सम्तृषीणाꣳ स्तुतेनेति
मुपतिष्ठते सं प्रियेण धाम्नेत्याहुत्यैतदाहाहुतिर्हि वा अस्य प्रियं धाम
युषा सं वर्चसा सं प्रजया सꣳ रायस्पोषेण ग्मिषीयेति यथा त्वमेतेन
एवमहमायुषा वर्चसा प्रजया संगच्छमानो भूयासमित्येवैतदाह सꣳ रायस्
25 ग्मिषीयेति भूमा वै रायस्पोषो भूम्नेत्येवैतदाह ॥१८॥ अथ गामुप
स्थान्धो वो भक्षीय मह स्थ महो वो भक्षीयेति यानि वो महाꣳसि यानि
वीर्याणि तानि वो भक्षीयेत्येवैतदाहोर्ज स्थोर्जं वो भक्षीयेति रस स्थ
भक्षीयेत्येवैतदाह रायस्पोष स्थ रायस्पोषं वो भक्षीयेति भूमा स्थ भूमानं
26 भक्षीयेत्येवैतदाह ॥१९॥ रेवती रमध्वमिति पशवो वै रेवन्तस्तस्मादाह
रमध्वमित्यस्मिन्योना अस्मिन्गोष्ठे ऽस्मिन्क्षये ऽस्मिंल्लोके । इहैव स्तेतो मा
27 तेत्यहं वः प्रियो भूयासमित्येवैतदाह ॥२०॥ अथ गामभिमृशति सꣳहि
विश्वरूपीति सꣳहिता ह्येषा सर्वैः कामैर्विश्वरूपीति[1] विश्वरूपा हि पशव
माविश गौपत्येनेति रसेनेति तदाह यदाहोर्जेति गौपत्येनेति भूम्नेत्येवैत
28-31 २१॥ अथ गार्हपत्यमुपपरैत्युप त्वाग्ने दिवे दिवे दोषावस्तर्धिया वयम्।
भरन्त एमसीति नम एवास्मा एतया करोति राजन्तमध्वराणां गोपा
दीदिविम् । वर्धमानꣳ स्वे दम इति स्वं त इदं यदस्माकं पुष्टं[2] तन्नो भू
एव कुरु तन्नो वर्धयेत्येवैतदाह स नः पितेव सूनवे ऽग्ने सूपायनो भव।
नः स्वस्तय इति यथा पिता पुत्राय सूपचर एवं नः सूपचर एधीत्येवै
यथा स तं न केन चन हिनस्त्येवं त्वा मा केन चन हिꣳसिष्मेत्यग्ने
अन्तम उत त्राता शिवो भवा वरूथ्यः । वसुरग्निर्वसुश्रवा अच्छा
द्युमत्तमꣳ रयिं दाः ॥ तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखि
32-33 स नो बोधि श्रुधी[3] हवमुरुष्या णो अघायतः समस्मादिति ॥२२॥ अ
नीयमुपतिष्ठते पशूꣳस्तद्याचते तस्मात्तमुच्चावचैश्छन्दोभिरुपतिष्ठत उच्चावचा

1 °र्विश्वरूपीति B. C. O. P. 2 पुष्टं C°. 3 श्रुधि M.

पशवो यद्गार्हपत्यं पुरुषा२ँस्तत्स[1] गायत्रेण तृचेन पूर्वेणोपतिष्ठते गायत्रमग्नेश्छन्दः स्वेनैवैनं तच्छन्दसोपतिष्ठतेऽथ द्विपदाभिः पुरुषच्छन्दसं[2] वै द्विपदा द्विपाद्ध्ययं पुरुषः पुरुषान्वा एतद्याचते पशुमान्ह पुरुषवान्भवति य एवं विद्वानुपतिष्ठते ॥२३॥ अथ गामुपपरैतीळ एह्यदित एहि काम्य एहीतीळा हि गौरदितिर्हि गौ काम्या हि[3] गौः कामो ह्यासु मनुष्याणां प्रविष्टो मयि वः कामधरणामित्यहं वः प्रियो भूयासमित्येवैतदाह ॥२४॥ अथान्तराहवनीयं च गार्हपत्यं च तिष्ठन्प्राङ् तिष्ठन्नाहवनीयमीक्षमाणो जपति सोमान२ँ स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजः ॥ यो रेवान्यो अमीवहा वसुवित्पुष्टिवर्धनः । स नः सिषक्तु यस्तुरः ॥ मा नः श२ँसो अररुषो धूर्तिः प्रणङ्मर्त्यस्य । रक्षा णो ब्रह्मणस्पत इति ॥२५॥ यदाहवनीयमुपतिष्ठते दिवं तदुपतिष्ठते यद्गार्हपत्यं पृथिवीं तद्यैत-दन्तरिक्षमुपतिष्ठते तस्माद्ब्राह्मणस्पत्येन तृचेनोपतिष्ठत एषा हि दिग्ब्रह्मणस्पते-रेता२ँ[4] हि दिशमुपतिष्ठते महि त्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः । दुराधर्षं वरुणस्य ॥ न हि तेषाममा चन नाध्वसु वारणेषु । ईशे रिपुरघशंसः ॥ ते हि पुत्रासो अदितेः प्र जीवसे मर्त्याय । ज्योतिर्यच्छन्त्यजस्रमितीमे वा अध्वनो वारणा य[5] इमे[5]ऽन्तरा द्यावापृथिव्यौ[6] तानेवैतदुपतिष्ठते[7] तथा हैनमेतेष्वध्वसु वारणेषु न नाष्ट्रा रक्षा२ँसि विन्दन्ति ॥ २६ ॥ अथैन्द्र्येन्द्रो यज्ञस्य देवता सेन्द्रमेवैतदग्न्युपस्थानं करोति कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुष इति कदा चन यजमानाय [8]द्रुह्यसीत्येवैतदाहोपोपेन्नु[9] मघवन्भूय इन्नु ते दानं देवस्य पृच्यत इत्युपोपेन्नु यन्न इदं[10] पुष्टं[10] तन्नो भूयो भूय एव कुरु तन्नो वर्धयेत्ये-वैतदाह ॥२७॥ अथ सावित्र्या सविता वै देवानां प्रसविता तथो हास्मा एते

34 35 36-37 38 39

---

1 पुरुषा२ँस्तत्स C°., पुरुषा२ँस्तस्य B. O. P., पुरुषा२ँस्तस्य C., पुरुषा२ँस्तस्मा M. My. 2 पुरुषच्छंदसं B. O. P., पुरुषश्छंदसं C°., पुरुषच्छंदसं C. 3 हि B. 4 दिग्ब्रह्म° M. S. 5 य इमे B. 6 °पृथिव्यौ MSS. 7 Thus acc. MSS. 8 द्रुह्यसी° C. O. P. C°. 9 °होपोपेन्नु B. O. 10 इदं पुष्टं C°., इदं पुष्टं B.

सवितृप्रसूताः सर्वे कामाः समृध्यन्ते तत्सवितुर्वरेण्यं भर्गो देवस्य धीम-

40 धियो यो नः प्रचोदयादिति[1] ॥२८॥ अथाग्नेय्या तदग्नय एवोत्तमं

परिधत्ते परि ते दूळभो रथो ऽस्माँ३[2] अश्नोतु विश्वतः । येन रक्षसि दा-

इति यजमाना वै दाश्वांसो यस्ते ऽनाक्रुष्यतमो रथो येन यजमानानोपा-

41 तेन नः सर्वतो गोपायेत्येवैतदाह ॥२९॥ अथ पुत्रस्य नाम गृह्णातीदं मे

वीर्यं पुत्रो ऽनुसंतनोत्विति तथा हास्यैतत्कुमैतद्वीर्यं पुत्रो ऽनुसंतनोति यदि

न स्यादप्यात्मन एव गृह्णीयात् ॥३०॥ प्रथमं ब्राह्मणम् ॥

M. II. 4. 1. K. I. 4. 2.

1-2 स वा अग्निहोत्रं हुत्वा सायमुपतिष्ठते[4] भूर्भुवः स्वरिति तद्वाचं

समर्धयति तया समृद्धयाशिष आशास्ते सुप्रजाः प्रजया भूयासमिति तत्प्र-

माशास्ते सुवीरो वीरैरिति तद्वीरानाशास्ते सुपोषः पोषैरिति तत्पुष्टिं भूमा-

शास्ते यद्वा अदो ऽपि दीर्घमग्न्युपस्थानमाशीर्वात्र साशीर्वैवेयं[5] तदनेनैव

पर्याप्नोति तस्मादनेनैवोपतिष्ठेतैतेन न्वात्र वयमुपचराम इति ह स्माहासुरि-

3-5 १॥ अथ खलु प्रवत्स्यन्गार्हपत्यमेवाग्र उपतिष्ठते ऽथाहवनीयं स गार्ह-

मुपतिष्ठते नर्य प्रजां मे पाहीति प्रजाया हैष ईष्टे तत्प्रजामेवास्मा एतत्परिद-

गुप्तये ऽथाहवनीयमुपतिष्ठते शंस्य पशून्मे पाहीति पशूनां हैष ईष्टे तत्-

6-7 नेवास्मा एतत्परिददाति गुप्तये ॥ २ ॥ अथ प्र वा व्रजति प्र वा धा-

स यत्र वेलां मन्यते तत्प्राप्य वाचं विसृजते ऽथ प्रोष्य पुनरेत्य यत्र

मन्यते तत्प्राप्य वाचं यच्छति स यद्यप्यन्तरेण राजा स्यान्नैव तमुपेयात्-

हवनीयमेवाग्र उपतिष्ठते ऽथ गार्हपत्यं गृहा वै गार्हपत्यः प्रतिष्ठा वै

8-9 गृहेष्वेवैतत्प्रतिष्ठायामन्ततः[6] प्रतितिष्ठति ॥३॥ स आहवनीयमुपतिष्ठत

विश्ववेदसमस्मभ्यं वसुवित्तममित्यथोपविश्य तृणान्युपलुम्पत्यग्ने सम्रा-

---

1 °यादिति MSS. 2 स्मांऽ B. 3 °न्गोपायसि B., °न्गो...यसि P. C°. 4 °ष्ठेत O. 5 साशीर्वैवेयं = सा । आशीः । उ । एव । इयम्. 6 मंततः

4.2.4.

न्नमभि सह आयच्छस्वेत्यथ गार्हपत्यमुपतिष्ठते ऽयमग्निर्गृहपतिर्गार्हपत्यः प्रजा-
न्यसुवित्तम इत्यथोपविश्य तृणान्यपलुम्पत्यग्ने गृहपते ऽभि द्युम्नमभि सह
ायच्छस्वेतीति नु स उपतिष्ठेत यो मन्त्रेणोपतिष्ठेत ॥४॥ स वै तूष्णीमेवोप- 10
तिष्ठेत यस्मिन्वात्र ब्राह्मणो वा राजा वा मनुष्यो न्वेव श्रेयान्वसेत्तं[1] न्वाव[1] स
ार्हति त्वक्रमेतन्मम त्वं गोपाय प्राहं वत्स्यामीत्यथैष[2] एतस्मिञ्छ्रेयाꣳसो देवा
अग्नयो वसन्ति क उ [3]अर्हत्येतान्वक्रमेतन्मम यूयं गोपायत प्राहं वत्स्यामीति
स्मात्तूष्णीमेवोपतिष्ठेत स गार्हपत्यमेवाग्र उपतिष्ठते ॥५॥ अथाहवनीयꣳ स 11
ार्हपत्यमुपतिष्ठते तूष्णीमेव मनो वै देवा मनुष्यस्याजानन्ति तस्य गार्हपत्यो
न आजानाति प्रवत्स्यन्मा परिदामुपागादित्यथाहवनीयमुपतिष्ठते तूष्णीमेव
स्याहवनीयो मन आजानाति प्रवत्स्यन्मा परिदामुपागादिति[4] ॥६॥ अथ प्र 12-13
ा व्रजति प्र वा धावयति स यत्र वेलां मन्यते तत्प्राप्य वाचं विसृजते ऽथ
प्रोष्य पुनरेत्य यत्र वेलां मन्यते तत्प्राप्य वाचं यच्छति स यद्यप्यन्तरेण राजा
स्यान्नैव तमुपेयात्स आहवनीयमेवाग्र उपतिष्ठते ऽथ गार्हपत्यं गृहा वै गार्हपत्यः
प्रतिष्ठा वै गृहा गृहेष्वेवैतत्प्रतिष्ठायामन्ततः प्रतितिष्ठति ॥७॥ स आहवनीय-
मुपतिष्ठते तूष्णीमेव तूष्णीमेवोपविश्य तृणान्यपलुम्पत्यथ गार्हपत्यमुपतिष्ठते
तूष्णीमेव तूष्णीमेवोपविश्य तृणान्यपलुम्पति ॥८॥ स यद्यप्येताꣳ रात्रिꣳ 14
सुक्रुद्ध इव स्याच्छ्ल एव तद्भूते कुर्याद्वा वदेद्वैतदु[5] ह वै गृहपतेः प्रोषुष[6] आग-
ताद्गृहाः समुत्त्रस्येव तिष्ठन्ति किमयमिह[7] करिष्यति[8] किं वा वदिष्यतीति स
यदिह किं चित्करोति वा वदति वा तस्य हेश्वरो गृहाः प्रत्रसन्ति तस्य हेश्वरो
गृहा वित्तोब्धोरथ यो न किं चन करोति न किं चन वदति तस्य गृहा न

---

1 Thus (without acc.) My., श्रेयान्वसेत्तन्वाव B. C°. M., श्रेयान्वसेत्तन्वाव C,, श्रेयान्वसेतन्वाव O. P. 2 Thus MSS., read अथैत instead of अथैष. 3 आर्हत्य° C°., अर्हत्य B. C. O. P. 4 °गादिति MSS. 5 वदेतद्वैतदु O. 6 प्रोषुष B. C. P. 7 किमयमिह O. P., किमयमिह C°., 8 करिष्यति C°.

प्रत्रसन्ति तस्य गृहा न विक्षोभन्त एष उ गृहाणामुपचारः[1] ॥९॥ स ऊ
गृहा मा बिभीत मा वेपध्वमूर्जं बिभ्रत एमसि । ऊर्जं विभ्रद्वः सुमनाः
गृहानैमि मनसा मोदमानः । येषामध्येति प्रवसन्येषु सौमनसो बहुः ।
नुपह्वयामहे ते नो जानन्तु जानतः । उपहूता इह[2] गाव उपहूता अजा
अथो अन्नस्य कीलाल उपहूतो गृहेषु न इति ॥१०॥ द्वितीयं ब्राह्मणम् ।

M. II. 5. 1. K. I. 4. 3.

1 प्रजापतिर्ह वा इदमेक एवास स हेक्षां चक्रे कथं नु प्रजायेयें
ऽश्राम्यत्स तपो ऽतप्यत स प्रजाः ससृजे ता अस्य प्रजाः सृष्टाः प
बुस्तानीमानि वयांसि पुरुषो वा अयं नेदिष्ठं प्रजापतेः स द्विपात्तस्मा

2 वयांसि ॥१॥ स हेक्षां चक्रे यथा न्वाव पुरैको ऽभूवमेवमु[3] न्वा[3] अ
द्वितीयाः ससृजे ताः परैव बभूवुस्तदिदं क्षुद्रं सरीसृपं यदन्यत्सर्पेभ्यस्
ससृजे ताः परैव बभूवुस्ते सर्पा इत्याहुरेता ह त्वै द्वयीर्याज्ञवल्क्य

3 त्रय्यस्तु पुनर्ऋचा भवन्ति ॥२॥ सो ऽर्चञ्छ्राम्यन्प्रजापतिः कथं नु मे
सृष्टाः पराभवन्तीति स एतदेव ददर्शानशनतीव[4] पराभवन्तीति स आ
वाग्रे स्तनयोः पय आप्याययां चक्रे ऽथ प्रजाः ससृजे ता अस्य प्रजाः

4-5 स्तनावेवाभिपद्य ततः संबभूवुस्ता इमा अपराभूताः ॥३॥ तस्मादप्येत
भ्यनूक्तं प्रजा ह तिस्रो अत्यायमीयुरिति या अमूः पराभूता न्यन्या
भितो विविश्र[6] इत्यग्निर्वा अर्कस्तमिमाः प्रजा अभितो निविष्टा य
अपराभूता महद्ध तस्थौ भुवनेष्वन्तरिति[7] प्रजापतिमेवैतदभ्यनूक्तं

1 गृहाणामुपचारः B. C. O. P. 2 इह B. 3 Thus hesita[ting]
emended, cp. IV. 9. 3. 15; भूवमेवमन्वा B. My., भूवमेवमन्वा C. O. P.
भूवमेवमन्वाहासीति M. 4 ?? ददर्शानशनतीव B. C. O. P. My., ददर्शान[...]
C°. (sec. m. °नशनतीव), ददर्शानश्वदतैव M. 5 सृष्टा C. C°. P. (pr. ...)
6 विविश्र B. O. P. C. (orig.) C°. (orig.), without acc. C. and C° sec. [...]
विविश्र Madhy. against the R. S. 7 भुवनेष्वंतरिति C. C°. O. P.

हरित आविवेशेति दिशो वै हरितस्ता अयं पवमान आविष्टः[1] सैषर्गेवैतद-भ्यनूक्ता[1] तदप्येतर्हि तथैव प्रजाः प्रजायन्ते यथा प्रजापतिः प्रजा असृजतेदꣳ हि यदैव स्त्रियाः[2] स्तनावाप्यायेते ऊधः पशूनामथ यज्जायते[3] तज्जायत एवꣳ ह्यग्रे प्रजापतिः प्रजा असृजत ॥४॥ तद्वा आहुः पय एवान्नमित्येतद्ध्यग्रे प्रजा-पतिरन्नमजनयतेति तद्वा आहुरन्नमेव प्रजा इतीदꣳ हि यासां पयो ऽस्ति जाता एव ता स्तनावेवाभिपद्य ततः संभवन्ति यासु वै पयो नास्ति जातमेव ता अप्यादयन्ति तस्मादाहुरन्नमेव प्रजा इति स य एतेन हविषा प्रजाकामो यजत आत्मानमेवैतद्यज्ञं विधत्ते प्रजापतिं भूतम् ॥५॥ स एष आग्नेयो ऽष्टाकपालो भवत्यग्निर्वै[4] देवतानां मुखं प्रजनयिता तस्मादाग्नेयो ऽष्टाकपालो भवति ॥६॥ सौम्यश्चरुः सोमो वै रेतस्तदग्नौ प्रजनयितरि[5] सोमꣳ रेतः सिञ्चति तत्पुर-स्तान्मिथुनं प्रजननं क्रियते ॥७॥ अथ सावित्रो द्वादशकपालो वा भवत्यष्टा-कपालो[6] वा सविता वै देवानां प्रसविता प्रजापतिर्मध्यतः प्रजनयिता तस्मात्सावित्रो द्वादशकपालो वा भवत्यष्टाकपालो[6] वा ॥८॥ सारस्वतश्चरुः पौष्णश्चरुर्योषा सरस्वती वृषा पूषा तदु पुनरुपरिष्टान्मिथुनं प्रजननं क्रियत उभयतो[7] ह वै मिथुनात्प्रजापतिः प्रजाः ससृज इतश्चोर्ध्वा इतश्चावाचीस्तथो वा एष एतदुभयतो मिथुनात्प्रजाः सृजत[8] इतश्चोर्ध्वा इतश्चावाचीस्तस्मादेतानि पञ्च हवीꣳषि भवन्ति ॥९॥ अथातः पयस्याया एवायतनं मारुतस्तु सप्तकपालो भवति[9] स यन्मारुतः सप्तकपालो भवति विशो वै मरुतो देवविशं ता हेदमनि-पेद्धा[10] इव चेरुस्ता ह प्रजापतिं यजमानमुपेत्योचुर्[11] ते प्रजा मथिष्यामह इति

6.7 8 9 10 11 12

---

1 ०ष्टः सैषर्गेवैतद० C°., ष्टः सैषर्गेवैतद० B. C. O. P. 2 स्त्रिया B. C. C°. 3 यज्जायते P. C. C°. 4 भव० C°. 5 Thus (without acc.) M. only; प्रजनयितर्हि the other MSS. 6 Thus B. only, भवत्य० the other MSS. 7 उभयतो C°. 8 सृजत B. O. 9 भवति C. O. P. 10 ०निषेद्धा C°., ०निषेधा C., ०निषिद्धा M. 11 ०चुर्यु C°., but the first acc. blotted out, ०चुर्यु C. B. O. P.

13 या एतेन हविषा स्वदयसे न चेन्नो ऽत्र भागं कल्पयिष्यसीति ॥ १० ॥
हेच्चां चक्रे प्रजापतिः पुरा मे पूर्वाः प्रजा अभूवन्निम उ चेद्वा इमा[1] विम...
ततो मे न किं चन परिशेक्ष्यत इति तत एभ्य[2] एतं भागमकल्पयन्त[3]
मारुतः सप्तकपालः स यत्सप्तकपालो भवति सप्त सप्त हि मारुतो गणः ॥ ...
14 स स्वतवद्भ्यः स्यात्स्वय इति ते तं भागमकल्पयन्त तदुत याज्यानु...
स्वतवत्यौ न विन्दन्ति यदि याज्यानुवाक्ये स्वतवत्यौ न विन्देदपि मारु...
स्याताꣳ स एष प्रजानामेवाहिꣳसायै प्रजानाꣳ शान्तये क्रियते तस्मान्मा...
15-16 सप्तकपालो भवति[4] ॥ १२ ॥ अथातः पयस्यैव पयसो वै प्रजाः संभूताः प...
संभवन्ति तद्यत एव संभूता यतः संभवन्ति तदेवाभ्य एतत्करोति तद्या ए...
पूर्वैर्हविर्भिः प्रजाः सृजते[5] ता एतस्मात्पयस एतस्याः पयस्यायाः संभ...
तस्यां मिथुनमस्ति योषा पयस्या रेतो वाजिनमेतस्माद्वै मिथुनाद्विश्वमसंमि...
17 प्राजायत स यदस्या विश्वमसंमितमनु प्राजायत तस्माद्वैश्वदेवी ॥ १३ ॥ ...
द्यावापृथिव्य[6] एककपाल एतैर्वै हविर्भिः[7] प्रजापतिः प्रजाः सृष्ट्वा ता ...
पृथिवीभ्यां परिजग्राह ता इमाः प्रजा आभ्यां द्यावापृथिवीभ्यां परिगृ...
स्तथो वा एष[8] एतद्या[8] एतैः पूर्वैर्हविर्भिः प्रजाः सृजते ता द्यावापृथि...
18 परिगृह्णाति तस्माद्द्यावापृथिव्य[9] एककपालः ॥ १४ ॥ अथात आवृदेव नो...
दिमुपकिरति सर्वमसद्विसृष्टमसद्वैश्वदेवमसदिति त्रेधा बर्हिः संनद्धं तत्पुन...
भवत्येवꣳ हि प्रजननस्य रूपं प्रजननꣳ हीदं त्रेधाविहितꣳ[10] हीदं प्रजनन...
माता यज्जायते तत्तृतीयं तस्मात्त्रेधा बर्हिः संनद्धं तत्पुनरेकधा भवति प्रस...
संनद्धा भवन्ति ताः प्रस्तरं गृह्णाति प्रजननꣳ हीदं प्रजननꣳ हि प्रस्तः ॥ ...

1 इमा विमक्ष्यते MSS. 2 एभ्य B. 3 Thus P. (originally), °... B. M., °ल्पयन्स C°. C. My. P. (sec. m.), °ल्पयस्त O. 4 भवति C. ... 5 सृजते B. C. O. P. 6 द्यावापृथिव्य B C. O. P., द्यावापृथिव्य C°. ... पूर्वैर्हविर्भिः O. P. C. (pr. m.). 8 एषा एतद्या C°. 9 °तस्माद्यावापृथिव्य B. O. P. 10 त्रेधाविहितꣳ MSS.

आसाद्य हवीꣳष्यग्निं मन्थत्यग्निꣳ ह वै जायमानमनु प्रजापतेः प्रजा जज्ञिरे 19-20 तथो वा एतस्याग्निमेव जायमानमनु प्रजा जायन्ते नवप्रयाजं भवति[1] नवानुयाजं दशाक्षरा[2] वै विराट् सैषा संपत्तामेवैतदुभयतो न्यूनां करोति प्रजननाय न्यूनाद्धीमाः प्रजाः[3] प्रजायन्त[3] उभयतो ह वै न्यूनात्प्रजापतिः प्रजाः ससृज इतश्चोर्ध्वा इतश्चावाचीस्तथो वा एष एतदुभयतो न्यूनात्प्रजाः सृजत[4] इतश्चोर्ध्वा इतश्चावाचीस्तस्मान्नवप्रयाजं भवति[5] नवानुयाजम् ॥१६॥ त्रीणि समिष्टयजूꣳषि 21-22 जुहोति ज्यायो हीदꣳ हविर्यज्ञाद्यन्नवप्रयाजं नवानुयाजमित्यथो अप्येकमेव जुहुयाद्धविर्यज्ञो ह्येष तस्य प्रथमजो गौर्दक्षिणास्त्यमिव हीदमिति स एतेनेष्ट्वा प्रजापतिर्येयं[6] प्रजापतेः प्रजातिर्या विभूतिस्तद्बभूवैवꣳ ह वाव प्रजायत एवꣳ श्रियं गच्छति य एनेनैवं विद्वान्यजते ॥ १७ ॥ तृतीयं ब्राह्मणम् ॥ चतुर्थोऽध्यायः ॥

K. I. 5. 1. M. II. 5. 2.

वैश्वदेवेन ह वै प्रजापतिः प्रजाः ससृजे ता अस्य प्रजाः सृष्टा वरुणस्य 1 यवं जक्षुर्वरुण्यो ह वा अग्रे यवस्तद्यन्न्वेव[7] वरुणस्य यवं प्राद꣡ꣳस्तस्माद्वरुणप्रघासा नाम ॥ १ ॥ ता ह वरुणो जग्राह ता वरुणगृहीता अनत्य एव 2 प्राणत्यः परिदीर्णाः शिशियरे[8] च निषेदुश्च प्राणोदानौ हैवाभ्यो नापचक्रमतुरथ सर्वा[9] अन्या[9] देवता अपचक्रमुस्तयोर्ह हेतोर्न पराबभूवुः ॥२॥ ताः 3-4 प्रजापतिरेतेन हविषाभिषज्यत्तद्याश्चैवास्य प्रजा जाता याश्चाजातास्ता उभयीर्वरुणपाशात्प्रामुञ्चता अस्यानमीवा अकिल्बिषाः प्रजाः[10] प्राजायन्ताथ[10] यदेष एतेन चतुर्थे मासि यजते नाहैवैतस्य प्रजास्तथा[11] वरुणो गृह्णाति याश्च[12]

---

1 Thus acc. B. only, भवति the other MSS. 2 °क्षरो B. My. 3 प्रजाः प्रजा° B. C. O. P. 4 सृजते B. 5 भवति C°. O. P. C. (sec. m.) 6 °पतिर्येयं C. O. P. C°. 7 °द्यन्वेव MSS. 8 शिशियरे O. P. 9 Thus B. (sec. m.), P. (pr. m.), M.; सर्वान्या the other MSS. 10 प्रजाः प्राजा° C°. 11 °स्तथो B. 12 याश्च C°.

त्वेवास्य प्रजा जाता याश्चाजातास्ता उभयोर्वरुणपाशात्प्रमुञ्चति ता असा
अकिल्बिषाः प्रजाः प्रजायन्ते तस्माद्वा एष एतेन चतुर्थे मासि[1] यजते[1] ॥
5·6 तद्वै वेदी द्वावग्नी भवत उभयत एवैतद्वरुणपाशात्प्रजाः प्रमुञ्चतीत
इतश्चावाचीस्तस्माद्वे वेदी द्वावग्नी भवत उत्तरस्यां वेदा उत्तरवेदिमुपकिरति[2]
दक्षिणस्यां क्षत्रं वै वरुणो विशो मरुतः क्षत्रमेवैतद्विश[3] उत्तरं करोति त
7 विशमुपर्यासीनमधस्ताद्विश इमाः प्रजा उपासते ॥४॥ अथैतान्येव पञ्च ह
षि भवन्त्येतैर्वै प्रजापतिः प्रजा असृजतैतैर्वेवैना[4] एष एतदुभयतो वरुण
त्प्रजाः प्रमुञ्चतीतश्चोर्ध्वा इतश्चावाचीस्तस्मादेतानि पञ्च हवींषि भव
8 ५॥ अथैष ऐन्द्राग्नो द्वादशकपालः पुरोळाशो भवति प्राणोदानौ वा इ
तयोर्वा अस्य हेतोः प्रजा न पराबभूवुः स यथा पुण्यं चक्रुषे[5] पुण्यं कु
मेवैतत्प्राणोदानाभ्यामेवैतत्प्रजा भिषज्यति प्राणोदानावेव प्रजासु दधाति
9 देष ऐन्द्राग्नो भवति ॥६॥ उभयत्रैव पयस्ये[6] भवतः पयसो वै प्रजाः सं
पयसः संभवन्ति[7] तद्यत एव संभूता यतः संभवन्ति तत एवैना[8] एतद्
वरुणपाशात्प्रजाः प्रमुञ्चतीतश्चोर्ध्वा इतश्चावाचीस्तस्मादुभयत्र पयस्ये भव
10 ७॥ वारुण्युत्तरा[9] भवति वरुणो वा एना अगृह्णाद्वरुण्यादेवैतत्प्रत्यक्षं
पाशात्प्रजाः प्रमुञ्चति मारुती दक्षिणाजामितायै न्वेव मारुती जा
कुर्याद्यदुभे वारुण्यौ स्यातामत उ ह वै प्रजापतेः प्रजा मरुतो दि
11 जिघांसां चक्रुस्तानेतेन भागेनाशमयत्तस्मान्मारुती दक्षिणा ॥८॥ तयो
रेव करीराण्यावपति कं वै प्रजापतिः प्रजाभ्यः करीरैरकुरुत कम्वेवैष एत
12 भ्यः कुरुते ॥९॥ उभयत्रैव शमीपलाशान्यावपति शं वै प्रजापतिः प्र

---

1 मासि यजते C°. C. (sec. m.). 2 °किरति O. P. 3 °तद्विश
4 °तवैना O. 5 चक्रुषे B. C. O. C°. My. P. (second hand, first hand
bably चक्रुषे), चक्षुषे M. 6 पयस्येव P., पयस्योव O. 7 संभ° C°. 8
C°. 9 वरुण्युत्तरा C°.

शमीपलाशैरकुरुत शम्व्वेवैष[1] एतत्प्रजाभ्यः कुरुते ॥१०॥ काय एककपालो 13
भवति कं वै प्रजापतिः प्रजाभ्यः कायेनैककपालेनाकुरुत कम्व्वेवैष एतत्प्रजा-
भ्यः कुरुते ॥११॥ अथ पूर्वेद्युरतुषानिव यवान्कृत्वान्वाहार्यपचने मनागिवो- 14
पतप्य[2] यावन्तो गृह्यास्तावन्ति प्रतिपुरुषं करम्भपात्राणि कुर्वन्त्येकेनातिरिक्तानि ॥
१२॥ मेषं च वा अपि मेषीं च कुर्वन्ति तयोर्यद्यनैळकीरूर्णा विन्देत्ताः 15
प्राणिज्य[3] निश्लेषयेद्यद्यनैळकीर्न[4] विन्देदपि कुशोर्णा एव निश्लेषयेत्[4] ॥१३॥
स यन्मेषी च मेषश्च भवत एष वै प्रत्यक्षं वरुणस्य पशुर्यन्मेषो वरुण्याद्देवै- 16-17
तत्प्रत्यक्षं वरुणपाशात्प्रजाः प्रमुञ्चति मिथुनौ भवतो मिथुनाद्देवैतद्वरुणपा-
शात्प्रजाः प्रमुञ्चति यवमयौ भवतो यवꣳ हि जक्षुषीरगृह्णादुत्तरस्यां पयस्यायां
मेषीमासादयति दक्षिणस्यां मेषमेवꣳ हि मिथुनं क्लृप्तमुत्तरतो हि स्त्री पुमाꣳसमु-
पशेते ॥१४॥ सर्वाणि हवीꣳष्यध्वर्युरुत्तरस्यां वेदावासादयति मारुतीमेव 18
प्रतिप्रस्थाता दक्षिणस्यामासाद्य हवीꣳषि संमृश्य[5] ॥१५॥ अथाध्वर्युराहाग्नये 19-20
मथ्यमानायानुब्रूहीत्यग्निं मथित्वाहाग्नये[6] समिध्यमानायानुब्रूहीत्युभौ त्वेवेध्मा-
वभ्याधत्तो ऽभ्याधायेध्मौ पूर्वावाघारावाघारयतः[7] ॥१६॥ अथाध्वर्युराहाग्नि-
मग्नीत्संमृड्ढीत्यसंमृष्ट एवाग्निर्भवति संप्रेषितो ऽथ प्रतिप्रस्थाता प्रतिपरैति स
पत्नीमुदानयति तामुदानेष्यन्पृच्छति केन चरसीति वरुण्यꣳ ह वा एतत्स्त्री
करोति यदन्यस्य सत्यन्येन चरति नेन्मे ऽन्तःशल्या जुहवदिति निरुक्तमु ह
वा[8] एनः कनीयो भवति[9] सत्यꣳ हि भवति सा यदि न प्रतिजानीते ज्ञातिभ्यो
हास्या अहितं भवति ॥१७॥ तां वाचयति प्रघासिनो हवामहे मरुतश्च 21
रिशादसः[10] । करम्भेण सजोषस इति यथा पुरोऽनुवाक्यैवमेषैतयैवनानेतसै

---

1 शंन्वेवैष B. 2 Thus MSS. (exc. M.: मन एवो°), r. मनागि° 3 Thus (without acc.) M. only, प्रणय्य the other MSS. 4 निःश्ले° B. O. P. C., the second time only My. 5 संमृश्य B. P. O. 6 मथित्वा° B. 7 °घारयतः C°. 8 वा B. 9 भवति B. 10 ऋशा°C°.

त्त्वेवास्य प्रजा जाता याश्चाजातास्ता उभयोर्वरुणपाशात्प्रमुञ्चति ता अस्यानमी
अकिल्बिषाः प्रजाः प्रजायन्ते तस्माद्वा एष एतेन चतुर्थे मासि[1] यजते[1] ॥३
5·6 तद्वै वेदी द्वावग्नी भवत उभयत एवैतद्वरुणपाशात्प्रजाः प्रमुञ्चतीतश्चो
इतश्चावाचीस्तस्माद्वै वेदी द्वावग्नी भवत उत्तरस्यां वेदा उत्तरवेदिमुपकिरति[2]
दक्षिणस्यां क्षत्रं वै वरुणो विशो मरुतः क्षत्रमेवैतद्विश[3] उत्तरं करोति तस्मात्
7 क्षत्रियमुपर्यासीनमधस्ताद्विश इमाः प्रजा उपासते ॥४॥ अथैतान्येव पञ्च हवीं
षि भवन्त्येतैर्वै प्रजापतिः प्रजा असृजतैतैर्वेवैना[4] एष एतदुभयतो वरुणपाशा
त्प्रजाः प्रमुञ्चतीतश्चोर्ध्वा इतश्चावाचीस्तस्मादेतानि पञ्च हवींषि भवन्ति
8 ५॥ अथैष ऐन्द्राग्नो द्वादशकपालः पुरोळाशो भवति प्राणोदानौ वा इन्द्रा
तयोर्वा अस्य हेतोः प्रजा न पराबभूवुः स यथा पुण्यं चक्रुषे[5] पुण्यं कुर्या
मेवैतत्प्राणोदानाभ्यामेवैतत्प्रजा भिषज्यति प्राणोदानावेव प्रजासु दधाति त
9 देष ऐन्द्राग्नो भवति ॥६॥ उभयत्रैव पयस्ये[6] भवतः पयसो वै प्रजाः संभू
पयसः संभवन्ति[7] तद्यत एव संभूता यतः संभवन्ति तत एवैना[8] एतदुभ
वरुणपाशात्प्रजाः प्रमुञ्चतीतश्चोर्ध्वा इतश्चावाचीस्तस्मादुभयत्र पयस्ये भवतः
10 ७॥ वारुण्युत्तरा[9] भवति वरुणो वा एना अगृह्णाद्वरुण्यादेवैतत्प्रत्यक्षं वरु
पाशात्प्रजाः प्रमुञ्चति मारुती दक्षिणाजामितायै न्वेव मारुती जामि
कुर्याद्यदुभे वारुण्यौ स्यातामृत उ ह वै प्रजापतेः प्रजा मरुतो दक्षि
11 जिघांसां चक्रुस्तानेतेन भागेनाशमयत्तस्मान्मारुती दक्षिणा ॥८॥ तयोरुभ
रेव करीराण्यावपति कं वै प्रजापतिः प्रजाभ्यः करीरैरकुरुत कम्वेवैष एतत्प्र
12 भ्यः कुरुते ॥९॥ उभयत्रैव शमीपलाशान्यावपति शं वै प्रजापतिः प्रजा

---

1 मासि यजते C°. C. (sec. m.). 2 °किरति O. P. 3 °तद्विश C°
4 °तवैना O. 5 चकृषे B. C. O. C°. My. P. (second hand, first hand pro-
bably चक्रुषे), चक्षुषे M. 6 पयस्येव P., पयस्योव O. 7 संभ° C°. 8 °एवै
C°. 9 वरुण्युत्तरा C°.

शमीपलाशैरकुरुत शम्वेवैष[1] एतत्प्रजाभ्यः कुरुते ॥१०॥ काय एककपालो भवति कं वै प्रजापतिः प्रजाभ्यः कायेनैककपालेनाकुरुत कुम्वेवैष एतत्प्रजाभ्यः कुरुते ॥११॥ अथ पूर्वेद्युरतुषानिव यवान्कृत्वान्वाहार्यपचने मनागिवोपतप्य[2] यावन्तो गृह्यास्तावन्ति प्रतिपुरुषं करम्भपात्राणि कुर्वन्त्येकेनातिरिक्तानि ॥१२॥ मेषं च वा अपि मेषीं च कुर्वन्ति तयोर्यद्यनैळकीरूर्णा विन्देत्ताः प्रणिज्य[3] निश्लेषयेद्यद्यनैळकीर्न[4] विन्देदपि कुशोर्णा एव निश्लेषयेत्[4] ॥१३॥

13

14

15

स यन्मेषी च मेषश्च भवत एष वै प्रत्यक्षं वरुणस्य पशुर्यन्मेषो वरुण्यादेवैतत्प्रत्यक्षं वरुणपाशात्प्रजाः प्रमुञ्चति मिथुनौ भवतो मिथुनादेवैतद्वरुणपाशात्प्रजाः प्रमुञ्चति यवमयौ भवतो यवꣳ हि जक्षुषीरगृह्णादुत्तरस्यां पयस्यायां मेषीमासादयति दक्षिणस्यां मेषमेवꣳ हि मिथुनं क्लृप्तमुत्तरतो हि स्त्री पुमाꣳसमुपशेते ॥१४॥ सर्वाणि हवीꣳष्यध्वर्युरुत्तरस्यां वेदावासादयति मारुतीमेव प्रतिप्रस्थाता दक्षिणस्यामासाद्य हवीꣳषि संमृश्य[5] ॥१५॥ अथाध्वर्युराहाग्नये मथ्यमानायानुब्रूहीत्यग्निं मथित्वाहाग्नये[6] समिध्यमानायानुब्रूहीत्युभौ त्वेवेध्मावभ्याधत्तो ऽभ्याधायेध्मौ पूर्वावाघारावाघारयतः[7] ॥१६॥ अथाध्वर्युराहाग्निमग्नीत्संमृड्ढीत्यसंमृष्ट एवाग्निर्भवति संप्रेषितो ऽथ प्रतिप्रस्थाता प्रतिपरैति स पत्नीमुदानयति तामुदानेष्यन्पृच्छति केन चरसीति वरुण्यꣳ ह वा एतत्स्त्री करोति यदन्यस्य सत्यन्येन चरति नेन्मे ऽन्तःशल्या जुहवदिति निरुक्तमु ह वा[8] एनः कनीयो भवति[9] सत्यꣳ हि भवति सा यदि न प्रतिजानीते ज्ञातिभ्यो हास्या अहितं भवति ॥१७॥ तां वाचयति प्रघासिनो हवामहे मरुतश्च रिशादसः[10] । करम्भेण सजोषस इति यथा पुरोऽनुवाक्यैवमेषैतयैवनानेतसं

16·17

18

19·20

21

---

1 शंन्वेवैष B. 2 Thus MSS. (exc. M.: मन एवो°), r. मनागि° 3 Thus (without acc.) M. only, प्रणय्य the other MSS. 4 निःश्ले° B. O. P. C., the second time only My. 5 संमृश्य B. P. O. 6 मथित्वा° B. 7 °घारयतः C°. 8 वा B. 9 भवति B. 10 ऋशा°C°.

22 भागाय ह्वयति ॥१८॥ तानि प्रतिपुरुषं यावन्तो गृह्यास्तावन्ति भवन्त्येके
रिक्तानि प्रतिपुरुषमेवैतदेकेनैकेन या अस्य प्रजा जातास्ता वरुणपाशात्प्रमुञ्च
नातिरिक्तानि भवन्ति तद्या एवास्याजाताः[1] प्रजास्ता एव[2] तेन[2] वरुणपा
23 त्प्रमुञ्चति ॥१९॥ पात्राणि भवन्ति पात्रैर्ह्यशनमश्नन्ति यवमयानि भ
यवꣳ हि जक्षुषीरगृह्णात् ॥२०॥ शूर्पेण जुहोति शूर्पेण ह्यशनं क्रियते
24 जुहोति मिथुनादेवैतद्वरुणपाशात्प्रजाः प्रमुञ्चति ॥२१॥ पुरा यज्ञात्पुराहुति
जुहोत्यहुतादो वै विशो विशो वै मरुतस्तस्मात्पुरा यज्ञात्पुराहुतिभ्यो जु
यत्र ह वै तत्प्रजापतेः प्रजाः परिदीर्णाः शिश्रियरे च निषेदुश्च[3] तदासां
पाप्मानं विमेथिरे तथो वा एतस्य प्रजानां मरुतः पाप्मानं विमथ्नते ॥
25 सा जुहोति यद्ग्रामे यदरण्य इति ग्रामे वा ह्यरण्ये वैनः क्रियते यत्स
यादिन्द्रिय इति यन्मानुष इत्येवैतदाह यदाह यत्सभायामिति यदिन्द्रिय
यद्देवत्रेत्येवैतदाह देवत्रा वा हि मानुषे वैनः क्रियते यदेनश्चकृमा व
तदवयजामहे स्वाहेति यत्किं च वयमेनश्चकृमेदं तस्मात्प्रमुच्यामह इत्येवैतदा
26 २३॥ अथैन्द्रीं मरुत्वतीं जपति यत्र ह वै तत्प्रजापतेः प्रजानां मरुतः पा
विमेथिरे[4] तद्धेक्षां चक्रे प्रजापतिरिम उ ह मे प्रजा न विमथ्नीरन्निति ॥
27-28 स ऐन्द्रीं मरुत्वतीमजपत्क्षत्रं वा इन्द्रो विशो मरुतः क्षत्रं वै विशो नि
निषिद्धा असन्निति मो षू ण इन्द्रात्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मिन्नवया
29-30 महश्चिद्यस्य[6] मीळ्हुषो यव्या हविष्मन्तो मरुतो वन्दते गीरिति[7] ॥२५॥
वाचयत्यक्रन्कर्म कर्मकृत इत्यक्रन्हि कर्म कर्मकृतः सह वाचा मयो
सह[9] हि वाचाक्रन्देवेभ्यः कर्म कृत्वेति देवेभ्यो हि कर्माक्रन्नस्तं प्रेत स
इति यदन्यत ओळ्हया सह भवति तस्मादाह सचाभुव इत्यस्तं प्रेतेति

---

1 ⁰जाताः C⁰. 2 एवैतद् (instead of एव तेन) M. 3 निषेदु
4 विमेथिरे MSS. 5 शुष्मि⁰ B. C. 6 Thus also C⁰. pr. m. corrected
महश्चिद्यस्य. 7 गीरिति MSS. 8 मयोभुवेति C⁰. 9 सह B. C. O. P.

वा अस्तं जघनार्धो वा एष यज्ञस्य यत्पत्नी तामिदं प्राचीं प्रासीषदद्रुहा उ वा अस्तं तदेनां गृहेष्वेव प्रतिष्ठापयति प्रतिपराणीय प्रतिप्रस्थाता पत्नीमुदाद्रवति संमृजन्त्यग्नी[1] उत्तरावाघारावाघारयतः ॥२६॥ आश्राव्याध्वर्युर्होतारं प्रवृणीते सीदति होतोत्तरस्या वेदेर्होतृषदने प्रसूतः स्रुचावादायातिक्रम्याध्वर्युराश्राव्याह समिधो यजेति यज यजेत्येव चतुर्थे चतुर्थे समानयमानौ नव प्रयाजान्यजतः ॥ २७॥ अथाध्वर्युराहाग्नये अनुब्रूहीत्याग्नेयमाज्यभागमुभौ त्वेव चतुराज्यस्यावद्यतो ऽतिक्रम्याश्राव्याहाग्निं यजेति वषट्कृते जुहोति ॥२८॥ सोमायानुब्रूहीत्याह सौम्यमाज्यभागमुभौ त्वेव चतुराज्यस्यावद्यतो ऽतिक्रम्याश्राव्याह सोमं यजेति वषट्कृते जुहोति ॥२९॥ स[2] यदिहैवाध्वर्युराश्रावयतीह[3] वषट्क्रियते[3] ऽथ कृतानुकर एव प्रतिप्रस्थाता क्षत्रं वै वरुणो विशो मरुतः क्षत्रायैवैतद्विशं[4] कृतानुकरामनुवर्त्मानं करोति यद्धापि प्रतिप्रस्थाताश्रावयेत्प्रत्युद्यामिनीं ह क्षत्रियाय विशं कुर्यात्तदप्रत्युद्यामिनीमेवैतत्क्षत्रियाय[5] विशं करोत्यनुवर्त्मानं तस्मात्प्रतिप्रस्थाता नाश्रावयत्यथ पाणावेव बिभ्रत्प्रतिप्रस्थाता स्रुचा उपास्ते ॥ ३०॥ अथैतैर्हविर्भिरध्वर्युः प्रचरत्यैन्द्राग्नेनान्तमेनाथ पयस्याभ्यां प्रचरिष्यन्तौ यो ऽयं मेषो मारुत्यां भवति तं वारुण्यामवदधाति[6] यो[6] मेषी वारुण्यां भवति तां मारुत्यामवदधाति ॥३१॥ स यदेवं विपरिहरन्ति क्षत्रं वै वरुणो वीर्यं पुमान्वीर्यमेवैतत्क्षत्रे दधाति विशो वै मरुतो ऽवीर्या[7] वै स्त्र्यवीर्यामेवैतद्विशं[8] करोति ॥३२॥ अथाह वरुणायानुब्रूहीति तत्राप्यन्यतरेणावदानेन सह मेषमवदधात्यतिक्रम्याश्राव्याह वरुणं यजेति वषट्कृते जुहोति ॥३३॥ अथ प्रति-

31 32 33-34 35-36 37 38

---

1 Thus M. only, संमृजत्यग्नी the other MSS. 2 यदिहैव MSS. (but: यत् । इह । एव । अध्वर्युः ।). 3 Thus acc. C. C°., तीह वष° the other MSS. 4 क्षत्रियैवैतद्विशं B. 5 Thus acc. MSS., r. कुर्यादप्रत्युद्यामिनी°? 6 °दधाति यो MSS. exc. B., which has °दधाति या 7 वीर्या B. 8 °वीर्यामेवै° C°.

प्रस्थातुरुत्तरसिचमन्वारभ्याहाध्वर्युर्मरुद्भ्यो ऽनुब्रूहीति तत्राप्यन्यतरेणावदानेन
प्रतिप्रस्थाता मेषीमवदधात्यध्वर्युरेवाश्राव्याह मरुतो यजेति वषट्कृते जुहोति
39 ३४॥ अथाध्वर्युः कायेनैककपालेन प्रचरति कायेनैककपालेन चरित्वाह
स्विष्टकृते ऽनुब्रूहीति सर्वेषाꣳ हविषामध्वर्युरवद्यति मारुत्या एव प्रतिप्रस्थाता
40 41 क्रम्याश्राव्याहाग्निꣳ स्विष्टकृतं यजेति वषट्कृते जुहोति ॥३५॥ सादयि
स्रुचावध्वर्युः प्राशित्रमवद्यति प्राशित्रमवदायेळामवद्यति तदेवापि प्रतिप्रस्थाता
स्रुचं प्रगृह्णाति तत्सो ऽभ्यवदधात्युपहूयेळां मार्जयित्वाथाध्वर्युराहाग्नीत्समि
माधायाग्निꣳ[1] संमृड्ढि ब्रह्मन्प्रस्थास्याम इति पृषदाज्यꣳ स्रुचोरध्वर्युर्व्यान
यदि प्रतिप्रस्थातुः पृषदाज्यꣳ[2] स्यात्तत्स[2] व्यानयेत यदि पृषदाज्यं[3] न स्याद
यदेवोपभृत्याज्यं[4] तत्तर्हि व्यानयेतातिक्रम्याश्राव्याह देवान्यजेति यज यजे
चतुर्थे चतुर्थे समानयमानौ नवानुयाजान्यजतः स यन्नवप्रयाजं नवानुया
मित्युभयत एवैतन्न्यूनाद्वरुणपाशात्प्रजाः[5] प्रमुञ्चतीतश्चोर्ध्वा इतश्चावाची
42-45 नवप्रयाजं भवति[6] नवानुयाजम् ॥३६॥ सादयित्वा स्रुचौ व्यूहतो[7] व्युह्य[8]
परिधीन्त्समज्य[9] परिधीनभिपद्याध्वर्युराश्राव्याहेषिता दैव्या होतारो भद्रवा
प्रेषितो मानुषः सूक्तवाकायेति सूक्ता होता प्रतिपद्यत[10] उभावेवेमौ प्रस्तरावाद
अनुप्रहृत्य प्रस्तरौ तृणे अपगृह्योपासाते अथाग्नीदाहानुप्रहरेत्युभावेवानुप्रह
संवदस्वेत्यगादग्नीदगंच्छ्रावय श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्य
शं योर्होता प्रतिपद्यत उभावेवेमौ परिधीननुप्रहृत्य स्रुचः संप्रगृह्य
46-48 सादयतः प्रतिपरेत्याध्वर्युः पत्नीः संयाजयत्युदेत्याध्वर्युः ॥३७॥ त्रीणि
यजूꣳषि जुहोति तूष्णीमेव प्रतिप्रस्थाता स्रुचं प्रगृह्णात्यथ ये वैश्वदेवेन

---

1 °हाग्नीत्समिध° C°. 2 पृषदाज्यꣳ स्यात्तत्स B., °ज्यꣳ स्यात्तत्स O. C. 3 °ज्यं न स्यादपि B. C. O. P., ज्यं न स्यादपि C°. 4 यदेवोप° B. 5 °न्नाद्वरुण° C°. 6 भवति O. P. C°. 7 व्युहतो C°. 8 व्यूह्य MSS. exc. (cp I. 6. 1. 30). 9 सम्मृज्य B. P. (pr.m.). 10 प्रतिप° C°.

I.5.1.38.

मानयोर्वाससी परिहिते स्यातां ते एवाप्यत्र स्यातामथास्या वारुण्याः पयस्यायाः श्यामकर्पमिश्रमादाय तेनावभृथं[1] यन्ति वरुण्यं वा इदं निर्वरुणतायै तत्र न साम गीयते न[2] ह्यत्र[2] साम्ना कुर्वन्ति तूष्णीमेव परेत्यावभृथ निचुम्पुण निचेरुरसि निचुम्पुण । अव देवैर्देवकृतमेनो ऽयासिषमव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहीति स्थालीमुपमारयति स्नात्वान्ये वाससी परिधायोदेतः कामꣳ हैते यस्मै कामयेत तस्मै दद्यान्न हि दीक्षितवसने स यथाहिस्त्वचो निर्मुच्येतैवं वरुण्यात्सर्वस्मात्पाप्मनो निर्मुच्योदैति केशश्मश्रुप्त्वाग्नी समारोहयत उदवसाय ह्येतेन यजते न ह्यवकल्पते यदुत्तरवेदावग्निहोत्रं जुहुयुर्गृहानागत्य निर्मथ्य पौर्णमासेन यजत[3] उत्सन्नो वा अयं यज्ञो यच्चातुर्मास्यानि क्लृप्तेनैवैतद्यज्ञेनान्ततः प्रतितिष्ठति ॥३८॥ प्रथमं ब्राह्मणम् ॥

M.II.5.3.

K. I. 5. 2.

वरुणप्रघासैर्ह वै प्रजापतिः प्रजा वरुणपाशात्प्रामुञ्चत्ता अनमीवा अकिल्बिषाः प्रजाः प्राजायन्ताथैतैः साकमेधैरेतैर्ह वै देवा वृत्रं जघ्नुरेतैर्वैव व्यजयन्त येयमेषां विजितिस्तथो वा एष एतैः पाप्मानं द्विषन्तं भ्रातृव्यꣳ हन्ति तथो एव विजयते स वै त्र्यहमन्वहं[4] यजते ॥१॥ स पूर्वेद्युरग्नये ऽनीकवते ऽष्टाकपालं पुरोळाशं निर्वपत्यग्निꣳ ह वा अनीकं कृत्वा देवा उपप्रेयुः प्रातर्वृत्रꣳ हनिष्यन्तः स तेजो ऽग्निर्नाव्यथत तथो[5] वा[5] एष[5] पाप्मानं[5] द्विषन्तं भ्रातृव्यꣳ हनिष्यन्नग्निमेवानीकं कृत्वोपप्रैति तस्मादग्नये ऽनीकवते ऽष्टाकपालं पुरोळाशं निर्वपति ॥२॥ अथ मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुं निर्वपति मरुतो ह वै सांतपना मध्यंदिने वृत्रꣳ संतेपुः स संतप्तो ऽनन्नेव प्राणन्परिदीर्णः शिश्ये[6] तथो वा एतस्य पाप्मानं द्विषन्तं भ्रातृव्यं मरुत एव सांतपना मध्यंदिने संतपन्ति तस्मान्मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुं निर्वपति ॥३॥ अथ मरुद्भ्यो

---

1 ततोवभृथं B. 2 नह्यत्र C°. 3 यजत C°. 4 °मन्त्रहं O. P. 5 तथो वा एतं पा° O., तथो वा एष एतं पा° B., तथो एष पा° M. 6 शिश्ये B.

गृहमेधिभ्यो ऽपराह्णे पर्णशाखया वत्सानपाकृत्य पवित्रवति संदोहैतं वा श्रपयति सर्वो हि स चरुर्यत्र क्व च तण्डुलानावपन्ति मेधꣳ ह वा एतं देवा आत्मनि दधिरे प्रातर्वृत्रꣳ हनिष्यन्तस्तथो वा एष[1] पाप्मानं द्विषन्तं भ्रातृव्यं हनिष्यन्नात्मनि मेधं धत्ते स यत्क्षीरौदनो भवति मेधो वै पयो मेधस्तण्डुला
6 उभयमेवैतन्मेधमात्मनि धत्ते ॥४॥ तस्य द्वय्यावृत्सैव[2] वेदिः[3] स्तीर्णा भवति परिधीꣳश्चैव शकलाꣳश्चोपनिदधति स्रुवं[4] चो एव स्रुचं च[4] संमार्ष्ट्यथ पिशीले वा पात्र्यौ वा निर्णिज्य तयोरेतद्बुधौदनमुद्धरति[5] तयोः सर्पिरासेकं कृत्वा सर्पिरासिच्य तावादायोदाद्रवति स तामेव वेदिꣳ स्तीर्णामभिमृश्य परिधीन्परिधाय यावतः कामयते शकलाꣳस्तावतो ऽभ्यादधात्यासादयत्येतावादे
7 सीदति होता होतृषदने स्रुवं च स्रुचं चाभिपद्यमान आह ॥५॥ अग्नये ऽनु ब्रूहीत्याग्नेयमाज्यभागꣳ सो ऽस्य दक्षिणस्यौदनस्य चतुराज्यस्यावद्यत्यतिक्रम्या
8 श्राव्याहाग्निं यजेति वषट्कृते जुहोति ॥६॥ सोमायानुब्रूहीत्याह सौम्यमाज्य भागꣳ सो ऽस्योत्तरस्यौदनस्य चतुराज्यस्यावद्यत्यतिक्रम्याश्राव्याह सोमं यजे
9 वषट्कृते जुहोति ॥७॥ अथाह मरुद्भ्यो गृहमेधिभ्यो ऽनुब्रूहीति सो ऽस्य दक्षिणस्यौदनस्य तत एवाज्यमुपस्तृणीते ततो द्विरवद्यत्यभिघारयति[6] प्रत्य नक्त्यवदाने अतिक्रम्याश्राव्याह मरुतो गृहमेधिनो यजेति वषट्कृते जुहोति ॥
८॥ अथाहाग्नये स्विष्टकृते ऽनुब्रूहीति सो ऽस्योत्तरस्यौदनस्य तत एवाज्यमुप स्तृणीते ततो द्विरवद्यत्यभिघारयति न प्रत्यनक्त्यवदाने अतिक्रम्याश्राव्याहाग्निं स्विष्टकृतं यजेति वषट्कृते जुहोतीळामेवावद्यति न प्राशित्रमेतन्न्वेकमयनम्[7]
11 ९॥ अथ द्वितीयꣳ सैव वेदि स्तीर्णा भवति परिधीꣳश्चैव शकला श्चोपनिदधति

---

1 एतेन ins. M. 2 द्वयावृ° B, द्विवृ° M. 3 वेदि MSS. exc. O.P. 4 स्रुवं च स्रुचं च M. 5 तयोरेतद्बुधौ° M. only, तयोरेतन्मेधौ° the other MSS. 6 All the MSS. exc. M. (C°. is defective) insert न. 7 °त्रमेतन्वेक° B. C. O. P. C°. M., °त्रमेतन्नेक° My.

स्रुवं वो एव स्रुचं च संमार्ष्टि तथो एवैतं पविश्रवति संदोह्य चरुं अपयत्यभ्यर्ध आज्यं स्थाल्यामधिश्रयति तं यदा शृतं मन्यते ऽथैनमभिघार्योद्वासयति तमु-द्वास्यानक्ति तं सोऽखमेवादायोदाद्रवति स तामेव वेदिं स्तीर्णामभिमृश्य परिधीन्परिधाय यावतः कामयते शकलांस्तावतो ऽभ्यादधात्यासादयत्येतं सोऽखमेवाभ्यर्ध आज्यमासादयति सीदति होता होतृषदने स्रुवं च स्रुचं चाभि-पद्यमान आह ॥१०॥ अग्नये ऽनुब्रूहीत्याग्नेयमाज्यभागं सो ऽस्याः[1] स्थाल्या- 12
श्चतुराज्यस्यावद्यत्यतिक्रम्याश्राव्याहाग्निं यजेति वषट्कृते जुहोति ॥११॥ सोमा- 13
यानुब्रूहीत्याह सौम्यमाज्यभागं सो ऽस्याः[1] स्थाल्याश्चतुराज्यस्यावद्यत्यति-क्रम्याश्राव्याह सोमं यजेति वषट्कृते जुहोति ॥१२॥ अथाह मरुद्भ्यो गृहमेधि- 14
भ्यो ऽनुब्रूहीत्युपस्तृणीत आज्यमथास्य चरोर्द्विरवद्यत्यभिघारयति[2] प्रत्यनक्त्यव-दाने अतिक्रम्याश्राव्याह मरुतो गृहमेधिनो यजेति वषट्कृते जुहोति ॥१३॥
अथाहाग्नये स्विष्टकृते ऽनुब्रूहीत्युपस्तृणीत आज्यमथास्य चरोः सकृदवद्यति 15
द्विरभिघारयति न प्रत्यनक्त्यवदानमतिक्रम्याश्राव्याहाग्निं स्विष्टकृतं यजेति वषट्कृते जुहोतीळामेवावद्यति न प्राशित्रम् ॥१४॥ ते यावतो गृह्या हविराशाः[3] 16
स्युस्ते ऽस्यौदनस्याश्नीयुरथो ऋत्विजो ऽथो अन्ये[4] ब्राह्मणा यदि बहुः स्या-दुधेमामनिरशितामेव कुम्भीमपिधाय निदधाति प्रातः पूर्णदर्वाय समवर्जन्ति वत्सांस्तत्पशव आत्मनि मेधं दधते ॥१५॥ यत्राग्वैतां रात्रिमग्निहोत्रं जुहोति 17
निवान्याया वत्सं यमयन्ति प्रातः पितयज्ञायाथ प्रातर्हुते वाहुते वाग्निहोत्रे[5] यतरथा कामयेतास्या अनिरशितायाः[6] कुम्भ्याः पूर्णदर्वमुपहन्ति[7] पूर्णा दर्वि परापत सुपूर्णा पुनरापत । वस्नेव विक्रीणावहा इषमूर्जं शतक्रताविति यथा पुरोऽनुवाक्यैवमेषतयैवैनमेतस्मै भागाय ह्वयति ॥१६॥ अथर्षभमाह्वयति[8] स 18

---

1 स्या C. M. 2 All the MSS. exc. M. C°. ins. न. 3 Thus acc the MSS. 4 न्ये O. P. (sec. m.). 5 °होत्रे MSS. 6 आनिर° B. 7 Thus C. and cp. M.: दर्पमपहन्ति, °दर्व्यमु° the other MSS. 8 अथ ऋषभ° M.

यदि रुयात्स वषट्कार एतद्वा इन्द्रस्य रूपं यदृषभस्य स्वेनैवैनमेतद्रूपेणैतस्मै भा
यैतेन भागेन वृत्रस्य वधाय ह्वयति स यदि रुयादथ विद्यादा म इन्द्रो या
गन्तसेन्द्रो मे यज्ञ इति यद्यु न रुयादपि ब्राह्मण एव दक्षिणत आ
19 ब्रूयाज्जुहुधीति सो एवैन्द्री वाक् ॥ १७ ॥ स जुहोति देहि मे ददामि ते
मे धेहि नि ते दधे । निहारं निहरामि ते निहारं निहरासि मे स्वाहेति
20 १८ ॥ अथ मरुद्भ्यः क्रीळिभ्यः सप्तकपालं पुरोळाशं निर्वपति मरुतो ह
क्रीळिन इन्द्रं वृत्रꣳ हनिष्यन्तमागतमभितो मह्यन्तः परिचिक्रीळुस्तथो
एतं पाप्मानं[2] द्विषन्तं भ्रातृव्यꣳ हनिष्यन्तं मरुत एव क्रीळिनो ऽभितो म
यन्तः परिक्रीळन्ति तस्मान्मरुद्भ्यः क्रीळिभ्यः सप्तकपालं पुरोळाशं निर्व
स यत्सप्तकपालो भवति सप्त सप्त हि मारुतो गणः ॥ १९ ॥ द्वि
ब्राह्मणम् ॥

M.II.5.4. K. I. 5. 3.

1 महाहविषा[3] हवै देवा वृत्रं जघ्नुस्तेनैव व्यजयन्त येयमेषां विजितिस्तथो वा
2 एतेन पाप्मानं द्विषन्तं भ्रातृव्यꣳ हन्ति तथो एव विजयते ॥ १ ॥ तु
वृदुपकिरत्युत्तरवेदिं गृह्णाति पृषदाज्यं मन्थत्यग्निं नव प्रयाजा नवानुयाजास्त्री
3 समिष्टयजूꣳष्युथैतान्येव पञ्च हवीꣳष्यपि भवन्ति ॥ २ ॥ स यदाग्नेयो भ
त्यग्निना ह वा एनं तेजसा जघ्नुः स तेजो ऽग्निर्नाव्यथत तस्मादाग्नेयो ऽ
4 कपालो भवति ॥ ३ ॥ सौम्यश्चरुः सोमराजानो ह वा एनं जघ्नुस्तस्मात्सौम्य
5 श्चरुर्भवति ॥ ४ ॥ अथ सावित्रो द्वादशकपालो वा भवत्यष्टाकपालो
सविता वै देवानां प्रसविता सवितृप्रसूता[5] ह वा एनं जघ्नुस्तस्मात्सावि
6 द्वादशकपालो वा भवत्यष्टाकपालो[4] वा ॥ ५ ॥ सारस्वतश्चरुर्वाग्वै सरस्वती

---

1 स्वाहेति MSS. 2 तथो वा एष एतेन M. 3 महाहविषा C°. 4 भवत्य
C. O. P. C° 5 सवितृप्रसूता B. C. O. P.

I.5.3.6.

हैनमनुममादाभिपद्यस्व[1] प्रहर जहीति तस्मात्सारस्वतश्चरुः[2] ॥ ६ ॥ पौष्णश्चरु- 7
रियं[3] वै पृथिवी पूषा हैवैनं प्रतिप्रददौ वधायैतया हैवैनꣳ संप्रत्तं जघ्नुस्तस्मा-
त्पौष्णश्चरुः[2] ॥ ७ ॥ ऐन्द्राग्नो द्वादशकपाल एतेन ह वा एनं जघ्नुर्ब्रह्माग्निः 8
क्षत्रमिन्द्रो ब्रह्म चैवैतत्क्षत्रं च सꣳरभ्य ते सयुजौ कृत्वा ताभ्याꣳ हैवैनं जघ्नुर्ब्रह्म
चैवैतत्क्षत्रं च सयुजौ करोति तस्माद्ब्रह्म च क्षत्रं च सयुजौ ॥ ८ ॥ माहेन्द्रश्चरु- 9
रिन्द्रो वा एष पुरा वृत्रस्य वधादित्यथ वृत्रं जघ्निवान्यथा महाराजो विजि-
ग्यान एवं महेन्द्र इति तस्मान्माहेन्द्रश्चरुर्महान्तमु चैवैनमेतत्करोति वृत्रस्य
वधाय ॥ ९ ॥ वैश्वकर्मण एककपालो विश्वं वा एतद्देवानां कर्म कृतमासीत्सर्वं 10-11
जितꣳ साकमेधैरीजानानां तथो वा एतस्य विश्वं कर्म कृतं भवति सर्वं जितꣳ
साकमेधैरीजानस्य त एतेनेष्ट्वा देवा येयं देवानां जितिर्या श्रीस्तद्बभूवुरेवꣳ ह
वाव जयत्येवꣳ श्रियं गच्छति य एनेनैवं विद्वान्यजते ॥ १० ॥ तृतीयं
ब्राह्मणम् ॥ पञ्चमो ऽध्यायः ॥

K. I. 6. 1. M.II.6.1.

महाहविषा[4] ह वै देवा वृत्रं जघ्नुस्तेनैव व्यजयन्त येयमेषां विजितिरथ 1
यानेवैषां तस्मिन्त्संग्रामे ऽघ्नꣳस्तानेव पितृयज्ञेन समैरयन्त पितरो वै त आसꣳ-
स्तस्मात्पितृयज्ञो नाम ॥ १ ॥ तद्वसन्तो ग्रीष्मो वर्षा एते ये व्यजयन्ताथ 2-3
शरद्धेमन्तः शिशिरस्त उ ते यान्पुनः समैरयन्ताथ यदेष एतेन यजते नाहैवैतस्य
कं चन घ्नन्तीति देवा अकुर्वन्निति[5] त्वेवैष एतत्करोति तानु च हैवैतदवति
यान्देवाः समैरयन्त स्वानु च पितॄञ्छ्रेयाꣳसं लोकमुपोन्नयति[6] यदु चैवास्यात्मनो[7]
ऽवरेण[7] हन्यते मीयते तदु चैवैतेन पुनराप्याययति[8] तस्माद्वा एष एतेन

---

1 °भिपद्यस्व B. C. O. P., °भिपद्यस्व C°. 2 °रुः C°. 3 °श्चरुरियं B.
4 °महाहविषा C°. 5 Thus C. O. P., °कुर्वन्निति B., °कुर्वन्निति C°. 6 °यंति
MSS. exc. M. and C. (sec. m.). 7 °त्मनोवरेणेन O. P. C. 8 °प्यायति O.
P., °प्याययते M.

4 यजते[1] ॥ २ ॥ स वै पितृभ्यः सोमवद्भ्यः षट्कपालं पुरोळाशं नि
सोमाय वा पितृमते षड्वा ऋतव ऋतवो वै पितरस्तस्मात्षट्कपालो भवति
5 ३ ॥ अथ पितृभ्यो बर्हिषद्भ्यः पूर्वेद्युरन्वाहार्यपचने धानाः कुर्वन्ति तासाम
6 पिंषन्त्यर्धा इत्येवापिष्टा भवन्ति ता उ पितृभ्यो बर्हिषद्भ्यः[3] ॥ ४ ॥
पितृभ्यो ऽग्निष्वात्तेभ्यो निवान्याया दुग्धे सकृदुपमथित एकशलाकया
7 भवति सकृद्ध्येव पराञ्चः पितरस्तस्मात्सकृदुपमथितो भवति ॥ ५ ॥ तद्य
सोमेनेजानास्ते पितरः सोमवन्तो ऽथ ये ऽनीजानाः सोमेन दत्तेनैव
लोकं जयन्ति ते बर्हिषदो ऽथ ये ततो नान्यतरच्चन यानग्निरेव दुहन्स्वद
8-10 ते ऽग्निष्वात्ता एते वाव त्रयाः पितरः[5] ॥ ६ ॥ अथ खलु प्राचीनावीती
भूत्वा जघनेन गार्हपत्यं दक्षिणासीनः सव्यं जान्वाच्यैतं षट्कपालं पुरो
गृह्णाति स तत एव दक्षिणा तिष्ठन्नवहन्ति दक्षिणैव दृषदुपले[7] उपधत्ते दक्षि
णार्धे[7] गार्हपत्यस्य षट्कपालान्युपधत्ते स यदेतां दिशं सचन्त एषा
पितॄणां दिग्दक्षियोन्नैवान्वाहार्यपचनं चतुःस्रक्तिं वेदिं करोत्यवान्तरदिशो
11 स्रक्तीः करोत्यवान्तरदिशो हि पितरः ॥ ७ ॥ तन्मध्ये ऽग्निं समादधा
पुरस्ताद्धि देवाः प्रत्यञ्चो मनुष्यांस्तस्मादेभ्यः प्राङ् तिष्ठन्जुहोति सर्वत
पितरो ऽवान्तरदिशो हि पितरः सर्वतो हीमा अवान्तरदिशस्तस्मान्मध्ये ऽग्नि
12 समादधाति ततः प्राकस्तम्भयजुर्हरति ॥ ८ ॥ अथ पूर्वं परिग्राहं परिगृह्णा
ममेवाग्रे ऽथेममथेमं लिखति हरति यत्तत्र हर्तव्यं तदुत्तरं परिग्राहं परि
प्रोक्षणीरासादयतीध्माबर्हिरुपसादयन्ति स्रुचः संमार्ष्टि नात्र पत्नीं संनह्य
13 नेत्पत्नीं पितृषु दधानीत्यथाज्यानि ग्रहीष्यन्यज्ञोपवीती भवति ॥ ९ ॥ तद

---

1 यजते C. (pr. m.), O. P. C°. 2 भवति B. 3 बर्हिषद्भ्यः B. बर्हिषद्भ्यः the other MSS. 4 तद्यत C°. 5 पितरः MSS. 6 प्राचीनावीती O. P., प्राचीनापवीती M. 7 °दुपले उपधत्ते दक्षि° C°., °दुपले उपधत्ते दक्षि° B., °दु उपधत्ते दक्षि° O.

र्हुर्द्धिरुपभृति गृह्णीयाद्द्वौ ह्यनुयाजाविति तद्द्विष्टावेव कृत्वो गृह्णीयान्नेद्यज्ञस्य विधाया अयानीत्याज्यानि गृहीत्वा प्रोक्षिष्यन्पुनः[1] प्राचीनावीती भवति ॥ १० ॥

स इध्ममेवाग्रे प्रोक्षत्यथ वेदिमथास्मै बर्हिः प्रयच्छन्ति तदुपमूले दितं भवत्यग्र- (14-16) मिव वै देवानां मध्यमिव मनुष्याणां मूलमिव पितॄणां तस्मादुपमूल दितं भवति तत्प्रोक्ष्योपनिनीय न प्रस्तरं गृह्णाति सकृद्ध्येव पराञ्चः पितरः संनहनमनु- विस्रꣳस्यापसलवि त्रिः परिस्तृणन्पर्येति स तत एवैतावन्मात्राणि[2] प्रस्तर- भाजनं परिशिनष्टि तैरु पुनः सह[3] प्रसलवि त्रिः[4] पर्येति स यां स्वयान्पितॄन- न्वेति तेभ्य एवैतत्पुनरपोदेतीममभि स्वं लोकं दक्षिणैव परिधीन्परिदधाति दक्षिणैतं प्रस्तरमासादयति नान्तर्गृह्णाति विधृती सकृद्ध्येव पराञ्चः पितरः ॥ ११ ॥

तज्जुहूमासादयत्यथोपभृतमथ ध्रुवामथ पुरोळाशमथ धाना अथ (17-18) करम्भमासाद्य हवीꣳषि संमृश्य सर्वे यज्ञोपवीतिनो भवन्तीत्थाद्यजमानश्च ब्रह्मा च पश्चात्परीतः पुरस्तादग्नीत् ॥ १२ ॥

तेनोपांꣳशु चरन्ति तिर इव वै (19-20) पितरस्तिर इवैतद्यदुपांꣳशु परिवृते चरन्ति तिर इव वै पितरस्तिर इवैतद्यत्प- रिवृतम् ॥ १३ ॥

अथाहाग्नये समिध्यमानायानुब्रूहीति स एतामेकाꣳ सामि- (21-24) धेनीं त्रिरन्वाहोशन्तस्त्वा निधीमह्युशन्तः समिधीमहि । उशन्नुशत आवह पितॄन्हविषे अत्तव इति स यदेकामन्वाह सकृद्ध्येव पराञ्चः पितरः[5] ॥ १४ ॥

अथावाहयत्यग्निमग्न आवह सोममावह पितॄन्त्सोमवत आवह पितॄन्बर्हिषद आवह पितॄनग्निष्वात्तानावह देवां ३[6] आज्यपां ३[6] आवहाग्निꣳ होत्रायावह स्वं महिमानमावहा च वह जातवेदः सुयजा च यजेत्याघारावाघार्याध्वर्युराश्राव्य न होतारं प्रवृणीते नेद्धोतारं पितृषु दधानीति सीद होतरित्येवाह सीदति होता होतृषदने प्रसूतः स्रुचावादायातिक्रम्याध्वर्युराश्राव्याह समिधो यजेतिसोऽप-

---

1 प्रोक्षिष्य° B. 2 Thus acc. the MSS. 3 सह P. C., सह C°. 4 Om. O. P. M. C⁶., in C. added in margine. 5 पितरः MSS. 6 देवां३...... °पां३ B.

बर्हिषश्चतुरः प्रयाजान्यजति प्रजा वै बर्हिर्नेत्प्रजाः पितृषु दधानीति तस्मात्
बर्हिषश्चतुरः प्रयाजान्यजत्याज्यभागाभ्यां चरित्वा हविर्भिः प्रचरिष्यन्तः[1]
प्राचीनावीतिनो भवन्तीत्यथ यजमानश्च ब्रह्मा च पुरस्तात्परीतः पश्चादग्नेः
25 १५ ॥ तदुताश्रावयन्त्यो३[2] स्वधेत्यस्तु स्वधेति प्रत्याश्रावणꣳ स्वधा नमः
वषट्कारस्तद्धासुरिरुवाचाश्रावयेयुरेव[3] प्रत्याश्रावयेयुर्वषट्कुर्युर्नेद्यज्ञस्य विष्
अयानीति स द्वे पुरोऽनुवाक्ये अन्वाहैकया वै देवान्प्रच्यावयति द्वाभ्
26-27 पितॄन्त्सकृद्ध्येव पराञ्चः पितरस्तस्माद्द्वे पुरोऽनुवाक्ये अन्वाह ॥ १६ ॥ अथ
पितृभ्यः सोमवद्भ्योऽनुब्रूहीति सोमाय वा पितृमत उपस्तृणीत आज्यमथा
पुरोळाशस्यावद्यति तेनैव सह धानानां तेन सह करम्भस्य तत्सकृदेवावदधा
द्विरभिघार्य प्रत्यनक्त्यवदानानि नातिक्रामतीत एवोपोत्थायाश्राव्याह पितॄन्त्सो
28 मवतो यजेति वषट्कृते जुहोति ॥ १७ ॥ अथाह पितृभ्यो बर्हिषद्भ्यो ऽनुब्रू
त्युपस्तृणीत आज्यमथासां धानानामवद्यति तेनैव सह करम्भस्य तेन सह पु
ळाशस्य तत्सकृदेवावदधाति द्विरभिघार्य प्रत्यनक्त्यवदानानि नातिक्राम
29 एवोपोत्थायाश्राव्याह पितॄन्बर्हिषदो यजेति वषट्कृते जुहोति ॥ १८ ॥ अथा
पितृभ्योऽग्निष्वात्तेभ्यो ऽनुब्रूहीत्युपस्तृणीत आज्यमथास्य करम्भस्यावद्यति तेनै
सह पुरोळाशस्य तेन सह धानानां तत्सकृदेवावदधाति द्विरभिघार्य प्रत्यनक्त्यव
दानानि नातिक्रामतीत एवोपोत्थायाश्राव्याह पितॄनग्निष्वात्तान्यजेति वषट्कृते
30-31 जुहोति ॥ १९ ॥ अथाहाग्नये कव्यवाहनायानुब्रूहीति तत्स्विष्टकृद्भाजनꣳ हव्य
वाहनो वै देवानां कव्यवाहनः पितॄणां तस्मादाह कव्यवाहनायानुब्रूहीत्युपस्तृ
णीत आज्यमथास्य पुरोळाशस्यावद्यति तेनैव सह धानानां तेन सह करम्भस्य
तत्सकृदेवावदधाति द्विरभिघार्य न प्रत्यनक्त्यवदानानि नातिक्रामतीत एवो
32 पोत्थायाश्राव्याहाग्निं कव्यवाहनं यजेति वषट्कृते जुहोति ॥ २० ॥ स यथा

1 प्रचरिष्यंतः C°. 2 The figure not in O. P. C°. M.; C. originally °न्त्यो, sec. m. °त्यो३ꣳ, °यंत्यो३ꣳ My. 3 °चाश्रावये° B.

तिक्रामति सकृद्ध्येव पराञ्चः पितरो ऽथ यत्सकृत्सकृदवद्यति सकृद्ध्येव पराञ्चः पितरोऽथ यच्चतिषङ्गमवद्यत्यृतवो वै पितर ऋतूनेवैतच्चतिषजत्यृतून्त्संदधाति ॥ २१॥ अथेळा तदुतैतमेव[1] मन्थꣳ होतुः पाणावादधाति[2] तꣳ होतोपहूयावजिघ्रति तमग्नीधे प्रयच्छन्ति[3] तमग्नीदवजिघ्रति तं ब्रह्मणे प्रयच्छन्ति[3] तं ब्रह्मावजिघ्रति तद्वा सुरिरुवाच यथैवेळां प्राशित्रमितरस्य[4] यज्ञस्यावद्यन्तीत्येवमेव समवद्येयुरव[5]त्वेव जिघ्रेयुर्न प्राश्नीयुः प्राश्यं खलु वै तस्य यस्याग्नौ जुह्वतीत्युपहूयेळां मार्जयित्वा ॥ २२॥ अथ यतरो दास्यन्भवति यद्यध्वर्युर्वा यजमानो वा स उदपात्रमादायापसलवि त्रिरभिषिञ्चन्परेत्यसाववनेनिच्वेति[6] यजमानस्य पितरमसाववनेनिच्वेति यजमानस्य पितामहमसाववनेनिच्वेति यजमानस्य प्रपितामहं यथाशिष्यतो ऽवनेजये देवमेतत् ॥ २३॥ अथास्य पुरोळाशस्यावद्यति तत्सव्ये पाणौ कुरुते धानानामवद्यति तत्सव्ये पाणौ कुरुते करम्भस्यावद्यति तत्सव्ये पाणौ कुरुते स येमामवान्तरदिशमनु स्रक्तिस्तद्ददात्यसावेतत्त इति यजमानस्य पित्र ऽथ येमामवान्तरादिशमनु स्रक्तिस्तद्ददात्यसावेतत्त इति यजमानस्य पितामहायाथ येमामवान्तरदिशमनु स्रक्तिस्तद्दात्यसावेतत्त इति यजमानस्य प्रपितामहायाथ येमामवान्तरदिशमनु स्रक्तिस्तत्पाणी निमृष्टे ऽत्र पितरो मादयध्वं यथाभागमावृषायध्वमित्यत्र पितरो[7] यथाभागमश्नीतेत्येवैतदाहैतदु स्वान्पितृनेतस्माद्यज्ञान्नान्तरेत्युदञ्चो निष्क्रम्य सर्वे यज्ञोपवीतिनो भवन्ति ॥ २४ ॥ त आहवनीयमुपतिष्ठन्ते देवान्वा एष उपावर्तते य आहिताग्निर्दर्शपूर्णमासाभ्यां यजते ऽथेदं पितृयज्ञेनाचारिषुः[8] स यानेव देवानुपावृत्तो भवति तेभ्य एवैतन्निह्नुते तस्मादैन्द्रीभ्यामुपतिष्ठन्त इन्द्रो ह्याहवनीयो ऽक्षन्नमीमदन्त ह्यव प्रिया अधूषत । अस्तोषत स्वभानवो विप्रा नविष्ठया

33 34 35-36 37-38

---

1 Thus B. P. (originally), तद्दूतैतमेव C. C°. P. (sec. m.). M. My. 2 °दधाति M. 3 °यच्छति M. 4 प्राशित्रमितरस्य B. C. P. (sec. m.). प्राशित्रमिवरस्य O P. (orig.). 5 Thus M. My. only (without acc.), °द्येयुरिव B. C. O. P., °द्येषुरिव C°. 6 त्रिरभिषिञ्चन्पर्येत्य B. C°. 7 पितरो B. C. O. P. 8 °यज्ञेन्वाचरिषुः B. (but cp. I. 6. 1.[26], I. 6. 2.[8]).

मती योजा न्विन्द्र ते हरी ॥ सुसंदृशं त्वा वयं मघवन्वन्दिषीमहि । प्र
पूर्णवन्धुर स्तुतो यासि वशां३[1] अनु योजा न्विन्द्र ते हरी इति[2] ॥ २
39 अथ गार्हपत्यं मनो त्वाहुवामहे नाराशꣳसेन स्तोमेन । पितॄणां च मन्मभिः ॥
एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक् च सूर्यं दृशे ॥ पुनर्नः पितरो मनो द
दैव्यो जनः । जीवं व्रातꣳ सचेमहीति पितृयज्ञेन वा [3]इदमचारिषुस्तत्पुनर्जीव
40 41 पिपद्यन्ते[4] तस्मादाह जीवं व्रातꣳ सचेमहीति[5] ॥२६॥ अथ यतरो ददाति यद्यध्व
यजमानो वा सो ऽभिप्रपद्य जपत्यमीमदन्त पितरो यथाभागमावृषायिषतेत्या
पितरो यथाभागमित्येवैतदाहाथोदपात्रमादाय पुनः प्रसलविस्त्रिरभिषिञ्चन्
त्यसाववनेनिक्ष्वेति यजमानस्य पितरमसाववनेनिक्ष्वेति यजमानस्य पिताम
साववनेनिक्ष्वेति यजमानस्य प्रपितामहं यथा चक्षुषो ऽवनेजयेदेवमेतत्स य
प्रसलवि त्रिरभिषिञ्चन्पर्येति स या स्वयान्पितॄनन्ववैति तेभ्य एवैतत्पुनरा
42-43 तीममभि स्वं लोकम् ॥ २७ ॥ अथ नीविमुद्वृह्य[6] नमस्करोति पितृदेवत्या
नीविर्यज्ञ उ वै नस्वे यज्ञियानेवैतत्पितॄन्करोति षट्कृत्वो नमस्करोति ष
ऋतव ऋतवो वै पितर ऋतुष्वेवैतद्यज्ञं प्रतिष्ठापयति गृहान्नः पितरो दत्ते
दैषो हैतस्याशीः कर्मणो गृहाणाम् ह वै पितर ईशते तस्मादाह गृहान्नः पि
दत्तेत्यथ सर्वे यज्ञोपवीतिनो भवन्तीत्थाद्यजमानश्च ब्रह्मा च पश्चात्परीतः
44 स्तादग्नीत्सीदति होता होतृषदने ॥ २८ ॥ अथाध्वर्युः संप्रेष्यत्यग्नीत्समिध
धायाग्निꣳ[7] संमृड्ढि ब्रह्मन्प्रस्थास्याम इति स्रुचावादाय प्रत्यङ्ङतिक्रम्याध्व
श्राव्याह देवान्यजेति सो ऽपबर्हिषौ द्वावनुयाजौ यजति प्रजा वै बर्हिर्नेत्प्र
45-48 पितृषु दधानीति तस्मादपबर्हिषौ द्वावनुयाजौ यजति ॥ २९ ॥ सादयि
स्रुचौ व्यूहति व्युह्य[8] स्रुचौ परिधीन्त्समज्य परिधीनाभिपद्याध्वर्युराश्राव्याह

1 वशां२ B. 2 इति MSS. 3 इदमन्वाचारिषु° B. 4 °वानभिपद्यन्ते M. 5 °ही SS. 6 °द्वृज्य C°., °द्वृह्य O. 7 संप्रेष्यत्यग्नी° B. 8 व्यूह्य P. (see m.) M. My.

I.6.1.30.

दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकायेति सूक्ता होता प्रतिपद्यते नायं प्रस्तरमादत्ते ऽथाग्नीदाहानुप्रहरेति नायं किं चनानुप्रहरति संवदस्वेत्यया-दग्नीदगंच्छ्रावय[1] श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्य इति शं याद्दाता[2] प्रतिपद्यत उपस्पृश्यायं परिधीन्त्स्रुचौ संप्रगृह्य स्फ्ये सादयत्यथ बर्हिरनुसमस्यति तत्र हाप्येके हविरुच्छिष्टमनुसमस्यन्ति तदु तथा न कुर्याद्यथोच्छिष्टमग्नौ जुहुया-देवꣳ ह तत्तस्मात्तदपो वैवाभ्यवहरेयुः[3] प्राश्नीयुर्वैनत् ॥३०॥ प्रथमं ब्राह्मणम् ॥

K. I. 6. 2. M.II.6.2.

महाहविषा ह वै देवा वृत्रं जघ्नुस्तेनैव व्यजयन्त येयमेषां विजितिरथ यान्येषां तस्मिन्त्संग्रामे इषव आर्च्छꣳस्तानेवैतच्छल्यान्व्यवृहन्त तान्निरहरन्त यस्त्र्यम्बकैरयजन्ताथ यदेष एतेन यजते नाहैवैतस्य कं चनेषुर्ऋच्छतीति देवा अकुर्वन्निति[4] त्वेवैष एतत्करोति या उ चैवास्य प्रजा जाता याश्चाजातास्ता उभयी रुद्रियात्प्रमुञ्चति ता अस्थानमीवा अकिल्बिषाः प्रजाः प्रजायन्ते तस्माद्वा एष एतेन यजते ॥ १ ॥ ते वै रौद्रा भवन्ति रुद्रस्य हीषुरेककपाला भवन्त्येक-देवत्या असन्निति यावन्तो गृह्यास्तावन्तः प्रतिपुरुषं भवन्त्येकेनातिरिक्ताः प्रतिपुरुषमेवैतदेकेनैकेन या अस्य प्रजा जातास्ता रुद्रियात्प्रमुञ्चत्येकेनातिरिक्ता भवन्ति या एवास्याजाताः प्रजास्ता एव तेन रुद्रियात्प्रमुञ्चति ॥ २ ॥ अथ खलु यज्ञोपवीती भूत्वा जघनेन गार्हपत्यमुदङ्ङासीन एतान्गृह्णाति स तत एवोदङ् तिष्ठन्नवहन्त्युदीच्यावेव दृषदुपले उपधत्त उत्तरतो[5] गार्हपत्यस्य कपा-लान्युपधत्ते स यदेतां दिशꣳ सचन्त एषा हि तस्य देवस्य दिक्ते ऽक्ताः स्युरित्याहुरक्तꣳ हि हविरिति तद्वनक्ता एव स्युरभिमानुको[6] ह रुद्रः प्रशून्त्स्या-द्यदञ्ज्युस्तस्मादनक्ता एव स्युः ॥ ३ ॥ तान्त्समुद्वास्यैकस्यां पात्र्यामन्वाहार्यप-

1-2, 3-4, 5-6, 7-8

1 °दग्नीदगंच्छ्र वय C°., °दग्नीदगंच्छ्रावय O., °दग्नीदगंच्छ्रावय P. 2 योहोता B. 3 वैवाभ्यवहरेयुः C. O. P. 4 अकुर्वन्निति C°. 5 उत्तरतो C°. 6 Thus (without acc.) M. only, स्युरपिमानुको B. C. O. P., स्युरपिमानुषो C°. My.

चनादुल्मुकमादायोदङ्ङः परेत्य जुहोत्येषा हि तस्य देवस्य दिक्पथि
पथा ह वै स देवश्चरति चतुष्पथे यथा[1] ह[1] जांधितं[2] प्रज्ञातमवसानमेवं
चतुष्पथः पलाशस्य पलाशेन मध्यमेन जुहोति ब्रह्म वै पलाशस्य
मध्यमं ब्रह्मणैव तज्जुहोति स सर्वेषामेव समवद्यत्यतिरिक्तस्यैव नावद्यति ॥

9-10 स जुहोत्येष ते रुद्र भाग इति[3] सह स्वस्राम्बिकया तं जुषस्व स्वाहेत्यम्बिका
वै नामास्य स्वसा तयास्यैष सह भागः स यदस्यैष स्त्रिया सह भाग
त्र्यम्बका नामाथ यो ऽयमतिरिक्तो भवति तमेवमुत्तरत आखुकरीष उप
त्येष ते रुद्र भाग आखुस्ते पशुरिति तमस्मा आखुमेव पशुमनुदिशति तमस्मा
दधाति तथेतरान्पशून्न हिनस्ति तद्या एवास्याजाताः प्रजास्ता एवैतेन रुद्रि
त्प्रमुञ्चति तिर इव वै[4] तद्यदुपकीर्णं तिर इव गर्भा अजातास्तस्मादुपकीर्णे

11 ५ ॥ अथ पुनरेत्य जपत्यव रुद्रमदीमह्यव देवं त्र्यम्बकम् । यथा नो व
सस्करद्यथा नः श्रेयसस्करद्यथा नो व्यवसाययात् । भेषजमसि भेषजं
ऽश्वाय पुरुषाय भेषजम् । सुगं मेषाय मेष्या इत्याशिषमेवैतदाशास्ते ॥

12-15 अथापसलव्यूरूनुपाघ्नानाः परियन्ति त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतादित्याशिषमेवैतदाशास्ते तद्धि श
यो मृत्योर्मुच्यातै नामृतात्तत्रापि कुमार्यः परीयुर्भगस्य भजामहा इति
वा अस्य सा स्वसाम्बिका सा ह वै भगस्येष्टे तासामु[6] तासां[6] जपस्त्र्यम्ब
यजामहे सुगन्धिं पतिवेदनम् । उर्वारुकमिव बन्धनादितो मुक्षीय मामुत
ज्ञातिभ्यस्तदाह यदित इति[8] मामुत इति पतिभ्यस्तदाह पतयो हि स्त्रिय
प्रतिष्ठात एतेनैव जपेन पुनः प्रसलवि परियन्ति प्रसलवि नः कर्मानुसंतिष्ठा

---

1 यथाह C°., यदाह M. 2 ? जांधितं C. O. P C°. My., जाधितं B.
तांदिशं M. 3 इति om. M. perhaps rightly. 4 वै C°. 5 भेषजं C°.
Thus B.C.P.O. (cp. तदु तत् VII. 4. 1.[4], तस्यो तस्य V. 8. 3.[21]), तासामुता
C°. (pr. m.). 7 जपस्त्र्य° MSS. 8 इति B. C. O. P.

इति[1] ॥ ७ ॥ अथेमान्यजमान उदस्यति यावद्गौर्नोदाप्नुयात्तावदात्मभ्य एव 16-19
तच्छल्यान्निर्मिमते[2] तान्विलिप्सन्त[3] उपस्पृशन्ति भेषजमेव तत्कुर्वते ऽथ द्वयो-
र्मूतकयोरुपनह्योभयतः कुपस्य वा वेणोर्वा प्रतिषज्य यदि तत्र वृक्षं वा स्थाणुं
वा वल्मीकं वा विन्देत्तत्प्रतिषजेदेतेन रुद्रावसेन[4] परो मूजवतो ऽतीहीत्यवसेन[4]
वा अध्वानं यन्ति तदेनमेतेनैवावसेनावर्जति यत्रास्य चरणं तदभ्यत्र[5] ह वा
अस्य चरणं परो मूजवतस्तस्मादाह परो मूजवतो ऽतीहीत्यवततधन्वा पिना-
कावस इत्यहिꣳसन्नः शिवः शान्तो ऽतीहीत्येवैतदाह कृत्तिवासा इति निष्व-
पयत्येवैनं[6] तत्स्वपन्निह न कं चन हिनस्ति ते दक्षिणं पार्श्वमन्वावर्तन्ते ते
ऽनपेक्षमाणा आयन्ति ते ऽप उपस्पृशन्ति रुद्रियेण वा इदमचारिषुः शान्ति-
रापः शान्तय एव ते येनैव निष्क्रामन्ति तेन प्रपद्यन्ते केशश्मश्रुप्त्वाग्नी समा-
रोहयत उदवसाय ह्येतेन यजते न ह्यवकल्पते यदुत्तरवेदावग्निहोत्रं जुहुयुर्गृहा-
नागत्य निर्मथ्य पौर्णमासेन यजत उत्सन्नो वा अयं यज्ञो यच्चातुर्मास्यानि
वलसेनैवैतद्यज्ञेनान्ततः प्रतितिष्ठति ॥ ८ ॥ द्वितीयं ब्राह्मणम् ॥

K. I. 6. 3. M.II.6.3.

अक्षीयꣳ[7] ह वै सुकृतं चातुर्मास्ययाजिनः संवत्सरꣳ हि[8] जयति[9] तं वै 1
त्रेधा विभज्य यजते त्रेधा विभज्य प्रजयति सर्वं वै संवत्सरो ऽक्षीयं[10] वै सर्वं
तेन हास्याक्षीयꣳ[10] सुकृतं भवत्यथो हर्तुरेवैतद्भवति[11] स ऋतुर्भूत्वा देवानप्येत्य-
क्षीयं[10] वै देवानां तेन हैवास्याक्षीयꣳ[10] सुकृतं भवति तस्माद्वाव चातुर्मास्यैर्यजते ॥
१ ॥ अथ यच्छुनासीरीयेण यजते या वै श्रीर्देवानाꣳ साकमेधैरीजानानां 2

---

1 इति MSS. 2 °ल्यांनिर्मि° C°. 3 Not a partic. but 3rd. plur. 4 रुद्रावसेन परो मूजवतो तीहीत्य° C°. 5 तदन्यत्र B. O. P. My. 6 निःष्वपय° O. P. (sec. m.) C. (sec. m.), निष्ष्वपय° M. 7 अक्षय° M., अक्षय्य° C. 8 ह M. C°. 9 यजति C. My., यजति B. 10 °क्षयꣳ, °क्षयं M. 11 हर्तु-रेवैत° B.

विजिग्यानानामासीत्तच्छुनमथ यः संवत्सरस्य प्रजितस्य रसस्तत्सीरꣳ सा
चैव श्रीर्देवानाꣳ साकमेधैरीजानानां विजिग्यानानामासीद्यश्च संवत्सरस्य
तस्य रसस्तमुभयं परिगृह्य तमात्मनि कुरुते तस्माद्वाव शुनासीरीयेण यजते ।
3 तस्मान्नोत्तरवेदिमुपकिरति न पृषदाज्यं गृह्णाति नाग्निं मन्थति पञ्च प्रया-
4 स्त्रयो ऽनुयाजा एकꣳ समिष्टयजुः ॥ ३ ॥ अथैतान्येव पञ्च हवीꣳषि
भवन्त्येतैर्वै प्रजापतिः प्रजा असृजतैतैरेव वरुणपाशात्प्रामुञ्चदेतैर्देवा वृत्रम-
तैरेवैष एतद्या च श्रीर्देवानाꣳ साकमेधैरीजानानां विजिग्यानानामासी-
संवत्सरस्य प्रजितस्य रसस्तमुभयं परिगृह्य तमात्मनि कुरुते तस्मादेतानि
5-7 हवीꣳषि भवन्ति ॥ ४ ॥ अथ शुनासीरीयो द्वादशकपालः पुरोळाशो
स बन्धुः शुनासीरीयस्य यमवोचामाथ वायव्यं पयो भवति पयो वै
जाता अभिसंजानते विजिग्यानं मा प्रजाः श्रिये[1] यशसे ऽन्नाद्यायाभि-
नान्ता इति स यद्वायव्यमयं वाव वायुर्यो ऽयं पवत एष ह वा इदं प्रप्याय-
यदिदं किं च[2] वर्षति वृष्टादोषधयो जायन्त ओषधीर्जग्ध्वापः पीत्वा
8 उभयस्य रसः संभवत्येष हीदं जनयते[3] तस्माद्वायव्यम् ॥ ५ ॥ अथ
एककपालः पुरोळाशो भवत्येष ह वै सूर्य इमाः सर्वाः प्रजा अभिगोपा-
साधुना त्वदसाधुना त्वदेष उ एवैना विदधाति साधौ त्वदसाधौ त्वदे-
विजिग्यानं प्रीत इति साधुनाभिगोपायात्साधौ विदधदिति तस्मात्सौर्य एक-
9 पालः पुरोळाशो भवति ॥ ६ ॥ तस्याश्वः श्वेतो दक्षिणा[4] तद्ध्येतस्य
10-12 एष तपति यद्यश्वं न विन्देदपि गौरेव श्वेतः स्यात् ॥ ७ ॥ स य उत्स-
माणः[6] स्याद्यत्रैव साकमेधैर्यजेत तत एव यदा कामयेताथ शुनासीरीयेण
यजते[7] यद्वाव त्रिः संवत्सरस्य यजते तेनैव संवत्सरमाप्नोति रात्रिभिर्हैक

1 श्रियै MSS. exc. M. 2 किंच given by M. only (cp. II. 6.
3 °यति M. 4 M. ins. तस्य रुक्मः पुरस्तात्. 5 M. ins. क्रियते (cp. I.
1.[10]). 6 Thus My. only, उत्सृक्ष्य° the other MSS. 7 यजते C°.

I.6.3.8.

प्रयिषन्ति यद्य रात्रिभिरापिपयिषेद्यदेव पुरस्तात्फाल्गुनस्योदृष्टं तदेतेन शुना-सीरीयेण यजेत[1] स तत एव दीक्षेत तं[2] नानीजानं[2] फाल्गुनो ऽभिपर्येयात्पुनः-प्रयोग[3] इव ह स यदेनमनीजानं फाल्गुनो ऽभिपर्येयादिति[4] नूत्स्रक्ष्यमाणस्य[5] ॥ ८ ॥ अथाभिप्रयुञ्जानस्य पूर्वेद्युः पौर्णमास्याः शुनासीरीयेण यजेताथ वैश्व-देवेनाथ पौर्णमासेनेत्युवभिप्रयुञ्जानस्य[6] ॥ ९ ॥ अथ वा अतो निवर्तनस्यैव सर्वतोमुखो[7] ह वा असावादित्यस्तस्मादेषो ऽन्नाद एष ह वा इदं निर्धयति[8] यदिदं किं च शुष्यति सर्वतोमुखो ऽयमग्निर्यतो ह्येव कुतश्चाग्नावभ्यादधाति तत एव दहत्यथायमन्यतोमुखः पुरुषः स एतत्सर्वतोमुखो भवति यन्निवर्तयते[9] स एवमन्नादो भवति यथैतावन्नादौ तदु होवाचासुरिरपि तन्नाद्रियेत यन्निवर्तन-मिति[10] किं तत्र मुखस्य यदपि सर्वाणि लोमानि वपेतेति यद्वा एतेन यज्ञेन यजते तेनैव सर्वतोमुखो भवति तेनान्नाद इति ॥१०॥ तृतीयं ब्राह्मणम् ॥ 13 14-17

K. I. 6. 4. M.II.6.4.

तद्यदाहुः साकमेधैर्ह वै देवा वृत्रं जघ्नुरिति सर्वैर्ह वाव चातुर्मास्यैर्देवा वृत्रं जघ्नुः सर्वैर्वेव व्यजयन्त येयमेषां विजितिः ॥ १ ॥ अथ देवाश्च ह वा असुराश्चोभये प्राजापत्या अस्पर्धन्त त एतस्मिन्नेव यज्ञे प्रजापतौ पितर्यस्पर्धन्त[11] संवत्सरे ऽस्माकमयꣳ स्यादस्माकमयꣳ स्यादिति ॥ २ ॥ ते होचुर्देवा असुरैः संयत्ताः केन राज्ञा केनानीकेन योत्स्याम इति स होवाचाग्निर्मयैव राज्ञा मया-नीकेनेति ते ऽग्निनैव राज्ञाग्निनानीकेन चतुरो मासः प्राजयꣳस्तद्ब्रह्मणा च पर्यगृह्णत त्रय्या च विद्यया ॥ ३ ॥ ते होचुः केनैव राज्ञा केनानीकेन योत्स्याम 1 2 3

---

1 यजेत C°. 2 तन्नानी° B. C. My. 3 °त्पुनः प्रयोग B. C°. 4 पर्येयादितिती B. 5 Thus My. only, उत्सृदय° the other MSS. 6 Thus my conjecture (cp. Introd. II. § 2. a. 4), °त्युपविप्रयुंजानस्य B. C. O. P. C°. My., °त्युपभिः प्रयुञ्जानस्य M. In Telugu as in Grantha the *pa* and *va* are easily confounded. 7 सर्वतोमुखो B. 8 निर्दहति. 9 यंनिव° B. O. P. C°., यंन्निव° C. 10 यंनिव° B. C. O. P. C°. 11 पितर्यस्पर्धंत B. C. O. P. C°. (pr. m.).

इति स होवाच वरुणो मयैव राज्ञा मयानीकेनेति ते वरुणेनैव राज्ञा वरुणे-
नीकेनापराꣳश्चतुरो मासः प्राजयꣳस्तद्ब्रह्मणा च पर्यगृह्णत त्रय्या च विद्य-
4 ४ ॥ ते होचुः केनैव राज्ञा केनानीकेन योत्स्याम इति स होवाचेन्द्रो
राज्ञा मयानीकेनेति त इन्द्रेणैव राज्ञेन्द्रेणानीकेनापराꣳश्चतुरो मासः प्राज-
स्तद्ब्रह्मणा च पर्यगृह्णत त्रय्या च विद्यया तमेवꣳ सर्वꣳ संवत्सरꣳ संवृज्य
असुराणाꣳ साकमिन्द्रेणैधन्त स यत्साकमिन्द्रेणैधन्त[1] तस्मात्साकमेधा ना-
5 ५ ॥ स यद्वैश्वदेवेन यजतेऽग्निनैव तद्राज्ञाग्निनानीकेन चतुरो मासः प्रज-
त्र्येणी शलली भवति लोहः क्षुरस्तेन निवर्तयते त्रय्या विद्याया रूपं त्र्ये-
शलली ब्रह्मणो रूपं लोहः क्षुरो ऽग्निर्हि ब्रह्म लोहित इव ह्यग्निर्लोहित
6 लोहः क्षुरस्तद्ब्रह्मणा च परिगृह्णीते[2] त्रय्या च विद्यया[3] ॥ ६ ॥ अथ यद्व-
प्रघासैर्यजते वरुणेनैव तद्राज्ञा वरुणेनानीकेनापराꣳश्चतुरो मासः प्रज-
त्र्येणी शलली भवति लोहः क्षुरस्तेन निवर्तयते त्रय्या विद्याया रूपं त्र्ये-
शलली ब्रह्मणो रूपं लोहः क्षुरो ऽग्निर्हि ब्रह्म लोहित इव ह्यग्निर्लोहित
7 लोहः क्षुरस्तद्ब्रह्मणा च परिगृह्णीते[2] त्रय्या च विद्यया[3] ॥ ७ ॥ अथ यत्सा-
मेधैर्यजत इन्द्रेणैव तद्राज्ञेन्द्रेणानीकेनापराꣳश्चतुरो मासः प्रजयति त्र्येणी श-
भवति लोहः क्षुरस्तेन निवर्तते त्रय्या विद्याया रूपं त्र्येणी शलली ब्र-
रूपं लोहः क्षुरो ऽग्निर्हि ब्रह्म लोहित इव ह्यग्निर्लोहित इव लोहः क्षुरस्तद्ब्र-
च परिगृह्णीते[2] त्रय्या च विद्यया तमेवꣳ सर्वꣳ संवत्सरꣳ संवृज्य साकं
8·9 रिन्द्रेणैधते[4] ॥ ८ ॥ स यद्वैश्वदेवेन यजते ऽग्निरेव तद्भवत्यग्नेः सायु-
सलोकतां जयत्यथ यद्वरुणप्रघासैर्यजते वरुण एव तद्भवति वरुणस्य सायु-
सलोकतां जयत्यथ यत्साकमेधैर्यजत इन्द्र एव तद्भवतीन्द्रस्य सायुज्यꣳ स-
कतां जयत्यथ यच्छुनासीरीयेण यजते वायुरेव तद्भवति वायोः सायु-

1 °मिंद्रेणैधंत C. O. P. C°. 2 परिगृह्णीते C. O. P. C°., परिगृह्णीते
3 विद्यया MSS. 4 °णैधंते MSS. exc. M (°णैधति).

1.6.4.9.

सलोकतां जयति स यस्मिन्नृतौ चातुर्मास्ययाज्यमुं[1] लोकमेति स एनमृतुः परस्मा ऋतवे प्रयच्छति परः परस्मै तमेवमृतवः संप्रदायं परममेव स्थानं परमं लोकं गमयन्ति तस्मादाहुश्चातुर्मास्ययाजिनं नानुविन्दन्तीति परमꣳ ह्येव स लोकं परमांजितिं जयतीति ॥ ९ ॥ चतुर्थं ब्राह्मणम् ॥ षष्ठो ऽध्यायः ॥

## ❀ एकपात्काण्डं समाप्तम् ❀



1 °याज्यमुं B.

1 स वै व्रतमुपैष्यन्नन्तराहवनीयं च गार्हपत्यं च तिष्ठन्प्राङ् ति
उपस्पृशति स यदप उपस्पृशत्यमेध्यो वै पुरुषस्तेन ह पुरुषो ऽमेध्यो य
वदति तेनेदमन्तरतः शुक्रः पूतिर्वाति मेध उ वा आपो मेध्यो भूत्वा व्रत
2 यानीति पवित्रमापः पवित्रपूतो व्रतमुपायानीति ॥ १ ॥ स आहवनीयम
माणो व्रतमुपैत्यग्ने व्रतपत इति व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतामित्य
देवानां व्रतपतिस्तस्मा एवैतद्व्रतं चरिष्यन्प्राह तस्मै निवेदयति तच्छकेयं
3 राध्यतामिति नात्र तिरोहितमिवास्ति ॥ २ ॥ अथ श्वो भूते स स्थितौ विसृ
ऽग्ने व्रतपत इति व्रतमचारिषं तदशकं तन्मे ऽराधीत्यशकद्ध्येनद्यो यज्ञस्य
स्थामगन्नरात्सीद्धि[1] यो यज्ञस्य स स्थामगन्नेतेन नु भूयिष्ठा इवोपयन्त्यनेन
4.5 उपेयाद्य[3] इतो ऽनुशासनं[3] कुर्यात् ॥ ३ ॥ द्वयं वा इदं न तृतीयमस्ति स
चैवानृतं च ततः सत्यं देवा अनृतं मनुष्याः स उपेयादिदमहमनृतात्सत्यमु
मीति तन्मनुष्येभ्यो देवानुपावर्तते स यावदस्य वशः स्यात्तावत्सत्यमेव[4] वि
दिषेदेतद्ध[4] वा एकं देवा व्रतं चरन्ति यत्सत्यं तस्माद्यशो यशो ह भवति य
6 विद्वान्त्सत्यं वदति ॥ ४ ॥ अथ श्वो भूते सँस्थितौ विसृजत इदमहं
एवास्मि स एवास्मीत्यमानुष इव वा एतद्भवति यद्व्रतोपेतः स एतेन पुन
नुषो भवति क[6] उ हि[5] ब्रूयादिदमहँ सत्यादनृतमुपैमीति स यदाहेदमहं
7.8 एवास्मि स एवास्मीति तेनैव मानुषो भवतीति नु[6] व्रतोपायनस्य ॥ ५ ॥
वा अतो ऽशनानशनस्यैव तदु हापाळ्हः सावयसो ऽनशनमेव व्रतं मेने
वै देवा मनुष्यस्याजानन्तीति होवाच ते हैनमेतद्विदुर्व्रतमुपयन्तमेष नः प्रात
ष्टेति[7] तस्य विश्वे देवा गृहानभ्यागच्छन्ति ते ऽस्मिन्नेताँ रात्रिमुपव

1 सँस्थामग° O., हि om. M. 2 °यंत्यनेन B. 3 °याद्य इतोनुशासनं C. O. 4 °त्यमेवविवदि° B. C. O. 5 को हि M. 6 नु MSS. 7 प्रातर्य° B. C. O.

तस्मादुपवसथस्तन्वा[1] अनवक्लृप्तं यो मनुष्यान्वसतो ऽत्यश्नादनवक्लृप्तमिदु यदसयो देवान्वसतो ऽत्यश्नात्तस्मान्नाश्नीयादिति ॥ ६ ॥ तदु होवाच याज्ञ- 9
वल्क्यो यदि[2] नाश्नातीति[3] पितृदेवत्यो भवत्यवीर्य इति यद्यु तस्याश्नाति यस्य हविर्गृह्णन्तीति देवान्वसतो ऽत्यश्नातीति स यदेवाशितमनशितं तदश्नीयादिति होवाच यस्य हविर्न गृह्णन्तीति स यदहाश्नाति[4] तेनापितृदेवत्यो[5] भवति वीर्यवान्यदु तस्याश्नाति यस्य हविर्न गृह्णन्ति[6] तेनो देवान्वसतो नात्यश्नाति तस्माद्यदेवारण्यं वृच्चं[7] किं चित्तदश्नीयात् ॥ ७ ॥ उत ह स्माह बर्कुर्वार्ष्णो 10
माषान्मे पचतेति न ह्येतेषाँ हविर्गृह्णन्तीति तदु तदातिविज्ञान्यं[8] व्रीहियवयोर्वा एषोपचा[9] यच्छमीधान्यं[10] व्रीहियवा एतेन भूयाँसस्तस्माद्यदेवारण्यं वृच्चं[7] किं चित्तदश्नीयात् ॥ ८ ॥ स एताँ रात्रिमाहवनीयागारे वैव शयीत गार्ह- 11-12
पत्यागारे वा देवान्वा एष उपावर्तते यो व्रतमुपैति स यानेव देवानुपावर्तते तेषामेवैतन्मध्ये शेते सो ऽधः शयीताधस्तादिव हि श्रेयस उपचारः स उत्तिष्ठन्ने-
वाप[11] एव प्रथमेन कर्मणाभिपद्यते यज्ञो वा आपो यज्ञमेवैतत्प्रथमेन कर्मणा-
रभते ताः प्रणयति यज्ञमेवैतद्वितनोति ॥ ९ ॥ स प्रणयति कस्त्वा युनक्ति 13
स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा युनक्तीत्येताभिरनिरुक्ताभिर्व्याहृति-
भिरनिरुक्तो वै प्रजापतिः प्रजापतिर्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञं युनक्ति ॥ १० ॥ 14-15
अथ यद्देवापः प्रणयत्यद्भिर्वा इदँ सर्वमाप्तं[12] प्रथमेनैवैतत्कर्मणा सर्वमाप्नोति

---

1 °थस्तंवा B. C. O. My., °दस्तन्वा M. 2 यदु M. 3 इति om. M. 4 यद्दहा° B. O. C. 5 तेनापितृदेवत्यो B. C. O. P. 6 गृह्णंति B. O. 7 sic MSS. 8 तदातिविज्ञान्यं B. C. P. O. My., M. probably तदाति°. 9 Thus MSS., in B. it has been changed into एषोपाच; एतदुपजं Madhy, but Sayana reads उपचम्. 10 यच्छामीधान्यं O. P. C. (sec. m.), यच्छमीधान्यं B. C. (sec. m.). M. My. 11 उपत्वारः स उत्तिष्ठ° O. C. (sec. m.), उपचारः स उत्तिष्ठ° C. (sec. m.)., उपचारः उत्ति° B. 12 °मात्तं MSS.

यदेवास्य होता वाध्वर्युर्वा ब्रह्मा वाग्नीद्वा स्वयं वा यजमानो नाप्नोति[1]
16.17 वास्यैतेन सर्वामाप्नोति ॥ ११ ॥ अथ यद्वेवापः प्रणयति देवान्ह वै
तन्वानानसुररक्षसानि ररक्षुर्न यक्ष्यध्व इति तस्माद्रक्षांसि ततो ह देवा
वज्रं ददृशुर्यदापो वज्रो हि वा आपस्तस्माद्येन यन्ति निम्नं[2] तद्भवति य
तिष्ठन्ते निर्दहन्ति तत्तमुदयच्छंस्तेन नाष्ट्रा रक्षांस्यपहत्य तस्याभये ऽ
निवाते यज्ञमतन्वत तथो वा एष एतं वज्रमुद्यच्छति तेन नाष्ट्रा रक्षांस्य
18-19 तस्याभये ऽनाष्ट्रे निवाते यज्ञं तनुते ॥ १२ ॥ ता उत्सिच्य गार्हपत्यमु
सादयति योषा वा आपो वृषाग्निर्गृहा वै गार्हपत्यो गृहेष्वेवैतन्मिथुनं प्र
क्रियते वज्रमु वा एष उद्यच्छति यो ऽपः प्रणयति य उ वा अप्रति
वज्रमुद्यच्छतीति नैनमुद्यन्तुं शक्नोति समेनं भृणाति गृहा उ वै गार्ह
गृहाः प्रतिष्ठा तदेतस्यां प्रतिष्ठायां प्रतिष्ठित एतं वज्रमुद्यच्छति तथैनमेष
20.21 न हिनस्ति ॥ १३ ॥ ताः प्रणीयोत्तरेणाहवनीयं सादयति योषा 
आपो वृषाग्निर्मिथुनमेवैतत्प्रजननं क्रियत एवं हि मिथुनं क्लृप्तमुत्तरतो
स्त्री पुमांसमुपशेते तस्मादुत्तरतः सादयति ता नान्तरेण संचरेयुर्नेन्
चर्यमाणमन्तरेण संचरानिति ता नातिप्रणयेन्नानाप्ताः सादयेदस्ति[3] वा
चाग्नेश्च विभ्रातृव्यं यथैव तदग्नेर्भवति यत्रास्याप उपस्पृशन्ति स यथाति
यत्यग्नावधि भ्रातृव्यं वर्धयति यद्यनाप्ताः सादयति न[4] तं काममाप्नोति
कामाय प्रणयति तस्मात्संप्रत्येवोत्तरेण सादयेत् ॥ १४ ॥ प्रथमं ब्राह्मणम्

M.I.1.1. K. II. 1. 2.

22 परिस्तीर्य द्वन्द्वं पात्राण्युदाहरत्यग्निहोत्रहवणीं च शूर्पं च स्फ्यं
कपालानि च शम्यां च कृष्णाजिनं चोलूखलमुसले दृषदुपले तद्दश द
वै विराड्विराळु वै यज्ञो विराजमेवैतद्यज्ञमभिसंपादयति ॥ १ ॥ स य

1 नाप्नोति MSS. 2 निम्नं O. C. (sec. m.). 3 सादयेदस्ति B., 
येदस्ति O. 4 om. B.

II.1.2.2.

दाहरति द्वन्द्वं वै मिथुनं प्रजननं मिथुनमेवैतत्प्रजननं क्रियते द्वन्द्वमु वै वीर्यं
यदा हि द्वितीयमुपयुते ऽथ वीर्यवत्तरो भवति सवीर्यतायै[1] ॥ २ ॥ सो ऽग्नि- I.1.2.1,2
होत्रहवर्णीं च शूर्पं चादत्ते कर्मणे वां वेषाय वामिति यज्ञो वै कर्म यज्ञाय
त्वेत्येवैतदाह वेषाय वामिति वेवेष्टीव हि यज्ञमथ वाचं यच्छति वाग्वै यज्ञो
ऽविक्षुब्धो यज्ञं तनवा इति ॥ ३ ॥ स प्रतपति प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय
इति वा निष्टप्तꣳ रक्षो निष्टप्ता अरातय इति वा ॥ ४ ॥ देवा ह वै यज्ञं 3
तन्वाना असुररक्षसानामासङ्गाद्बिभयां चक्रुस्तद्यज्ञमुखादेवैतन्नाष्ट्रा रक्षाꣳस्यप-
हन्ति ॥ ५ ॥ उर्वन्तरिक्षमन्वेमीति प्रैत्यन्तरिक्षं वा अनु रक्षश्चरति यथायं 4
पुरुषो ऽमूल उभयतः परिच्छिन्नो ब्रह्मणैवैतदभयमनाष्ट्रमन्तरिक्षं कुरुते ॥ ६ ॥ 5
सो ऽनसो गृह्णात्यनो वा इदमग्रे पश्चा[2] वा[2] इदं यच्छाला स यदेवाग्रे तत्करो-
ति ॥ ७ ॥ अथ यद्वेवानसो गृह्णाति भूमा वा अनो भूमा हि वा अनो ऽथ 6-7
यदा [3]बह्वथानोवाह्यमित्याहुर्भूमानमेवैतदुपैति यज्ञो वा अनो यज्ञो हि वा अनो
ऽथास्य यजूꣳषि सन्ति न कौष्ठस्य[4] न कुम्भ्या भस्त्राया ह सर्षयो गृह्णन्ति[5]
तानृषीन्प्रति[6] भस्त्राया यजूꣳष्यासुस्तान्युवेतर्हि[7] निराकृतान्युतो पात्र्या गृह्णन्त्य-
नन्तरायमु तर्हि यजूꣳषि जपेत् ॥ ८ ॥ तत्स्फ्यमुपोहन्ति[8] यतो युनजाम 8-9
तद्विमुञ्चामेति तस्यानसो ऽग्निरेव धूरग्निर्हि[9] वै धूस्तस्माद्ये धुरं वहन्त्यग्न्यवद-
ग्धमिवैषां[10] वहो भवत्यथ यत्प्रत्यक्स्तम्भ्याः प्रउगं वेदिरेव सा हविर्धानमेव
नीळः स यदनसो गृह्णाति यज्ञाद्यज्ञं निर्मिमा इति ॥ ९ ॥ स धुरमभिमृशति 10-11
धूरसि धूर्व धूर्वन्तं धूर्व[11] तं[11] यो ऽस्मान्धूर्वति धूर्व तं यं वयं धूर्वाम इत्यग्निर्वा
एष धुर्यस्तमतिक्रमिष्यन्भवति तस्मा एवैतन्निह्नुते[12] तथैनमेषो ऽग्निरतियन्तं न

---

1 सवीर्यतायै C. (pr. m.). 2 पश्चाद्वा M., पश्चादा My., 3 बह्वधानो MSS. 4 कौष्ठस्य B. 5 गृह्णंति C. O. P. 6 °प्रति B. 7 °स्तान्युवैतर्हि B. My. 8 °मपोहंति O. 9 ° °ग्निर्ह MSS. exc. M. 10 वहंत्यग्न्यदग्ध° MSS. (cp. I. 2. 3.[23]). 11 om. O. M. 12 एवैतंनि° MSS. exc. M.

हिनस्त्युत ह स्माहारुणिरर्धमासशो वा अहं द्विषन्तं भ्रातृव्यं धूर्वामीत्येत
12 स तदाह ॥ १० ॥ अथैषामभिमृशति देवानामसि सस्नितमं वह्नितमं पप्रि
जुष्टतमं देवहूतमम् । अहुतमसि हविर्धानं दृꣳहस्व मा ह्वार्मा ते यज्ञपतिर्ह्वा
दित्यन एवैतदुपस्तौत्युपस्तुताद्रातमनसो हविर्गृह्णानीति मा ते यज्ञपतिर्ह्वा
13-16 दित्यह्वलामेवैतद्यजमानायाशास्ते ॥ ११ ॥ अथाधिरोहति विष्णुस्त्वा क्रा
मिति यज्ञो वै विष्णुः स इमां देवेभ्यो विक्रान्तिं विचक्रमे इमामेव प्र
पदेन[1] पस्पाराथेदमन्तरिक्षं दिवं तृतीयेन तासु वा एष एतस्मै यज्ञो विष्णु
क्रान्तिं विक्रमत उरु वातायेत्यनः प्रेक्षते प्राणो वै वातः परिवृतमिव[2] वा
यदनो ब्रह्मणैवैतदरु प्राणाय वाताय करोत्यपहतꣳ रक्ष इति तृणं वा किं चि
निरस्यति यज्ञादेवैतन्नाष्ट्रा रक्षाꣳस्यपहन्ति यच्छन्तां पञ्चेत्यभिनिदधाति पा
17 वै यज्ञः पञ्चेमा अङ्गुलयो यज्ञमेवैतदत्र दधाति ॥ १२ ॥ स गृह्णाति दे
त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । अग्नये जुष्टं गृह्णा
वा यथादेवतं वा सविता वै देवानां प्रसविता तस्मादाह देवस्य त्वा सवि
प्रसव इत्यश्विनोर्बाहुभ्यामित्यश्विना उ वै देवानामध्वर्यू तस्मादाहाश्विनो
हुभ्यामिति पूष्णो हस्ताभ्यामिति पूषा वै देवानां भागदुघो ऽशनं पाणिभ्या
18-19 मुपनिधाता तस्मादाह पूष्णो हस्ताभ्यामिति ॥ १३ ॥ सत्यं देवा अनृ
मनुष्याः सत्येनैवैतद्गृह्णात्यथ यदमुष्मै जुष्टं गृह्णामीति देवताया आदिश
सर्वा वै देवता अध्वर्युꣳ हविर्गृह्णन्तमुपतिष्ठन्ते[4] मम नाम ग्रहीष्यति मम ना
ग्रहीष्यतीति ताभ्य एवैतत्सर्वाभ्यः सह सतीभ्यो ऽसमदं करोति यावतीभ्यो
वै देवताभ्यो हवीꣳषि गृह्णन्नादिशत्यध्वर्युस्तास्तस्मा[5] ऋणं मन्यन्ते यजमान
यदस्मै तं कामꣳ समर्धयेयुर्यस्मै कामाय यजते तस्माद्देवताया आदिशति[3]
20-22 १४ ॥ स एतेन यजुषा यथापूर्वं गृहीत्वा प्रत्यभिमृशति भूताय त्वा नारा

1 पदा M. 2 परिवृत° MSS. 3 आदिशति MSS. 4 °गृह्णंत° B. C.
5 गृह्णंनादिश° B. O., गृहूंनादिश° C.

II.1.2.15.

हति यत एवेदँ हविर्गृह्णाति तदेवैतेन पुनराप्याययति स्वरभिविख्येषमिति
प्राङ् वीक्षते[1] परिवृतमिव वा अस्येदं चक्षुर्भवति निरुद्धमिव यज्ञ उ वै स्वर्-
र्देवाः सूर्यो ऽग्निस्तस्मादाह स्वरभिविख्येषमिति दृँहन्तां दुर्याः पृथिव्यामिति
गृहा वै दुर्यास्ते हैत ईश्वरो यजमानस्य यो ऽस्यायमध्वर्युर्यज्ञेन चरति तँ
हविर्गृहीत्वा यन्तमनु प्रच्योतोस्ते हेश्वरो विक्षोब्धोस्तानेवैतदस्यां प्रतिष्ठायां
दृँहति तथो यजमानस्य गृहा न विक्षोभन्ते ॥ १५ ॥ उर्वन्तरिक्षमन्वेमीति 23
प्रैत्यन्तरिक्षं वा अनु रक्षश्चरति यथायं पुरुषो ऽमूल उभयतः परिच्छिन्नो
ब्रह्मणैवैतदुभयमनाष्ट्रमन्तरिक्षं कुरुते स यद्याहवनीये वा हवींषि श्रपयन्ति
गार्हपत्ये वा तत्सादयति[2] पृथिव्यास्त्वा नाभौ सादयामीति मध्यं वै नाभिर्मध्य-
मभयं[3] तस्मादाह पृथिव्यास्त्वा नाभौ सादयामीत्यदित्या उपस्थ इत्युपस्थ इवा-
भार्षीदिति वै तदाहुर्यत्सुगुप्तं भवति सुगुप्तमसदित्यग्ने हव्यँ रक्षस्वेति तदग्नये
चैवैतद्धविर्गुप्तये परिददात्यस्यै च पृथिव्यै सुगुप्तमसदिति ॥ १६ ॥ द्वितीयं
ब्राह्मणम् ॥

K. II. 1. 3. M.I.1.3.

स वै पवित्रे एव करोति पवित्रे स्थो वैष्णव्याविति यज्ञो वै विष्णुर्यज्ञिये 1-3
स्थ इत्येवैतदाह ते द्वे भवतो ऽयं वाव पवित्रं यो ऽयं पवते स वा अयमेक
इवैव पवते सोऽयं पुरुषे ऽन्तः प्रविष्टः प्राङ् च प्रत्यङ् च तौ प्राणोदानौ
तदेतस्यैवानु मात्रां तस्माद्द्वे भवतस्त्रीणि स्युरित्याहुर्व्यान एव तृतीय इति द्वे
त्वेव भवतस्ताभ्यां प्रोक्षणीरुत्पूयाथ हवींषि प्रोक्षति स यदेताभ्यां प्रोक्षणी-
रुत्पुनाति ॥ १ ॥ वृत्रो ह वा इदँ सर्वं वृत्वा शिश्ये[4] यदिदमन्तरा द्यावा- 4-5
पृथिव्यौ[5] तस्माद्वृत्रो नाम तँ हेन्द्रो जघान स हतो ऽप एव पूतिः सर्वतो
ऽभिप्रसुस्राव सर्वतो ह्ययँ समुद्रस्तमु हैका[6] आपो बीभत्सां चक्रिरे ता एन-

1 प्राङ्वीक्षते M. 2 °सादयन्ति M. 3 °मभयं B. O. C. (pr. m.).
4 शिश्ये MSS. exc. M. 5 °पृथिव्यौ MSS. 6 हैक MSS.

मुपर्युपर्यतिपुप्लुविरे ते दर्भास्तास्ता अनापूयिता[1] आपो[2] ऽस्तीतरासु स...
यदेना वृत्रः पूतिरभिप्रास्रवत्स यदेवासु तत्र किं चित्स सृष्टं[3] भवति त...
6 ताभ्यां पवित्राभ्यामपहन्त्यथ मेध्याभिरेवाद्भिर्यज्ञियाभिः प्रोक्षति ॥ २ ॥
उत्पुनाति सवितुर्वः प्रसव उत्पुनामीत्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभि...
सविता वै देवानां प्रसविता तस्मादाह सवितुर्वः प्रसव उत्पुनामीत्यच्छि...
पवित्रेणेत्यच्छिद्रं वा अयं पवित्रं यो ऽयं पवते तस्मादाहाच्छिद्रेण पवित्रे...
सूर्यस्य रश्मिभिरित्येते वा अपिपवितारो[4] यत्सूर्यस्य रश्मयस्तस्मादाह सू...
7-10 रश्मिभिरिति[5] ॥ ३ ॥ अथैना उदिङ्गयत्युपस्तौत्येवैना एतन्महयत्येवोप...
ताभी[6] रातमनोभिर्हवींᳲषि[7] प्रोक्षाणीति ॥ ४ ॥ स उदिङ्गयति देवी...
अग्रेगुवो अग्रेपुव इति यत्समुद्रं गच्छन्ति तस्मादाहाग्रेगुव इत्यग्रेपुव...
यत्प्रथमाः सोमस्य राज्ञो भक्षयन्त्यग्र इममद्य यज्ञं नयत सुधातुं यज्ञपतिं दे...
युवमिति साधु यज्ञᳲ साधु यजमानमित्येवैतदाह युष्मा इन्द्रो ऽवृणीत वृ...
इत्येता हीन्द्रो ऽवृणीत वृत्रेण स्पर्धमान एताभिर्ह्येनमहन्यूयमिन्द्रमवृणी...
वृत्रतूर्य इत्येता हीन्द्रमवृणत वृत्रेण स्पर्धमानमेताभिर्ह्येनमहन्प्रोक्षिताः[8] ...
तदेताभ्यो निह्नुते ऽथ हवींᳲषि प्रोक्षति स समान एव प्रोक्षणस्य बन्धुर्मे...
11 वैतत्करोति यत्किं च प्रोक्षति ॥ ५ ॥ स प्रोक्षत्यग्नये त्वा जुष्टं प्रोक्षामीत्या...
पुरोळाशं तदेनमग्नये मेध्यं करोत्येवं यथापूर्वᳲ हवींᳲषि प्रोक्षति ॥ ६ ॥ अ...
पात्राणि प्रोक्षति दैव्याय कर्मणे शुन्धध्वं देवयज्याया इति दैव्याय ह्येतत्क...
शुन्धन्ते[9] देवयज्यायै यद्वो ऽशुद्धः पराजघानेतद्वस्तच्छुन्धामीति यदेवैनास्त...
I.1.4.1-3 वा कश्चिद्वामेध्यः पराहन्ति तदेवासामेतेन[10] शुन्धन्ति ॥ ७ ॥ अथ कृ...

---

1 अनापूयता B. C. O. P. My., अनापूजिता M. 2 आपो MSS. 3 °स ᳲस्पृष्टं C. 4 Thus also IV. 1. 3.[15] 5 °रिति B. O. C. (sec. m.) 6 °ताभी MSS. 7 रातमनो MSS. 8 °ता B. 9 शुंधते O. 10 Fem. instead of neutre!

II.1.3.8.

जिनमादत्ते यज्ञस्य वै सर्वत्वाय कृष्णाजिनं कृत्स्नतायै यज्ञो ह वै देवेभ्यो
ऽपचक्राम स कृष्णो भूत्वा चचार तस्य ह देवा अनुविद्य त्वचमवच्छायाजहुस्त-
स्यानि शुक्लानि च कृष्णानि च लोमानि तान्यृचां च साम्नां च रूपं यान्येव
शुक्लानि तान्यृचां यानि कृष्णानि तानि साम्नां यदि वेतरथा यान्येव कृष्णानि
तान्यृचां यानि शुक्लानि तानि साम्नामथ यान्येव मध्ये बभ्रूणि वा हरीणि वा
तानि यजुषाꣳ सैषा त्रयी विद्यैतच्छिल्पैतद्वर्णा तस्मादेतदधि[1] दीक्षन्ते यज्ञो
ह्येव [2]तस्मादध्यवहननमधिपेषणमस्कन्नꣳ हविरसदिति यदवहन्यमानानां वा
तण्डुलानां पिष्यमाणानां वा पिष्टानां किं चित्स्कन्दादिति यज्ञे यज्ञः प्रतितिष्ठा-
दिति ॥ ८ ॥ तदादत्ते शर्मासीति कृष्णस्य वा एतच्चर्म तदस्यैतन्मानुषं नाम 4
शर्म देवत्रा स यदेव देवत्रा तत्करोति[3] तस्मादाह शर्मासीति तदवधूनोत्यवधूतꣳ
रक्षो ऽवधूता अरातय इति नाष्ट्रा एवैतद्रक्षाꣳस्यवधूनोति सो ऽतिनत्येव[4]
पात्राण्यवधूनोति यद्ध्यस्यामेध्यं[5] तदेतदवधूनोति ॥ ९ ॥ तत्प्रत्यग्ग्रीवमुप- 5
स्तृणात्यदित्यास्त्वगसीतीयं वा अदितिस्तस्या अस्यास्त्वग्यत्किं चास्यामधि
तस्मादाहादित्यास्त्वगसीति प्रति त्वादितिर्वेत्त्विति प्रति हि स्वः संजानीते[6]
संज्ञामेवैतदस्यै च कृष्णाजिनाय च वदति[7] नेदन्योऽन्यꣳ हिनसात इति तदेव
सव्यः पाणिरधि निहितो भवति ॥ १० ॥ अथोलूखलं प्रतिगृह्णाति नेदिह 6
पुरा नाष्ट्रा रक्षाꣳस्याविशानिति[8] ब्राह्मणो हि नाष्ट्राणाꣳ रक्षसामपहन्ता[9] ॥
११ ॥ स प्रतिगृह्णात्यद्रिरसि वानस्पत्यः प्रति त्वादित्यास्त्वग्वेत्त्विति वा 7

---

1 Thus C. (sec. m.), विद्यैत° B. O. C. (pr. m.); r. विद्यैतच्छिल्पै-तद्वर्णा ? 2 तस्माद्ध्यवहनन° MSS. 3 तत्करोति MSS. 4 तिनन्येव B. 5 यध्यस्या° MSS. 6 Thus acc. MSS., r. सञ्जानीते (= सन्। जानीते), cp. also Mādhy. I. 2. 1.[17]; we have here also the usual compound प्रति...जानीते, not प्रतिसंजानीते, the P. W. is to be corrected accordingly. 7 वद्दति O. C. (sec. m.). 8 °विशानिति MSS. 9 °सामपहंता B.

ग्रावासि पृथुबुध्नः प्रति त्वादित्यास्त्वग्वेत्विति वा यथा वा अदः सोमं ग्रा-
भिरभिषुण्वन्त्येवं वा उलूखलमुसलेन दृषदुपलेन हविर्यज्ञमभिषुण्वन्त्यद्रयो
वै तानेकेन[1] नाम्नाचक्षते[2] तस्मादाहाद्रिरसि वानस्पत्य इत्यद्रिर्हि वानस्पत्यो
ग्रावासि पृथुबुध्न इति ग्रावा हि पृथुबुध्नो हि प्रति त्वादित्यास्त्वग्वेत्विति सं-
मेवैतदुलूखलाय च कृष्णाजिनाय च वदति[3] नेदन्योऽन्यꣳ हिनसात इति[4]

8-9 १२ ॥ अथ हविरावपत्यग्नेस्तनूरसि वाचो विसर्जनमिति यज्ञो वा एषो ऽ-
वै[5] यज्ञस्तस्मादाहाग्नेस्तनूरसीति वाचो विसर्जनमिति यां वा अमूं वाचं यज्ञ-
हविर्ग्रहीष्यन्नत्र वै तां विसृजते तस्मादाह वाचो विसर्जनमिति स यदत्र
वाचं विसृजत एष हि यज्ञ उलूखले प्रत्यष्ठादेष[6] प्रासारि यद्य पुरा मानुषीं
चिद्वाचमपव्याहरेद्वैष्णवं यजुर्वर्चं वा जपेद्यज्ञो वै विष्णुस्तत्पुनर्यज्ञमारभते
वीतये त्वा गृह्णामीति देवानवादिति[7] हि हविर्गृह्णन्ति तस्मादाह देववीतये

10 गृह्णामीति[8] ॥ १३ ॥ अथ मुसलमधि[9] निदधाति[9] बृहन्ग्रावासि[10] वानस्-
इति बृहन्हि ग्रावा वानस्पत्यो हि स इदं देवेभ्यः हव्यꣳ शमीष्व सु-

11 शमीष्वेति स इदं देवेभ्यो हव्यꣳ सꣳस्कुरु साधु सꣳस्कृतमित्येवैतदाह ॥ १४ ॥
अथ हविष्कृतमुद्वादयति हविष्कृदेहि हविष्कृदेहीति वाग्वै हविष्कृत्तां वा अ-

12-13 विसृजते तामेवैतत्पुनरुपह्वयते यज्ञो वै वाग्यज्ञमेवैतत्पुनरुपह्वयते ॥ १५ ॥
तान्येतानि चत्वारि वाच एहीति ब्राह्मणस्यागह्याद्रवेति राजन्यस्य च वैश्य-
चाधावेति शूद्रस्य स यदेव ब्राह्मणस्य तत्करोत्येतद्धि यज्ञियं यद्ब्राह्मणस्यै-
शान्ततमं वाचो[11] यदेहीति तस्मादाह हविष्कृदेहीति तद्ध स्मैतज्जायैव[12] प-

---

1 तानेके B. 2 नाम्ना B. 3 वदति O. C. (sec. m.). 4 इति MSS. 5 ग्निर्वै M. 6 प्रत्यतिष्ठादेष B. My. 7 देवानवदिति B. 8 °मीति B. O. P. C. (sec. m.). 9 Thus O. P. C. (sec. m.), °मधिनिदधाति B., °मधिनिदधाति (pr. m.). 10 बृहद्ग्रावासि M., बृहन्ग्रावासि C. (pr. m.). 11 वाचो MSS. 12 °तज्जायेव MSS. exc. M.

पुरा हविष्कृदुपोत्तिष्ठति तद्धेतर्हि य एव कृश्च स यत्रैष एतद्धविष्कृतमुद्वादयति तद्वेको[1] दृषदुपले समाहन्ति स यदेतां वाचं प्रत्युद्वादयन्ति ॥ १६ ॥ मनोर्ह वा आसर्षभस्तस्मिन्हासुरघ्नी[2] सपत्नघ्नी[3] वाक् प्रविष्टास तस्य ह स्म रवथाच्छ्व-सथादसुररक्षसानि मृद्यमानानि यन्ति तानि ह समूदिरे पापं[4] वै नो ऽयमृषभः सचत इति कथं न्विमं दभ्नुयामेति किलाताकुली इति हासुरब्रह्मावासतुस्तौ[5] होचतुः श्रद्धादेवो वै मनुरावं[6] न्वेव वेदावेति तꣳ हेत्योचतुर्याजयाव त्वेति केनेत्यनेनर्षभेणेति[7] तथेति तꣳ हालेभिरे तस्यालब्धस्य सा वागपचक्राम ॥१७॥ सा मनोरेव जायां मनावीं प्रविवेश तस्या ह स्म वदन्त्या[8] जक्षत्याः[8] श्रुत्वा-सुररक्षसानि मृद्यमानानि यन्ति तानि ह समूदिर इतो वै नः पापीयः सचत इति भूय इव हि मानुषी वाग्वदति कथं न्विमां दभ्नुयामेति किलाताकुली हैवोचतुः श्रद्धादेवो वै मनुरावं[9] न्वेव वेदावेति तꣳ हेत्योचतुर्याजयाव त्वेति केनेत्यनया जाययेति तथेति ताꣳ हालेभिरे तस्या आलब्धायाः सा वागपच-क्राम ॥ १८ ॥ सा यज्ञमेव यज्ञपात्राणि प्रविवेश तां ततो न शेकुर्निर्हन्तुꣳ सैषासुरघ्न्येव[10] सपत्नघ्नी[10] वागुद्वदति स यस्यैवं विदुष एतां वाचं प्रत्युद्वादयन्ति पापीयाꣳसो हैवास्य सपत्ना भवन्ति ॥ १९ ॥ स समाहन्ति कुक्कुटो ऽसि मधुजिह्व इति मधुजिह्वो वै स देवेभ्य आसीद्विषजिह्वो[11] ऽसुरेभ्यः स यो देवेभ्य आसीत्स न एधीत्येवैतदाहेषमूर्जमावदेति नात्र तिरोहितमिवास्ति वयꣳ संघाते संघाते जेष्मेति वयꣳ सꣳस्तम्भे सꣳस्तम्भे जेष्मेत्येवैतदाह ॥ २० ॥

14-15 16 17 18

---

1 यदेका My. 2 आस ऋषभ° MSS. exc. B. 3 सपत्नघ्नी O. P. C. (sec. m.). 4 पापं B. C. (pr. m.). 5 हासुरब्राह्मावासतुस्तौ O. 6 मनुराव B. M. My. 7 °नेन ऋषभे° MSS. exc. B. 8 Thus emended; वदंत्याचक्षित्या O. P. C., वदंत्याचक्षीत्या B., पदंत्याचक्षित्या M. My. 9 मनुराव B. O. M. My. 10 सैषासुरघ्न्येवसप° B., सैषासुरघ्न्येवसप° C. 11 आसी° MSS.

अथ शूर्पमादत्ते वर्षवृद्धमसीति वर्षवृद्धꣳ हि यदि वेणूनां वा नळानां[1] वे-
काणां वा प्रति त्वा वर्षवृद्धं वेत्त्विति निर्वपति[2] वर्षवृद्धꣳ हि यदि व्रीह्यो

21 यवा वा संज्ञामेवैतद्ददाति ॥ २१ ॥ अथ निष्पुनाति परापूतꣳ रक्षः प्रति
अरातय इत्यपहतꣳ रक्ष इति प्रहन्ति यज्ञादेवैतन्नाष्ट्रा रक्षाꣳस्यपहन्ति ॥ २२

22 अथापविनक्ति वायुर्वो विविनक्तीत्ययं वाव वायुर्यो ऽयं पवत एष ह वा
विविनक्ति यदिदं किं च विविच्यते तदेतत्खल्वेष[3] एव विविनक्त्यथ यदम

23 विनक्ति यदा तत्तण्डुलाः प्राप्नुवन्ति ॥ २३ ॥ अथाभिमन्त्रयते देवो
सविता प्रतिगृह्णातु हिरण्यपाणिरच्छिद्रेण पाणिनेति सुप्रतिगृहीतꣳ हवि-

24 दित्यथ त्रिः फलीकरोति त्रिवृद्धि यज्ञः ॥ २४ ॥ तद्धैके देवेभ्यः शुन्ध-
मिति फलीकारयन्ति तदु तथा न कुर्यादादिष्टाभ्यो देवताभ्यो हविर्गृ-
भवति तद्वैश्वदेवं करोति समदं तस्मादु तूष्णीमेव त्रिः फलीकुर्यात् ॥ २५

तृतीयं ब्राह्मणम् ॥

M.I.2.1.

## K. II. 1. 4.

1-2 स वै कपालान्येवान्यतर उपधत्ते[4] दृषदुपले अन्यतरस्तत्सह क्रियते
यदेतत्सह क्रियते शिरो वा एतद्यज्ञस्य यत्पुरोळाशो ऽथ यान्येवेमानि शिरः
कपालान्येतान्येवास्य कपालानि मस्तिष्क एव पिष्टानि तदेतदेकमिव
स्याङ्गमेकꣳ सह करवाम समानं करवामेति तस्मादेतत्सह क्रियते स यः क-

3 लान्युपधत्ते[5] ॥ १ ॥ स उपवेषमादत्ते धृष्टिरसीति यद्वा एनेनाग्निं धृष्णूपच-
तस्माद्वाव धृष्टिरथ यदेनेन यज्ञ उपालभन्त उपेव वा एनेन तद्वेवेष्टि तस्मा-

4-5 वेषः ॥ २ ॥ तेनाङ्गारान्प्राच उदूहत्यपाग्ने अग्निमामादं जहि निष्क्रव्याद-
सेधेत्येष ह वा आमादग्निर्येनेदं पक्का मनुष्या अश्नन्त्यथैष[7] क्रव्याद्यः

---

1 Thus M., with ल the other MSS. 2 निर्षपति MSS. 3 ...
B. C. M. My. 4 उपधत्ते B. 5 °न्युपधत्ते B., °न्युपधत्ते O. C. (pr. m.)
धृष्णूपचरति B. My., धृष्टायूपचरति O. C., धृष्ट्वापचरति M. 7 अश्न° MSS.

दहति तावेवैतदुभावपसेधत्या देवयजं वहेत्यङ्गारमास्कौति यो देवयाट् तस्मिन्ह-
वीꣳषि श्रपयाम तस्मिन्यज्ञं तनवामहा इति सं मध्यमेन कपालेनाभ्युपधत्ते ॥
३ ॥ देवा उ[1] ह वै यज्ञं तन्वाना असुररक्षसानामासङ्गाद्बिभयां चक्रुर्नेद्यज्ञमध- 6
स्तान्नाष्ट्रा रक्षाꣳस्युपोत्तिष्ठानित्यग्निर्हि नाष्ट्राणाꣳ रक्षसामपहन्ता[2] ॥ ४ ॥ सो 7
ऽभ्युपधत्ते ध्रुवमसि पृथिवीं दृꣳहेति पृथिव्या एवैतद्रूपेणैतदेव दृꣳहत्येतेन
द्विषन्तं भ्रातृव्यमवबाधते ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि द्विषतो
वधायेति बह्वी वा आशीर्यजुःषु ते अणा एते आशिषावाशास्ते यद्ब्रह्म च क्षत्रं
च सजातवनीति भूमा वै सजाता[3] भूमानमेवास्मा एतदाशास्त उपदधामि
द्विषतो वधायेति ब्रूयाद्यदि नाभिचरेद्यद्यवभिचरेदमुष्य वधायेत्यादिशेत्तदेव
सव्यस्य पाणेरङ्गुलिरधि[4] निहिता[4] भवति ॥ ५ ॥ अथाङ्गारमास्कौति नेदिह 8
पुरा नाष्ट्रा रक्षाꣳस्याविशानिति[5] ब्राह्मणो हि नाष्ट्राणाꣳ रक्षसामपहन्ता[6] ॥
६ ॥ सोऽङ्गारमध्यूहत्यग्ने ब्रह्म गृभ्णीष्वेति नेदिह पुरा नाष्ट्रा रक्षाꣳस्याविशा- 9
नित्यग्निर्हि[5] नाष्ट्राणाꣳ रक्षसामपहन्ता[6] ॥ ७ ॥ अथ पश्चादुपदधाति धरुण- 10
मस्यन्तरिक्षं दृꣳहेत्यन्तरिक्षमेवैतद्रूपेणैतदेव दृꣳहत्येतेन द्विषन्तं भ्रातृव्यमवबा-
धते ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि द्विषतो वधायेति[7] ॥ ८ ॥
अथ पुरस्ताद्धर्त्रमसि दिवं दृꣳहेति दिवमेवैतद्रूपेणैतदेव दृꣳहत्येतेन द्विषन्तं 11
भ्रातृव्यमवबाधते ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि द्विषतो वधायेति[7] ॥
९ ॥ अथ दक्षिणतो विश्वाभ्यस्त्वाशाभ्य उपदधामि द्विषतो वधायेति यदेवे- 12
मांल्लोकानति चतुर्थमस्ति वा न वा तेनैवैतद्द्विषन्तं भ्रातृव्यमवबाधतेऽनद्धा वै
तद्यदिमांल्लोकानति चतुर्थमस्ति वा न वा तस्मादाह विश्वाभ्यस्त्वाशाभ्य उप-
दधामि द्विषतो वधायेत्यथेतराणि चित स्थोर्ध्वचित इति वा तूष्णीं वैव[8] ॥ १० ॥

---

1 उ om. M. 2 रक्षसामपहंता B.O.C. (sec. m.). 3 सजाता B. O. C. (pr. m.). 4 Thus MSS. (°भिनिहिता M.), cp. II. 1. 3.[10] and [14]. 5 °विशानिति MSS. 6 °मपहंता B. 7 वधायेति B.O.C. (sec. m.). 8 चैव O.C.P.

13 अथाङ्गारानभ्यूहति भृगूणामङ्गिरसां तपसा तप्यध्वमित्येतद्धै तेजिष्ठं
14 यद्भृग्वङ्गिरसाꣳ सुतप्तान्यसन्नित्यथ यो दृषदुपले उपधत्ते[1] ॥ ११ ॥ स कृष्णा
जिनमादत्ते शर्मासीति तदवधूनोत्यवधूतꣳ रक्षो ऽवधूता अरातय इति
त्यग्रीवमुपस्तृणात्यदित्यास्त्वगसि प्रति त्वादितिर्वेत्त्विति सो ऽसावेव
स्तदेव सव्यः पाणिरधि[2] निहितो[3] भवति ॥ १२ ॥ अथ दृषदं प्रतिगृह्णा
नेदिह पुरा नाष्ट्रा रक्षाꣳस्याविशानिति[3] ब्राह्मणो हि नाष्ट्राणाꣳ रक्षसाम
15 हन्ता[4] ॥ १३ ॥ स प्रतिगृह्णाति धिषणासि पर्वती प्रति त्वादित्यास्त्वग्वेत्त्विति
धिषणा हि पर्वती हि प्रति त्वादित्यास्त्वग्वेत्त्विति संज्ञामेवैतद्दृषदे च कृष्णा
जिनाय च वदति[5] नेदन्योऽन्यꣳ हिनसात इति पृथिव्यु हैषा रूपेण[6] ॥ १४
16 अथोदगग्राꣳ शम्यां दिव स्कम्भन्यसीत्यन्तरिक्षमु हैषा रूपेणान्तरिक्षेण
17 द्यावापृथिव्यौ विष्टब्धे ॥ १५ ॥ अथोपलां धिषणासि पार्वतेयी प्रति
पर्वती वेत्त्विति कनीयसीव ह्येषा दुहितेव[7] ह्येषा तस्मादाह पार्वतेयीति प्रति
पर्वती वेत्त्विति संज्ञामेवैतद्दृषदुपलाभ्यां वदति नेदन्योऽन्यꣳ हिनसात
द्यौर्हैषा रूपेण हनू हैते यज्ञस्य यद्दृषदुपले जिह्वैव शम्या तस्माच्छम्यया सम
18 न्ति जिह्वयैव[8] हि वदति ॥१६॥ अथ हविरधिवपति धान्यमसि धिनुहि देवा
निति धान्यꣳ ह्येतद्देवान्धिनवदिति हि हविर्गृह्णन्ति तस्मादाह धिनुहि देवानिति
19 १७ ॥ अथ पिनष्टि प्राणाय त्वोदानाय त्वा व्यानाय त्वा दीर्घामनु प्रसिति
मायुषे धां देवो वः सविता प्रतिगृह्णातु हिरण्यपाणिरच्छिद्रेण पाणिना चक्षु
20-21 त्वेति ॥ १८ ॥ स यदेवं पिनष्टि जीवं वै देवानाꣳ हविरमृतममृतानां
वा एतद्धविर्यज्ञमुलूखलमुसलेन[10] दृषदुपलेन स यदाह प्राणाय त्वोदानाय त्वे

---

1 उपधत्ते B. 2 As supra (but रधिविहितो M.). 3 °विशानि° MSS. 4 °मपहंता B. 5 वदाति O. C. (sec. m.). 6 रूपेण B. O. C. (sec. m.). 7 दुहितंव O. 8 जिह्वयेव B. O., जिह्वायेव My. 9 देवानिति B. O. C. (sec. m.). 10 एतद्धविर्यज्ञमु° O. C.

तत्प्राणोदानौ दधाति व्यानाय त्वेति तद्व्यानं दधाति दीर्घामनु प्रसितिमायुषे धामिति तदायुर्दधाति देवो वः सविता प्रतिगृह्णातु हिरण्यपाणिरच्छिद्रेण पाणिनेति सुप्रतिगृहीतꣳ हविरसादिति चक्षुषे त्वेति तच्चक्षुर्दधात्येतद्वै जीवतो भवत्येवमेतज्जीवं[1] देवानाꣳ हविर्भवत्यमृतममृतानामभीध्यन्ते कपालानि पिष्यन्ते पिष्टानि[2] ॥ १९ ॥ अथाज्यं निर्वपति महीनां पयो ऽसीति यद्वा एकदेवत्यं वा 22 द्विदेवत्यं वा हविर्भवति तद्वा इतरेण यजुषा गृह्णाति नो वा एतत्कस्यै चन देवतायै हविर्गृह्णन्नादिशति यदाज्यं मह्यो वा एता एकेन नाम्ना यद्गावस्तासा-मेतत्पयस्तद्वेव यजुषा गृहीतं भवति ॥ २० ॥ चतुर्थं ब्राह्मणम् ॥ प्रथमो ऽध्यायः ॥

K. II. 2. 1. M.I.2.2.

स वै पवित्रवत्येव संवपति देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां 1.2 पूष्णो हस्ताभ्याम् । संवपामीति सो ऽसावेवैतस्य यजुषो बन्धुरथान्तर्वेदि वोप-विशति[3] जघनेन वा गार्हपत्यमथोपसर्जनीरेक आहरति ता आनीयमानाः पवित्राभ्यां प्रतिगृह्णाति ॥ १ ॥ तत्र जपति समाप ओषधीभिरिति सꣳ ह्येतदाप ओषधिभिरेताभिः[4] पिष्टाभिः संगच्छन्ते समोषधयो रसेनेति सꣳ ह्येतदोषधयो रसेनैतेनाद्भिः पिष्टाः संगच्छन्ते सꣳ रेवतीर्जगतीभिरिति रेवत्य आपो जगत्य ओषधयस्ता ह्येतदुभय्यः संगच्छन्ते सं मधुमतीर्मधुमतीभिः पृच्यन्तामिति सꣳ रसवत्यो रसवतीभिः पृच्यन्तामित्येवैतदाह ॥ २ ॥ अथ 3 संयौति जनयत्यै त्वेति स यथा श्रिये ऽन्नाद्यायेमाः प्रजा यजमानाय यच्छेदेवं वै तत्संयौत्यधिवर्द्धयन्वा[5] एतत्संयौति यथा वा अतो ऽधिवृक्णो जायेत संयुत्य यथादेवतं विभजति स यतो न[6] सꣳहरिष्यन्भवतीति[6] वेति वा ॥ ३ ॥ तदभि- 4.5

---

1 भवत्य B. O. 2 पिष्टानि B. O. C. (sec. m.). 3 r. वोपविशति ? 4 °धीभिरेता° B. M. My. (cp. II. 2. 4.[11]). 5 तत्संयौत्यधि° MSS.; वृद्धयन् instead of वर्द्धयन् M. 6 न सꣳहरिष्य° MSS.

मृशतीदमग्नेरिदमग्नीषोमयोरिति वा यथादेवतं वा नाना वा इद॰ हविर्गृहीत्वा तत्सहावघ्नन्ति सह[2] पि॰षन्ति[2] तदु खल्वेवं नाना भवत्यधिवृणक्त्यथ पुरोळाशमधिश्रयत्यमुत्रैक[3] आज्यमर्धो[4] वा एष यज्ञस्य यत्पुरोळाशो यदन्यानि[5] हवी॰ष्यर्ध आज्य॰ स यश्चायमस्यार्ध आत्मा यश्चासाविति

6 हाग्निं गमयामेति तथो आत्मा यज्ञस्य संधीयते ॥ ४ ॥ स य आज्यमधिश्रयति स इषे त्वेत्यधिश्रयति वृष्टये तदाह यदिषे त्वेत्यूर्जेत्वेत्युद्वासयति यो[6] वृष्टादूर्ग्

7.8 जायते तस्मा उ[7] एतदाह[7] ॥ ५ ॥ अथायमधिवृणक्ति[8] पुरोळाशं घर्मोऽसि विश्वायुरिति यज्ञमेवैनं तत्करोति यथा घर्मं प्रवृञ्ज्यादेवं प्रवृणक्ति विश्वायुरिति विश्वायुरेवासि॰स्तद्दधात्युरुप्रथा उरु प्रथस्वेति प्रथयत्येवैनं तदुरु ते यज्ञपतिः प्रथ-

9.10 तामिति यजमानायैतामाशिषमाशास्ते ॥ ६ ॥ तं[9] न[9] सत्रा पृथुं कुर्यान्मा-ह कुर्याद्यत्सत्रा पृथुं कुर्याद्व्यृद्धं वै तद्यज्ञस्य यन्मानुषमश्वशफमात्रं कुर्यादिति कस्तद्वेद यावानश्वशफो[10] यथैव मन्येत न सत्रा पृथुमिव तथैव[11] कुर्यात् ॥ ७ ॥

11 तमद्भिरभिमृशति सकृद्वा त्रिर्वा यदेवास्यावघ्नन्तो वा पि॰षन्तो वोलूखलमुसलाभ्यां वा दृषदुपलेन वा वि वा वृहन्ति[12] च्छिण्वन्ति[13] वापो वै भेषज॰ शान्तिस्तद्भेषजेन

12 शान्त्या शमयति तदद्भिः संदधाति[14] ॥ ८ ॥ सो ऽभिमृशत्यग्निष्टे त्वचं मा हि॰सीदित्यभितप्स्यन्वा[15] एनमिदं भवति श्रपयिष्य॰स्तथो हास्याग्निस्त्वचं

---

1 °गृह्णंति B. O. C. (sec. m.). 2 सहपि॰षंति B. and (without acc.) M. My., सहिपि॰षंति O. C. 3 °मुत्रैक MSS. 4 आज्यमर्धो MSS. 5 Thus emended; °शोथ इदंन्यानि B., °शोयदन्यानि O. C., and, without acc., M. My. 6 Thus (without acc.) M., यद्वृष्टादू° O. C. (pr. m.) My., यद्वृष्टादू° C. (sec. m.)., यद्विष्टादू° B. 7 उपतदाह M. (possible from original उवेतदाह) 8 °धिपृणक्ति M. 9 तन्न MSS. 10 °शफो B. O. C. (sec. m.). 11 Thus only, तथैवैव C. O. P. My., तदेवैव M. 12 वृहंति O., बृहन्ति M. 13 क्षुण्वन्ति M. 14 °दधाति MSS. 15 तप्स्यन्वा MSS.

II.2.1.9.

हिनस्ति ॥ ९ ॥ अथैनं पर्यग्नि करोत्यच्छिद्रमेवैनमेतत्समन्तमग्निना परिगृह्णाति 13
नेदेनं नाष्ट्रा रक्षांसि प्रमृशानित्यग्निर्हि[1] नाष्ट्राणां रक्षसामपहन्ता[2] ॥ १० ॥
अथोल्मुकेनाभितपति देवस्त्वा सविता श्रपयतु वर्षिष्ठे ऽधि नाक इति न वा 14
एतस्य मनुष्यः श्रपयिता तदेनं देव एव सविता श्रपयतु वर्षिष्ठे ऽधि नाक
इति देवत्रो एतदाहाथाभिमृशति शृतं वेदानीति ॥ ११ ॥ सो ऽभिमृशति मा 15
भेर्मा संविक्था इति मा भैषीर्मा संविक्था यं त्वामानुषं सन्तं मानुषो ऽभि-
मृशामीत्येवैतदाह[3] ॥ १२ ॥ अथाभिवासयति नेन्नग्न इव मुषितः[4] शयाता[4] 16
इति नेदेनमुपरिष्टान्नाष्ट्रा रक्षांस्यवपश्यानिति[5] ॥ १३ ॥ सो ऽभिवासयत्यत- 17
मेरुर्यज्ञो ऽतमेरुर्यजमानस्य प्रजा भूयादिति नेदिदमनु यज्ञो वा यजमानो वा
ताम्याद्यदिदमभिवासयामीति[6] ॥ १४ ॥ अथाप्त्येभ्यो ऽङ्गुलिप्रणेजनं पात्री- 18, I.2.3.1
निर्णेजनं निनयति स यदाप्त्येभ्यो निनयति चतुर्धाविहितो ह वा अयमग्निरग्र
आस ते यमग्रे देवा होत्राय प्रावृणत स प्राधन्वद्द्वितीयं प्रावृणत स प्रैवा-
धन्वत्तृतीयं प्रावृणत स प्रैवाधन्वदथायमग्निर्भीषा निलयां चक्रे सो ऽप एव
प्रविवेश तं देवा अनुविद्य सहसेवाद्भ्य उदानिन्युः सो ऽपो ऽभ्यष्ठीवदवष्ठ्यूता
स्थ या अप्रपदनं स्थेति तत आप्त्याः संबभूवुस्त्रितो द्वित एकत इति ॥१५॥
ते हेन्द्रमनुचेरुर्यथैतर्ह्यपि ब्राह्मणः क्षत्रियमाशंसमानो[7] ऽनुचरति स यत्र 2
विश्वरूपं त्वाष्ट्रमिन्द्रो जघान तस्य ह वध्यस्य विदां चक्रुः शश्वद्धैनं त्रित एव
जघान तदत्यह[8] तदिन्द्रो ऽमुच्यत देवो हि सः ॥ १६ ॥ अथोचुरुपेवेम एनो 3
गच्छन्त्विति ये ऽस्य वध्यस्यावेदिषुरिति तथेति होचुर्यज्ञ एवैषु[9] मृष्टामिति
तदेष्वेतद्यज्ञो मृष्टे यदेभ्यो ऽङ्गुलिप्रणेजनं पात्रीनिर्णेजनं निनयन्ति ॥ १७ ॥

---

1 प्रमृशानित्य° O. C. (sec. m.), प्रमृशानित्य° B. 2 °सामपहंता B. 3 भिमृशा° MSS. 4 °तः शयाता MSS. 5 °पश्यानीति MSS. 6 °मीति B. O. C. (pr. m.). 7 °माशंसमानो MSS. 8 तदत्यह MSS. 9 एवैषु O. P. C. (sec. m.), better ?

4 त उ हैत ऊचुरत्येवेदमस्मत्पुरो नयामेति किमभीति य एवादक्षिणेन
यजाता इति तस्मान्नादक्षिणेन यज्ञेन यजेत यज्ञ आप्त्येषु मृष्ट[1] आप्त्ये
5 स्मिन्मृजते यो[2] ऽदक्षिणेन यज्ञेन यजते ॥ १८ ॥ तत एतां देवा दर्शपूर्ण
सयोर्दक्षिणामकल्पयन्यदन्वाहार्यं नेददक्षिणꣳ हविरसदिति तदेभ्यो
निनयति तथैभ्यो ऽसमदं करोत्युल्मुकेनाभितपति भृतमेनान्गच्छादिति[3] प्रा
6.7 निनयति प्राग्वै[4] यज्ञः संतिष्ठते नेद्यज्ञमनुसंतिष्ठाता इति ॥ १९ ॥ स निन
त्रिताय त्वा द्विताय त्वैकताय त्वेति पशुर्ह वा एष आलभ्यते यत्पुरोळा
ह देवाः पुरुषमेवाग्रे पशुमालेभिरे तस्यालब्धस्य मेधो ऽपचक्राम तदश्वं प्र
शाश्वꣳ हालेभिरे तस्यालब्धस्य मेधो ऽपचक्राम तद्गां प्रविवेश गाꣳ हाले
तस्यालब्धस्य मेधो ऽपचक्राम तदविं प्रविवेशाविꣳ हालेभिरे तस्याल
मेधो ऽपचक्राम तदजं प्रविवेशाजꣳ[5] हालेभिरे तस्यालब्धस्य मेधो ऽपच
तदिमां पृथिवीं प्रविवेश तद्देवाः खनन्त इवान्वीषुस्तदनुविविदुस्तौ[6] व्रीहि
तस्मादप्येतर्हि खनन्त इवैव व्रीहियवावनुविन्दन्ति स यावद्वीर्यꣳ ह वा अ
सर्वे पशव आलब्धाः[7] स्युस्तावद्वीर्यꣳ हैवास्य हविर्हविरेव[8] भवति य ए
8 मेतद्वेद[9] ॥ २० ॥ अत्र वै सा संपद्यदाहुः पाङ्क्तः पशुरिति यदैव पि
भवन्त्यथ लोमानि भवन्ति यदैवाप आनयत्यथ त्वग्भवति यदैव संयौ
माꣳसं भवति संतत इव हि[10] तर्हि भवति संततमिव हि माꣳसं यदैव श्र
त्यथास्थि भवति दारुण इव हि तर्हि भवति दारुणमिव ह्यस्थि यदैवोद्वासयि
9 अभिधारयत्यथ मज्जानं दधाति ॥ २१ ॥ एषो सा संपत्स यं पुरुषमाल
स किंपुरुषो ऽभवद्यमश्वं च गां चालभन्त स गौरश्च गवयश्चाभवतां यम

1 मृष्ट MSS. 2 यो B. 3 °मेनान्गच्छदिति O. P. 4 प्राङ्वै probably better. 5 प्रविवेशाजꣳ MSS. 6 Thus C. My., इवान्विषुस्त° इवान्विषुत° B., इवान्वेपुस्त° M. 7 B. C. O. M. My. om. the visarga. 8 हविर्हविरेव B. 9 °द्वेद MSS. 10 om. B.

II.2.1.22.

लभन्त स उष्ट्रो ऽभवद्यमजमालभन्त स शरभो ऽभवत्तस्मादेतेषां पशूनामन-
शितव्यमपक्रान्तमेधसो[1] ह्येते ॥ २२ ॥ प्रथमं ब्राह्मणम् ॥

K. II. 2. 2. M I.2.4.

इन्द्रो ह वै यत्र वृत्राय वज्रं प्रजहार स[2] ह[2] प्रहृतो वज्रश्चतुर्धा बभूव 1.2
तस्य स्फ्यस्तृतीयं वा यावद्वा यूपस्तृतीयं वा यावद्वा रथस्तृतीयं वा यावद्वा
यत्र प्राहरत्तच्छकलो ऽशीर्यत तत्पतित्वा शरो ऽभवत्तस्माच्छरो नाम यदशीर्य-
तैवꣳ[3] स वज्रश्चतुर्धाभवत्ततो द्वाभ्यां ब्राह्मणा यज्ञे चरन्ति द्वाभ्याꣳ राजन्य-
बन्धवः[4] स्फ्येन च यूपेन च ब्राह्मणा यज्ञे चरन्ति रथेन च शरेण च राजन्य-
बन्धवः संव्याधे ॥ १ ॥ स यत्स्फ्यमादत्ते[5] यथैवैतं वज्रमिन्द्रो वृत्रायोदयच्छ- 3
देवमेवैष एतं वज्रं द्विषते भ्रातृव्यायोद्यच्छति तेन द्विषन्तं भ्रातृव्यꣳ हन्ति तेन
विजयते तस्माद्वाव स्फ्यमादत्ते ॥ २ ॥ तमादत्ते देवस्य त्वा सवितुः प्रसवे 4
ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । माददे ऽध्वरकृतं देवेभ्य इति सविता वै
देवानां प्रसविता तस्मादाह देवस्य त्वा सवितुः प्रसव इत्यश्विनोर्बाहुभ्यामित्य-
श्विना उ वै देवानामध्वर्यु तयोरेवैतद्बाहुभ्यामादत्ते[6] न स्वाभ्यां पूष्णो हस्ताभ्या-
मिति पूषा वै देवानां भागदुघो ऽशनं पाणिभ्यामुपनिधाता[7] तस्यैवैतद्धस्ताभ्या-
मादत्ते[6] न स्वाभ्यां तन्न[8] वा[8] एतस्य मनुष्यो भर्ता वज्रो ह्येष तदेनं देवताभि-
रेवोद्यच्छति देवताभिर्बिभर्ति तथैनमेष वज्रो न हिनस्ति ॥ ३ ॥ अध्वरकृतं 5
देवेभ्य इति यज्ञो वा अध्वरो यज्ञकृतं देवेभ्य इत्येवैतदाह तꣳ सव्येन पाणिना
धारयन्दक्षिणेनाभिमृश्य[9] जपति स श्यत्येवैनं तद्वीर्यमेवास्मिन्दधाति ॥ ४ ॥

---

1 °नामनसितव्य° MSS.; for the acc. cp. Wackernagel, Alt. gramm. II. p. 216. 2 सह MSS. 3 यदशीर्यतैवꣳ MSS. 4 °बन्धव M. 5 यस्फ्य° B., यस्फय° M. 6 Thus acc. MSS., r. °दत्ते ? 7 °णिभ्यामुप° O. C. (sec. m.). 8 तन्नवा M., तंनवा the other MSS. (Is तं or तद् an interpolation?). 9 धारय° MSS.

स जपतीन्द्रस्य बाहुरसि दक्षिण इत्येष वै वीर्यवत्तमो यदिन्द्रस्य बाहुर्वी-
स्तद्वीर्यमेवास्मिन्नेतद्दधाति यदाहेन्द्रस्य बाहुरसि दक्षिण इति सहस्रभृष्टिः
तेजा इति सहस्रभृष्टिर्ह वै स वज्र आस शततेजा यं तं[1] वृत्राय प्र-
तमेवैनदेतत्करोति वायुरसि तिग्मतेजा इत्ययं वाव तेजिष्ठं तेजो यो ऽयं
एष हीमांल्लोकांस्तिर्यङ् पवते तत्स्ंश्यत्येवैनं तत्तस्मादाह वायुरसि तिग्म-
इति द्विषतो वध इति ब्रूयाद्यदि नाभिचरेद्यद्यवभिचरेदमुष्य वध इत्यादि-
नात्मानं न पृथिवीमुपस्पृशति नेदनेन संशितेन वज्रेणात्मानं वा पृथिवीं

8.9 हिनसानीति[2] ॥ ५ ॥ अथ देवाश्च ह वा असुराश्चोभये प्राजापत्या अस-
ततो ह स्म यद्देवा असुरान्जयन्ति तान्ह स्मेत[3] एव पुनरुपोत्तिष्ठन्ति ते होचु-
एनान्जयाम इतीत[4] एव नः पुनरुपोत्तिष्ठन्ति कथं न्वेनाननपजय्यं जयेमे-

10-12 ६ ॥ स होवाचाग्निरुदञ्चो वै नः पलाय्य मुच्यन्त इत्युदञ्चो ह स्मैवैषां पला-
मुच्यन्ते सो ऽहमुत्तरतः पर्येष्यामीति होवाचाथैनान्यूयमित उपसंशोत्स्य-
तानुपसंरुध्येत्येभिश्च लोकैरभिनिधास्यामो[5] यदु चेमांल्लोकानति चतुर्थं
न पुनः संहास्यन्त इति सो ऽग्निरुत्तरतः पर्यैदथेतो देवा उपसमरुन्धं-
नुपसंरुध्यैभिश्च लोकैरभिन्यदधुर्यदु चेमांल्लोकानति चतुर्थं ततो न पुनः सं-

13-15 जिहत[6] ॥ ७ ॥ तदेतन्निदानेन[7] यत्स्तम्बयजुरथ यो ऽसावग्नीदुत्तरतः पर्ये-
एवाग्निर्निदानेनाथेतो ऽध्वर्युरुपसंरुणद्धि तद्यान्देवा[8] अभिन्यदधुरसुरांस्त-
वैतदुपसंरुध्यैभिश्च लोकैरभिनिदधाति[9] यदु चेमांल्लोकानति चतुर्थं तस्मादे-
नमेवासुरा[10] न संजिहते येन ह्येवैनान्देवा[11] अवाबाधन्त तेनैवैनान्ब्राह्मण-

---

1 MSS (exc. M.) त्वं. 2 °नीति B. O. C. (sec. m.). 3 स्मैत B. My. 4 इतित O. P. My. 5 °रभिनिधास्यामो MSS. 6 समजीहत O. P. C. (sec. m.). 7 तदेतंनिदानेन MSS. 8 तद्यांदेवा MSS. 9 °निदधाति MSS. 10 तस्मादेदानमेवासुरा C. P. M., तस्मादेशनमेवासुरा O., तस्मादेतन्निदानमेवासुरा B. My. 11 °नांदेवा MSS.

II.2.2.8.

ऽवबाधन्ते य उ चैवैतस्मै यजमानायारातीयति यं च यजमानो द्वेष्टि तमु
चैवैतदेभिश्च[1] लोकैरभिनिदधाति[2] यदु चेमांल्लोकानति चतुर्थं स एभिश्च
लोकैरभिनिदधद्यदु[3] चेमांल्लोकानति चतुर्थमस्या एव सर्वं हरति किं हि
हरेद्यदन्तरिक्षं हरामि दिवं हरामीति हरेदस्यामु ह्येवैतत्सर्वं प्रतिष्ठितं तस्मा-
दस्या एव सर्वं हरत्यथ तृणमन्तर्धाय प्रहरति नेदनेन संशितेन वज्रेण
पृथिवीं हिनसानीति ॥ ८ ॥ स प्रहरति पृथिवि देवयजन्योषध्यास्ते मूलं मा 16
हिंसिषमित्युत्तरमूलामिव वा एनामेतदाददानः करोति तथो हास्याः पृथिव्या[4]
ओषधीनां मूलानि न हिनस्ति व्रजं गच्छ गोष्ठानं वर्षतु ते द्यौरित्यभिनि-
धास्यन्नेवैतदनपक्रामि कुरुते तद्ध्यनपक्रामि यद्व्रजे ऽन्तर्वर्षतु ते द्यौरिति यद्वा
अस्याः किं च खनन्त्यापो वा अस्यास्तत्संरोहयन्त्यापस्तच्छमयन्ति तथो
वा अस्या एष एतद्यत्खनति तदद्भिः संरोहयति तदद्भिः शमयति पराहृत्य
निदधाति बधान देव सवितः परमस्यां पृथिव्यामिति देवमेवैतत्सवितारमा-
हान्धे[5] तमसि बधानेति यदाह परमस्यां पृथिव्यामिति शतेन पाशैरित्यमुचा[6]
तदाह यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौगिति ब्रूयाद्यदि नाभि-
चरेद्यद्यभिचरेदमुमित्यादिशेत् ॥ ९ ॥ अथ द्वितीयं प्रहरत्यपाररुं वध्यासं 17·18
पृथिव्यै देवयजनादित्यररुर्ह वै नामासुररक्षसमास तमेवं देवा अस्याः पृथिव्या[7]
अपाघ्नत[7] तथो वा एनमेष एतदस्याः पृथिव्या अपहन्ति[8] व्रजं गच्छ गोष्ठानं
वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्यां शतेन पाशैः । यो ऽस्मान्द्वेष्टि
यं च वयं द्विष्मस्तमतो मा मौगिति तदग्नीदभिनिदधात्यररो दिवं मा पप्त इति

1 Thus MSS., r. probably तमुवेवैतदेभिश्च i. e. तम् । उ । एव । एतत् । एभिः । च. 2 °निदधाति MSS. 3 °रभिनिदधद्यदु B. C., °रभिनिदधद्यदु O. P. 4 पृथिवी O.C. 5 °तारमाहन्ते M., °तारमहांधे O., °तारमहांधे C. (pr. m.), °तार-महांधे° C. (sec. m.), तारमंहांधे B. My. 6 Thus MSS., अमुचे Mādhy. 7 Thus MSS., r. पृथिव्या अपाघ्नन ? 8 अपाघ्नंति B.

यत्र ह वै तद्देवा अररुमसुररक्षसमस्याः पृथिव्या अपाघ्नत तद्धो
दिवं पिपतिषां चकार तमग्निरभिनिदधावररो दिवं मा पप्त
तथो वा एनमेष एतदध्वर्युरेवास्माल्लोकादन्तरेति दिवो ऽध्यग्नीत् ॥ १०॥
अथ तृतीयं प्रहरति द्रप्सस्ते द्यां मा स्कन्नित्ययं ह वा असौ[1]
19 यमिदमिमाः प्रजा उपजीवन्ति स[2] ते[2] दिवं मा पप्त इत्येवैतदाह व्रजं
गोष्ठानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्यां शतेन पाशैः
20.21 ऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौगिति ॥ ११ ॥ स त्रिर्यजुषा ह
भिरेवैतल्लोकैरभिनिदधात्यद्धा वै तद्यदिमे लोका अद्धो तद्यद्यजुस्तूष्णीं चतु
हरति यदेवेमांल्लोकानति चतुर्थमस्ति वा न वा तेनैवैतद्द्विषन्तं भ्रातृव्यमभि
दधात्यनद्धा वै तद्यदिमांल्लोकानति चतुर्थमस्ति वा न वानद्धो तद्य
तस्मात्तूष्णीं चतुर्थं हरति ॥ १२ ॥ द्वितीयं ब्राह्मणम् ॥

M.I.2.5. K. II. 2. 3.

देवाश्च ह वा असुराश्चोभये प्राजापत्या अस्पर्धन्त ततो ह देवा अनु
2.3 मिवासुस्ते[3] हासुरा मेनिरे ऽस्माकं वा इदं भुवनमिति ॥ १ ॥ ते होचुर्हन्त
पृथिवीं विभजामहा इति तां विभज्योपजीवामेति तामौक्ष्णैश्चर्मभिः[4] पश्चात्
विभजमाना अभीयुस्तदु ह देवाः शुश्रुवुर्विभजन्ते ह वा इमां पृथिवीम्
4 इति ॥ २ ॥ ते होचुः प्रेत तदेष्याम इति यत्रेमां पृथिवीमसुरा विभजन्ते
5 स्याम[5] यदस्या न भजेमहीति ते ह यज्ञमेव विष्णुं पुरस्कृत्याजग्मुः ॥ ३॥
होचुरैव[6] नो ऽस्यां पृथिव्यां भजतेत्यप्येव नो ऽस्यां पृथिव्यामस्त्विति

---

1 अस्या B. 2 सेति B. 3 अनुयुवमिवा° C. P. My., अनुयुवमि-वा° O., अनुयूवमिवा° B., अनुयवामिवा° M. originally, changed into असु-मिवा; r. अनुयुवमिवा° and cp. Introd. II. § 2. i. 4 तामौदयै°, pointing *aukṣṇá* as the word is accented in Mādhy. XIV. 9. 4.[17]. 5. केष्याम My., केश्याम O. C., वेष्याम इति M. 6 होचुरैव O. P. C., होचुरेव B. My. होचुरैव M.

II.2.3.4.

ह्यसुरा असूयन्त इवोचुर्यावदेवैष विष्णुरभिशेते तावदेव वो दद्म इति ॥ ४ ॥ वामनो ह विष्णुरास तद्देवा न जिहीळिरे[1] महद्वै नो ऽदुर्येभ्यो नो यज्ञसंमित- 5 मदुरिति तं तदेव यज्ञं विष्णुं प्राञ्चं निपाद्य छन्दोभिरभितः पर्यगृह्णन् ॥ ५ ॥ गायत्रेण त्वा छन्दसा परिगृह्णामीति दक्षिणतस्त्रैष्टुभेन त्वा छन्दसा परिगृह्णा- 6 मीति पश्चाज्जागतेन त्वा छन्दसा परिगृह्णामीत्युत्तरतस्तमेवं छन्दोभिः सर्वतः परिगृह्याग्निं पुरस्तात्समाधाय ॥ ६ ॥ तेनार्चन्तः श्राम्यन्तश्चेरुस्ते तथैवेमाꣳ 7 सर्वां पृथिवीꣳ समविन्दन्त तस्माद्वेदिर्नाम यदेनयेमाꣳ[2] सर्वां पृथिवीꣳ सम- विन्दन्त तस्माद्वा आहुर्यावत्येव वेदिस्तावती पृथिवीत्येतया हीमाꣳ सर्वां पृथिवीꣳ समविन्दन्तेत्येवꣳ ह वा एनां द्विषतः सपत्नस्य सर्वाꣳ संविन्दत एवमस्या द्विषन्तꣳ सपत्नं निर्भजति य एवमेतद्वेद ॥ ७ ॥ स उ हायं यज्ञो 8.9 विष्णुर्जग्लौ[3] स छन्दोभिरभितः परिगृहीत आसीदग्निः पुरस्तात्स नापक्रमितुꣳ शशाक स ओषधीनामेव मूलान्युपमुम्लोच तं देवा[4] अन्वीषुः क्व नु यज्ञो ऽभूत्क्व नु विष्णुरभूदिति ते होचुश्छन्दोभिर्वा अभितः परिगृहीत इत्यग्निः पुरस्तान्नापक्रमणमस्त्यत्रैवैनमन्विच्छतेति तं खनन्त इवान्वीषुस्तं त्र्यङ्गुले[5] ऽनु- विविदुस्तस्मात्[5] त्र्यङ्गुला वेदिः स्यादित्याहुरपि ह पाञ्चिः[6] सौम्यस्याध्वरस्य त्र्यङ्गुलां वेदिं चक्रे ॥ ८ ॥ तदु नाद्रियेतौषधीनां वात्र स मूलान्युपाम्लोचदो- 10 षधीनामेव मूलानि छिन्द्यात्स यदेवात्र देवा यज्ञं विष्णुमन्वविन्दꣳस्तस्माद्वे- दिर्नाम तमनुविद्योत्तरेण परिग्राहेण पर्यगृह्णन् ॥ ९ ॥ सुक्ष्मा[7] चासि शिवा 11 चासीति दक्षिणत इमामेवैतत्पृथिवीꣳ संविद्य सुक्ष्माꣳ[7] शिवामकुर्वत स्योना चासि सुषदा चासीति पश्चादिमामेवैतत्पृथिवीꣳ संविद्य स्योनाꣳ सुषदामकुर्वतो-

---

1 °ळिरे M., °लिरे O. P. C., B. has the ḷ corresponding to the Grantha-Telugu ḷ. 2 यदेनये° MSS. 3 °जंग्लौ MSS. 4 देवा MSS. 5 Thus M. only; ऽयंगुलेनविवि° B. C. (pr. m.) My., ऽयंगुलेनविवि° C. (sec. m.). O. P. 6 पांत्रिः O. P. 7 सूक्ष्मा B. M.

र्जस्वती चासि पयस्वती चेत्युत्तरत इमामेवैतत्पृथिवीꣳ संविद्य रसवतीमुप
12.13 नीयामकुर्वत ॥ १० ॥ त्रिः पूर्वं परिग्राहं[1] परिगृह्णाति[1] त्रिरुत्तरं तत्षट्
षड्वा ऋतवः संवत्सरस्य संवत्सरो यज्ञः प्रजापतिः स यावानेव प्रजापति
वत्यस्य मात्रा तावतैवैनामेतत्परिगृह्णाति षड्भिर्व्याहृतिभिः पूर्वं परि
परिगृह्णाति[1] षड्भिरुत्तरं तद्द्वादश द्वादश वै मासाः संवत्सरस्य संवत्सरो
प्रजापतिः स यावानेव प्रजापतिर्यावात्यस्य मात्रा तावतैवैनामेतत्परिगृह्णाति
14 ११ ॥ सा व्याममात्री पश्चात्स्यात्तावान्हि पुरुषः पुरुषसंमितो ह्येषा
प्राची त्रिवृद्धि यज्ञः ॥ १२ ॥ तदु नाद्रियेतापरिमितया वा एतया
अपरिमितमजयꣳस्तथो वा एष एतयापरिमितयैवापरिमितं[2] जयति ॥ १३
15 तस्या अग्निमभितो ऽꣳसा उन्नयति योषा वै वेदिर्वृषाग्निः परिगृह्य वै
16 वृषाणꣳ शेते तस्मादस्या अग्निमभितो ऽꣳसा उन्नयति ॥ १४ ॥ सा पश्
रीयसी स्यान्मध्ये सꣳह्वारिता पुनरुपरिष्टाद्वरीयस्येवꣳ हि योषां प्रशꣳ
पृथुश्रोणिर्विमृष्टाꣳसा मध्ये संग्राह्येति जुष्टामेवैनां तद्देवेभ्यः करोति ॥ १५
17 सा प्राक्प्रवणा स्यात्प्राची हि देवानां दिगथो उदक्प्रवणोदीची हि मनुष्या
दिग्दक्षिणतः पुरीषं प्रत्युदूहत्येषा वै पितॄणां दिग्यद्ध दक्षिणाप्रवणा
त्क्षिप्रꣳ हामुं लोकं यजमान इयात्तथा[3] ज्योग्यजमानो जीवति पुरीषवती भ
18 पशवो वै पुरीषं पशुमतीमेवैनां[4] तत्करोति ॥ १६ ॥ अथ प्रतियौति दे
वा असुरैः संग्रामꣳ संनिधास्यन्तस्ते होचुर्हन्त यदस्याः पृथिव्या अना
देवयजनमिति तच्चन्द्रमसि निदधामहा इति तथा[5] यदि[6] नो[6] ऽसुरास्तस्मा
भवेयुर्यद्यावाधेरन्निति ततो ऽर्चन्तः श्राम्यन्तः पुनरभिभवेमेति ते यदस्याः
पृथिव्या अनामृतममन्यन्त देवयजनं तच्चन्द्रमसि न्यदधत तदेतत्कृष्ण

---

1 °ग्राहं परिगृह्णाति B., °ग्राहं परिगृह्णाति O. C. 2 °तयैवापरिमितं O. C.
3 ईया O. C. My., ईया° B. 4 पशुवती° B., पशुपति° M. 5 तया O. P., M. 6 यदिनो C. (pr m.), यदि न इतो M., perhaps better.

II.2.3.17.

चन्द्रमसि तस्माद्वा आहुश्चन्द्रमस्यस्याः पृथिव्या देवयजनमित्येतदेवैतेनावरुन्द्ध
एतदत्रावकल्पयत्यपि हास्यैतस्मिन्देवयजन इष्टं भवति य एवमेतद्वेद ॥ १७ ॥
स प्रतियौति पुरा क्रूरस्य विसृपो विरप्शिन्निति संग्रामो वै क्रूरꣳ संग्रामे हि 19
क्रूरमिव क्रियते हतो ऽश्वो हतः पुरुषः शेते पुरा संग्रामादित्येवैतदाहोदादाय
पृथिवीं जीवदानुमिति यद्ध्यस्या[1] जीवनममन्यन्त तच्चन्द्रमसि[2] न्यदधत यामैर-
यꣳश्चन्द्रमसि स्वधाभिरिति यामदधुश्चन्द्रमसि ब्रह्मणेत्येवैतदाह तां धीरासो अनु-
दिश्य यजन्त इत्येतेन हास्या एतदनुदिश्य यजन्ते ऽपि हास्यैतस्मिन्देवयजन
इष्टं भवति य एवमेतद्वेद[3] ॥ १८ ॥ अथ संप्रेष्यति प्रोक्षणीरासादयेध्माबर्हिरुप- 21
सादय स्रुचः संमृड्ढि पत्नीꣳ संनह्याज्येनोदेहीति स एष संप्रैष एवैतद्ध्यतः
करिष्यन्तो भवन्ति[4] तत्संप्रैषीत्स यदि कामयेत ब्रूयादेतद्ब्रू[5] कामयेतापि नैवा-
द्रियेत स्वयमु ह्येवाध्वर्युर्वेदैतदुतः कर्मेति[6] ॥ १९ ॥ अथ प्रोक्षणीरासादयति 20
वज्रश्च वै स्फ्यो ब्राह्मणश्चेमं पुरा यज्ञमभ्यजूगुपतां[7] वज्रो वा आपो वज्रमेवैतद-
भिगुप्तय[8] आसादयति स उपर्युपर्येव प्रोक्षणीषु धार्यमाणास्वथ स्फ्यमुद्गृह्णाति
तथा वज्रौ[9] न समृच्छेते यद्ध निहित एव स्फ्ये प्रोक्षणीरासादयेद्वज्रौ[10] ह
समृच्छेयातां तस्मादुपर्युपर्येव प्रोक्षणीषु धार्यमाणास्वथ स्फ्यमुद्गृह्णाति ॥ २० ॥
अथोदञ्चꣳ स्फ्यं प्रहरत्यमुष्मै त्वा वज्रं प्रहरामीति यं द्विष्याद्वज्रो वै स्फ्य 22-24
स्तृणुते हैवैनेनाथावनेनिक्ते यद्ध्यस्याः क्रूरमिवाभूत्तदेतदुहार्षीदथ ये ह्यग्र
ईजिरे ते[11] हावमर्शमीजिरे[11] ते ह पापीयाꣳस आसुरयजमाना[12] हैभ्यः श्रेयाꣳस
आसुस्तानु वै मनुष्याननश्रद्धा विवेद यद्यो[13] यजते स पापीयान्भवति[14] यो न

---

1 °स्यां B. 2 °मसि B. O. 3 द्वेद MSS. 4 भवंति B. C. 5 ब्रूया° B. 6 कर्मेति MSS. 7 Thus M., °जुगुपतां the other MSS. 8 °भिगुप्तय MSS. 9 वज्रो B. O. M. My. 10 °द्वज्रो O. M. 11 Thus M. only; तेनावमर्श° O. P. C. My., तिनावमर्शं° B. (cp. II. 2. 4.[5]). 12 आसुरयजमाना MSS. 13 यद्यो O. C. (pr. m.). 14 r. भवति ?

यजते स श्रेयान्किंकाम्या[1] यजेमहीति ते हायष्टुं[2] दध्रिरे तानु वा इतो देवा...
25 विर्न जगामेतः प्रदानम्नु[3] वै देवा उपजीवन्ति ॥ २१ ॥ ते होचुर्देवा बृहस्पति...
माङ्गिरसमश्रद्धा वै मनुष्यानविदादिति[4] तेभ्यो विधेहि यज्ञमिति तान्हेत्यो...
यजध्वं कथा न यजध्वमिति[5] ते होचुः किंकाम्या[1] यजेमहीति यद्यो[6] यजते...
26 पापीयान्भवति[7] यो न यजते स श्रेयान्किंकाम्या[1] यजेमहीति ॥ २२ ॥ ...
होवाच यद्वै शुश्रुम देवानां परिषुतमिति[8] तद्वा एतद्यज्ञो देवानां भवति यच्छृ...
तानि हवीꣳषि क्लृप्ता वेदिर्भवति[7] तेनावमर्शमचारिष्ट[9] तस्मात्पापीयाꣳसो ऽभ...
तानवमर्शं यजध्वꣳ[10] श्रेयाꣳसो वाव भविष्यथेत्या क्रियतो[11] नावमृशेमहि...
बर्हिष इति बर्हिर्वा एनामतः शमयेतेति[12] तस्माद्यदि पुरा बर्हिषस्तृणं वा ...
चिद्वापद्येत बर्हिरेवैनतस्तृणन्नपास्येत्तस्मात्स्तीर्णामपि[13] पदाभितिष्ठन्ति शान्ता हि...
भवति स श्रेयान्हैव भवति य एवं विद्वाननवमर्शं यजते ॥ २३ ॥ तृतीयं
ब्राह्मणम् ॥

M.I.3.1. K. II. 2. 4.

1 स वै स्रुच एव संमार्ष्टि स यत्स्रुचः संमार्ष्टि यथा वै देवानां चरणं
तद्वा अनु मनुष्याणां तद्वा इदं मनुष्याणां यदैषामुपक्लृप्तं[14] परिवेषणं भवति ॥
2-3 १ ॥ अथ पात्राणि निर्णेनिजति तैर्निर्णिक्तैः परिवेविषत्येवमु वा एतद्यज्ञो
देवानां भवति यच्छृतानि हवीꣳषि क्लृप्ता वेदिर्भवत्येतानि[15] वै देवानां पात्राणि
यत्स्रुचस्ता एतन्निर्णेनेक्त्येव निर्णिक्ताभिः प्रचरामेति ॥ २ ॥ स वै द्वयं...

---

1 किंकाम्या O. P. C. 2 Thus C. (pr. m.) and M.; हायष्टु B., हाजिष्टुं O. P. (C. sec. m.), हायष्ठुं My. 3 °मेतःप्रदानमु O. C. 4 °नुष्यान्-विद्° MSS. 5 r. यजध्व इति. 6 यद्यो O. C. (pr. m.). 7 r. भवति? 8 r. परिषूत°? 9 तेनावमर्श° MSS. 10 यजध्वꣳ MSS. 11 कीयतो B. O. C. My., किय्यतो M. 12 शमयतेति B. C. My. 13 बर्हिरेवैनतस्तृण° B. O. C. My. P., बर्हिरेवैवरतृ° M. 14 यदेषा° B. M. 15 r. °र्भवति?

II.2.4.3.

देवेभ्यो निर्णेनेक्त्येकेनैव मनुष्येभ्यो ऽद्भिश्च ब्रह्मणा च देवेभ्यो यत्कुशै-
स्तदद्भिर्यद्यजुषा तद्ब्रह्मणापो हि कुशा ब्रह्म यजुरद्भिरेव मनुष्येभ्यस्तेनो एव
नाना भवति ॥ ३ ॥ स स्रुवमादाय प्रतपति प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय 4
इति वा निष्टप्तꣳ रक्षो निष्टप्ता अरातय इति वा ॥ ४ ॥ देवा ह वै[1] यज्ञं 5-8
तन्वाना असुररक्षसानामासङ्गाद्बिभयां चक्रुस्तद्यज्ञमुखादेवैतन्नाष्ट्रा रक्षाꣳस्यप-
हन्ति स इत्यन्तरतो ऽग्नेः संमार्ष्ट्यनिशितो ऽसि सपत्नक्षिदिति यथानुपरतो
यजमानाय सपत्नान्क्षिणुयादेवमेतदाह[2] वाजिनं त्वा वाजेध्यायै संमार्ज्मीति[3]
यज्ञं त्वा यज्ञाय[4] संमार्ज्मीत्येवैतदाहाथेति बाह्यतो बुध्नैरेवमेव सर्वाः स्रुचः
संमार्ष्टि वाजिनीं त्वेति स्रुचमाह[5] तूष्णीं प्राशित्रहरणꣳ स यदित्यन्तरतो ऽग्नेः
संमार्ष्टीति[6] बाह्यतो बुध्नैः प्राणोदानावेवैतद्दधाति तस्मादेवेमानीति लोमानीत्यु-
विमानि स वै संमृज्य संमृज्य[7] प्रतप्य प्रतप्य प्रयच्छति स यथावमर्शं निर्णि-
ज्यानवमर्शमुत्तमं परिक्षालयेदेवमेतत् ॥ ५ ॥ स वै स्रुवमग्रे संमार्ष्टि वृषा वै 9
स्रुवो योषाः[8] स्रुचस्तस्माद्यद्यपि स्त्रियो बह्व्य इव सह यन्ति यद्यासामपि
कुमारक इव मध्ये पुमान्भवति स एव पूर्वः प्रतिपद्यते ॥ ६ ॥ स वै तथा 10
संमृज्याद्यथाग्निं नाभिव्युक्षेत्प्राङिवोत्क्रम्य यद्वाग्निमभिव्युक्षेद्यथा यस्मा आह-
रिष्यन्त्स्यात्तं पात्रनिर्णेजनेनाभ्युक्षेदेवꣳ ह तत्तस्मात्प्राङिवोत्क्रम्य संमृज्यात् ॥
७ ॥ तानि हैतान्येके स्रुक्संमार्जनान्यग्नावभ्यादधति वेदस्याहाभूवन्त्स्रुच एभिः 11
सममार्जिषुः किं चिद्वा इदं यज्ञस्य मा न इदं बहिर्धा यज्ञाद्भूदिति तदु तथा
न कुर्याद्यथा यस्मा आहरिष्यन्त्स्यात्तं पात्रनिर्णेजनं पाययेदेवꣳ ह तत्तस्मा-
त्तान्यपैवास्येत्[9] ॥ ८ ॥ अथ पत्नीꣳ संनह्यति जघनार्धो वा एष यज्ञस्य यत्पत्नी 12

---

1 Elsewhere (see II. 1. 4.[4], II. 5. 1.[17]): देवा उ ह वै. 2 क्षुणुया° M. instead of क्षि°, r. perhaps क्षणुया°. 3 C. corrects into संमार्ग्मीति. 4 यज्ञियाय M. 5 स्रुचमाह B. 6 सं° MSS. 7 संमृज्य O. C. P. 8 योषाः O. C. My. 9 Thus M. only; तत्तस्मात्तान्युपैवास्येत् O. C. My., तत्तस्मात्तान्नुपैवास्येत् B.

प्राञ्चे यज्ञस्तायमानो यादिति युनक्त्येवैनामेतद्युक्ता मे यज्ञमन्वासाता इति तस्मा-
13 द्योक्त्रेण संनह्यति योक्त्रेण हि योग्यं युञ्जन्ति[1] ॥ ९ ॥ अथ यद्वेवैनाᳲ
संनह्यत्यस्ति[2] वा अमेध्यं पत्न्या यदवाङ् नाभेरथेदमाज्यमवेक्षिष्यमाणा भवति
14 तदेवास्या एतद्योक्त्रेणान्तर्दधात्यथ मेध्येनैवोत्तरार्धेनावेक्षते[3] ॥ १० ॥ सो
ऽभिवासः संनह्यति वरुण्या वै रज्जुरौषधमु वै वासस्तदेनामेतदोषधिभिरे-
15 वान्तर्दधाति तथैनामेषा वरुण्या रज्जुर्न हिनस्ति ॥ ११ ॥ स संनह्यत्यदित्यै
रास्नासीतीयं वा अदितिः सा देवानां पत्न्येवमु वा एषैतस्य[4] पत्नी तस्या
एताᳲ रास्नामेव करोति[5] न रज्जुमियं वै हिरा[6] रास्ना तामेवास्या एतत्करोति
16 तथैनामेषा वरुण्या रज्जुर्न हिनस्ति ॥ १२ ॥ स न ग्रन्थिं कुर्याद्वरुण्यो वै
ग्रन्थिर्वरुणो ह पत्नीं गृह्णीयाद्यद्ग्रन्थिं[7] कुर्यात्तस्मादूर्ध्वमेवोपगूहति विष्णोर्वेष्यो
17 ऽसीति ॥ १३ ॥ सा न पश्चादन्वासीतेयं वा अदितिः सा देवानां पत्नी सा
यज्ञं देवानां पश्चात्प्राच्यन्वास्ते[8] सा यद्ध पश्चात्प्राच्यन्वासीतेमाᳲ[9] हाभ्यारोहे-
त्तामियं विक्षिणुयात्सा[10] क्षिप्रममुं लोकमियात्तस्माद्दक्षिणत[11] इवैवान्वासीत
18 तदस्यै निह्नुते तथा[12] ज्योक्पत्नी जीवति ॥ १४ ॥ अथाज्यमवेक्षते योषा वै
19-20 पत्नी रेत आज्यं मिथुनमेवैतत्प्रजननं क्रियते ॥ १५ ॥ सावेक्षते ऽदब्धेन त्वा
चक्षुषावपश्यामीत्यनार्तेन त्वा चक्षुषावपश्यामीत्येवैतदाह यदाहादब्धेन त्वा
चक्षुषावपश्यामीत्यग्नेर्जिह्वासीतीदᳲ हि यदैतदग्नौ जुह्वत्यथ[13] ह्यग्नेर्जिह्वा इवोपो-
त्तिष्ठन्ति तस्मादाहाग्नेर्जिह्वासीति सुभूर्देवेभ्य इति साधुर्देवेभ्य[14] इत्येवैतदाह धाम्ने
धाम्ने भव यजुषे यजुष इति सर्वस्मै यज्ञाय देवेभ्य एधीत्येवैतदाह तदादायोदाद्रवति

---

1 युजंति B. 2 संनह्य MSS. 3 °वेक्षते B. O. 4 एषैकस्य O. C. (pr. m.) My. 5 करोति O. C. P. 6 ह्रिरा B. P. C. My., ह्रि O., वीरा M. 7 °याद्यदि ग्रंथिं B. 8 Thus acc. MSS., r. पश्चात्प्राच्यन्वास्ते ? 9 प्राच्यन्वासीते° MSS. 10 विक्षुणु° My. 11 लोकमीया° O. C. 12 तथो M. 13 जुह्वत्यध B., जुह्वत्यध O. C., जुह्वत्यद M., जुह्वत्यथ My. 14 साधुर्देवेभ्य O. C. M.

तदाहवनीये ऽधिश्रयति यस्याहवनीये हवीꣳषि श्रपयन्त्याहवनीये
मे सर्वो यज्ञः श्रृतो[1] ऽसदिति स यदत्राग्रेणाधिश्रयति[2]
पत्नीꣳ ह्यवकाशयिष्यन्भवत्यनवक्लृप्तं वै तद्यत्पुरा सꣳस्थायाः प्रत्यगाद्यꣳ[3] हरेयुः
पत्नीमवकाशयिष्याम इत्यन्तरियुर्हि[4] यज्ञात्पत्नीं यदेनां नावकाशयेयुस्तस्मादुदगे-
वाधिश्रित्य पत्नीमवकाश्य सध्र्यगेव[5] प्राङादायोदाद्रवति तस्माद्यस्य पत्नी न
स्यादग्र एव स आहवनीये ऽधिश्रयेत्तदन्तर्वेद्यासादयति[6] ॥ १६ ॥ तदाहुर्ना- 21
न्तर्वेद्यासादयेदित्यतो वै देवानां पत्नीः संयाजयन्त्यवसभा ह देवानां पत्नीः
करोति[7] परःपुꣳसा हास्य पत्नी भवति यस्यान्तर्वेद्यासादयन्तीति[8] तदु होवाच
याज्ञवल्क्यो ऽन्तर्वेद्येवासादयेदिति होवाच यथादिष्टं पत्न्या अस्त्विति यत्स
परःपुꣳसा वा स्याद्यद्वा कस्तयार्थ इति होवाच यज्ञो वेदिर्यज्ञ आज्यं यज्ञाद्यज्ञं
निर्मिमा इति तस्मादन्तर्वेद्येवासादयेत् ॥ १७ ॥ अथ प्रोक्षणीषु पवित्रे भव- 22-25
तस्ते आदाय ताभ्यामुत्पुनाति सवितुस्त्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण
सूर्यस्य रश्मिभिरिति सो ऽसावेवैतस्य यजुषो बन्धुस्तथैवाज्यलिप्ताभ्यां प्रोक्षणी-
रुत्पुनाति सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिरित्यप्स्वे-
वैतत्पयो दधाति तदिदमप्सु पयो हितमिदꣳ हि यदा वर्षत्यथौषधयो जायन्त
ओषधीर्जग्ध्वापः पीत्वा तस्यैष उभयस्य रसः संभवति तस्मादाज्यलिप्ताभ्यां
प्रोक्षणीरुत्पुनात्यथाज्यमवेक्षते ॥ १८ ॥ तद्धैके यजमानमवकाशयन्ति येहाशी- 26
स्ताꣳ स्वयमाशासाता[9] इति तदु होवाच याज्ञवल्क्यः स कथꣳ स्वयमध्वर्युर्न
भवति स्वयं नान्वाहेति यत्र भूयसीमाशिषमाशासत[10] इति यां वै कां च यज्ञ
ऋत्विज आशिषमाशासते यजमानायैव तामाशासत इति होवाच तस्मादध्वर्यु-
रेवावेक्षेतेति ॥१९॥ स यदवेक्षते सत्यं वै चक्षुः सत्यꣳ हि वै चक्षुस्तस्माद्यदिदं 27

---

1. श्रृतो B. O. C. 2. यदत्राग्रेणा° B. C., यदत्राग्रेणा° O. 3. प्रत्यगाद्यꣳ Mss.
4. इत्यंतरीयुर्हिं B. O. C. My., इत्यन्तरितउर्हं M. 5. सद्रियगेव O. My., सद्रि-
यगेव C., साधियगेव M. 6. ऽधिश्रयेत° B. 7. करोति O. C. P. 8. यतीति My.,
9. स्वयमाशासाता Mss. 10. भूयसीमाशिषमा° B.

द्वावागत्याचक्षीयातामित्यभूदित्यभूदिति[1] यतर[2] एव ब्रूयादहमदर्शमिति तस्मै
श्रद्दध्युरिदꣳ सत्यमयमद्रागिति[3] सत्येनैवैनदेतत्समर्धयति ॥ २० ॥ सो ऽग्ने
तेजो ऽसि शुक्रमस्यमृतमसीति स उ एष सत्य एव मन्त्रस्तेजो ह्येतच्छुक्रं
ह्येतदमृतꣳ ह्येतत्तद्वेनदेतत्सत्येनैव समर्धयति ॥ २१ ॥ चतुर्थं ब्राह्मणम् ॥
द्वितीयो ऽध्यायः ॥

K. II. 3 1.

पुरुषो ह यज्ञः पुरुषस्तेन यज्ञो यदेनं पुरुष एव तनुते स वै तायमानो या-
वानेव पुरुषस्तावान्विधीयते पुरुषस्यैव विधामनु तस्माद्ध पुरुष एव यज्ञः ॥ १ ॥
तस्येयमेव जुहूरियमुपभृदात्मैव ध्रुवेदं वा आत्मन एव सर्वाण्यङ्गानि प्रभवन्ति
तस्माद् ध्रुवाया एव सर्वो यज्ञः प्रभवति ॥२॥ प्राण एव स्रुवः स सर्वाण्यङ्गा-
न्यनुसंचरति तस्मात्स्रुवः[4] सर्वा अनु स्रुचः संचरति ॥३॥ असावेव द्यौर्जुहून्त-
रिक्षमुपभृदियमेव ध्रुवेदं वा अस्या एवेमे सर्वे लोकाः प्रभवन्ति तस्माद् ध्रु-
वाया एव सर्वो यज्ञः प्रभवति ॥ ४ ॥ अयमेव स्रुवो यो ऽयं पवत एष हीमा-
न्त्सर्वाँल्लोकाननुपवते तस्मात्स्रुवः सर्वा अनु स्रुचः संचरति ॥ ५ ॥ स वै
यज्ञस्तायमानो देवेभ्यस्तायत[5] ऋतुभ्यश्छन्दोभ्यस्तद्यद्धविस्तद्देवानां यत्सोमो
राजा यत्पुरोळाशो यद्धविस्तत्तेभ्य आदेशं गृह्णात्यमुष्मै त्वा जुष्टं गृह्णामीति
यथादेवतं तथा हि तेषाम् ॥६॥ अथ यदाज्यानि गृह्णाति तदृतुभ्यश्छन्दोभ्यो
गृह्णाति तदनादेशमेव गृह्णात्याज्यस्यैव रूपेण तथो हि तेषाम् ॥७॥ स यज्जु-
ह्वां गृह्णाति तदृतुभ्यो गृह्णाति प्रयाजेभ्यो हि गृह्णात्यृतवो हि प्रयाजास्तद-
नादेशमेव गृह्णात्याज्यस्यैव रूपेण जामि हि कुर्याद्यद्वसन्ताय त्वा गृह्णामि[6]
ग्रीष्माय त्वा गृह्णामीति गृह्णीयात्तस्मादनादेशमेव गृह्णात्याज्यस्यैव रूपेण[7] ॥८॥

1. Thus M. (without acc.) only, द्वावागत्याचक्षीयाथामि° B. C., द्वावागत्याचक्षीया-थामि° O. My. 2. यतर Mss. 3. सत्यमयमद्रागिति B. C. My., सत्यमयमद्रानिति M., सत्यमयद्रागिति O. 4. °स्रुवः C. (sec. m.), स्रुचः O. 5. °स्तायत B. 6. गृह्णामि B. C. O. 7. रूपेण B.

11. 3. 1. 9.

अथ यदुपभृति गृह्णाति तच्छन्दोभ्यो गृह्णात्यनुयाजेभ्यो हि गृह्णाति छन्दांसि 9
ह्यनुयाजास्तदनादेशमेव गृह्णात्याज्यस्यैव रूपेण जामि हि कुर्याद्यद्गायत्र्यै त्वा
गृह्णामि[1] त्रिष्टुभे त्वा गृह्णामीति गृह्णीयात्तस्मादनादेशमेव गृह्णात्याज्यस्यैव
रूपेण[2] ॥९॥ अथ यद् ध्रुवायां गृह्णाति तत्सर्वस्मै यज्ञाय गृह्णाति तदनादेशमेव 10.11
गृह्णात्याज्यस्यैव रूपेण कस्मा उ[3] हि[3] तदादिशेद्यतः[3] सर्वाभ्यो देवताभ्यो
ऽवद्यन्ति यजमानो वै जुहूमनु यो ऽस्मा अरातीयति स उपभृतमत्ता वै जुहूम-
न्वाद्य उपभृतमत्ता जुहूराद्य उपभृत् ॥१०॥ स चतुर्जुह्वां गृह्णात्यत्तारमेवैतत्प- 12
रिमिततरं कनीयांसं करोत्यष्टौ कृत्व उपभृत्याद्यमेवैतद् भूयांसमपरिमिततरं[4]
करोति तद्धि समृद्धं यत्रात्ता कनीयानाद्यो भूयान् ॥ ११ ॥ स चतुर्जुह्वां गृह्ण- 13.14
न्नेव आज्यं गृह्णात्यत्तारमेवैतत्परिमिततरं कनीयांसं कुर्वन्बलीयांसं वीर्य-
वत्तरं[5] करोत्यष्टौ कृत्व उपभृति गृह्णन्कनीय आज्यं गृह्णात्याद्यमेवैतद्भूयांसम-
परिमिततरं कुर्वन्नबलीयांसमवीर्यवत्तरं[6] करोति तस्मात्क्षत्रियो राजोतापारां[7]
विशं प्रावसाय जिनाति[8] त्वद्यथा त्वत्कामयते[9] तत्करोत्येतेन ह तद्वीर्येण
यज्जुह्वां भूयो गृह्णाति स यज्जुह्वां गृह्णाति जुह्वैव तज्जुहोति यदुपभृति गृह्णाति
जुह्वैव तज्जुहोति ॥१२॥ तदाहुः कस्मा उपभृति गृह्णातीति नो चेदेतया 15
जुहोतीति यद्ध्युपभृता जुहुयात्पृथक्प्रजाः[10] स्युर्नात्ता स्यान्नाद्यः[11] स यज्जु-
ह्वैव[12] समानीय जुहोति तस्मात्क्षत्रियाय विशो बलिं हरन्त्यथ यद्ध्रुवोपभृति
गृह्णाति तस्मात्क्षत्रियस्यैवेशायां वैश्यं पशव उपतिष्ठन्ते न[13] ह[13] विशि पशवः

1. गृह्णामि B. C. O. 2. रूपेण B 3. Thus M., उद्दैत ददिशेद्यत: the other Mss. 4. उपभृत्याज्यमे° Mss. 5. °यांसंवीर्य° B., °यांसंवीर्यं° C O P. 6. Thus B. My., °मवीर्यतरं C.O.P., °मवीर्यं M. 7. राजोथापारां विशं M., राजोतापाराद्विशं C. O. P. My., राजोतापाराद्विशं B. 8. जिनाति Mss. but cp. Madhy. I. 3. 2. 15. s. f. 9. त्वकामयते O. P. तत्कामयते B. 10. Emended; पृथक्प्रधा M., पृथक्प्रदा My., पृथक्पदा C. O. P., पृथक्पदा B. 11. स्यान्नाद्य: O. P. 12. °जुह्वैव B. C. (pr. m.) 13. नह B., निहि C. (pr. m.), नहि O.

स्युर्यदुपभृति न गृह्णीयादथ यज्जुह्वां समानीय जुहोति तस्माद्यदा कामयते[1]
क्षत्रियो वैश्यस्यापि यत्ते परो निहितं तदाहरेत्यभिपद्याहारयते[2] छन्दोभ्यो ह
16 वा एतानि गृह्यन्ते यदाज्यानि ॥ १३ ॥ स यज्जुह्वां गृह्णाति तद्गायत्र्यै गृ-
ह्णाति यदुपभृति तत्त्रिष्टुब्जगतीभ्यां यद्ध्रुवायां तदनुष्टुभे वाग्वा अनुष्टु-
ब्वाचा[3] वा इदं सर्वं प्रभवति तस्माद्ध्रुवाया एव सर्वो यज्ञः प्रभवतीयं वा
अनुष्टुबस्या वा इमे सर्वे लोकाः प्रभवन्ति तस्माद्ध्रुवाया एव सर्वो यज्ञः
17.18. प्रभवति ॥ १४ ॥ स गृह्णाति धाम नामासि प्रियं देवानामित्येतद्वै देवानां
प्रियं धाम यदाज्यं तस्मादाह धाम नामासि प्रियं देवानामित्यनाधृष्टं देव-
यजनमिति वज्रो वा आज्यं तस्मादाहानाधृष्टं देवयजनमिति स सकृदेव यजुषा
जुह्वां गृह्णाति तूष्णीं त्रिः सकृदेव[4] यजुषोपभृति गृह्णाति तूष्णीं सप्त कृत्वः
सकृद्धेव यजुषा ध्रुवायां गृह्णाति तूष्णीं त्रिस्तदाहुस्त्रिस्त्रिरेव यजुषा गृह्णीयादिति
त्रिवृद्धि यज्ञ इति तदु नाद्रियेतात्रो ह्येव त्रिवृद्भवति ॥ १५ ॥ प्रथमं ब्राह्मणम् ॥

M.I.3.3. K. II. 3 2.

1 स वै प्रोक्षणीरादायेध्ममेवाग्रे प्रोक्षति स समान एव प्रोक्षणस्य बन्धुर्मेध्य-
मेवैतत्करोति यत्किं च प्रोक्षति[5] ॥ १ ॥ स प्रोक्षति कृष्णो ऽस्याखरेष्ठो
2 ऽग्नये त्वा जुष्टं प्रोक्षामीति तदेनमग्नये मेध्यं करोति ॥ २ ॥ अथ वेदिं प्रोक्षति
3 वेदिरसि बर्हिषे त्वा जुष्टं प्रोक्षामीति तदेनां बर्हिषे मेध्यां करोति ॥ ३ ॥ अ-
थास्मै बर्हिः प्रयच्छन्ति[6] तत्पुरस्ताद् ग्रन्थ्यासाद्य प्रोक्षति बर्हिरसि स्रुग्भ्यस्त्वा
4 जुष्टं प्रोक्षामीति तदेनत्स्रुग्भ्यो मेध्यं करोति ॥ ४ ॥ अथ याः परिशिष्टाः
प्रोक्षण्यो भवन्ति ताभिर्बर्हिषो मूलान्युपनिनयत्यादित्यै[7] व्युन्दनमसीतीयं
वा अदितिरोषधयो वै बर्हिरस्या एवैतत्पृथिव्या ओषधीनां मूलान्युपनिनयति
तस्माद्विमा[8] आर्द्रमूला ओषधयस्तस्माद्यद्यप्युत्तरार्धः शुष्को ऽथार्द्रमूला एवा-

1. कामयेत O. P. C. 2. °त्यभिवद्याहा° M. 3. अनुष्टुप् वाचो O. C., अनुष्टुप्वाचो B. 4. Thus B. M., सकृद्धेव C. O. My. 5. प्रोक्षति B. 6. प्रयच्छति B. 7. मूलान्युपनिन° C. O. 8. तस्मादिमा B.

ह्येतत्पृथिव्या ओषधीनां मूलान्युपोनत्ति[1] ॥ ५ ॥ अथ विस्रंस्य पुरस्ता- 5
त्प्रस्तरं गृह्णाति विष्णो स्तुपो ऽसीति यज्ञो वै विष्णुरयमु वै स्तुपो यच्छिखा[2]
तमेवैतद्यज्ञे दधाति स यत्पुरस्ताद् गृह्णाति तस्मादयं पुरस्तात्स्तुपः ॥ ६ ॥ अथ 6
संनहनं विस्रंस्य प्रकल्पयति तथा हास्य प्रकॢप्तं स्त्री विजायते तद्दक्षिणस्यां
श्रोणौ स्तृणाति नीविर्ह वा अस्यैषा दक्षिणत उ वा इयं नीविस्तस्माद्दक्षिणस्यां
श्रोणौ स्तृणाति तद्बर्हिषाभिच्छादयत्यभिच्छन्नेव हीयं नीविः ॥ ७ ॥ स य- 7.8
त्स्तृणात्ययं वाव स्तुपः प्रस्तरो ऽथ यान्यतो ऽवाञ्चि लोमान्येतान्येवास्य बर्हिरे-
तान्येवैतद्यज्ञे दधाति योषा वा एषा[3] यद्वेदिस्तां दक्षिणतो देवाश्च पर्यासते य
उ चेमे मनुष्यदेवा ब्राह्मणाः शुश्रुवांसो ऽनूचाना एतेष्वेवैनामेतत्पर्यासीनेष्व-
नग्नां करोत्यनग्नताया उ एव ॥ ८ ॥ अथ यद्वेवैनां स्तृणात्येतावती ह वै 9.10
पृथिवी यावती वेदिरोषधयो वै बर्हिरोषधीरेवैतदस्यां पृथिव्यां दधाति ता
इमा ओषधयो ऽस्यां पृथिव्यां प्रतिष्ठितास्तस्मादेनां बहुलां स्तृणीयाद्यत्र ह्यस्या
बहुलतमा ओषधयस्तदुपजीवनीयतमं[4] तदु तदाहर्तर्यधि[5] त्रिवृत्स्तृणाति[6] त्रिवृद्धि
यज्ञो ऽथो प्रवर्हं[7] स्तृणन्ति बर्हिरानुषगिति ह्यृषिणाभ्यनूक्तमस्ति यद्वै प्रवर्हं
तदानुषगधरमूलं[8] स्तृणात्यधरमूला इव हीमा ओषधयः प्रतिष्ठिताः ॥ ९ ॥ स 11
स्तृणात्यूर्णम्रदसं त्वा स्तृणामि स्वासस्थां देवेभ्य इति साधुं देवेभ्य इत्येवैत-
दाह यदाहोर्णम्रदसामिति स्वासस्थां देवेभ्य इति स्वासदां देवेभ्य इत्येवैत-
दाह ॥ १० ॥ अथाग्निं कल्पयति शिरो वा एतद्यज्ञस्य यदाहवनीयः पूर्वार्धो 12
ह्येष[10] यज्ञस्य पूर्वार्धो हि शिरो यज्ञस्यैवैतच्छिरः कल्पयति स उपर्युपरि प्रस्तरं
धारयन्कल्पयत्ययं[11] वाव स्तुपः प्रस्तर एतमेवैतच्छिरसि प्रतिदधाति तस्मादयं

1. मूलान्युपोनत्ति Mss. 2. यछुषां O., याछषां My., यच्छि– C. originally, corrected into यछुषी (or यछुवी ?), यस्य (sec. m. यस्त) पितत्सिखै M. 3. एषो B. 4. ॰नीयतमं C. O. 5. तदाहर्तर्यधि B., तदाहर्तर्यधि C. O. 6. त्रिवृत॰ C. O. My. M. स्तृणाति Mss. 7. प्रव॰ C. O. My., and B. the second time (sec m.) 8. Thus emended, ॰मूला Mss. 9. ॰दां B. M., ॰दं C. O. M. 10 ह्येव M. 11. धारय॰ C. O.

13 शिरसि स्तुपः ॥ ११ ॥ अथ परिधीन्परिदधाति यत्र ह वा अग्रे देवा अग्निं होत्राय प्रावृणतेदं नो होतैधीदं[1] नो हव्यं वहेति ॥ १२ ॥ स होवाच नैतत्सहे यद्वो होता स्यां यद्वो हव्यं वहेयमिति त्रीन्पूर्वान्प्रावृद्ध्वं ते प्राधन्विषुस्तान्मे ऽप्यत्रकल्पयतेति तथा वस्तदुत्साद्वे[2] यद्वो होता स्यां यद्वो हव्यं वहेयमिति

14 तथेति तानस्मा अवाकल्पयंस्त एते परिधयः ॥ १३ ॥ स होवाच वषट्कारो वै तान्वज्रः प्रावृणगिति स वषट्काराद्वज्राद्बिभेमि यन्मा[3] न प्रवृञ्ज्याद्देतैर्मा परिधत्तेति तथा मा वज्रो वषट्कारो न प्रवर्ध्यतीति[4] तथेति तमेतैः पर्यदधुस्तत एनं वज्रो वषट्कारो न प्रावृणक्तदग्नय एवैतद्वर्म[5] नह्यति[6] ॥ १४ ॥

15.16 त उ हैत ऊचुरिदं चेन्नो यज्ञे युङ्क्तेत्यस्त्वेव[7] नो यज्ञे भाग[7] ऐव[7] नो यज्ञे भजतेति तथेति होचुर्यद्बहिष्परिधि स्कन्दात्तद्व इति यद्व उपर्युपरि होष्यन्ति तद्वो ऽविष्यतीति तद्धैनानवति यदेनानुपर्युपरि जुह्वति तद्धैनानवति यदाहवनीये जुह्वति तदु हैषां यद्बहिष्परिधि स्कन्दति तस्मात्स्कन्दन्भाग[8] इव कुर्वीत[9] ये वै ते प्राधन्वन्निमां वाव ते पृथिवीं प्राविशन्यद्वै किं च[10] स्कन्दत्यस्यामेव

17 तत्प्रतितिष्ठति ॥ १५ ॥ तदभिमृशति भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये[11] स्वाहेत्येतानि वै तेषामग्नीनां नामानि भूपतिर्भुवनपतिर्भूतानां पतिरिति[12]

18 तदस्य यथा हुतꣳ स्वाहाकृतꣳ स्यादेवमेतेष्वग्निषु हुतं भवति ॥ १६ ॥ तान्हैक इध्मस्यैव परिदधति तदु तथा न कुर्यादनवक्लृप्ता हास्यैते परिधयो भवन्त्यभ्याधानाय ह्येवेध्मो यस्यैवैतानन्यानाहरन्ति परिधय इति तस्यैवैते ऽवक्लृ-

1. °धीनं B. 2. Thus M., वत्सदुत्साद्वे C. O. P. My., वत्सदूत्साद्वे B. (cp. Introd. II. § 2 e. 11). 3. यन्मां C. O. P. M., यद्वद्वां B., यन्मा My. 4. प्रवृध्य° M. (i. e. प्रवध्य° ?), प्रवद्य° C. 5. °द्वर्मनह्यति C. O. P., द्वर्मनह्यति B. 6. Z. युङ्क्थेत्य°? 7. भाग ऐव C., भाग ऐव the other Mss. 8. °त्स्कंदंनाग C. O. P., °त्स्कंदंनाग B. 9. कुर्वीत Mss. 10. किंचित् M. 11. पतये B. 12. पतिरिति C. (sec. m.) O.

…स्तस्मादन्यानेवाहरेयुः[1] परिधय इति ॥ १७ ॥ ते पालाशाः स्युर्ब्रह्म वै 9 I. 3. 4. 1.
पलाशो ब्रह्म वा अग्निरग्नयो हि तस्मात्पालाशा अथो वैकङ्कता बैल्वाः खादिरा
औदुम्बराः कार्ष्मर्यमया एते हि यज्ञिया वृक्षास्त आर्द्राः स्युस्तद्धैषां जीवं तेन
सतेजसस्तेन[2] वीर्यवन्तस्तस्मादार्द्राः स्युः ॥ १८ ॥ स मध्यमं परिधिमग्रे परि- 2
दधाति गन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्य-
ग्निरिळ ईळित इति[3] ॥ १९ ॥ अथ दक्षिणत इन्द्रस्य बाहुरसि दक्षिणो विश्व- 3
स्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिळ ईळित इति[3] ॥ २० ॥ अथोत्तरतो मि- 4
त्रावरुणौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्मणा विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्य-
ग्निरिळ ईळित इत्यग्नयो हि तस्मादाहाग्निरिळ ईळित इति[3] ॥ २१ ॥ अथ स- 5. 6
मिधमभ्यादधाति समिन्द्ध एवैनं तया वीर्यमेवास्मिन्दधाति स मध्यमं परिधिमग्र
उपस्पृशति तदेतान्त्समिन्द्धे यदग्नावभ्यादधाति[4] तत्प्रत्यक्षमग्निꣳ[5] समिन्द्धे स
तया गायत्र्याभ्यादधाति वीतिहोत्रं त्वा कवे द्युमन्तꣳ समिधीमहि । अग्ने
बृहन्तमध्वर इति गायत्रीमेवैतया समिन्द्धे सा गायत्री समिद्धान्यानि छन्दाꣳसि
समिन्द्धे छन्दाꣳसि समिद्धानि देवेभ्यो यज्ञं वहन्ति[6] ॥ २२ ॥ अथ यां द्विती- 7. 8
यामभ्यादधाति वसन्तमेव तया समिन्द्धे स वसन्तः समिद्धोऽन्यानृतून्त्समि-
न्द्ध ऋतवः समिद्धाः प्रजाश्च प्रजनयन्त्योषधीश्च[7] पचन्ति सोऽभ्यादधाति स-
मिदसीति समिद्धि वसन्तोऽभ्याधाय जपति[8] सूर्यस्त्वा पुरस्तात्पातु कस्याश्चि-
दभिशस्त्या इति परिधय इमे ऽभितो गुप्तये परिहिता भवन्ति सूर्यमेवास्यैत-
त्पुरस्तादभि गोप्तारं[9] करोति नेत्पुरस्ताद्यज्ञं नाष्ट्रा रक्षाꣳस्यवचरानिति सूर्यो हि
नाष्ट्राणाꣳ रक्षसामपहन्ता[10] ॥ २३ ॥ अथ याममूं तृतीयामनुयाजेष्वभ्यादधाति 9. 0

1. तस्यैवैतेकूलसा° B. C. (pr. m., but व added on margin) तस्यैवैतेऽनवकूलसा° M. 2. सतेजस° Mss. 3. इति Mss. 4. °दधति C. O. 5. °प्रत्यक्ष° B. 6. वहति C. (sec. m.) O. 7. Thus Mss., Z. प्रजनयन्त्यो°. 8. जपति Mss. 9. °त्पुरस्तादभितोगोप्तारं B. 10. °सामपहंता B.

ब्राह्मणमेव तया समिन्द्धे स ब्राह्मणः समिद्धो देवेभ्यो यज्ञं वहत्यथ स्तीर्त्वा वेदिमुपावर्तते तस्या द्वे तृणे आदायोदीची निदधाति सवितुर्बाहू स्थ इत्ययं वास्तुपः प्रस्तरो ऽथेमे एवैते अर्वौ स यत्तिरश्ची[1] निदधाति तस्माद्विमे तिरश्ची अर्वौ क्षत्रमु वै प्रस्तरो विशो बर्हिः क्षत्रस्य च वा एते विशश्च विधृती[2] तस्माद्वि-

11.12 धृती[2] नाम ॥ २४ ॥ तत्प्रस्तरꣳ स्तृणात्यूर्णम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्य इति साधुं देवेभ्य इत्येवैतदाह यदाहोर्णम्रदसमिति स्वासस्थं देवेभ्य इति स्वासदं देवेभ्य इत्येवैतदाहा त्वा वसवो रुद्रा आदित्याः सदन्त्वित्येते वै त्रया देवा यद्वसवो रुद्रा आदित्या एते त्वासीदन्त्वित्येवैतदाह तदेव सव्यः पाणि-

13 रधि[8] निहितो[3] भवति ॥ २५ ॥ अथ जुहूं प्रतिगृह्णाति नेदिह पुरा नाष्ट्रा

14.15 रक्षाꣳस्याविशानिति ब्राह्मणो हि नाष्ट्राणाꣳ रक्षसामपहन्ता[4] ॥ २६ ॥ स प्रतिगृह्णाति घृताच्यसि जुहूर्नामेति घृताची हि जुहूर्हि नाम सेदं प्रियेण धाम्ना प्रिये सदसि सीदेत्यथोपभृतं[5] घृताच्यस्युपभृन्नामेति घृताची ह्युपभृद्धि नाम सेदं प्रियेण धाम्ना प्रिये सदसि सीदेत्यथ ध्रुवां घृताच्यसि ध्रुवा नामेति घृताची हि ध्रुवा हि नाम सेदं प्रियेण धाम्ना प्रिये सदसि सीदेति प्रियेण धाम्ना प्रिये सदसि सीदेत्येवान्यानि हवीꣳष्यासादयति स यदुपरि जुहूमासादयत्यध इतराः स्रुचः क्षत्रं वै जुहूर्विश इतराः स्रुचः क्षत्रमेवैतद्विश[6] उत्तरं करोति तस्मात्क्षत्रिय-

16 मुपर्यासीनमधस्ताद्विश इमाः प्रजा उपासते ॥ २७ ॥ अथ संमृशति ध्रुवा असदन्निति ध्रुवा ह्यसदन्नतस्य योनाविति यज्ञो वा ऋतस्य योनिर्यज्ञे ह्यसदꣳस्ता विष्णो पाहि[7] पाहि[7] यज्ञं पाहि यज्ञपतिमिति तद्यजमानमाह पाहि मां[8] यज्ञन्यमिति तदात्मानं नान्तरेति यज्ञो वै विष्णुस्तस्मा एवैतद्गुप्तये परिददाति सुगुप्तमसदिति ॥ २८ ॥ द्वितीयं ब्राह्मणम् ॥

1. °श्चि C. O. 2. विघृती B., विघृती C., वि° O. the first, वि° the second time. 3. Thus acc. the Mss. 4. °सामपहंता B. 5. °थोपभृतं B., °थोपभृतं O. 6. क्षत्रमेवैतद्विश C. O. 7. पाहि पाहि B. पाहि पाहि C. O. 8. मा B.

II. 3. 3. 1.
M. I. 3. 5.

K. II. 3. 3.

इन्द्धे ह वा अध्वर्युरिध्मेनाग्निं तस्मादिध्मो नाम सामिन्द्ध एव सामिधेनीभि- 1
र्होता तस्मात्सामिधेन्यो नाम ॥ १ ॥ स वा आहाग्नये समिध्यमानायानुब्रूहीत्य- 2.3
ग्नये ह्येतत्समिध्यमानायान्वाह तदु हैक आहुरग्नये समिध्यमानाय होतरनुब्रूहीति
तदु तथा न ब्रूयादहोता वा एष एतर्हि यदा वा एतं प्रवृणीते[1] ऽथैष होता
तस्माद्ब्रूयादग्नये समिध्यमानायानुब्रूहीत्येव ॥ २ ॥ ता वा आग्नेयीरन्वाह स्व- 4
यैवैनं तद्देवतया समिन्द्धे गायत्रीरन्वाह गायत्रमग्नेश्छन्दः स्वेनैवैनं तच्छन्दसा
समिन्द्धे वीर्यमु वै गायत्री ब्रह्म हि गायत्री वीर्येणो वा एनमेतत्समिन्द्धे ॥ ३ ॥
एकादशान्वाहैकादशाक्षरा वै त्रिष्टुब् ब्रह्म वै गायत्री क्षत्रं त्रिष्टुप्तदेनमुभाभ्यां 5
वीर्याभ्याꣳ समिन्द्धे[2] ब्रह्मणा च क्षत्रेण च ब्रह्म हि गायत्री क्षत्रं त्रिष्टुप् ॥४॥
त्रिः प्रथमामन्वाह त्रिरुत्तमां त्रिवृत्प्रायणा हि यज्ञास्त्रिवृदुदयनास्ताः पञ्च- 6.8
दश संपद्यन्ते पञ्चदशो[3] वै वज्रो वीर्यं वज्रो वीर्यमेवैतत्सामिधेनीरभिसंपाद-
यति तस्मादेतास्वनूच्यमानासु पाद्याभ्यामङ्गुष्ठाभ्यामवबाधेतेदमहममुमवबाध इति
यं द्विष्यात्तदेनमेतेन पञ्चदशेन वज्रेणावबाधते पञ्चदशो[4] वा अर्धमासस्य रात्र-
यो[5] ऽर्धमासश उ वै संवत्सरो भवति तद्वेव संवत्सरमाप्नोति ॥ ५ ॥ तासां 9
पञ्चदशानां गायत्रीणां त्रीणि च शतानि षष्टिश्चाक्षराणि त्रीणि च वै शतानि
षष्टिश्च संवत्सरस्य रात्रयस्तद्वेव संवत्सरमाप्नोति ॥ ६ ॥ सप्तदश सामिधेनीरिष्टये 10
ऽनुब्रूयादित्याहुरुपाꣳशु तां देवतां यजेद्यस्या इष्टिं निर्वपेदिति द्वादश वै मासाः
पञ्चर्तव एष वै सप्तदशः प्रजापतिः सर्वं प्रजापतिः सर्वेण हैव तं काममृध्नोत्य-
नपराधं यस्मै कामायेष्टिं निर्वपत्युपाꣳशु देवतां यजत्यनिरुक्तं वा उपाꣳशु सर्वं
वा अनिरुक्तꣳ सर्वेण हैव तं काममृध्नोत्यनपराधं यस्मै कामायेष्टिं निर्वपत्येष इष्टे-
रुपचारः ॥ ७ ॥ एकविꣳशतिꣳ सामिधेनीरपि दर्शपूर्णमासयोरनुब्रूया- 11.12

1. प्रवृणीते B., प्रवृणते C. M. My., प्रवृणुते O. 2. Z. समिद्धे? 3. पचदशो Mss. 4. पंचदशो C. O. 5. रात्रयो B.

दित्याहुर्द्वादश वै मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविꣳशः सैषा गतिरेषा प्रतिष्ठा तद्वेतद्व्रतश्रीरेव कुर्वीत न ह श्रेयान्न पापीयान्भवति
13. 6 यस्यैवमन्वाहुः सैषा मीमाꣳसैव[1] न त्वनूच्यन्ते[2] ॥ ८ ॥ स यत्त्रिः प्रथमामन्वाह त्रिरुत्तमां तदनवानमनुब्रूयात्त्रयो वा इमे लोका इमानेवैतल्लोकान्त्संतनोतीमांल्लोकान्त्स्पृणुते त्रेधाविहित उ वा अयं प्राणः प्राणमेवास्मिन्त्संततमव्यवच्छिन्नं दधात्येतदेवानुवचनं यावदस्य वशः स्यादेवमेवानुब्रूयादस्त्वित्यत्र[3] परिचक्षीत ताम्यत्यथ कर्म विवृह्यते[4] तस्मादेकैकामेवानुब्रूयात्तदेकैकयैवेमांल्लोकान्त्स्पृणुते प्राण उ वै गायत्री यद्वेव कृत्स्नां गायत्रीमन्वाह तदेव कृत्स्नं प्राणं दधात्यथेतराः संतन्वन्नन्वाह[5] संवत्सरस्यैवैतदहोरात्राणि संतनोति तानीमानि संवत्सरस्याहोरात्राणि संततान्यव्यवच्छिन्नानि परिप्लवन्ते द्विषत एव सपत्नाय नोपस्थानं करोत्युपस्थानꣳ ह कुर्याद्यदसंतता अनुब्रूयात्तस्मात्संतन्वन्नन्वाह[6] ॥ ६ ॥

तृतीयं ब्राह्मणम् ॥

M. I. 4. 1. K. II. 3. 4.

1. स वै हिंकृत्यान्वाह स यद्धिंकृत्यान्वाह[7] नासामा यज्ञो ऽस्तीति वा आहुर्नो वा अहिंकृत्य साम गीयते तन्न्वेव[8] हिंकारस्य रूपं करोति प्रणवेन साम्नो रूपमुपगच्छत्योउमोउमिति ह्यन्वाह तथो खलु सर्व एव ससामा यज्ञो भवति ॥१॥

2. अथ यद्वेव हिंकृत्यान्वाह[8] प्राणो वै हिंकारः प्राणो हि वै हिंकारस्तस्मान्नैव कश्चन नासिके अपिगृह्य हिंकर्तुꣳ शक्नुयाद्वाचो[10] वा ऋचमन्वाह वाक् च वै प्राणश्च

3. मिथुनं मिथुनमेवैतत्प्रजननं पुरस्तात्सामिधेनीनां क्रियते ॥ २ ॥ स उपांꣳशु हिंकरोति यद्वोच्चैर्हिंकुर्यादन्यतरदेव कुर्याद्वाचमेव तस्मादुपांꣳशु हिंकरोति ॥३॥

---

1. मीमाꣳसैव B. 2. °च्यते B, M, My. 3. Thus Mss., Z. °दस्त्युवत्र or simply °दस्त्यत्र (cp. I. 1. 2. 2, I. 3. 2. 9)? 4. विवृज्यते Mss. exc. M., which has मिमृह्यते. 5. संतन्व॰ Mss. 6. अनुब्रू॰ and संतन्त्र॰ Mss. 7. °कृत्वा M. My. 8. °हिंकृत्वा॰ M. 9. तन्वेव Mss. 10. Thus B., without acc. the other Mss. (but: वाचो= वाचा । उ ।).

II. 3. 4. 4.

स वा एति च प्रेति चान्वाह गायत्रीमेवैतत्पराचीं चार्वाचीं च युनक्ति सा पराची 4.
देवेभ्यो यज्ञं वहत्यर्वाची मनुष्यानवति ॥४॥ अथ यद्वेवेति[1] च प्रेति चान्वाह 5.6
प्रेति वै प्राण एत्युदानः प्राणोदानावेवैतद्दधाति प्रेति वै रेतः सिच्यत एति
प्रजायते प्रेति[2] गावो वितिष्ठन्त एति समावर्तन्ते सर्वमेवेदमेति च प्रेति च ॥५॥
स वा आह प्र वो वाजा अभिद्यव इति तत्प्रेति भवत्यग्न आयाहि वीतय इति 7.8
तदेति भवति तदु हैक आहुः प्रेत्यत्रो वा एतदुभयꣳ संपद्यत इति तद्वैतदाति-
विज्ञान्यं प्र वो वाजा इति तदेव प्रेत्यग्न आयाहि वीतय इति तदेति ॥ ६ ॥
स वा आह प्र वो वाजा अभिद्यव इति तत्प्रेति भवति वाजा इत्यन्नं वै वाजा 9.
अन्नमेवैतदभ्यनूक्तमभिद्यव इत्यर्धमासा वा अभिद्यवोऽर्धमासानेवैतदभ्यनूक्तꣳ
हविष्मन्त इति पशवो वै हविष्मन्तः पशूनेवैतदभ्यनूक्तम् ॥ ७ ॥ घृताच्येति 10.11
विदेघो ह माथवो[3] ऽग्निं वैश्वनरं मुखे बभार तस्य ह गोतमो राहूगण[4] ऋषिः
पुरोहित आस तस्मै ह स्मामन्त्र्यमाणो न प्रतिशृणोति तम्नु गोतमो राहूगण
ऋषिर्ह्वयितुं दध्रे वीतिहोत्रं त्वा कवे द्युमन्तꣳ समिधीमहि । अग्ने बृहन्तमध्वरे[5]
विदेघेति ॥ ८ ॥ स ह न प्रतिशुश्रावोदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते । 12.
तव ज्योतीꣳष्यर्चयो विदेघेति ॥ ९ ॥ स ह नैव प्रतिशुश्राव तं त्वा घृतस्न 13.
ईमह इति हैवाभिव्याजहार ततोऽस्याग्निर्मुखादुज्जज्वाल[6] तं न शशाक धार-
यितुꣳ सोऽस्य मुखान्निष्पेदे स इमां पृथिवीं प्रापादो ह तर्ह्यास विदेघो माथवः[3]
सरस्वत्याꣳ स इमां पृथिवीं दहन्नभीयाय ॥ १० ॥ तं पश्चाद्दन्वीयतुर्विदेघश्च 14.
माथवो[3] गोतमश्च राहूगणः स इमाः सर्वा नदीरतिददाह [7]सदानीरेत्युत्तराद्गिरेर्नि-
र्धावति[8] ताꣳ हैव नातिददाह तस्माद्ध स्म तां पुरा ब्राह्मणा न तरन्त्यनति-
दग्धाग्निना वैश्वानरेणेति ॥ ११ ॥ तत उ वा एतर्हि बहवः प्राञ्चो ब्राह्मणा- 15.

1. यदेवेति B. (pr. m.), यद्येवेति M. 2. प्रेति Mss. (B. om. this word). 3. माधवो M. My. 4. °गण ऋषिः C. O. 5. °ध्वरे विदेघेति B., Z. perhaps° ध्वरे । विदे°. 6. °खादुदज्वाल Mss. exc. M. (: खादुद्यज्वाल). 7. सदा° C. O. P. 8. °र्निधावति B.

स्तद्ध तदेत्रतरमिवास[1] स्त्रामतरमिवास्वदितं ह्यग्निना वैश्वानरेणास ॥ १२ ॥

16 तदु वा एतर्हि चेत्रतरमिवास्त्रामतरमिव ब्राह्मणा उ ह्येनद्यज्ञैरसिष्वदन्त्सा ह

सापि जघन्ये[2] नैदाघे संकोपयति तावच्छीतानतिदग्धा ह्यग्निना वैश्वानरेण ॥ १३ ॥

17 स होवाच क्वाहं भवानीति तं होवाचात एव ते प्राग्भुवनामिति सैवैतर्हि कोसल-

18.19 विदेहानां मर्यादा कुरुपञ्चालैस्ते[4] ह्युभये माथवाः ॥ १४ ॥ स होवाच कथं

नु मे न प्रत्यश्रौषीरिति स होवाचाग्निं वैश्वानरं मुखे ऽभार्षमिति स मे नेन्मुखा-

न्निष्पद्याता इति तदु कथमभूदिति यत्रैव त्वं घृताच्येत्यभिव्याहार्षीरिति ततो मे

ऽग्निर्मुखादुदज्वालीदिति होवाच तं नाशकं धारयितुं स मे मुखान्निरपा-

20 दीति[6] ॥ १५ ॥ स यद् घृतं[7] न्यक्तं[7] सामिधेनीषु सामिधेन्यमेव तत्पदं

21 समिन्द्ध एवैनं तया वीर्यमेवास्मिन्दधाति ॥ १६ ॥ तदु घृताच्येति देवाञ्जि-

गाति सुम्नयुरिति यजमानो वै सुम्नयुः स देवाञ्जिगीषति स देवाञ्जिगांसति तदे-

22.23 षाभ्यनूक्ता सैषाग्नेयो सत्यनिरुक्ता सर्वं वा अनिरुक्तं सर्वेणैवैतत्प्रतिपद्यते ॥ १७ ॥

अग्न आयाहि वीतय इति तदेति[9] भवति वीतय इति समन्तिकमिव ह वा इमे ऽग्रे

लोका आसुरुन्मृश्या[10] हासौ द्यौरास ते देवा अकामयन्त कथं नु न इदं वरीयः

स्यादिति तामेतैस्त्रिभिरक्षरैर्व्यूहन्विनयंस्ततो[11] देवेभ्यो वरीयो ऽभवद्वरीयो ह वा

24 अस्मै भवति यस्यैवं विदुष एतामन्वाहुः ॥ १८ ॥ गृणानो हव्यदातय इति

यजमानो वै हव्यदातिर्गृणानो यजमानायेत्येवैतदाह नि होता सत्सि बर्हिषीत्य-

ग्निर्वै होतायमु वै लोको बर्हिरग्निमेवैतदस्मिंल्लोके दधाति सो ऽयमस्मिंल्लोके ऽग्नि-

र्हितः सैषेममेव लोकमभ्यनूक्ता[12] तस्मादग्नय इत्यग्निर्ह्ययं लोक इमं हैवैतया लोकं

25.26 जयति यस्यैवं विदुष एतामन्वाहुः ॥ १९ ॥ तं त्वा समिद्भिरङ्गिर इति समि-

---

1. Z. स्त्रामतर°? 2. जघने O. P. C. (sec. m.), जघन्यै My. 3. °मिति B. 4. °पं-चालैं° B. C. (pr. m.). 5. माधवाः M. My. 6. °न्निरपादिति all, exc. B. sec. m. 7. घृतंन्यक्तं all exc. M. which originally had घृतन्यक्तं. 8. समिंध°. 9. तदेनं B., तथेति M. 10. °श्या B., °ष्या the other MSS. 11. °Thus C. O. M. My., °ह्रंस्त्रिनय ंस्ततो B. 12. °भ्य° MSS.

द्धैनँ समिन्धते ऽङ्गिर[1] इत्यङ्गिरा ह्यग्निर्घृतेन वर्धयामसीति[2] समिन्द्ध एवैनं
तया वीर्यमेवास्मिन्दधाति बृहच्छोचा यविष्ठ्येति बृहद्ध्येष शोचति समिद्धो यवि-
ष्ठ्येति यविष्ठ्यो[3] ह्येष सैषैतमेवान्तरिक्षलोकमभ्यनूक्ता[4] तस्मादाग्नेयी सत्यनिरुक्ता-
निरुक्तो ह्येष लोक एतँ हैवैतया लोकं जयत्यन्तरिक्षलोकं यस्यैवं विदुष एता-
मन्वाहुः ॥ २० ॥ स नः पृथु[5] श्रवाय्यमित्यदो वै पृथु यस्मिन्देवा अदः 27.28
श्रवाय्यं यस्मिन्देवा अच्छा देव विवाससीत्यच्छा देव विवासासि तन्नो गम-
येत्येवैतदाह बृहदग्ने सुवीर्यमित्यदो वै बृहद्यस्मिन्देवा अदः सुवीर्यं यस्मिन्देवाः
सैषामुमेव लोकमभ्यनूक्ता दिवमेवैतँ हैवैतया लोकं जयति दिवमेव यस्यैवं वि-
दुष एतामन्वाहुः ॥ २१ ॥ ईळेन्यो नमस्यस्तिरस्तमाँसि दर्शत इतीळेन्यो ह्येष 29-32
नमस्यो ह्येष तिरस्तमाँसि दर्शत इति तिरो ह्येष तमाँसि ददृशे समिद्धः सम-
ग्निरिध्यते वृषेति सँ हीध्यते वृषा वृषो ऽग्निः[6] समिध्यत इति सँ हीध्यते
ऽश्वो न देववाहन इत्यश्वो ह वा एष भूतो देवेभ्यो यज्ञं वहति यद्वै नेत्यृच्यो-
मिति वै तत्तँ हविष्मन्त ईळत इति हविष्मन्तो ह्येनमीळते[7] मनुष्या वृषणं त्वा
वयं वृषन्वृषणः समिधीमहीति सँ ह्येनमिन्धते[8] ऽग्न दीद्यतं बृहदिति बृहद्ध्येष
दीदयात्समिद्धः ॥ २२ ॥ तं वा एतं वृषण्वन्तं तृचमन्वाहाग्नेयीर्वा[9] इमाः 33-35
सर्वाः सामिधेनीरन्वाहेन्द्रो वै यज्ञस्य देवतेन्द्रो वषा तथास्यैताः सेन्द्राः सामि-
धेन्यो भवन्त्यथाहाग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतु-
मिति ॥ २३ ॥ देवाश्च ह वा असुराश्चोभये प्राजापत्या अस्पर्धन्त तान्ह स्पर्ध- 34
मानानन्तरेण तस्थौ गायत्री[10] या[10] वै सासीदियं वै सा पृथिव्यासीत्ताँ होभय
एव विदां चक्रुर्यतरानेव न इयमुपावर्त्स्यतीति ते भविष्यन्ति परेतरे भविष्यन्तीति
तामुभय एवोपमन्त्रयां चक्रिरे सो ऽग्निरेव देवानां दूत आस सहरक्षा इत्यसु-

1. अंगिर B. 2. वर्ध्र O. C. (sec. m). 3. यविष्ठ्यो MSS. 4 सैषेदमेवांतरि° C. O., °षेदमेवां° M. My. 5. पृथुः B. O. C. My. 6. Thus instead of अग्निः the MSS. 7. ह्येतमी° B. C. M. My. 8. ह्येनमिंधत C. (sec.m.) O. 9. त्रित्र° C. O. M. My. 10. गायत्र्या MSS. exc. B.

ररक्षसमसुराणा ँ साग्निं दूतं वृणीमह इत्यग्निमनुप्रेयाय स हि देवानां दूत आ

35 होतारं विश्ववेदसमिति ॥ २४ ॥ तद्धैके होता यो विश्ववेदसमिति परिहरन्ति नेदरमित्यात्मानं ब्रवामेति तदु तथा न ब्रूयान्मानुष ँ ह कुर्याद्यत्तथा ब्रूयाद्व्यृद्धं वै तद्यज्ञस्य यन्मानुषं तस्माद्धोतारमित्येव ब्रूयादस्य[1] यज्ञस्य सुक्रतुमिति सैषा देवानुपावर्तत[2] ततो देवा अभवन्परासुरा भवति हैवात्मना परास्य द्विषन्भ्रातृव्यो

36 भवति यस्यैवं विदुष एतामन्वाहुः ॥ २५ ॥ तां वा एतामष्टमीमन्वाहाष्टाक्षरा

37 वै गायत्री गायत्र्यु वा इयं निदानेन तस्मादेतामष्टमीमन्वाह ॥ २६ ॥ तद्धैके पुरस्तादेतस्या[3] धाय्ये दधति तदु तथा न कुर्यादनवक्लृप्ता हास्यैषा गायत्री भव-

38 ति दशमी हि तर्हि भवति तस्मादुपरिष्टादेव धाय्ये दध्यात् ॥ २७ ॥ समिध्य-मानो अध्वरे ऽग्निः पावक ईड्य इति पावको ह्येष ईड्यो ह्येष शोचिष्केशस्तमी-मह इति शोचन्तीव ह्येतस्य केशाः समिद्धस्य समिद्धो अग्न आहुतेत्यतः प्राञ्चं सर्वमिध्ममभ्यादध्यादपवृङ्क्त[4] इव ह्येतद्धोता यद्धात्रेध्मस्यान्यत्समिधः[5] परि-शिष्यते ऽतिरिक्त ँ ह तद्यदु वै यज्ञस्यातिरिच्यते द्विषन्त ँ हास्य तद्भ्रातृव्यमभ्य-

39 तिरिच्यते तस्मादतः प्राञ्च ँ सर्वमिध्ममभ्यादध्यात् ॥ २८ ॥ देवान्यक्षि स्व-ध्वरेति देवान्यज सुयज्ञियेत्येवैतदाह त्व ँ हि हव्यवाळसीत्येष हि हव्यवाळथा जुहोता दुवस्यताग्निं प्रयत्यध्वरे । वृणीध्व ँ हव्यवाहनमिति[6] यथा संप्रैष[7] एव-

40 मेषा चैनं[8] जुहुत[9] यजध्वं[10] चेति यस्मै कामाय समैन्धिद्वमिति[11] ॥ २९ ॥ तं वा एतमध्वरवन्तं तृचमन्वाह देवान्ह वै यज्ञेन यजमानानसुराः सपत्ना दुधूर्षन्त[12] चक्रुस्तान्ह दुधूर्षन्त एव न शेकुर्धूर्वितुं[13] पराबभूवुस्तस्माद्यज्ञो ऽध्वरो नाम दुधूर्षन्ह

---

1. ब्रूयादस्य C., ब्रूयादस्य O., ब्रूयाद्यस्य B. 2. देवानुपावर्त B. O. 3. परस्ता° C. O. My. 4. °दध्यादपवृंक्त Mss. 5. °मिद्धः B. M. 6. °वाहनमिति B. 7. संप्रैष Mss. (cp. IV. 9. 3. 14). 8. वैन C. (sec. m.) O. 9. जुहुथ C. O. My. 10. यज° C. O. 11. समैंध्यद्व° C. O My. 12 Thus acc. to the Mss. 13. °तं C. O. P.

वा एनं[1] द्विषन्त्सपत्नः[2] पराभवति यस्यैवं विदुषो ऽध्वरवन्तं तृचमन्वाहुर्यावतीमु ह सौम्येनाध्वरेण जितिं जयति[3] तावतीं जयति ॥ ३० ॥ चतुर्थं ब्राह्मणम् ॥ तृतीयो ऽध्यायः ॥

K. II. 4. 1. M. I. 4. 2.

(1) एतद्वै देवा गरिष्ठे ऽग्निमयुञ्जन्यद्धोतृत्व इदं नो होतैधीदं नो हव्यं वहेति तमेतद्गरिष्ठे युक्तंथोपामदन्वीरो वै त्वमस्यलं वै त्वमेतस्मा असीति यथाप्येतर्हि ज्ञातीनां यं गरिष्ठे युञ्जन्ति तमुपमदन्ति[4] वीरो वै त्वमस्यलं वै त्वमेतस्मा असीत्यवमेतत्स यदतो होतान्वाहोपमदत्येवैनं[5] तद्वीर्यमेवास्मिन्दधाति ॥ १ ॥ (2) स आग्ने महां३[6] असि ब्राह्मण भारतेति ब्रह्म ह्यग्निस्तस्मादाह ब्राह्मणेति भारतेत्येष हि देवेभ्यो हव्यं भरति तस्माद्वा आहुर्भरतो ऽग्निरिति शश्वदु ह वा एष एव प्राणो भूत्वेदमिमाः प्रजा बिभर्ति तस्मादाह भारतेति[7] ॥ २ ॥ (3.4) अथार्षेयं प्रवृणीत ऋषिभ्यश्चैवैनं तद्देवेभ्यश्च निवेदयत्ययं महावीर्यो यो यज्ञं प्रापदिति परस्तादर्वाक् प्रवृणीते परस्ताद्ध्यर्वाच्यः प्रजाः प्रजायन्ते तद्वेव ज्यायसस्पतते निह्नुत इदꣳ हि पितैवाग्रे ऽथ पुत्रो ऽथ पौत्रः ॥ ३ ॥ (5-9) आर्षेयं प्रवृत्याह देवेद्ध इति देवा ह्येतमग्र ऐन्धत मन्विद्ध इति मनुर्ह्येतमग्र ऐन्द्ध ऋषिष्टुत इत्यृषयो ह्येतमस्तुवन्विप्रानुमदित इति त उ वाव विप्रा यदृषयस्ते ह्येतमन्वमदꣳस्तस्मादाह विप्रानुमदित इति कविशस्त इति त उ वाव कवयो यदृषयस्ते ह्येतमशꣳसꣳस्तस्मादाह कविशस्त इति ब्रह्मसꣳशित इति ब्रह्मसꣳशितो ह्येष घृताहवन इति घृताहवनो ह्येषः ॥ ४ ॥ (10) प्रणीर्यज्ञानामित्येतेन हि सर्वे यज्ञाः प्रणीयन्ते ये च पाकयज्ञा[8] ये चेतरे तस्मादाह प्रणीर्यज्ञानामिति ॥ ५ ॥ (11) रथीरध्वराणामिति रथो ह वा (12) एष भूतो देवेभ्यो यज्ञं वहति तस्मादाह रथीरध्वराणामिति[9] ॥ ६ ॥ अतूर्तो हो-

1. एतं C. (sec. m.) P. O. My. 2. द्विष॰ MSS. 3. जयति MSS. 4. ॰मदंति B. 5. ॰मदंत्ये B. My. 6. महां२ B. C. (pr. m.), महां२ My. 7. ॰तेति MSS. 8. Thus M. only, पाकयज्ञिया B. C, पाकयाशिया O., पाकयज्ञिया My. 9. ॰मिति MSS.

तेति न ह्येतं नाष्ट्रा रक्षा॑ंसि तरन्ति तूर्णिर्हव्यवाळिति[1] सर्वान्ह्येष पाप्मानस्त-
13 रति ॥ ७ ॥ आस्पात्रं जुहूर्देवानामित्येतद्वै देवानां पात्रं यदग्निस्तस्मादग्नौ सर्वा-
भ्यो देवताभ्यो जुह्वति[2] प्राप्नोति ह वै तस्य पात्रं यस्य पात्रं प्रेप्सति य एवमे-
14-15 तद्वेद ॥ ८ ॥ देवानां चमसो देवपान इति चमसेन ह वा एतेन भूतेन देवा
भक्षयन्ति तस्मादाह देवानां चमसो देवपान इत्यरां३[3] इवाग्ने नेमिर्देवा॑ंस्त्वं परिभू-
सीति यथारान्नेमिः सर्वतः परिभूरेवं त्वं देवान्त्सर्वतः परिभूरसीत्येवैतदाह ॥ ९ ॥
16-19 आवह देवान्यजमानायेति तदेतस्मै यज्ञाय देवानावाहयत्यग्निमग्न आवहेति तदाग्ने-
यायाज्यभागायाग्निमावाहयति सोममावहेति तत्सौम्यायाज्यभागाय सोममावा-
हयत्यग्निमावहेति तदाग्नेयाय[4] पुरोळाशायाग्निमावाहयति यो ऽयमुभयत्राच्यु-
तो ऽथ यथादेवतं देवां३ आज्यपां३[5] आवहेति तत्प्रयाजानुयाजानावाहयति प्रयाजा-
नुयाजा हि देवा आज्यपा अग्नि॑ं होत्रायावहेति तदग्नि॑ं होत्रायावाहयति स्वं
महिमानमावहेति वाग्वै स्वो महिमा तद्वाचमावाहयत्या च वह जातवेदः सुयजा
च यजेत्येता एवैतद्देवता आहा चैना वहानुष्ठ्या चैना यजेति स तिष्ठन्नन्वाहा-
न्वाह[6] ह्येतदसौ[6] वा अनुवाक्यासावेवैतद्भूतो ऽन्वाहासीनो यजतीयं वै याज्ये-
यमेवैतद्भूतो यजति तस्य नार्तिर्न ह्वला भवति तस्मान्न कश्चन तिष्ठन्वषट्करो-
त्यन्यत्रावभृथादियं॑ हि याज्या ॥ १० ॥ प्रथमं ब्राह्मणम् ॥

M. I. 4. 4. K. II. 4. 2.

1.2 तं वा एतमग्नि॑ं समैन्धिषत स यदेतमग्नि॑ं समैन्धिषत समिद्धे देवे-
भ्यो जुहवामेति तस्मिन्नेते प्रथमे आहुती जुहोति मनसे च वाचे च मनश्च ह वै
वाक्च युक्ते देवेभ्यो यज्ञं वहतः स यदुपा॑ंशु क्रियते तन्मनो देवेभ्यो यज्ञं वह-
त्यथ यद्वाचा निरुक्तं क्रियते तद्वाग्देवेभ्यो यज्ञं वहत्येतद्वा इदं द्वयं क्रियते ते
37 एवैतत्संतर्पयति तृप्ते प्रीते देवेभ्यो यज्ञं वहात[7] इति ॥ १ ॥ स्रुवेण तमाघार-

1. तूर्णि॰ B. 2. जुह्वति O. C. (sec. m.). 3. ॰रां२ B. My. 4. ॰ग्नेयाय MSS. 5. आज्य॰ B. 6. तिष्ठन्नन्वाहान्वाह्येतदसौ C. O. My., तिष्ठन्नन्वाहान्वाह ह्येततदसौ B., तिष्ठन्नन्वाहान्वाह्येषातदसौ M. 7. वहत B. M. My.

यति यं मनस आघारयति वृषा हि स्रुवो वृषा हि मनः स्रुचा तमाघारयति
यं वाच आघारयति योषा हि स्रुग्योषा हि वाक् तूष्णीं तमाघारयति यं
मनस आघारयति न स्वाहेति चनानिरुक्तꣳ[1] हि तद्यत्तूष्णीमनिरुक्तꣳ हि मनो
मन्त्रेण तमाघारयति यं वाच आघारयति निरुक्तो हि मन्त्रो निरुक्ता[2] हि वागा-
सीनस्तमाघारयति यं मनस आघारयति तिष्ठꣳस्तमाघारयति यं वाच आघारयति
मनश्च ह वै वाक्च युक्ते देवेभ्यो यज्ञं वहतो यतर उ वै युञ्जयोर्ह्सीयानुपवहो[3]
वै तस्मै कुर्वन्ति वागु वै मनसो ह्रसीयस्यपरिमिततरामिव हि मनः परिमिततरेव
हि वाग्वाच एवैतदुपवहः करोति तथा सयुजौ देवेभ्यो यज्ञं वहतः ॥ २ ॥ देवा उ 8
ह वै यज्ञं तन्वाना असुररक्षसानां दक्षिणत आसङ्गाद्बिभयां चक्रुस्त एतद्वीर्यं
दक्षिणतः प्रत्युदश्रयन्नुच्छ्रितमिव[4] हि वीर्यꣳ स यदुभयत आघारयति तस्मान्मनश्च
वाक्च समानमेव सन्नानेव शिरो ह वा एतयोरन्यतरो यज्ञस्याघारयोर्मूलमन्य-
तरः ॥ ३ ॥ स्रुवेण तमाघारयति यो मूलं यज्ञस्य स्रुचा तमाघारयति यः शिरो 9-12
यज्ञस्य तूष्णीं तमाघारयति यो मूलं यज्ञस्य तूष्णीमिव हि मूलं न ह्यत्र वाग्वदति
मन्त्रेण तमाघारयति यः शिरो यज्ञस्य वाग्घि मन्त्रः शिरस्तो हीयं वाग्वदत्या-
सीनस्तमाघारयति यो मूलं यज्ञस्य निषण्णमिव हि मूलं तिष्ठꣳस्तमाघारयति यः
शिरो यज्ञस्य तिष्ठतीव हि शिरः ॥ ४ ॥ स पूर्वमाघारमाघार्याहाग्निमग्नीत्सं- 13.14
मृड्ढीति यथा धुरमध्यूहेदेवमेतद्यत्पूर्वमाघारमाघारयत्यध्युह्य[5] वै धुरं युनक्ति[6]
स यत्संमार्ष्ट्यग्निमेवैतद्युनक्ति युक्तो[7] देवेभ्यो यज्ञं वहादिति[8] तस्मात्परिक्रामꣳ
संमार्ष्टि परिक्रामꣳ हि योग्यं युञ्जन्ति त्रिस्त्रिः संमार्ष्टि त्रिवृद्धि यज्ञः ॥ ५ ॥ स 15
संमार्ष्टयग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजजितꣳ संमार्ज्मीति यज्ञं त्वा वक्ष्य-
न्तं यज्ञियꣳ संमार्ज्मीत्येवैतदाहाथ मध्ये तूष्णीमिव त्रिः संमार्ष्टि यथा युक्त्वा

---

1. °चना° B. 2. Thus M., °क्तो the other MSS. 3. °यानुपवहो MSS. 4. °श्रयंनुछ्रृत° O. C. 5. °ध्युह्य C. (sec. m.). O. My. 6. युनक्ति MSS. 7. Thus C. originally, युक्ते the other MSS. 8. वहत इति M.

प्रेहि वहेति प्राजेदेवमेवैतदग्निं युक्त्वोपत्तिपति प्रेहि देवेभ्यो यज्ञं वहेति यदेतदन्तरेण कर्म क्रियते तस्मान्मनश्च वाक्च समानमेव सन्नानेव ॥ ६ ॥

I.4.5.1 अथ स्रुचावाघारयिष्यन्नग्रेण स्रुचोरञ्जलिं निदधाति नमो देवेभ्यः स्वधा पितृभ्य इति देवेभ्यश्चैवैतत्पितृभ्यश्च निह्नुत आर्त्विज्यं करिष्यन्त्सुयमे मे भूयास्तमित्यादत्ते सुभरे मे भूयास्तꣳ शकेयं[1] वां भर्तुमित्येवैतदाहास्कन्नमद्याज्यं देवेभ्यः

2 संभ्रियासमित्यविक्षुब्धमद्येमं यज्ञं देवेभ्यस्तनवा इत्येवैतदाह ॥ ७ ॥ अङ्घ्रिणा विष्णो मा त्वावक्रमिषमिति यज्ञो वै विष्णुस्तमेतदतिक्रमिष्यन्भवति[2] तस्मा एवै-

3 तन्निह्नुते मा त्वावक्रमिषमिति ॥ ८ ॥ वसुमतीमग्ने ते छायामुपस्थेषमिति साध्वीमग्ने ते छायामुपस्थेषमित्येवैतदाह विष्णोः[3] स्थानमसीति यज्ञो वै विष्णुर्यज्ञस्य वा एतदन्तिकं तिष्ठति तस्मादाह विष्णोः[3] स्थानमसीतीत इन्द्रो वीर्यमकृणोदित्यतो हीन्द्रो[4] नाष्ट्रा रक्षाꣳस्यपाहन्नूर्ध्वो ऽध्वर आस्थादिति यज्ञो वा

4 अध्वर ऊर्ध्वो ऽयं यज्ञ आस्थादित्येवैतदाह ॥ ९ ॥ अग्ने वेर्होत्रं वेर्दूत्यमित्युभय[5] ह वा एतदग्निर्देवानाꣳ होता च दूतश्च[6] तदुभयं विद्धि यद्देवानामसीत्येवैतदाहावतां त्वा द्यावापृथिवी अव त्वं द्यावापृथिवी इति नात्र तिरोहितमिवास्ति स्विष्टकृद्देवेभ्य इन्द्र आज्येन हविषाभूत्स्वाहेतीन्द्रो यज्ञस्य देवता तस्मादाहेन्द्र आज्येन हविषाभूत्स्वाहेति वाचे वा एतदाघारयतीन्द्रो वागित्यु वा आहुस्तस्मादाहेन्द्र आज्येन हविषाभूत्स्वाहेति सो ऽसꣳस्पर्शयन्नत्या-

5.6 क्रामति ॥ १० ॥ तद्ध्रुवायाꣳ समनक्ति शिरो वा एतद्यज्ञस्य यदुत्तर आघार आत्मो वै ध्रुवात्मन्येवैतद्यज्ञस्य शिरः प्रतिदधाति शिरो वा एतद्यज्ञस्य यदुत्तर आघारः श्रीरु वै शिरः श्रीर्हि वै शिरो ऽथ यो ऽर्धस्य श्रेष्ठो भवत्यसौ तस्यार्धस्य शिर इत्याचक्षते यजमानो वै ध्रुवामनु यो ऽस्मा अरातीयति स उपभृतꣳ स यद्धोपभृता समञ्ज्याद्यो यजमानायारातीयति तस्मिञ्छ्रियं दध्यात्तद्यजमान एवैत-

1. शकेयं MSS. 2. °स्तमेतदति° MSS. 3. °ष्णो B My. M. (second time). 4. हींद्रो MSS. 5. वेर्दूत्य° MSS. 6. दूतिश्च C. O.

न्द्रियं दधाति ॥ ११ ॥ स समनक्ति सं ज्योतिषा ज्योतिरिति ज्योतिर्हीत- 7.8
स्यामाज्यं भवति ज्योतिरितरस्यां मनश्च ह वै वाक्चाहंभद्र[1] ऊदाते ॥ १२ ॥
तद्धोवाच मनो ऽहमेव त्वच्छ्रेयो ऽस्मीति होवाच यदहमभिगच्छामि तत्त्वं वद- 9
सीति श्रेयसो वै पापीयान्कृतानुकरो ऽनुवर्त्मा भवतीति[2] ॥ १३ ॥ अथ हो- 10.11
वाच वागहमेव त्वच्छ्रेयस्यस्मीति होवाच यत्त्वमभिगच्छसि तदहं विज्ञपयाम्यहं[3]
प्रज्ञपयामीति[3] तौ हासंपादयन्तौ प्रजापतिं प्रश्नमाजग्मतुः[4] स ह प्रजापतिर्मनस
एवाध्युवाच[5] मन एव त्वच्छ्रेय इति होवाच श्रेयसो वै पापीयान्कृतानुकरो ऽनु-
वर्त्मा भवतीति सा ह परोक्ता वाग्विसिष्मिये तस्या गर्भः पपात ॥ १४ ॥ सा 12.13
होवाच प्रजापतिमहव्यवाळेवाहं तुभ्यं भूयासमिति यां मा परावोच इति तस्मा-
द्यत्किं च प्राजापत्यं क्रियत उपांशुवैव[6] क्रियते ऽहव्यवाळु हि तस्मै वागभव-
त्तदु हेदं देवा रेतः सिक्तं चर्मणि वा कुम्भ्यां वा वभ्रुस्तद्ध स्म पृच्छन्त्यत्रैव
त्रा३दित्यत्रैवेति ततो ऽत्रिः संबभूव तस्मादपि स्त्रियात्रेय्यैनस्वीत्याहुरेतस्या[7] हि
स योषाया देवताया वाचः संभूत इति ॥ १५ ॥ द्वितीयं ब्राह्मणम् ॥

K. II. 4. 3. M I. 5. 1.

स वै प्रवरायाश्रावयति यज्ञो वा आश्रावणं यज्ञमभिव्याहृत्याथ होतारं 1.2
प्रवृणा[8] इति स इध्मसंनहनान्यभिपद्याश्रावयति यद्ध वा अनारभ्य यज्ञमध्वर्युरा-
श्रावयेद्वेपनो वा ह[9] स्यादन्यां [10]वार्तिमृच्छेत्तस्मादिध्मसंनहनान्यभिपद्याश्राव-
यति ॥ १ ॥ [11]तद्धैके स्तीर्णाया वा वेदेर्बर्हिरादायेध्मस्य वा शकलमपच्छिद्य 3
तदभिपद्याश्रावयन्तीदं किं चिद्यज्ञस्येतीदं यज्ञमभिपद्याश्रावयाम इति वदन्तस्तदु[12]
तथा न कुर्यादनवक्लृप्तं वै तद्यत्स्तीर्णाया वा वेदेर्बर्हिरपाददीतेध्मस्य वा शक-
लमपच्छिन्द्यादेतद्वाव किं चिद्यज्ञस्य यैरिध्मः संनद्धो भवति यैरग्निं संमृजन्ति

1. °हंभद्र B. 2. °तीति MSS 3. विज्ञाप°, प्रज्ञाप° M. 4. Thus M. only, °श्नि° B., पृश्नि° C. O. P. My. 5. एवाभ्युवाद M. 6. उपांश्वेवैव M. 7. स्त्रिया- त्रेय्यैन° B., स्त्रियात्रेय्यैन° C. O. P. 8. प्रवृणी B. 9. ह: C. O. My. 10 Thus emended, वात्तिमिछे° MSS. 11. Kaṇḍikā 2 omitted in B. 12 वदन्तस् om. C. O. My.

4 तस्मादिध्मसंनहनान्येवाभिपद्याश्रावयेत् ॥ २ ॥ स वा आश्राव्य य एव देवा-
नाꣳ होता तमग्रे प्रवृणीते ऽग्निमेव तदग्नये च देवेभ्यश्च निह्नुते यदग्निमग्रे
प्रवृणीते[1] तदग्नये निह्नुते यद्वेव यो देवानाꣳ होता तमग्रे प्रवृणीते[1] तद्देवेभ्यो नि-
5-8 ह्नुते ॥ ३ ॥ स वा आश्राव्याहाग्निर्देवो दैव्यो होतेत्येष वै देवो दैव्यो होता
यदग्निस्तस्मादाहाग्निर्देवो दैव्यो होतेति देवान्यक्षद्विद्वाꣳश्चिकित्वानित्येष वै देवा-
ननुविद्वान्यदग्निः स एनाननुविद्वाननुष्ठ्या यजत्वित्येवैतदाह मनुष्वद्भरतवदिति
मनुर्ह वा अग्रे यज्ञेनेजे तदनुकृतीदमिमाः प्रजा यजन्ते तस्मादाह मनुष्वदिति
भरतवदित्येष हि देवेभ्यो हव्यं भरति तस्माद्वा आहुर्भरतो ऽग्निरिति शश्वदु ह
वा एष एव प्राणो भूत्वेदमिमाः प्रजा बिभर्ति तस्मादाह भरतवदिति[2] ॥ ४ ॥
9-10 अथार्षेयं प्रवृणीत ऋषिभ्यश्चैवैनं तद्देवेभ्यश्च निवेदयत्ययं महावीर्यो यो यज्ञं
प्रापदिति परस्तादर्वाक्प्रवृणीते परस्ताद्ध्यर्वाच्यः प्रजाः प्रजायन्ते तद्वेव ज्याय-
11-14 सस्पतये निह्नुत इदꣳ हि पितैवाग्रे ऽथ पुत्रो ऽथ पौत्रः ॥ ५ ॥ आर्षेयं प्रवृ-
त्याह ब्रह्मण्वदिति[3] ब्रह्म ह्यग्निरा च वक्षद्ब्राह्मणा अस्य यज्ञस्य प्राविताअर इत्येते
वै ब्राह्मणा यज्ञस्य प्राविताअरो ये ऽनूचाना य एनं तन्वते य[4] एनं जनयन्ति
तेभ्यो निह्नुते ऽसौ मानुष इति तदिमं[5] मानुष[5] होतारं प्रवृणीते स एष
एतर्हि होताहोता[6] हैवातः पुरा स एष मानुषो हातो प्रवृतो जपति देवता उप-
धावति यथानुष्ठ्या वषट्कुर्यादनुष्ठ्या[7] हव्यं वहेन्न ह्वलेदेवं[7] देवता उपधाव-
15 ति ॥ ६ ॥ एतत्त्वा देव सवितर्वृणत[8] इति सविता वै देवानां प्रसविता सवि-
तारमेवैतत्प्रसवायोपधावत्यग्निꣳ होत्रायेति तदग्नये च देवेभ्यश्च निह्नुते यदग्नि-
मग्र आह[9] तदग्नये निह्नुते यद्वेव यो देवानाꣳ होता तमग्र आह[9] तद्देवेभ्यो
16 निह्नुते ॥ ७ ॥ सह पित्रा वैश्वानरेणेति संवत्सरो ह वा अस्य पिता वैश्वानरः

---

1. प्रवृणीते MSS. 2. °तवदिति MSS. 3. ब्रह्मण्वदिति MSS. 4. य उ M. 5. तदिमं मानुषꣳ MSS. 6. होताहोता B. 7. °कुर्यादनुष्ट्वा हव्यं वहेन्न ह्वरेदेवं M., °कुर्यान्ननुष्ठ्या हव्यं वहेयंन्नह्वलेदेवं O. C. (sec. m.) My., °वहेयंन्नह्व° C. (pr. m.). (cp. kaṇḍikā 14 s. f.). 8. °वृणीत C. (sec. m.) O. 9. आह MSS.

II. 4. 3. 8.

प्रजापतिस्तदु संवत्सराय प्रजापतये निह्नुते ऽग्ने पूषन्बृहस्पते[1] प्र च वद प्र च यजेति वदयन्वा[2] इदमनुवदयन्भवति[3] तदेताभ्यो देवताभ्यो निह्नुते यूयमनुमत' यूयं यजतेति वसूनां रातौ स्याम रुद्राणामुर्व्यायां स्वादित्या अदितये स्यामानेहस इत्येते वै त्रया देवा यद्वसवो रुद्रा आदित्या एतेषामभिगुप्तौ स्यामेत्येवैतदाह तस्य हि नार्तिरस्ति न ह्वला य एतेषामभिगुप्तौ ॥ ८ ॥ जुष्टामद्य देवेभ्यो वाचमुद्यासमिति जुष्टां देवेभ्यो ऽनूच्यासमित्येवैतदाह तद्धि समृद्धं यो जुष्टं देवेभ्यो ऽनुब्रवज्जुष्टां[5] ब्रह्मभ्य इति जुष्टं ब्राह्मणेभ्यो ऽनूच्यासमित्येवैतदाह तद्धि समृद्धं यो जुष्टं ब्राह्मणेभ्यो ऽनुब्रवज्जुष्टां[5] नराशंसायेति प्रजा वै नरस्तदाभ्यः सर्वाभ्यः प्रजाभ्य आह तद्धि समृद्धं यत्र यश्च वेद यश्च न साध्वन्ववोचत्साध्वन्ववोचदित्येव वितिष्ठन्ते यदद्य होतृवर्ये जिह्मं चक्षुः परापतत्[6] । अग्निष्टत्पुनराह्रियाज्जातवेदा[7] विचर्षणिरिति यथा यानमूनग्रे[8] होत्राय अवृणत ते प्राधन्वन्नेवं मे यत्किं चित्प्रवरेणामायि तन्मे पुनराप्यायतामित्येवैतदाह तथा हास्य तत्पुनराप्यायते ॥ ९ ॥ 18-20

अथाध्वर्युं चाग्नीधं च संमृशति मनो वा अध्वर्युर्वाग्घोता ते एवैतत्संदधाति ते हि संहिते युक्ते देवेभ्यो यज्ञं[9] वहतो[9] ऽग्नीधमुपस्पृशत्यनन्तरायाय ॥ १० ॥ 21

तत्र जपति षण्मोर्वीरंहसस्पान्त्वग्निश्च पृथिवी चापश्च वातश्चाहश्च रात्रिश्चेत्येता वै षळुर्व्य[10] एता मा सर्वस्या आर्तेः सर्वस्या ह्वालाया गोपायन्त्वित्येवैतदाह तस्य हि नार्तिरस्ति न ह्वला यमेता आर्तेर्गोपायन्ति[11] ॥ ११ ॥ 22

अथ होतृषदनात्तृणं निरस्यति निरस्तः परावसुरिति परावसुर्ह वै नामासुराणां होता तमेवैतद्धोतृषदनान्निरस्यतीदमहमर्वावसोः स- 23-24

1. बृहस्पते MSS. (but cp. IV. 7. 3. 8). 2. यदयन्वा MSS. 3. इदमनुवदयन्भवति C. O., इदमनुवदयन्भवति B. 4. Thus M. only; °नूथ the other MSS. 5. नुब्रुव° B. C. O. (the first time). 6. Thus C. O., °पतत् B., °पत् My., पपाते M. 7. Thus (°हि°) MSS. 8. देवा ins. M. 9. यज्ञं वहतो MSS. 10. षलुर्व्य B., षलुर्व्य C. 10. 11 °यंति B. O. C. (sec. m.).

दने सीदामीत्युपविशत्यर्वावसुर्ह वै नाम देवाना॰ होता तस्यैवैतत्सदने सी-
25 दति ॥ १२ ॥ अथ जपति विश्वकर्म॰स्तनूपा मे ऽसि मा मोदोपिष्टं मा मा-
हि॰सिष्टमेष वां लोक इत्युदङ्ङिङ्वैजत्यन्तरा वा इदमाहवनीयं च गार्हपत्यं
26 चास्ते तदेताभ्यां निह्नुते तथा हैनमेतौ नोदोपतो न हि॰स्तः ॥ १३ ॥ अथ
जपति विश्वे देवाः शास्तन मा यथेह होता वृतो मनवै यन्निषद्य । प्र मे ब्रूत
भागधेयं यथा वो येन पथा हव्यमा वो वहानीति यथा येभ्यः पक्व॰[1] स्यात्तेषु
प्रशासनमिच्छेत्प्र मा शास्त यथा यथा व[2] आहरेयमित्येवमेवैतद्देवेषु प्रशासन-
मिच्छते प्र मा शास्तेति[3] यथा वो ऽनुष्ठ्या वषट्करवाण्यनुष्ठ्या हव्यं वहानि न
ह्वलानीति[4] तस्य हि[6] नार्तिरस्ति[5] न ह्वला यो यथानुशासनं करोति ॥ १४ ॥

तृतीयं ब्राह्मणम् ॥

M. I. 5. 2. K. II. 4. 4.

1 स वा आहाग्निर्होता वेत्वग्नेर्होत्रमित्यग्निरिद॰ होता वेत्वित्येवैतदाहाग्नेर्होत्र-
मिति तस्यो हि होत्रं वेतु[6] प्रावित्रमिति यज्ञो वै प्रावित्रं यज्ञं वेत्वित्येवैतदाह
साधु ते यजमान देवतेति यदस्याग्नि॰ होतारं प्रवृणीते[7] तदेतदाह साधु ते यज-
2 मान देवता यस्य ते ऽग्निर्होतेति ॥ १ ॥ घृतवतीमध्वर्यो स्रुचमास्यस्व देवयुवं
विश्ववारामिति तदध्वर्युं प्रसौति स एकामिवैवाह यजमानो वै जुहूमनु यो ऽस्मा
अरातीयति स उपभृत॰ स यद्ध द्वे इव ब्रूयाद्यजमानाय ह द्विषन्तं भ्रातृव्यं
प्रत्युद्यामिनं कुर्यादत्ता वै जुहूमन्वाद्य उपभृतमत्त्व[8] आद्यं[8] तस्मादेकामिवैवाह
3-4 देवयुवं विश्ववारामित्युपस्तौत्येवैनामेतन्महयत्येवेळामहै देवां३[9] ईळेन्यान्नम-
स्याम नमस्यान्यजाम यज्ञियानितीळामहै तान्देवान्य ईळेन्या नमस्याम
नमस्यान्यजाम यज्ञियानित्येवैतदाह मनुष्या वा ईळेन्याः पितरो नमस्या
देवा यज्ञिया यावत्यो वै प्रजा यज्ञे ऽनन्वाभक्ताः[10] पराभूता वै ता मनुष्याननु-

---

1. पक्व॰ MSS. 2. Thus emended, वा MSS. 3. शास्तीति C. O. P. 4. न ह्वला-नीति MSS. 5. हि नार्त्तिरस्ति B. 6. वेत्तु MSS. 7. प्रवृणीते MSS. 8. उपभृतमद्य आज्य B. 9. देवां१ My. 10. नन्वाभक्त MSS.

II. 4. 4. 2.

श्रवो देवानु वयाꣳस्योषधयो वनस्पतयो यदिदं किं चान्यदेवम्विमाः[1] प्रजा
यज्ञ[2] आभजाति[2] या इमा अपराभूताः ॥ २ ॥ ता वा एता नव व्याहृतयो नव 5-7
पुरुषे प्राणास्तानेवास्मिन्नव प्राणान्क्लृप्तान्दधाति यज्ञ उ ह वै देवेभ्यो ऽप-
चक्राम तं देवा उपमन्त्रयां चक्रिर आ नः शृणूप न आवर्तस्वेति सो ऽस्तु तथे-
त्युपाववर्त[3] तेनोपावृत्तेनेजिरे[4] स यदध्वर्युराश्रावयति यज्ञमेवैतदुपमन्त्रयत आ नः
शृणुप न आवर्तस्वेत्यथ यदग्नीत्प्रत्याश्रावयति यज्ञ एवैतदुपावर्तते ऽस्तु तथेति
तेनोपावृत्तेन यजते तेनैतद्यज्ञेन रेतसा भूतेनर्त्विजः संप्रदायं चरन्ति यथा पूर्णपा-
त्रेण संप्रदायं चरेयुरेवं यजमानेन परोक्षं यजमानो ह्येव यज्ञ एष ह्येनं तनुत[5] एष
ह्येनं जनयते वाचा वा इदꣳ संप्रदायं चरन्ति[6] वाग्वै रेतो वाग्वै यज्ञः[7] ॥ ३ ॥
सो ऽध्वर्युरनुब्रूहीत्युक्त्वा नापव्याहरेन्नो[8] एव होता पुरा वषट्कारात्सो ऽध्वर्यु- 8-11
राश्रावयति तदग्नीधं यज्ञ उपावर्तते सो ऽग्नीन्नापव्याहरेत्पुरा प्रत्याश्रावणात्त-
त्प्रत्याश्रावित[9] एवाध्वर्युं यज्ञ उपावर्तते सो ऽध्वर्युर्नापव्याहरेत्पुरा ततो यदु च
ब्रयाद्यजेति तं यजेत्येव होत्रे प्रयच्छति स होता नापव्याहरेत्पुरा वषट्कारात्तꣳ
होता वषट्कारेणैवाग्नौ योनौ रेतो भूतꣳ सिञ्चत्यग्निर्वै यज्ञस्य योनिः स ततः
प्रजायत इति नु दर्शपूर्णमासयोः ॥ ४ ॥ अथ सौम्ये ऽध्वरे ऽध्वर्युर्ग्रहं गृही- 12-14
त्वा नापव्याहरेत्पुरा ततो यदु च ब्रयादुपावर्तध्वमिति तमुपावर्तध्वमित्येवोद्गा-
तृभ्यः प्रयच्छति त उद्गातारो नापव्याहरेयुः पुरा[10] ततो यदु च ब्रूयुरेषोत्तमेति[11]
तमेषोत्तमेत्येव[12] होत्रे प्रयच्छन्ति स होता नापव्याहरेत्पुरा वषट्कारात्तꣳ होता
वषट्कारेणैवाग्नौ योनौ रेतो भूतꣳ सिञ्चत्यग्निर्वै यज्ञस्य योनिः स ततः प्रजा-
यते ॥ ५ ॥ स यद्ध सो ऽपव्याहरेद्यं यज्ञ उपावर्तेत यथा पूर्णपात्रं परासिञ्चे- 15

---

1 °देवम्विमाः C. O., °देवंम्विमाः B, °देवमिमाः M. 2. यज्ञ आभजाति MSS. 3. °पाववर्त्त O., °पावर्त्तते B., °पावर्त M. My. 4. तेनोपावृत्तेनेजिरे B., तेनोपावृत्तेनेजिरे O. P. C. 5. तनुत्त MSS. 6. चरंति C. O P. 7. यज्ञः B. 8. °हरेन्नो MSS. 9. °त्याश्रावित MSS. 10. पुरा MSS. 11. ब्रूयुरे° MSS. 12. तमेषोत्तमे° B, तमेषोत्तमे° C. O. P.

देवꣳ ह यजमानं परासिञ्चेत्स यत्रैवꣳ संविदाना ऋत्विजश्चरन्ति सर्वꣳ हैव त[त्र]
16.17 कल्पते न मुह्यति ॥ ६ ॥ ता वा एताः पञ्च व्याहृतय ओश्रावयास्तु श्रौ[षड्]-
ड्यज ये यजामहे वौषळिति पाङ्क्तो वै यज्ञ पाङ्क्ताः पशवः पञ्चर्तवः संवत्सर-
स्यैषो एका यज्ञस्य मात्रैषा संपत्तासां[2] पञ्चानां[2] व्याहृतीनाꣳ सप्तदशाक्षराणि
सप्तदशो वै प्रजापतिः प्रजापतिर्वै यज्ञ एषो एका यज्ञस्य मात्रैषा संपत् ॥ ७ ॥
18.19 ओश्रावयेति[1] ह वै देवाः पुरोवातमसृजन्तास्तु श्रौषळित्यभ्राणि समप्लावयन्यजेति
विद्युतं ये यजामह इति स्तनयित्नुं वषट्कारेणैव प्रावर्षयन्त्स यत्र वृष्टिकाम इष्ट्या
यजेत पुरोवातं च विद्युतं च मनसा ध्यायेत्यध्वर्युं ब्रूयादभ्राणि मनसा ध्यायेत्य-
ग्नीधꣳ स्तनयित्नुं च वृष्टिं चेति होतारꣳ स यत्रैवꣳ संविदाना वृष्टिकामस्येष्ट्या
20 चरन्ति वर्षति हैव तत्र[3] ॥ ८ ॥ ओश्रावयेति[4] ह वै देवा विराजमुपाजुहवुरस्तु
श्रौषळिति वत्समुपावार्जन्यजेत्युदनयन्ये यजामह इत्युपासीदन्वषट्कारेणैवादुहतैतां
वै विराळस्या वा एते दोहाः सर्वान्ह वा असा इयं कामान्दुग्धे य एवमेत-
द्वेद ॥ ९ ॥ चतुर्थं ब्राह्मणम् ॥ चतुर्थो ऽध्यायः ॥

M. I. 5. 3. K. II. 5. 1.

1;2.3 ऋतवो ह वै प्रयाजास्तस्मात्पञ्च भवन्ति पञ्च ह्यृतवः[5] ॥ १ ॥ अथ दे-
वाश्च ह वा असुराश्चोभये प्राजापत्या अस्पर्धन्त त एतस्मिन्नेव यज्ञे प्रजापतौ
पितर्यस्पर्धन्त संवत्सरे[6] ऽस्माकमयꣳ स्यादस्माकमयꣳ स्यादिति ततो देवा अर्चन्तः
श्राम्यन्त एतान्प्रयाजान्ददृशुस्तैरयजन्त तैरिष्ट्वर्तून्त्संवत्सरं प्राजयन्नृतुभ्यः[7] सं-
वत्सरात्सपत्नानन्तरायꣳस्तस्मात्प्रजया नाम प्रजया ह वै नामैतद्यत्प्रयाजा
'इत्याहुस्तथो वा एष एतैर्ऋतून्त्संवत्सरं प्रजयत्यृतुभ्यः[8] संवत्सरात्सपत्नानन्तरीति
5.4 तस्माद्वाव प्रयाजैर्यजते ॥ २ ॥ त आज्यहविषो भवन्त्येतद्वै स्वं पयः सं-

1. ओ॒श्रा॰ B., ओं॰ C. P. My., ओं॰ O., वो॰ M. 2. संपत्तासां वा एतासां पंचानां M. 3. तत्र MSS. 4. As above. 5. ॰तवः MSS. 6. Om. M. 7. प्राजनय॰ M. 8. प्रजनय॰ MSS.

वत्सरस्य यदाज्यꣳ स्वेनैवैनमेतत्पयसा देवाः स्व्यकुर्वत स्वेनो[1] एवैनमेष एतत्प-
यसा स्वीकुरुते वज्र उ[2] वा आज्यमेतेन[3] वै वज्रेणाज्येन देवा ऋतून्त्संवत्सरं
प्राजयन्नृतुभ्यः[4] संवत्सरात्सपत्नानन्तरायꣳस्तथो वा एष एतेन वज्रेणाज्येनर्तून्त्सं-
वत्सरं प्रजयत्यृतुभ्यः[5] संवत्सरात्सपत्नानन्तरेति तस्मादाज्यहविषो[6] भवन्ति ॥३॥
स यत्रैव तिष्ठन्प्रयाजेभ्य आश्रावयेत्तत एव नापक्रामेदभितरामिद्वै 6
क्रामेदभितरामभितरामाहुतीर्जुहुयात्संग्रामो वा एष संनिधीयते यः प्रया-
जैर्यजते यतर उ वै संयत्तयोः पराजयते ऽप वै स[7] क्रामत्यभितरां वै क्रामति
जयꣳस्तस्मादभितरामभितरां क्रामेदभितरामभितरामाहुतीर्जुहुयात् ॥ ४ ॥ तदु 7
नाद्रियेत यत्रैव तिष्ठन्प्रयाजेभ्य आश्रावयेत्तत एव नापक्रामेद्यत्रो एव समिद्धतमं
मन्येत तदाहुतीर्जुहुयात्समिद्धहोम उ ह्येव समृद्ध आहुतीनाम् ॥ ५ ॥ स वा 8
आश्राव्याह समिधो यजेति वसन्तो वै समिद्वसन्तमेवैतत्समिन्द्धे स वसन्तः स-
मिद्धोऽन्यामृतून्त्समिन्द्ध ऋतवः समिद्धाः प्रजाश्च प्रजनयन्त्योषधीश्च[8] पचन्ति तद्वेव-
र्तून्निराहाथ यज यजेत्येवोत्तरानाहाजामितायै जामि हि कुर्याद्यत्तनूनपातं यजेळो
यजेति ब्रूयात्तस्माद्यज यजेत्येवोत्तरानाह ॥ ६ ॥ स वा आश्राव्याह समिधो 9
यजेति वसन्तो वै समिद्वसन्तमेवैतद्देवा अवृञ्जत वसन्तात्सपत्नानन्तरायन्वस-
न्तमु वा एष एतद्वृङ्क्ते वसन्तात्सपत्नानन्तरेति[9] तस्मात्सामिधो यजति ॥ ७ ॥
अथ तनूनपातं यजति ग्रीष्मो वै तनूनपाद्ग्रीष्मो ह्यासां प्रजानां तनूस्तपति[10] ग्री- 10
ष्ममेवैतद्देवा अवृञ्जत ग्रीष्मात्सपत्नानन्तरायन्ग्रीष्ममु वा एष एतद्वृङ्क्ते ग्रीष्मा-
त्सपत्नानन्तरेति तस्मात्तनूनपातं यजति ॥ ८ ॥ अथेळो यजति वर्षा वा इळ इति 11
हि वर्षा इळो रूपमिदं[11] यद्ग्रीष्महेमन्ताभ्यां क्षुद्रꣳ सरीसृपं नित्यक्तं भवति तद्व-
र्षास्वीळितामिवान्नामिच्छमानं चरति तस्माद्वर्षा इळो रूपं[12] वर्षा एवैतद्देवा अवृञ्जत

1. तेनो B. 2. Om. M. 3. आज्यमेवैतन B. 4. प्राजनय° M. 5. प्रजनय° M. 6. हविषो C. O. 7. स B. My., नं M. 8. Read प्रजनय°? 9. °त्नानंतरेति B. 10. तनूस्त पति C. O. 11. रूपमिदं MSS. 12. रूपं MSS.

वर्षाभ्यः सपत्नानन्तरायन्वर्षा उ वा एष एतद्वृङ्क्ते वर्षाभ्यः सपत्नानन्तरेति
12 तस्मादिळो यजति ॥ ९ ॥ अथ बर्हिर्यजति शरद्वै बर्हिरिति हि शरद्बर्हिरिदं
यद्ग्रीष्महेमन्ताभ्यामोषधयो नित्यक्ता भवन्ति ता वर्षाभिर्वर्धन्ते ताः शरदि
बर्हिषो रूपं प्रस्तीर्णाः शेरते तस्माच्छरद्बर्हिः शरदमेवैतद्देवा अवृञ्जत शरदः स-
पत्नानन्तरायञ्छरदमु वा एष एतद्वृङ्क्ते शरदः सपत्नानन्तरेति तस्माद्बर्हिर्य-
13 जति ॥ १० ॥ अथ स्वाहा स्वाहेति यजत्यन्तो वै यज्ञस्य स्वाहाकारो ऽन्तो
हेमन्त ऋतूनां वसन्ताद्धि पराध्यो ऽन्तेनैवैतद्देवा अन्तमवृञ्जतान्तेनान्तात्सपत्ना-
नन्तरायन्नन्तेनो वा एष एतदन्तं वृङ्क्ते ऽन्तेनान्तात्सपत्नानन्तरेति[1] तस्मा-
14 त्स्वाहा स्वाहेति यजति ॥ ११ ॥ स वै वसन्त एव हेमन्तात्पुनरसुस्ततो हि
भवति ततो हि प्रतिधीयते पुनर्ह वा अस्मिंल्लोक आजायते पुनरस्मिंल्लोके भवति
15 य एवमेतद्वेद ॥ १२ ॥ स वै वेतु व्यन्त्विति यजत्यजामितायै जामि हि कुर्या-
द्यद्व्यन्तु व्यन्त्विति वा यजेद्वेतु वेत्विति वा व्यन्त्विति योषा वेत्विति
16 वृषा ॥ १३ ॥ स वै चतुर्थ एव प्रयाजे समानयते बर्हिष्येव प्रजा वै बर्ही रेत
आज्यं प्रजास्वेवैतद्रेतः सिञ्चति तेन रेतसेदमिमाः प्रजा पुनरभ्याकारं प्रजा-
17 यन्ते ॥ १४ ॥ अथ यद्वेव चतुर्थे प्रयाजे समानयते संग्रामो वा एष संनिधीयते
यः प्रयाजैर्यजते यतरमु[2] वै संयत्तयोर्मित्रमागच्छति स जयति तदेतदुपभृतो जुहू
18-20 मित्रमागच्छति[3] तेन प्रजयति ॥ १५ ॥ अथ यद्वेव चतुर्थे प्रयाजे समानयते
यजमानो वै जुहूमनु यो ऽस्मा अरातीयति स उपभृतं यजमानायैवैतद्द्विषन्तं
भ्रातृव्यं बलिं हारयत्यत्ता वै जुहूमन्वाद्य उपभृतमत्त्र आद्यं सो ऽनवमर्शं
समानयते यद्धावमृशेद्यजमानं ह द्विषता भ्रातृव्येणावमृशेदत्तारमाद्येनावमृशेदु-
परिष्टाज्जुहूमध्यूहति यजमानमेवैतद्द्विषति भ्रातृव्ये ऽध्यूहत्यत्तारमाद्ये ऽध्यू-
21 हति ॥ १६ ॥ देवा उ ह वै यज्ञं तन्वाना असुररक्षसानामासङ्गाद्बिभयां

1. तेनांता° C. O. 2. यतर उ M. 3. जुहूर्मित्र° M. 4. °वमृशेद्य° B.

चक्रुस्ते होचुरसुररक्षसानामासङ्गाद्बिभ्यतो हन्तेमां यज्ञस्य विजितिमन्विति सर्वं यज्ञꣳ सꣳस्थापयामेति तथा यदि[1] नो ऽसुररक्षसान्यासजेयुरिति सꣳस्थित एव नो यज्ञः स्यादिति तमेतस्मिन्नेवोत्तमे प्रयाजे स्वाहाकारेण सर्वं यज्ञꣳ समस्थापयन् ॥ १७ ॥ स्वाहाग्निमिति तदाग्नेयमाज्यभागꣳ स्वाहा सोममिति तत्सौम्यमाज्यभागꣳ स्वाहाग्निमिति तदाग्नेयं पुरोळाशं यो ऽयमुभयत्राच्युतो ऽथ यथादेवतꣳ स्वाहा देवा आज्यपा इति तत्प्रयाजानुयाजानाह[2] प्रयाजानुयाजा हि देवा आज्यपा जुषाणा[3] अग्न[4] आज्यस्य व्यन्त्विति तत्स्विष्टकृतꣳ समस्थापयन्नग्निर्हि स्विष्टकृत्तद्यज्ञस्यैवैतद्विजितिमनु देवाः सर्वं यज्ञꣳ समस्थापयꣳस्तदिदमप्येतर्हि तथैव क्रियते तस्मादुत्तमे प्रयाजे यावन्ति हवीꣳषि भवन्ति स्वाहा स्वाहेत्येव तानि यजति यज्ञस्यैवैतद्विजितिमनु सर्वं यज्ञꣳ सꣳस्थापयति तस्माद्यद्यप्यस्यात ऊर्ध्वं विलोमेव[5] यज्ञे स्यान्न हैवास्य तदाग इव स्यात्सꣳस्थितो मे यज्ञ इति हैव विद्यात्स हैष यज्ञो यातयामास[6] यथा हुतं वषट्कृतꣳ स्वाहाकृतꣳ स्यादेवम् ॥१८॥ 22 23

ते ह देवा ऊचुर्हन्तेमं यज्ञं पुनराप्याययामेति तेनायातयाम्ना प्रचरामेति स यदेव जुह्वामाज्यं परिशिष्टमासीद्येन यज्ञꣳ समस्थापयꣳस्तेन यथापूर्वꣳ हवीꣳष्यभ्यघारयन्नयातयामो वा आज्यं तदेतं[7] यज्ञं[7] पुनराप्याययन्नयातयामानमकुर्वꣳस्तस्मादुत्तमं प्रयाजमिष्ट्वा यथापूर्वꣳ हवीꣳष्यभिघारयति यज्ञमेवैतत्पुनराप्याययत्ययातयामानं करोति तस्माद्यस्यै कस्यै च देवताया अवद्यति पुनरेव प्रत्यनक्त्यवदानꣳ स्विष्टकृत एवैतत्पुनराप्याययत्ययातम करोति तस्माद्यदा स्विष्टकृते ऽवद्यति न ततः प्रत्यनक्त्यवदानं न हि ततः कां चनाग्नावाहुतिꣳ होष्यन्भवति हविषः ॥ १९ ॥ प्रथमं ब्राह्मणम् ॥ 24.25

1. यद्दि MSS. यदिनैतौ M). 2 तत्प्रयाजानुयाजा° B. 3. जुषाणा O. C. 4. अग्न MSS. (but cp. I. — 2. 3. 15). 5. विलोमेव MSS. 6. यातयामास B. 7. Read तदेतद्यज्ञं ?

M. I. 5. 4.

K. II. 5. 2.

1 स वै समिधो यजति प्राणा वै समिधः प्राणैर्ह्ययं पुरुष समिद्धस्तस्माद्ब्रूया-
दुपतापिनमभिमृश्येत्तस्वेति[1] स यावदुष्णः स्यादेवास्मिंस्तावच्छंसेत[2] प्राणैर्ह्येवं
तावत्समिद्धः प्राणानेवास्मिंस्तत्समिन्द्धे प्राणानेवास्मिंस्तद्दधाति तस्मात्समिधो
2 यजति ॥ १ ॥ अथ तनूनपातं यजति रेतो वै तनूनपाद्यदा हि स्त्रियाश्च पुंसश्च
3 संतप्यते ऽथ रेतः सिच्यते रेत एवैतत्सिञ्चति ॥ २ ॥ अथेळो यजति यदा वै
रेतः सिक्तं प्रजायते ऽथेळितमिवान्नमिच्छमानं चरत्येतदेवैतद्रेतः सिक्तं तत्प्रजन-
4 यति ॥ ३ ॥ अथ बर्हिर्यजति भूमा वै बर्हिर्भूमानमेवैतदन्विमाः प्रजाः प्रजनयति
5 ता इमाः प्रजा भूमानमनु प्रजायन्ते ॥ ४ ॥ अथ स्वाहा स्वाहेति यजति हे-
मन्तो वै स्वाहाकारः प्रजापतिर्हेमन्तो हीमाः प्रजाः सहसेव स्वं वशमुपनयते
तस्माद्धेमनि म्लायन्त्योषधयः प्रमुच्यन्ते वनस्पतीनां पलाशानि प्रतितरां पशवो
भवन्त्यधस्तरां वयांसि पतन्ति विपतितलोमेव पापवर्णः पुरुषो भवति सहसेव
हीमाः प्रजाः स्वं वशमुपनयते हेमन्तः स्वी ह वै तमर्धं कुरुते श्रिये ऽन्नाद्याय
6 यशसे यस्मिन्नर्धे भवति य एवं विद्वान्त्स्वाहा स्वाहेति यजति ॥ ५ ॥ अथ
देवाश्च ह वा असुराश्चोभये प्राजापत्या अस्पर्धन्त ते न[3] व्यजयन्त दण्डैर्धनुर्भि-
स्ते होचुरविजयमाना हन्त वाच्येव[4] ब्रह्मणि विजिगीषामहा इति स यो नो वाचं
व्याहृतां मिथुनेन नानुनिक्रामात्स नः सर्वं पराजयातै सर्वमितरे जयानिति ते ह
7 देवा इन्द्रमूचुर्व्याहरेति ॥ ६ ॥ स होवाचैको ममेत्यथास्माकमेकेत्यसुरास्तत्तन्मि-
8 थुनमविन्दन्मिथुनं ह्येकश्चैका च ॥ ७ ॥ द्वौ[5] ममेति होवाचेन्द्रो ऽथास्माकं द्वे
9 इत्यसुरास्तत्तन्मिथुनमविन्दन्मिथुनं हि द्वौ च द्वे च ॥ ८ ॥ त्रयो ममेति होवा-

1. °पिनमभिमृश्येत्तस्वेति MSS. (cp. V. 6. 4. 1). 2. Thus only C. (pr. m.), स्यादेवास्मिंस्तावच्छंशेतत्प्राणै° O. P. C. (sec. m.), स्यादेवास्मिंस्तावच्छंसेतः प्राणै° M., स्यादेवास्मिंस्तावछंसेतात्प्राणै° B., स्यादेवास्मिंस्तावत्तंसेत्प्राणै° My. 3. तेन C. 4. वाच्येव B. 5. द्वौ MSS and also the Mādhy., but cp. k. 13.

II. 5. 3. 5.

न्वाभक्तः समिधो अग्न तनूनपादग्न इळो अग्न इति यथैतदग्निमन्तः सर्वे प्रयाजा
अन्वाभक्तो ह वै तस्याꣳ साधुकृत्यायां भवति यत्रास्यापि[1] समानो ब्रुवाणः
साधु करोति य एवमेतद्वेद य उ ह वा एषो ऽग्निर्ऋतुष्वन्वाभक्तः स उ ह वा
इमा ओषधीः पचति या इमा ऋतव पचन्त्यग्निमते हास्मा अग्निमन्त ऋतवो
ऽन्नं पचन्ति य एवमेतद्वेद ॥ ५ ॥ तदाहुः कस्मादुत्तमान्प्रयाजानावाहयन्ति 9
प्रथमान्यजन्तीत्युत्तमान्ह्येनान्देवा यज्ञे[2] ऽन्वाभजꣳस्तस्मादेनानुत्तमानावाहयन्ति
प्रथमान्वो यजामहा इत्यु वा अब्रुवꣳस्तस्मादेनान्प्रथमान्यजन्ति ॥ ६ ॥ तच्चतुर्थे 10
ह वाव प्रयाजे देवा यज्ञमापुरुत्तमे समस्थापयन्नथ यत्तत ऊर्ध्वꣳ स्वर्गमेव तेन
लोकमुपप्रेयुस्ते स्वर्गं लोकं यन्तो ऽसुररक्षसानामासङ्गाद्बिभयां चक्रुः ॥ ७ ॥
ते ऽग्निमेव पुरस्ताच्चक्रिरे रक्षोहणꣳ रक्षसामपहतये ऽग्निं मध्यतो ऽकुर्वत रक्षोहणꣳ 11
रक्षसामपहतये ऽग्निं पश्चादकुर्वत रक्षोहणꣳ रक्षसामपहतये ॥ ८ ॥ तान्यदि पुर- 12
स्ताद्रक्षाꣳस्यभ्यसचन्ताग्निर्हैवैनानि रक्षोघ्नापाघ्नत[3] यदि मध्ये यदि पश्चात्त एव-
ाग्निभिः सर्वतः परिगृहीता अबिभ्यतः[4] स्वर्गं लोकꣳ समाश्नुवत ॥ ९ ॥ तथै- 13
वैतद्यजमानश्चतुर्थ एव प्रयाजे यज्ञमाप्नोत्युत्तमे सꣳस्थापयत्यथ यत्तत ऊर्ध्वꣳ स्व-
र्गमेव तेन लोकमुपप्रैति ॥ १० ॥ स यदाग्नेय आज्यभागः पुरस्ताद्भवत्यग्निमे- 14.15
वैतत्पुरस्तात्कुरुते रक्षोहणꣳ रक्षसामपहतये ऽथ यदाग्नेयः पुरोळाशो मध्यतो भव-
त्यग्निमेवैतन्मध्यतः कुरुते रक्षोहणꣳ रक्षसामपहतये ऽथ यदग्नये स्विष्टकृते पश्चा-
द्भवत्यग्निमेवैतत्पश्चात्कुरुते रक्षोहणꣳ रक्षसामपहतये स एवमग्निभिः सर्वतः परि-
गृहीतो ऽबिभ्यत्स्वर्गं लोकꣳ समश्नुते ॥ ११ ॥ तस्माद्य एनं पुरस्ताद्यज्ञस्यानु- 16
व्याहरेन्मुख्यामार्तिमरिष्यसीति[5] ह तं ब्रूयादन्धो भविष्यसि बधिरो भविष्यसि
प्राणस्त्वा हास्यतीति या एता मुख्या आर्तयः ॥ १२ ॥ अथ य एनं मध्ये 17

1. °स्यापि MSS. 2. यज्ञ MSS. 3. रक्षोघ्ना° MSS. 4. आबि° C P. O.
5. °मार्तिमारिष्यसीति B., but cp. II. 4. 3. 1.

यज्ञस्यानुव्याहरेदपशुरप्रजा मरिष्यसीति ह तं ब्रूयान्मध्यꣳ हि प्रजा पशवः[1] ॥१३॥
18 अथ य एनं[2] पश्चाद्यज्ञस्यानुव्याहरेदप्रतिष्ठितो दरिद्रो[3] मरिष्यसीति[3] ह तं ब्रूयात्
19 स्मादु[4] नानुव्याहारी[4]-स्यादुत ह्येवंवित्परो भवति ॥ १४ ॥ संवत्सरꣳ ह वा
जयति प्रयाजैर्यजमानः स[5] तु[5] हैनं जयति यो ऽस्य द्वारं वेद को ह्यस्य तैर्गृहै-
रर्थः[6] स्याद्ये ऽस्याद्वारा[7] इव स्युर्नो चेत्तत्रान्तरतो व्यवविद्याद्यथास्य[8] तत्र तद्व-
सन्तो ऽन्तो हेमन्तो ऽन्तः स एतया द्वारा प्रपद्यते ऽच्छितो वा अयꣳ संवत्सरः
20.21 परिप्लवते ऽच्छितꣳ ह वा अस्य सुकृतं भवति य एवमेतद्वेद ॥ १५ ॥ तदाहुः
किंदेवत्यान्याज्यानि गृह्यन्त इति स[9] ह[9] ब्रूयात्प्रजापतिदेवत्यानीत्यनिरुक्तानि
ह्याज्यानि गृह्यन्ते ऽनिरुक्तो हि प्रजापतिर्यजमानो वै यज्ञस्य प्रजापतिरेष ह्येनं
तनुत[10] एष ह्येनं जनयते तानि हैतानि यजमानदेवत्यान्येव यामु वै कां चाहुतिं
जुह्वत्युभयत एवाज्येन परिगृह्य यजमानेनैव मिश्राꣳ स यदि हाप्यकृतमिव[11] क-
रोति न हैव यज्ञादवार्छति य एवमेतद्वेद ॥ १६ ॥ तृतीयं ब्राह्मणम् ॥

M. I. 6. 2. K. II. 5. 4.

1 देवा वै यज्ञेनेमां जितिं जित्वा येयमेषां जितिस्ते होचुर्हन्तेदं तथा करवामहा
इति यथा न इदमनभ्यारुह्यं मनुष्यैरसदिति ते यज्ञस्य रसं निर्धीय यथा मधु-
कृतो निर्धयेयुरेवं विदुह्य यज्ञं यूपेन योपयित्वा तिरो बभूवुस्तद्यदेनेनायोप-
2 यꣳस्तस्माद्यूपो नाम ॥ १ ॥ तद्वृषीणामनुश्रुतमास देवा वै यज्ञेनैतां जितिं
जित्वा येयमेषां जितिरिति विदुह्य यज्ञं यूपेन योपयित्वा तिरो ऽभूवꣳस्तमन्वि-
च्छामेति ते हार्चन्तः श्राम्यन्तश्चेरुः श्रमेण ह स्म वै तद्देवा जयन्ते यदेषां

1. पशवः B. O. P. 2 पश्चा° MSS. 3. दरिद्रं मरिष्य° O. P. दरिद्रन्मरिष्य° M., °द्रमरि° My.–मरिष्य MSS. 4. तस्मादु नानुव्याहरी B., तस्मादु नानुव्याहारी C. O. P. 5. सतु MSS. (सतू M.). 6. तैर्ग्रहैरर्थः B. C. O. P., तैर्गृहैरथः M. My. 7. स्याद्वारा B. My. M. स्याद्द्वारा C. O. P. 8. व्यवच्छिद्या° MSS. exc M. 9. सह C. O. P. सह B. 10. Thus acc. MSS. 11. हाप्यकृतमिव C. O. P., हास्यकृतमिव B.

चेन्द्रो ऽथास्माकं तिस्र इत्यसुरास्तत्तन्मिथुनमविन्दन्मिथुनꣳ हि त्रयश्च तिस्रश्च ॥ ९ ॥ चत्वारो ममेति होवाचेन्द्रो ऽथास्माकं चतस्र इत्यसुरास्तत्तन्मिथुनमविन्दन्मिथुनꣳ हि चत्वारश्च चतस्रश्च ॥ १० ॥ पञ्च ममेति होवाचेन्द्रस्त इतरे 11 न मिथुनमविन्दन्न ह्यत ऊर्ध्वं वाचो मिथुनमस्ति ते पञ्च पञ्चेत्येव सर्वं पराजयन्त सर्वं देवा अजयन्त्सर्वस्मादेनान्निरभजꣳस्तस्मात्प्रथमे प्रयाज इष्टे ब्रूयात् ॥ ११ ॥ एको ममेत्येकामुष्येति यं द्विष्याद्यद्यु नैको ममैका तस्य यो ऽस्मान्द्वेष्टि 12 यं च वयं द्विष्म इति[1] ॥ १२ ॥ अथ द्वितीये द्वौ मम द्वे तस्य यो ऽस्मान्द्वेष्टि 13 यं च वयं द्विष्म इति[1] ॥ १३ ॥ अथ तृतीये त्रयो मम तिस्रस्तस्य यो ऽस्मा- 14 न्द्वेष्टि यं च वयं द्विष्म इति[1] ॥ १४ ॥ अथ चतुर्थे चत्वारो मम चतस्रस्तस्य यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इति[1] ॥ १५ ॥ अथ पञ्चमे पञ्च मम न 16 तस्यैका चन यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्येवꣳ ह वाव द्विषतः सपत्नस्य सर्वं यज्ञꣳ संवृङ्क्त एवं द्विषन्तꣳ सपत्नꣳ सर्वस्माद्यज्ञान्निर्भजति बहिर्धा करोति य एवं विद्वानेतज्जपति ॥ १६ ॥ स यद्देवा अब्रुवन्नेको ऽस्माकमिति मनो हैव[2] तदूचुरथ यदसुरा अब्रुवन्नेकास्माकमिति वाचं तदूचुस्त एषां मनसा वाचमयुवतेष्टे[3] हि तस्य पुरुषो यद्व्याहरन्नासीत[4] न तस्येष्टे यदमना आसीत ॥ १७ ॥ अथ यद्देवा अब्रुवन्द्वावस्माकमिति प्राणोदानौ तदूचुरथ यदसुरा अब्रुवन्द्वे अस्माकमित्यृक्सामनी तदूचुः ॥ १८ ॥ अथ यद्देवा अब्रुवꣳस्त्रयो ऽस्माकमितीमाꣳस्त्रींल्लोकानूचुरथ यदसुरा अब्रुवꣳस्तिस्रो ऽस्माकमिति त्रयीं तद्विद्यामूचुः ॥ १९ ॥ अथ यद्देवा अब्रुवꣳश्चत्वारो ऽस्माकमिति पशूꣳस्तदूचुरथ यदसुरा अब्रुवꣳश्चतस्रो ऽस्माकमिति दिशस्तदूचुस्त एषां पशुभिर्दिशो ऽयुवत तस्माद्यां कां च दिशं पशुमानेति जितामेवान्वेति ॥ २० ॥ अथ यद्देवा अब्रुवन्पञ्चास्माकमित्यृतꣳ-

1. इति Mss. 2. ह वै B. 3. °युवतेष्टे B. 4. यदाव्याह B. C. O. P., यदध्याहा° M., यदव्याह° My.

स्तदूचुस्त इतरे न मिथुनमविन्दन्न ह्यत ऊर्ध्वं वाचो मिथुनमस्ति सैषा द्वेधाविभक्ता[1] वाक्तो ऽन्यतरया[2] देवा अजयन्नन्यतरयासुराः पराजयन्त स यया[3] देवा अजयꣳस्तया[4] यजमानो जयत्यथ ययासुराः[5] पराजयन्त तयास्य[6] द्विषन्भ्रातृव्यः सर्वं पराजयते ॥ २१ ॥ द्वितीयं ब्राह्मणम् ॥

M. I. 6. 1. K. II. 5. 3.

13 ऋतवो ह वै यज्ञे देवेषु भागमीषिरे ऽस्तु नो यज्ञ आ नो यज्ञे भजतेति तदु ह देवा न जज्ञुस्ते ह देवेष्वजानत्स्वसुरानुपाववृतुस्ते हैतामेधतुमैधन्त यामेषामनुश्रृण्वन्[7] कृषन्तो ह स्म वपन्तः पूर्वे यन्ति लुनन्तो[8] ह स्म मृणन्तो[9] ऽपरे[10]
4 ऽनुयन्त्यकृष्टपच्या[10] हैभ्य ओषधय आसुः ॥ १ ॥ तदु वै देवानामतथास[11] क-
5 नीय इन्नु ततो द्विषन्द्विषते ऽरातीयेदथ[12] किं तावन्मात्रम् ॥ २ ॥ ते होचुः कथमिदमितो[13] ऽन्यथा स्यादिति ते होचुर्ऋतूनेवोपमन्त्रयामहा इति ते होचुस्तान्कथमुपमन्त्रयेमहीति प्रथमानेव वो यज्ञेन यजामहा इत्येनान्ब्रवामेति ॥ ३ ॥
6.7 स होवाचाग्निर्यन्मां प्रथमं[14] यजध्वे[14] क मम ततो भागः स्यादिति ते होचुर्न त्वामायतनाच्च्यवयेमेति स यदग्नेर्भागमभिह्वयमाना अग्निमायतनान्नाच्यवयन्न हायतनाच्च्यवते य एवमेतद्वेद तान्हाग्निरुपमन्त्रयां[15] चक्रे ते होचुः कं भागमभ्ये-
8 यामेति ॥ ४ ॥ स होवाच प्रथमानेव वो यज्ञेन यजामहा इति तथेति होचुरा वयं त्वामस्मासु भजामेति यो नो यज्ञे देवेषु भागमविद इति स एषो ऽग्निर्ऋतुष्व-

1. द्वेधाविभक्ता Mss. 2. न्यतरया B., न्यतरया C. O. P. 3. Thus M. only, यथा the other Mss. 4. °स्तया M. only, °स्तथा the other Mss. 5. यथा° B. M. 6. तथास्य B. O. P. C. (pr. m.). 7. Uncertain; °मनुश्रृण्वः C. O. P. M., °मनुश्रृण्वंतः B., °मनुश्रुण्वं My. 8. Thus M. only, नुळंतो C. O. P. My., नुळंतो 9. वृणन्तो M., मृलंतो P., मृडंतो C., मृळंतो B., गृलंतो O., मृलंता My. 10. परेनुयंत्यकृष्ट° C. O. P. 11. देवानामतथास Mss. 12. रातीयेदथ B. 13. °मितोMss. 14. प्रथमं यजध्वे Mss. 15. °ग्निरुपमंत्रयां Mss.

व्ययमासर्पयश्च ॥ २ ॥ तद्देवा वैभ्यस्तत्प्ररोचयां चक्रुः[1] स्वयं वा दध्रिरे 3
न हीतो देवान्हव्यं जगामेतःप्रदानँ हि देवा उपजीवन्ति ॥ ३ ॥ ते होचुः
पित तदेष्याम इति यतो देवाः स्वर्गं लोकँ समाश्नुविषतोत वै नस्तत्र किंचि-
त्प्ररोचेतेति ते ह तदागत्य चेरुः किं प्ररोचते किं प्ररोचत इति ते ह पुरोळाशमेव
कूर्मं भूतँ सर्पन्तं ददृशुस्ते ह सर्व एव मेनिरे ऽयं वाव यज्ञ इति ॥ ४ ॥ तँ होचुर- 4
श्विभ्यां तिष्ठेति स ह ससर्पैव सरस्वत्यै तिष्ठेन्द्राय तिष्ठेति स ह ससर्पैवाग्नये[2]
तिष्ठेति स ह तस्थौ[3] तमग्नये ऽस्थादित्यग्नावेव सर्वहुतमजुहवुस्तत एभ्यो यज्ञः प्रा-
रोचत तमसृजन्त तमतन्वत तदिदं परोऽवरमनूच्यते यथर्षयो यज्ञमपश्यन्पिता
पुत्रायैवं[4] ब्रह्मचारिणे ॥ ५ ॥ स वा एभ्यः स पुरोदाशो य एभ्यो यज्ञं प्रारो- 5.6
चयत्तस्मात्पुरोदाशो नाम पुरोदाशो ह वै नामैतद्यत्पुरोळाश इत्याहुः स एष आग्नेयः
पुरोळाश उभयत्राच्युतः स एष न पौर्णमासं नामावास्यं य एवाग्नीषोमीयः पुरो-
ळाशः स पौर्णमासँ सांनाय्यमेवामावास्यं यज्ञ एवैष उभयत्रावक्लृप्तो नेद्यज्ञा-
द्यानीत्येव पुरस्तात्पौर्णमासस्य क्रियत एवमामावास्यस्य ॥ ६ ॥ स य एनमुप- 7
धावेद्याजय मेति यदि[5] वात्मनेष्ट्या[5] यजेतैतेन हैवैनं याजयेयुर्यत्कामा[6] वा एत-
मृषयो ऽजुहवुः स एभ्यः कामः समार्ध्यत स यत्कामो हैतेन यज्ञेन यजते सो
ऽस्मै कामः समृध्यते यस्या उ वै कस्यै च देवतायै जुह्वत्यग्ना उ वै तस्यै जुह्व-
त्यग्ना उ चेद्धोष्यन्त्स्यात्किमन्यां देवतां परिजिहीत[7] तस्मादग्नय एव ॥ ७ ॥
अग्निर्वाव सर्वा देवता अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वति स यथा सर्वा देवता 8
उपधावेदेवमेतत्तस्मादग्नय एव ॥ ८ ॥ अग्निर्वा अद्धा देवतानां यो वा अद्धा 9
स्यात्तमुपधावेत्तस्मादग्नय एव ॥ ९ ॥ अग्निर्वाव मृदुहृदयतमो देवानां मनु- 10
ष्यानाभि यो वाव मृदुहृदयतमः स्यात्तमुपधावेत्तस्मादग्नय एव ॥ १० ॥

---

1. Read चक्रुः ? 2. ससर्पैवाग्नये B. 3. तस्थौ MSS. 4. Read पुत्रायैव ? 5. यदिवा° B. C.P.O. My., यथैवा° M.—वात्मनेष्ट्या MSS. 6. याजयेयु° MSS. 7. परिजिहीत B., पराजिहीत C. O. M. My.

11.12 अग्निर्वाव नेदिष्ठो देवानां यो वाव नेदिष्ठः स्यात्तमुपधावेत्तस्मादग्नय एव
यदीष्टिं कुर्यात्सप्तदश सामिधेनीरनुब्रूयादुपाꣳशु देवतां यजेन्मूर्धन्वत्यौ याज्यानु-
वाक्ये स्याताम् ॥ ११ ॥ चतुर्थं ब्राह्मणम् ॥ पञ्चमो ऽध्यायः ॥

M. I. 6. 3. K. II. 6. 1.

1.2 त्वष्टुर्ह वै पुत्र आस त्रिशिराः षळक्षस्तस्य ह[1] त्रीण्येव मुखान्यासुः य-
यदेवꣳरूप आस तस्माद्विश्वरूपो नाम तस्य ह सोमपानमेवैकं मुखमास सुरापाण-
3-5 मेकमन्यस्मा अशनायैकम् ॥ १ ॥ तमु हेन्द्रो दिद्वेष[2] तस्य तानि शिराꣳसि
प्रचिच्छेद तस्य यत्सोमपानमासीत्स कपिञ्जलो ऽभवत्तस्मात्स बभ्रुक इव बभ्रुरिव
हि सोमो राजाथ यत्सुरापाणमासीत्स कलविङ्को ऽभवत्तस्मात्सो ऽभिमाद्यत्क इव
वदत्यभिमाद्यन्निव[3] हि सुरापीतो[4] वदत्यथ यदन्यस्मा अशनायासीत्स तित्तिरि-
भवत्तस्मात्स विश्वरूपतमः सन्त्येव घृतस्तोका इव त्वन्मधुस्तोका[5] इव त्व-
6 त्पर्णेष्वाश्च्युतिता एवꣳरूपꣳ हि तेनाशनमावयत्[6] ॥२॥ स उ ह त्वष्टा क्रुद्धः
कुविन्मे पुत्रमवधीदित्यपेन्द्रꣳ सोममाजह्रे स हेत्थमेव प्रसुत आस यथैवायं प्रसुत
7 एवꣳ हैव प्रसुत आसापेन्द्रः ॥३॥ स हेन्द्र ईक्षां चक्र इदं वाव मा यज्ञादन्तर्य-
न्तीति स यथा बलीयानबलीयस एवꣳ सहसैवाभिद्रुत्यानुपहूत एव द्रोणकलशा-
च्छुक्रं भक्षयां चकार स हैनं जिहिꣳस विष्वङ् हास्य प्राणेभ्यो दुद्राव मुखाद्धैव न
दुद्रावाथान्येभ्यः सर्वेभ्यः प्राणेभ्यस्तदु सौत्रामणीतीष्टिस्तस्यां तद्व्याख्यायते यथा
यथैनं[7] ततो देवा अभिषज्यन् ॥ ४ ॥ स उ ह त्वष्टा क्रुद्धः कुविन्मे ऽनुपहूतः
सोममबभक्षदिति[8] स्वयमेव यज्ञवेशसं चक्रे स यो द्रोणकलशे शुक्रः परिशिष्ट आस
तं प्रवर्तयां चकारेन्द्रशत्रुर्वर्धस्वेति सो ऽग्निं प्राप्य संबभूवेत्येक आहुरन्तरैव संब-
भूवेत्येक आहुः सो ऽग्नीषोमावभिसंबभूव[9] सर्वा विद्याꣳ सर्वं यशः सर्वमन्नाद्यꣳ

1. Om. M. 2. दि° O. P. 3. वदत्यभिमाद्यन्निव C. O. P. 4. हिसुरा° C. O. P. 5. त्वन्मधु° MSS. 6. °मावयत B., °मापयन् M. 7. यथैनं O. P. C. (sec. m). 8. सोममभक्षदिति C. O. P. 9. °मावभितस्संबभूव M.

सर्वां श्रियं स यद्वर्तमानः समभवत्तस्माद्वृत्रो नाम यदपात्समभवत्तस्मादहि-
स्तमु[1] ह दनुश्च दानवी[2] च मातेव च पितेव च परिजगृहतुः सो ऽस्य दानवता
॥ ५ ॥ स यदुवाचेन्द्रशत्रुर्वर्धस्वेति तस्माद्धैनमिन्द्र एव जघानेन्द्रो ऽभिबभूवाथ 10.11
यद्धावक्ष्यदिन्द्रस्य शत्रुर्वर्धस्वेति शश्वद्ध[3] स[3] एवेन्द्रमभ्यभविष्यदथ यदुवाच वर्ध-
स्वेति तस्माद्ध[4] स्मेषुमात्र एव प्राङ् वर्धत इषमात्रस्तिर्यङ् ॥ ६ ॥ स वा अपरं 12.13
समुद्रं दधावव पूर्वं स यावत्स आस स एवान्नाद आस तस्मै ह स्म देवा एव
पूर्वाह्णे ऽशनमभिहरन्ति मध्यंदिने मनुष्या अपराह्णे पितरः स हेन्द्रस्तथैव[5] नुत्त-
श्चरन्नग्नीषोमा[5] उपमन्त्रयां चक्रे ऽग्नीषोमौ युवं वै मम स्थो युवयोरहमस्मि[6] न[6]
वै युवयोरेष कं म इमं दस्युं वर्धयथो[7] मामुपावर्तेथामिति[8] तौ होचतुरग्नीषोमौ
किमावयोस्ततः स्यादिति ॥ ७ ॥ स होवाचानेन वामेकादशकपालेन पु- 14.15
रोळाशेन यजा इति तथेति तमुपावबृततुस्तौ ह सर्वे देवा अनु प्रेयुः
सर्वा विद्या सर्वं यशः सर्वमन्नाद्यं सर्वा श्रीः स एतेनेष्ट्वेन्द्रो ऽभवद्यदे-
तदिन्द्र एष वाव पौर्णमासस्य बन्धुः स य एवं विद्वान्पौर्णमासेन यजत
एतां हैव श्रियं गच्छति यशो भवत्यन्नादो भवति ॥ ८ ॥ तद्धैव वृत्रो 16
हतो यथा दृतिर्निष्पीतः संल्लीनः शयीत यथा निःसक्तुर्भस्त्रा संल्लीना शयी-
तैवं संल्लीनः शिश्ये[9] तं हेन्द्रो ऽभ्यादुद्राव ॥ ९ ॥ स होवाच त्वं वै तद- 17
सि यदहं पुराभूवमिति वि मा कुरु मामुया भूवमिति[10] ॥ १० ॥ स होवाच
स वै मे ऽन्नमेवैधीति[11] तथेति तं द्वेधान्वश्चमनुबिभेद तस्य यत्सौम्यो न्यङ्ग आस

---

1. °स्तमु B. M., °स्तमू the other MSS. 2. दानवी C. O. P., दानवी B. 3. शश्वद्धैष M. 4. तस्माद्ध B. C. (sec. m.) O. P. 5. Thus (without acc.) My. only, °थैवन्नुत्तश्चर° B. °थैवनुक्तश्चर° C. (pr. m.), °थैवानुक्तश्चर° D. P. C. (sec. m); °थैवसक्तश्चर° M. 6. °हमास्मिन्न C. O. P. My. 7. वध्रयतो MSS. 8. मामुपा° MSS. 9. शिष्ये O. P. 10. भुव° B. C. (sec m). 11. न्नमेवैधीति MSS.

तं चन्द्रमसमकरोदथ यदसुर्यमासीत्तेनेमाः[1] प्रजा उदरेणाविध्यत्तदासु[2] प्रजा-
सूदरं प्रत्यौहात्तस्माद्वा आहुर्वृत्र एव तर्ह्यन्नाद आसीदिति वृत्र एतर्हीतीदं[3]
हि यदेष[4] आपूर्यते ऽस्मादेव तल्लोकादाप्यायत इदमु यत्किं चेमाः प्रजा अशनमि-
च्छन्त उदरायैव तद्वृत्राय बलिं हरन्ति स यो हैवमेतं[5] वृत्रमन्नादं वेदान्नादो
हैव भवति ॥ ११ ॥ तद्वा इमा देवता अग्नीषोमावन्वाजग्मुस्ता होचुरग्नीषो-
मौ[6] युवं वै नो भूयिष्ठभाजौ स्थो ययोर्वामिदमिति युवयोरस्मानन्वाभजतमिति
तौ होचतुरग्नीषोमौ किमावयोस्ततः स्यादिति ता होचुर्यस्यै कस्यै च देवतायै
हविर्निर्वपानिति तद्युवाभ्यां पुरस्तादाज्यभागौ जुहवन्निति तस्माद्यस्यै कस्यै
च देवतायै हविर्निर्वपन्ति तदेतौ पुरस्तादाज्यभागौ जुह्वति तन्न सौम्ये
20 ऽध्वरे न पशौ यस्यै कस्यै च देवताया इति ह्यब्रुवन् ॥ १२ ॥ स होवाचा-
ग्निर्मय्येव वः सर्वेभ्यो जुहवंस्तदेव वो ऽहं मय्याभजामीति तस्मादग्नौ सर्वा-
21 भ्यो देवताभ्यो जुह्वति तस्मादाहुरग्निः सर्वा देवता इति[7] ॥ १३ ॥ अथ
होवाच सोमो मामेव वः सर्वेभ्यो जुहवंस्तदेव वो ऽहं मय्याभजामीति तस्मा-
त्सोमं सर्वाभ्यो देवताभ्यो जुह्वति तस्मादाहुः सोमः सर्वा देवता इति[8] ॥१४॥
22 अथ यद्वेव सर्वे देवा इन्द्रे तस्थानास्तस्मादाहुरिन्द्रः सर्वा देवता इत्येवं त्रेधा
देवा एकदेवत्या भवन्ति स यो हैतांस्त्रेधा देवानेकदेवत्यान्वेदैकधा हैव स्वा-
23.24 नां श्रेष्ठो भवति ॥ १५ ॥ द्वयमु वा इदं न तृतीयमस्त्यार्द्रं चैव शुष्कं च
ततो यच्छुष्कं तदाग्नेयं यदार्द्रं तत्सौम्यम् ॥ १६ ॥ तदाहुर्यदिदं द्वयमेवाथ
किमेतावत्क्रियत इत्यग्नीषोमाभ्यामाज्यभागावग्नीषोमाभ्यामुपांश्वग्नीषोमाभ्यां पुरो-
ळाशः[9] स यदत[9] [10]एकतमेनैवतत्सर्वमाप्नोत्यथ किमेतावत्क्रियत इत्यग्नीषोमयो-

1. यदसुर्यं B. 2. °सु MSS. 3. एतर्हीतीदं O. P. C, एतर्हीतीदं B. 4. यदेष M. 5. एतं om. M. 6. °रग्नीषोमौ MSS. 7 इति MSS. 8 इति B. C. 9. पुरोळाशस्यादतः B, पुरोलाशस्ययदत C. O. My., पुरोडाशस्सयदत M 10. एकतमे° MSS.

हैवैतावती विभूतिः प्रजातिः सूर्य एवाग्नेयश्चन्द्रमाः सौम्यो ऽहरेवाग्नेयꣳ रात्रिः सौम्या य एवायमपक्षीयते ऽर्धमास एष आग्नेयो य आपूर्यते स सौम्यः ॥१७॥

सो ऽत आज्यभागाभ्यामेव सूर्याचन्द्रमसावाप्नोत्युपाꣳशुयाजेनाहोरात्रे पुरोळाशेनार्धमासावित्येक आहुस्तदु होवाचासुरिराज्यभागाभ्यामेवातो यतमे वा यतमे वा द्वे देवते आप्नोतीत्युपाꣳशुयाजेनैवातो यतमे वा यतमे वा द्वे देवते आप्नोतीति पुरोळाशेनैवातो यतमे वा यतमे वा द्वे देवते आप्नोतीति तत्सर्वं म आप्तमसत्सर्वं जितꣳ सर्वेण वृत्रꣳ हनानि सर्वेण पाप्मानं द्विषन्तं भ्रातृव्यꣳ हनानीति तस्माद्वा एतावत्क्रियत इति ॥१८॥ 25.26

तदाहुर्जामि वा एतत्क्रियते यदग्नीषोमाभ्यामाज्यभागमुपाꣳश्वग्नीषोमाभ्यां[1] पुरोळाशः[2] स[2] यदनन्तर्हितं तेन जामीति तदु यथाजामि भवत्याज्यस्यैवेतरं यजति पुरोळाशस्येतरं तेनैवान्यदिवेतरं भवत्यन्यदिवेतरमृचमनूच्याज्यस्य[3] जुषाणेन यजत्यृचमनूच्य पुरोळाशस्यर्चा यजति तेनैवान्यदिवेतरं भवत्यन्यदिवेतरमनेन[3] त्वा अजाम्युपाꣳश्वेवाज्यस्य यजत्युच्चैः पुरोळाशस्य स यदुपाꣳशु तत्प्राजापत्यꣳ रूपम् ॥ १९ ॥ 27

तस्मात्तस्यानुष्टुभमनुवाक्यामन्वाह वाग्वा अनुष्टुब्वाग्वै प्रजापतिरेतेन ह स्म वा उपाꣳशुयाजेन देवा यं यमसुराणां कामयन्ते तमुपत्सर्याथ वज्रेण वषट्कारेण घ्नन्ति तथो वा एष एतेनोपाꣳशुयाजेन पाप्मानं द्विषन्तं भ्रातृव्यं यं कामयते तमुपत्सर्याथ वज्रेण वषट्कारेण हन्त्यग्नीषोमयोर्ह वै प्रजातिमन्विमाः[4] प्रजाः प्रजायन्ते ॥ २० ॥ 28

स यदृचमनूच्याज्यभागं जुषाणेन यजति[5] तदन्वन्यतोदन्ताः[6] प्रजाः प्रजायन्ते ऽस्थि ह्यगस्थि हि दन्तो ऽन्यतरतो ह्येतदस्थि करोत्यथ यदृचमनूच्य पुरोळाशस्यर्चा यजति तदनूभयतोदन्ताः प्रजाः प्रजायन्ते ऽस्थि ह्यगस्थि हि दन्त उभयतो ह्येत- 29.30

---

1. Probably something has fallen out. I guess: यदग्नीषोमाभ्यामाज्यभागाग्नीषोमाभ्यामुपाꣳश्व°. 2. Thus M. only, पुरोळा (ला)शस्य the other MSS. 3. भवत्य° C. O. P. 4. प्रजापति° B O. M. 5. यजति MSS. 6. Cp. अन्यतोयुक्त VII. 4. 1. 21.

दास्थि करोत्येता उ वा इमा द्वय्यः प्रजा अन्यतोदन्ताश्चैवोभयतोदन्ताश्च स यो
31 हैतां प्रजानां प्रजातिं वेद बहुर्हैव प्रजया पशुभिः प्रजायते ॥ २१ ॥ स पौर्ण-
मासमुपवत्स्यन्न सुहित इव स्यात्तेनेदमसुर्यमुदरं क्लिनात्याहुतिभिः प्रातर्दैवमेष
32-34 पौर्णमासस्योपचारः ॥ २२ ॥ स वै संप्रत्येवोपवसेत्संप्रति वृत्रँ हनानि संप्रति
पाप्मानं द्विषन्तं भ्रातृव्यँ हनानीत्यथो उत्तरामेवोपवसेत्सं वा एष क्रमते यत्सं-
प्रत्युपवसत्यनद्धा वै तद्यत्संक्रान्तयोर्यदीतरो वेतरो वाभिभवति स यथा पराश्च-
मावृत्तमप्रत्यालभमानँ[1] संपिँष्यात्सो[2] ऽन्यतोहेत्याहुस्तस्मादुत्तरामेवोपवसे-
दिति तदु संप्रत्येवोपवसेद्यथा हान्यस्य [3]हतमन्यत्संपिँष्यादन्यस्य ह कृतानु-
कर उपावसायी भवति य उत्तरामुपवसति तस्मात्संप्रत्येवोपवसेत्संप्रति वृत्रँ
35-37 हनानि संप्रति पाप्मानं द्विषन्तं भ्रातव्यँ हनानीति ॥ २३ ॥ प्रजापतेर्ह वै
प्रजाः ससृजानस्य पर्वाणि विसस्रँसुः स वै संवत्सर एव प्रजापतिस्तस्यैतानि
पर्वाण्यहोरात्रयोः संधिः [4]पौर्णमास्यश्चामावास्यश्चर्तुमुखानि[5] स एतैर्विस्रस्तैः पर्व-
भिर्न सँहातुँ शशाक तं देवा एतैर्हविर्यज्ञैरभिषज्यँस्तस्याग्निहोत्रेणैवाहोरा-
त्रयोः संधिमेतत्पर्वाभिषज्यँस्तत्समदधुः पौर्णमासेन चामावास्येन च पौर्णमासीं
चामावास्यां चैतत्पर्वाभिषज्यँस्तत्समदधुश्चातुर्मास्यैर्ऋतुमुखानि स एतैः सँ-
हितैः पर्वभिरिदमन्नाद्यमभ्युदतिष्ठद्यदिदं प्रजापतेरन्नाद्यँ स एवमन्नादो ऽभवत्स
य एवं विद्वान्त्संप्रत्युपवसति संप्रति[6] ह[6] प्रजापतेः पर्व भिषज्यत्यवति हैनं प्रजा-
38 पतिरेवमन्नादो भवति ॥ २४ ॥ चक्षुषी वा एतौ यज्ञस्य यदाज्यभागौ तस्मा-
देतौ पुरस्ताज्जुह्वति पुरस्तादेवैतच्चक्षुषी दधाति तस्मादिमे पुरस्ताच्चक्षुषी ॥२५॥

---

1. °वृत्तमप्रत्यालभ° B., °वृत्तमःप्रत्यालभ° the other MSS. 2. संपिँष्यात्सो MSS. 3. हतमन्यत्सं° B., हतमन्यत्सं° the other MSS. 4. Thus My., पौर्णमास्याश्चामा° M., पौर्णमासश्चामा° B. C. O. 5. Thus M. My., °श्चतुर्मुखानि B. C. O. P. 6. Thus M., संप्रतीह O. P. C. My., संप्रतीह B.

द्वैक उत्तरार्धपूर्वार्धे आग्नेयमाज्यभागं जुह्वति दक्षिणार्धपूर्वार्धे[1] सौम्यमिदं पुर- 39
स्ताच्चक्षुषी दध्म इति वदन्तस्तदु तदातिविज्ञान्यꣳ[2] हवीꣳषि वा आत्मा यज्ञस्य
यद्वा एतौ पुरस्ताद्धविषाꣳ हूयेते तदेव पुरस्ताच्चक्षुषी दधाति तस्माद्धिमे पुरस्ता-
च्चक्षुषी तस्माद्यत्रैव समिद्धतमं मन्येत तदाहुतीर्जुहुयात्सामिद्धहोम[3] उ ह्येव समृद्ध
आहुतीनाम् ॥ २६ ॥ स यदृचमनूच्याज्यभागौ जुषाणेन यजति[4] तस्माद्धिमे 40
अस्थिन्यनस्थिके चक्षुषी आश्लिष्टे यद्धर्चमनूच्यर्चा यजेदस्थि हैव कुर्यान्न चक्षुः
॥ २७ ॥ ते वा एते चक्षुषी अग्नीषोमयोरेव रूपमन्वायत्ते[5] यदेव शुक्लं तदा- 41
ग्नेयं यत्कृष्णं तत्सौम्यं यदि वेतरथा यदेव कृष्णं तदाग्नेयं यच्छुक्लं तत्सौम्यं
यदेव वीक्षते तदाग्नेयꣳ रूपꣳ शुष्के इव[6] हि वीक्षमाणस्याक्षिणी[6] भवतः शुष्क-
मिव ह्याग्नेयं यदेव स्वपिति तत्सौम्यꣳ रूपमार्द्रे[7] इव हि सुषुपुषो ऽक्षिणी भवत
आर्द्र इव हि सोमः ॥ २८ ॥ प्रथमं ब्राह्मणम् ॥

M. I. 6. 4. K. II. 6. 2.

इन्द्रो ह वै यत्र वृत्राय वज्रं प्रजहार स हाबलीयान्मन्यमानो नास्तृ- 1.2
णीति भीषा निलयां चक्रे स[8] ह[8] पराः परावतो जगाम ॥ १ ॥ ते होचुर्देवा
हतो वै वृत्र इत्यथेन्द्रो न्यलेष्ट हन्तैनमन्विच्छामेति तमन्वेष्टुं दध्रिरे ऽग्निर्देव-
तानाꣳ हिरण्यस्तूप ऋषीणां बृहती छन्दसां तꣳ हाग्निरनुविवेद तेन हैताꣳ रात्रि-
मग्निः सहाजगाम स उ वै देवानां वसुर्वीरो ह्येषाम् ॥ २ ॥ ते होचुरमा वै नो 3
ऽद्य वसुर्वसतीति यो नः प्रावात्सीदिति तस्मादमावास्या नाम ताभ्यामेतद्यथा
ज्ञातिभ्यां वा सखिभ्यां वा सहागताभ्याꣳ समानमोदनं वाजं वा पचेत्तन्मानुषꣳ
हविर्देवानामेवमाभ्यामेतत्समानꣳ हविर्निरवपन्नेतमैन्द्राग्नं द्वादशकपालं पुरोळाशं
तस्माद्वा एष ऐन्द्राग्नो द्वादशकपालः पुरोळाशो भवति ॥ ३ ॥ स होवाचेन्द्रो 4

1. Thus acc. MSS. 2. °ज्ञान्यꣳ MSS. 3. °त्समिद्धहोम MSS. (cp. I. 3. 1. 10). 4. यजति MSS. 5. रूपमन्वा° MSS. 6. इवहिवीक्ष° B. 7. रूपमार्द्रे B. 8. सह MSS.

यत्र वै तद्वृत्राय वज्रं प्राहरमिति तन्नस्मय इति होवाच तन्मेदं न धिनोति
5.6 यन्मा धिनवत्तन्मे कुरुतेति तथेति ह[1] देवा ऊचुः ॥ ४ ॥ ते होचुर्देवा न वा
एनमन्यत्सोमाद्धिन्विष्यतीति[2] सोममेवास्मै संभरामेति तदेष वाव सोमो राजा
देवानामन्नं यच्चन्द्रमाः स एताꣳ रात्रिं न पुरस्तान्न पश्चाद्ददृश इमꣳ हैवैतल्लोक-
मागच्छति[3] सो ऽस्मिँल्लोके ऽपश्चौषधीश्च प्रविशति स उ वै देवानां वसव्यो
ह्येषाम् ॥ ५ ॥ स यदेताꣳ रात्रिमिमेह वसत्यप्सु चौषधीषु च तस्मादमावास्या
नाम तमेतद्देवा गोभिरनुविष्ठाप्य समभरन्नद्भ्यश्चौषधिभ्यश्च[4] यदोषधीराश्न-
स्तदोषधिभ्यः[5] समभरन्यदपो ऽपिबꣳस्तदद्भ्यः[6] समभरꣳस्तमेवमद्भ्यश्चौषधि-
7.8 भ्यश्च[6] संभृत्यातच्य तीव्रीकृत्यास्मै प्रायच्छन् ॥ ६ ॥ स होवाचेन्द्रो धिनो-
त्येव मेदमिति नेव त्वपि मयि श्रयते तथोपजानीत यथेदं मयि श्रयाता इति तथेति
तस्मिञ्छृतेनाश्रयꣳस्तदेतत्समानमेव सन्नानेवाख्यायते पय एव सदुभयमेवेन्द्रः
स[7] यदहाब्रवीद्धिनोत्येव[7] मेदमिति तस्माद्दध्यथ यदस्मिञ्छृतेनाश्रयꣳस्तस्मा-
9-11 च्छृतम् ॥ ७ ॥ स एतेनेन्द्रो यथाꣳशुराप्यायेतैवमाप्यायताप पाप्मानꣳ हरिमा-
णमहतैष आमावास्यस्य बन्धुः स य एवं विद्वान्त्संनयत्येवꣳ हैव प्रजया पशुभि-
राप्यायते ऽप पाप्मानꣳ हते तस्मादाहुर्नासोमयाजी संनयेदिति सोमाहुतिर्हि
वा एषा सैषानवरुद्धासोमयाजिन इति तदु समेव नयेन्न वै न्वत्रान्तरेण शुश्रुम
सोमेन नु मा याजयताथ मे संनेष्यथेति न मेदं धिनोति यन्मा धिनवत्तन्मे
12 कुरुतेति वाव सो ऽब्रवीत्तस्माद्व्यसोमयाजी समेव नयेत् ॥ ८ ॥ वार्त्रघ्नं वा
एतद्धविर्यत्पौर्णमासं वृत्रꣳ ह्येतेनेन्द्रो ऽहन्वृत्रहत्यमेवामावास्यं वृत्रꣳ ह्यस्मा एतज्ज-

---

1. तथेतीह MSS. exc. M. 2. Thus conjecturally; °त्सोमाद्धिर्निर्ष्वासिति M, °त्सोमांद्धन्विष्यतीतिC., °त्सोमादृध्यंन्विष्यतीति B., °त्सोमाद्धन्विष्यतीति P., °त्सोमाद्धीन्वि-ष्यतीति O., °त्सोमाधंन्विष्यतीति My. 3. हैवत्तंलोक° B, हैवेतंल्लोक° the other MSS. 4. °धीभ्यश्च B. M. 5. यदोषधीराश्नुवꣳस्त° MSS. exc. M. 6. Thus (°दद्भ्यः सम-भर°) acc. MSS.—°धीभ्य° B. M. 7. सयदहाब्रवी° MSS.

II. 6. 2. 9.

[धनु]ष[1] आप्यायनमकुर्वन् ॥ ९ ॥ वार्त्रघ्नं वा एतद्यदामावास्यꣳस यदेताꣳ रात्रिं न 13
पुरस्तान्न पश्चाद्ददृश एष वाव[2] वृत्रो[2] यच्चन्द्रमाः सर्वमेवैनमेतद्घ्नन्ति नास्य किं
चन परिशिनष्टि सर्वꣳ ह वै पाप्मानꣳ हन्ति न ह पाप्मनः किं चन परिशिनष्टि
य एवमेतद्वेद ॥ १० ॥ तद्धैके दृष्ट्वोपवसन्त्यद एवादो देवानामन्नमविक्षीण-14-16
मित्यथैभ्यो वयमित उपप्रदास्याम इति तद्धि समृद्धं यदविक्षीणे पूर्वे ऽन्ने ऽथा-
परमन्नमागच्छतीति स ह स[3] वह्वन्न[3] एव भवति यस्तथोपचरत्यसोमयाजी तु
ह भवति क्षीरयाज्यदो ह्येवासौ सोमो राजा देवानामन्नं भवत्यथ[4] यथैव पुरा
केवलीरोषधीर्जग्ध्वा केवलीरपः पीत्वा केवलं पयो दुहत एवꣳ ह्येव तद्भवति
तस्माद्यदेवैनं न पुरस्तान्न पश्चात्पश्येत्तर्ह्येवोपवसेत्तर्हि वा एष इमं लोकमागच्छति
सो ऽस्मिँल्लोके ऽपश्चौषधीश्च प्रविशति तमेवमद्भ्यश्चौषधिभ्यश्च[5] संभृत्याहुतिभ्यो
जनयति स एष आहुतिभ्यो जातः पश्चाद्ददृशे तद्वा एतदविक्षीणं देवानामन्नं
परिप्लवते ऽविक्षीणꣳ ह वा अस्यास्मिँल्लोके ऽन्नं भवत्यक्षीयममुष्मिँल्लोके[6] सुकृतं य
एवमेतद्वेद ॥ ११ ॥ तद्वा एताꣳ रात्रिं देवानामन्नममुतः प्रच्यवते तदिमं लोक- 17
मागच्छति ते देवा ईक्षन्ते कथं न इदं न पराक् स्यात्कथं न इदं पुनरागच्छे-
दिति ते ह य एव संनयन्ति तेष्वेवाशꣳसन्त एत एव नः संभृत्य प्रदास्यन्ती-
त्या ह वा अस्मिञ्छꣳसन्ते स्वाश्च निष्ट्याश्च य एवमेतद्वेद य उ वै परमतां
गच्छति तस्मिन्नाशꣳसन्ते ॥ १२ ॥ अथ यद्वैवैताꣳ रात्रिं न पुरस्तान्न पश्चाद्- 18.19
दृश[7] एष वा इन्द्रो य एष तपत्यथैष[7] वृत्रो[8] यच्चन्द्रमाः सो ऽस्यैष[9] भ्रातृव्य-
जन्मा[9] तमेतद्ग्रसते तस्माद्यद्यपि पुरा विदूरमिवोदेत्युपैवैताꣳ[10] रात्रिं न्याप्लवते सो
ऽस्य व्यात्तमापद्यते तं ग्रसित्वोदेति तस्मान्न पुरस्तान्न पश्चाद्ददृशे ग्रसते ह वै द्वि-

1. °ध्नुष MSS. 2. वाववृत्रो MSS. 3. सबह्वन्न MSS. 4. भवत्यथ MSS. 5. °धीभ्यश्च B. M. 6. भवत्यक्षीयम° B, भवत्यक्षय्यम° M. 7. पश्चाद्ददृश MSS. 8. °षवृत्रो MSS. 9. सैषभ्रातृव्यजन्मा B. M., स्यैषभ्रातृव्यजन्मा C. (pr. m.), स्यैषभ्रातृव्योजन्मा O. P. C. (sec. m.) My. 10. विदूरमिवोदेत्यु° B., विदूरमिवोदेत्यु° C. O. P.

षन्तं भ्रातृव्यमयमेवास्ति[1] नास्य[1] द्विषन्भ्रातृव्य[1] इति हैनमाहुर्य एवमेतद्वेद
20 ॥ १३ ॥ तं निर्धीय निरस्यति स एष निर्धीत[2] इव पश्चाद्ददृशे स उ एतस्मै
वान्नाय[3] पुनराप्यायते यदि ह वा अस्य द्विषन्भ्रातृव्यो वणिज्यया वा के
21 चिद्वा संभवत्येतस्य हैवान्नाय[3] संभवति य एवमेतद्वेद ॥ १४ ॥ तद्धैके महे
न्द्रायेति कुर्वन्तीन्द्रो वा एष पुरा वृत्रस्य वधादित्यथ वृत्रं जघ्निवान्यथा महा
राजो विजिग्यान एवं महेन्द्र इति तद्विन्द्रायेत्येव कुर्यादिन्द्रो ह्येवैष पुरा वृत्रस्य
वधादिन्द्रो वृत्रं जघ्निवाꣳस्तस्मादिन्द्रायेत्येव कुर्यात् ॥१५॥ द्वितीयं ब्राह्मणम् ॥

M. I. 7. 1. K. II. 6. 3.

1 स वै पर्णशाखया वत्सानपाकरोति स यत्पर्णशाखया वत्सानपाकरोति
यत्र वै गायत्री सोममच्छापतद्देवेभ्यस्तस्या[4] आहरन्त्या अपादस्ताभ्यायत्य पर्णं
प्रचिच्छेद गायत्र्या वा सोमस्य वा राज्ञस्तत्पतित्वा पर्णो ऽभवत्तस्मात्पर्णो[5] नाम
स यत्तत्र किं चित्सोमस्य न्यक्तं तदिहाप्यसदिति तस्मात्पर्णशाखया वत्सान-
2 पाकरोति ॥ १ ॥ तामाच्छिनत्तीषे त्वेति वृष्टयै[6] तदाह यदिषे त्वेत्यूर्जे त्वेत्य-
नुमार्ष्टि यो[7] वृष्टादूर्ग्रसो[7] जायते तस्मा उ[8] एतदाह[8] तस्मादाहोर्जे त्वेत्यथाह मा-
3 तृभिर्वत्सान्त्समवर्जतेति[9] ॥ २ ॥ स वत्समुपस्पृशति वायव स्थेत्ययं वाव वायुर्यो
ऽयं पवत एष ह वा इदं प्रप्याययति यदिदं किं[10] च[10] वर्षत्येत उ वा एताः
प्रप्याययन्ति[11] सो[11] एतेषां वायुता[12] तस्मादाह वायव[13] स्थेत्युपायव[14] स्थेत्यु हैक
4-9 आहुस्तदु नाद्रियेत ॥ ३ ॥ अथ धेनुमुपस्पृशति देवो वः सविता प्रार्पयतु श्रेष्ठ-
तमाय कर्मण इति सविता वै देवानां प्रसविता सवितृप्रसूता यज्ञꣳ संभरानिति

1. °वास्मिन्नास्यद्विषन्भ्रातृव्य B., वास्तिनास्ति द्विषन् भ्रातृव्य M. 2. निर्धीत MSS. 3. एतेनैवान्नेन M. 4. सोममछापत° MSS. 5. °त्पर्णो MSS. 6. वृष्ट्ये C. O. P., वृष्ट्ये B. 7. Thus M only, यद्वृष्टा° the other MSS. 8. उयेतदाह M. (i. e उवेतदाह?) 9. °समवर्जतेति C. O. P. 10. किंच om. all exc. M. 11. प्रप्याययंति सो B., प्रप्याययति सो C. O. P. 12. read वायुता? 13. वायवः B. 14. स्थेत्युपायव MSS.

श्रेष्ठतमाय कर्मण इति यज्ञो वै श्रेष्ठतमं कर्म यज्ञाय हि तस्मादाह श्रेष्ठतमाय
कर्मण इत्याप्यायध्वमघ्न्या इन्द्राय भागमिति स यथैवादो देवतायै हविर्गृह्णन्ना-
दिशत्येवमेवैतद्देवताया आदिशति यदाहेन्द्राय भागमिति प्रजावतीरनमीवा अ-
यक्ष्मा इति नात्र तिरोहितमिवास्ति मा व स्तेन ईशत माघशंस इति मा वः
कश्चन नाष्ट्रा ईशतेत्येवैतदाह ध्रुवा अस्मिन्गोपतौ स्यात बह्वीरित्यनपक्रमिण्यो
ऽस्मिन्यजमाने बह्व्यः स्यातेत्येवैतदाहाथाहवनीयागारस्य वा गार्हपत्यागारस्य
वा पूर्वार्धे उपगूहति यजमानस्य पशून्पाहीति ब्रह्मणैवैतद्यजमानस्य पशून्गुप्तये
परिददाति तस्यामेव पवित्रं करोति वसोः पवित्रमसीत्येतावतैव यज्ञो वै वसुर्य-
ज्ञस्य पवित्रमसीत्येवैतदाह ॥ ४ ॥ यवाग्वैतां रात्रिमग्निहोत्रं जुहोत्यादिष्टं वा 10
इदं देवतायै हविर्गृहीतं भवति यत्पयः स यद्ध पयसा जुहुयाद्यथान्यस्यै देवतायै
हविर्गृहीतं तदन्यस्यै जुहुयादेवं[1] ह तत्समदं ह कुर्यात्तस्माद्यवाग्वैतां रात्रिम-
ग्निहोत्रं जुहोत्युपक्लृप्तोखा[2] भवत्यथाहोपसृष्टां[2] मे प्रव्रतादिति ॥ ५ ॥ स उखा- 11
मादत्ते द्यौरसि पृथिव्यसीत्युपस्तौत्येवैनामेतन्महयत्येव मातरिश्वनो घर्मो ऽसीति
यज्ञमेवैनां तत्करोति यथा घर्मं प्रवृञ्ज्यादेवं प्रवृणक्ति विश्वधाः परमेण धाम्ना
दृंहस्व मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीदिति दृंहत्येवैनामेतदशिथिलामेव[3] करोति
मा ते यज्ञपतिर्ह्वार्षीदित्यह्वलामेवैतद्यजमानायाशास्ते ॥ ६ ॥ अथ पवित्रमधि 12.13
निदधाति तत्प्रागधि[4] निदध्यात्प्राची[4] हि देवानां दिगथो उदगधि[4] निदध्या-
दयं[4] वाव पवित्रं योऽयं पवत एष हीमांल्लोकांस्तिर्यङ्ङिव[5] पवते[6] तस्मादुद-
गेवाधिनिदध्याद्यथा वा अदः पवित्रेण सोमं संपवयन्त्येवमु वा एतेनैतत्संप-
वयत्युदग्दशेन[7] वै तेन संपवयन्ति[7] तस्मादुदगेवाधिनिदध्यात् ॥ ७ ॥ सो 14.15

1. Thus acc. MSS. 2. जुहोत्युपक्लृप्तोखा भवत्य॰ B., जुहोत्युपक्लृप्तोखा भवत्य॰ C. (pr. m.), जुहोत्युपक्लृप्तोखा भवत्य॰ C. (sec. m.) O. (भवति also the Mādhy. acc. to the ed. in the Bibl. Indica). 3. दृंहं॰ MSS 4. Thus MSS. (B once ॰गाधिनि॰). 5. ॰स्तिर्यङ् पवते B. O. C. (pr. m.). 6. After पवते M. ins. तत्संस्यत्येवैनं तत्. 7. Plural both lines the MSS; ॰त्युदग्दशेन MSS.

ऽधिनिदधाति वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारमिति यज्ञो
वै वसुर्यज्ञस्य पवित्रमसीत्येवैतदाह शतधारꣳ सहस्रधारमित्युपस्तौत्येवैनदेतन्मह-
यत्येवाथा तिसृभ्यो[1] दोग्धोर्वाचंयमो भवति वाग्वै यज्ञो[2] ऽविक्षुब्धो[2] यज्ञं तन-
16.17 वा इति[3] ॥ ८ ॥ अथानीयमानमभिमन्त्रयते देवस्त्वा सविता पुनातु वसोः
पवित्रेण शतधारेण सुप्वेति स यथैवादः[4] पवित्रेण सोमꣳ संपवयन्त्येवमेवैतेनै-
तत्संपवयत्यथ[5] पृच्छति कामधुक्ष इत्यमूमिति सा विश्वायुरिति सा विश्वकर्मा
सा विश्वधाया इति स यदेवं पृच्छति[6] वीर्याण्येवास्मिन्नेतद्दधाति स वै तिस्रो दोग्धि
18 त्रयो वा इमे लोका एभ्य एवैनदेतल्लोकेभ्यः संभरति ॥ ९ ॥ अथ कामं वाच-
यते ऽथ यस्मिन्पात्रे दोहयन्ति तदुदस्तोकं पलीङ्ग्य[7] प्रत्यानयति यदिह किं
चित्पयसो ऽहायि तदिहाप्यसदिति पयसश्चैव सर्वत्वायेदꣳ हि यदा वर्षत्यथौष-
धयो जायन्त[8] ओषधीर्जग्ध्वापः पीत्वा तस्यैष उभयस्य रसः संभवति तस्मादु-
दस्तोकं पलीङ्ग्य[7] प्रत्यानयत्युद्वास्यातनक्ति[9] तीव्रीकरोत्येवैनं तत् ॥ १० ॥
19-21 स आतनक्तीन्द्रस्य त्वा भागꣳ सोमेनातनच्मीति स यथैवादो देवतायै हविर्गृ-
ह्णन्नादिशत्येवमेवैतद्देवताया आदिशति यदाहेन्द्रस्य त्वा भागमिति सोमेनातन-
च्मीति स्वदयत्येवैनं तदथोदन्वता कꣳसेन वा चमसेन वामृन्मयेनापिदधाति
वज्रो वा आपो वज्रमेवास्यैतदुपरिष्टादभिगोप्तारं[10] करोति नेदेनदुपरिष्टान्नाष्ट्रा
रक्षाꣳस्यवमृशानिति वज्रो हि नाष्ट्राणाꣳ रक्षसामपहन्ता[11] तन्निहितमभिमन्त्रयते[12]
विष्णो हव्यꣳ रक्षस्वेति यज्ञो वै विष्णुस्तस्मा एवैतद्गुप्तये परिददाति सुगुप्तम-
सदिति ॥ ११ ॥ तृतीयं ब्राह्मणम् ॥

M. I. 7. 2. K. II. 6. 4.

1 ऋणꣳ ह वाव जायते जायमानो यो ऽस्ति स देवेभ्य ऋषिभ्यः पितृभ्यो

1. तिसृभ्यो MSS. 2. यज्ञोविक्षु° MSS. 3. इति MSS. 4. यथैवादः B. 5. Plural of the verb both times the MSS. 6. पृच्छति MSS. 7. बल्लींग्य C, वल्लींग्य O. P., वल्लिंग्य M., बल्लींच My. 8. जायंत C. O. P. 9. °यत्युद्वास्या° MSS. 10. °ष्टादभिगोप्तारं B. 11. रक्षसामपहंता MSS. 12 तंनिहि° B.

II. 6. 4. 1.

मनुष्येभ्यः ॥ १ ॥ स यदेव यजेत तेन देवेभ्य ऋणं जायते तद्धि तेभ्यः करोति 2
यदेनान्यजते यदेभ्यो जुहोति[1] ॥ २ ॥ अथ यदेवानुब्रवीत तेनर्षिभ्य[2] ऋणं 3
जायते तद्धि तेभ्यः करोति यदनुब्रूत ऋषीणां निधिप इति ह्यनूचानमाचक्षते
॥ ३ ॥ अथ यदेव प्रजामिच्छेत तेन पितृभ्य ऋणं जायते तद्धि तेभ्यः करोति 4
यत्प्रजामिच्छते तेनो हि तेषाꣳ संततान्यवच्छिन्ना प्रजा भवति ॥ ४ ॥ अथ 5
यदेव वासयेत तेन मनुष्येभ्य ऋणं जायते तद्धि तेभ्यः करोति यदेनान्वासयते
यदेभ्यो ऽशनं ददाति[3] स यो हैतानि सर्वाणि करोति स[4] ह[4] कृतकर्मा तस्य ह
सर्वमाप्तꣳ सर्वं जितम् ॥ ५ ॥ स येन देवेभ्य ऋणं[5] जायते[5] तदेतदवदयते 6
यद्यजते स यदग्नौ जुहोति तद्वा एभ्यस्तदवदयते तस्माद्यत्किं चाग्नौ जुह्वति तद-
वदानं नाम ॥ ६ ॥ तद्वै चतुरवत्तं भवतीदं वा अनुवाक्याथ याज्याथ वषट्- 7
कारो यस्यै देवतायै हविर्भवति सा चतुर्थ्येवꣳ हि देवता अवदानान्यन्वायत्ता
अवदानानि वा देवता अतिरिक्तꣳ[6] ह तदवदानं यत्पञ्चमं कस्मा उ[7] हि तदव-
द्येत्[7] ॥ ७ ॥ उतो पञ्चावत्तं भवति पाङ्क्तो वै यज्ञः पाङ्क्ताः पशवः पञ्चर्तवः
संवत्सरस्यैषो पञ्चावत्तस्य संपद्बहुर्हैव प्रजया पशुभिर्भवति यस्यैवं विदुषः पञ्चा-
वत्तं क्रियत इतरं त्वै प्रज्ञातं कौरुपाञ्चालं[8] यच्चतुरवत्तम् ॥ ८ ॥ स यावन्मात्र- 9
मिवैवावद्येन्मानुषꣳ[9] ह कुर्याद्यन्महदवद्येद्व्यृद्धं वै तद्यज्ञस्य यन्मानुषं तस्माद्याव-
न्मात्रमिवैवावद्येत् ॥ ९ ॥ [10]स उपस्तीर्याज्यं द्विर्हविषो ऽवदायोपरिष्टादाज्यम- 10
भिघारयति स यदुभयत आज्यं करोति द्वे वा आहुती सोमाहुतिरेवान्याज्याहु-
तिरन्या[11] सैषा केवल्येव सोमाहुतिरथैषाज्याहुतिर्यद्धविर्यज्ञो यत्पशुस्तस्मादुभयत

---

1. जुहोति MSS. 2. तेनर्षिभ्य C. 3. ददाति MSS. 4. सह MSS. 5. ऋणं जायते MSS. 6. अनिरुक्तꣳ B. 7. उहैतदवद्येत् MSS. exc. M. 8. कौरू° C. O. P. 9. °वावद्येन्मानुषꣳ C. O. 10. In M. the following passage runs thus (cp. II. 7. 2. 9): स उपस्तीर्याज्यं द्विर्हविषो ऽवदायोपरिष्टान्नाभिघारयत्यनुपस्तीर्य वाज्यं द्विर्हविषो ऽवदायोपरिष्टादाज्यमभिघारयति. 11. Thus acc. C. (pr. m.), °तिरेवान्याज्या° O. C. (sec. m.), °तिरेवान्याज्या° B.

आज्यं करोत्याज्यमेवैनत्तत्करोत्येतद्वै[1] देवानां जुष्टं यदाज्यं देवेभ्य एवैनदेतज्जुष्टं

11 करोतीति न्ववदानानाम् ॥ १० ॥ असौ वा अनुवाक्येयं याज्या ते एते उभे योषे तयोर्मिथुनमस्ति वषट्कार एव स एष एव वषट्कारो य एष तपति स यदुदेति तदमूमधिद्रवति यदस्तमेति तदिमामधिद्रवति तेन वृष्णा वषट्कारेणेमां

12.14 प्रजातिं प्रजायेते[2] यैनयोरियं[3] प्रजातिः ॥ ११ ॥ सोऽनुवाक्यामनूच्य याज्यामनुद्रुत्य पश्चाद्वषट्करोति पश्चाद्वै परीत्य योषां वृषाधिद्रवति तदेने पुरस्तात्कृत्वा वृष्णा वषट्कारेणाधिद्रावयति स सहैव वषट्कारेण वषट्कृते वा जुहुयात्तदग्नौ योनौ रेतो भूतꣳ सिञ्चत्यग्निर्वै यज्ञस्य योनिः स ततः प्रजायते स यद्ध पुरा वषट्काराज्जुहुयाद्यथायोनौ[4] रेतः सिञ्चेत्तदमुया स्यादेवꣳ ह तत्तस्मात्सहैव वष-

13 ट्कारेण वषट्कृते वा जुहुयात् ॥ १२ ॥ देवपात्रं वा एतद्यद्वषट्कारः स यथा पात्र उद्धृत्य प्रयच्छेदेवꣳ ह तत्तस्मात्सहैव वषट्कारेण वषट्कृते वा जुहुयादथ यद्ध पुरा वषट्काराज्जुहुयाद्यथा[5] पुरा पात्रादधो भूमौ निदध्यात्तदमुया[6] स्यादेवꣳ

15.16 ह तत्तस्मात्सहैव वषट्कारेण वषट्कृते वा जुहुयात् ॥ १३ ॥ असौ वा अनुवाक्येयं याज्या सेयं गायत्री त्रिष्टुबसौ सोऽमूमनुवाक्यामनुब्रवन्नसौ[7] ह्यनुवाक्येमामन्वाह गायत्रीꣳ ह्यन्वाहेयꣳ हि गायत्र्यथ त्रिष्टुभा यजन्ननया[8] यजतीयꣳ हि याज्या तदमुष्या अधि वषट्करोत्यसौ हि त्रिष्टुप्तदेने सयुजौ करोति तस्मा-

17 द्धिमे संभुञ्जाते अनयोरनु संभोगमिमाः[9] सर्वाः प्रजाः संभुञ्जते ॥ १४ ॥ ह्वयन्निवानुवाक्यामनुब्रूयाद्बार्हतꣳ हि तद्रूपमदो[10] हि बृहत्क्षिप्रमिव याज्यया त्वरेत[11] राथंतरꣳ हि तद्रूपमिदꣳ हि रथंतरꣳ ह्वयति ह वा अनुवाक्यया तस्मादनुवाक्याया रूपꣳ हुवे हवामह आगच्छेदं बर्हिः सीदेति[12] यद्ध्वयति ह्यनुवाक्यया[13]

---

1. °ज्यमेवैनंत्तत्क° C., °ज्यमेवैनंतत्क° O., M. My. 2. प्रजायते B. 3. यैनयो° B., यैनयो° C. O. 4. °याद्यथायोनौ MSS. 5. °याद्यथा MSS. 6. निद° MSS. 7. °मनुब्रुव° MSS. 8. यजन्ननुया MSS. exc. M. 9. संभोग° MSS. 10. तद्रूपमदो B., तद्रूपमदो O. 11. त्वरेत MSS. 12. सीदेति ह्यध्वयति ह्यनुवा° B., सीदेति ह्यध्वयति ह्यनुवा° C. My., सीदेति ह्यध्वयति O.

प्रयच्छति[1] ह वाव याज्यया तस्माद्याज्याया रूपं[2] वीहि हविर्जुषस्वाद्धि पिब मत्स्वा-
वृषायस्व[3] प्रेति यत्र[4] हि याज्यया[4] यच्छति पुरस्ताल्लक्षणानुवाक्या[5] स्यात् ॥१५॥
असौ वा अनुवाक्या तस्या अमुष्या अवस्ताल्लक्ष्म चन्द्रमा नक्षत्राणि सूर्य उप- 18-20
रिष्टाल्लक्षणा याज्या स्यादियं वै याज्या तस्या अस्या उपरिष्टाल्लक्ष्मौषधयो वन-
स्पतय आपो ऽग्निरिमाः प्रजाः सा ह[6] त्वै समृद्धानुवाक्या यस्याः प्रथमं पदम-
भिव्याहरन्देवतामभिव्याहरति[7] सो ह समृद्धा याज्या यस्या उत्तमात्पदाद्देवतायै
वषट्क्रियते वीर्यं वा ऋचो देवता तदुभयत एवैतद्वीर्येण परिगृह्य तस्यै देवतायै
हविः प्रयच्छति यस्या देवताया भवति ॥ १६ ॥ स वै वौगित्याह वाग्वै वष- 21
ट्कारो वाग्वै रेतो रेत एवैतत्सिञ्चति षळित्यृतवो[8] वै षळृतुष्वेवैतद्रेतः सिञ्चति
तदृतवो रेतः सिक्तमिमाः प्रजाः प्रजनयन्ति ॥ १७ ॥ अथ देवाश्च ह वा असु- 22-24
राश्चोभये प्राजापत्याः प्रजापतेः पितुर्दायमुपेयुरेतावेवार्धमासौ य एवापूर्यते तं
देवा यो ऽपक्षीयते तमसुरास्ते ह देवा ईक्षां चक्रिरे कथं न्विममपि संवृञ्जीमहि
यो ऽयमसुराणामिति कथं नु न इमा उभौ स्यातामिति ते हार्चन्तः श्राम्यन्त
एतꣳ हविर्यज्ञं ददृशुर्यद्दर्शपूर्णमासौ ताभ्यामीजिरे ताभ्यामिष्ट्वापीतर[9] समवृ-
ञ्जत[10] यदो वा अर्धमासौ परिप्लवेते अथ मासो भवति मासशः संवत्सरः सर्वꣳ
संवत्सरः सर्वमसुराणाꣳ सपत्नानाꣳ समवृञ्जत सर्वस्मादेनान्निरभजन्त्सर्वꣳ सप-
त्नानाꣳ संवृङ्क्ते सर्वस्मात्सपत्नान्निर्भजति य एवमेतद्वेद ॥ १८ ॥ स यो देवानाꣳ 25-26
स यवायुवत हि तेन देवा अथ यो ऽसुराणाꣳ सो[11] ऽयवा[11] न हि तेनासुरा अयु-
वताथो इतरथाहुर्य एव देवानाꣳ सो[12] ऽयवेति[12] न हि तमसुरा अयुवतेत्यथ यो

---

1. Thus acc. MSS. 2. रूप MSS. 3. मत्स्वावृ° MSS. 4. यत्रेद्धि याज्यया C. O. My., यत्रेहिर्याज्यया B., यत्र हि याज्यया M. 5. Thus (without acc.) M., परस्ताल्ल क्षणानुवाक्या C. O., परस्ताल्लक्षणातस्यानुवाक्या B. My. 6. ह MSS. 7. °भिव्याहरति MSS. 8. Thus (without acc.) M. only, षल्तवो, षळृतवो the other MSS. 9. °मिष्ट्वापीतरꣳ B. C., °मिष्टवापीतरꣳ O. 10. Thus M. only, समवृंजते C. O. My., समवृंजते B. 11. सोयवा C. O. P. 12. सोयवेति B.

ऽसुराणाꣳ स यवेत्ययुवत हि तं देवा इति सब्दमहः[1] सगरा[2] रात्रिर्यव्या[2] मासाः सुमेकः संवत्सरः[3] स्वेको ह वै नामैतद्यत्सुमेक इत्याहुर्यवाश्व ह्ययवाश्व[4] यव्या इति यदथ[5] येनैवैतेषाꣳ होता भवति तद्याविहोत्रमित्याचक्षते[6] ॥ १९ ॥ चतुर्थं ब्राह्मणम् ॥ षष्ठो ऽध्यायः ॥

M. I. 7. 3. K. II. 7. 1.

1 यज्ञेन वै देवा दिवमुपोदक्रामन्नथायं देवो यो ऽयं पशूनामीष्टे स इहैवा-
2 हीयत[7] तस्माद्वास्तव्य इत्याहुर्वास्तुनि हि तदहीयत ॥ १ ॥ तद्येनैव यज्ञेन देवा दिवमुपोदक्रामꣳस्तेनार्चन्तः श्राम्यन्तश्चेरुरथायं देवो यो ऽयं पशूनामीष्टे ॥ २ ॥
3 स हेक्षां चक्रे ऽहासि वा अन्तर्यन्ति वै मा यज्ञादिति सो ऽनूचक्राम स एतमेव कालमुत्तरत आयतयोपोत्पेदे य एष स्विष्टकृतः कालस्ते ह देवा ऊचुर्मास्थ इति
4 ॥ ३ ॥ स होवाच ते वै मा यज्ञान्मान्तर्गातेति ते वै मे यज्ञ आहुतिं कल्पयतेति
5 तथेति[8] ह[8] देवा ऊचुः स ह संववर्ह[9] नास ॥ ४ ॥ ते होचुरुपजानीतेति यावतीभ्यो[10] नो देवताभ्यो हवीꣳषि गृहीतान्यभूवन्त्सर्वाणि तानि हुतानि कथमस्मा
6.7 आहुतिं कल्पयेमोपजानीतेति ॥ ५ ॥ ते हाध्वर्युमूचुर्यथापूर्वꣳ हवीꣳष्यभिघारयेत्येकस्मा अवदानाय पुनराप्याययायातयामानि कुर्विति स यथापूर्वꣳ हवीꣳष्यभ्यघारयत्तदेकस्मा[11] अवदानाय पुनराप्याययदयातयामान्यकरोत्तत एकैकमवदानमवाद्यत्तस्माद्वास्तव्य इत्याहुर्वास्तु हि तद्यज्ञस्याभजत यद्धुतेषु हविःषु तस्माद्यस्यै[12] कस्यै च देवतायै हविर्गृह्णन्ति सर्वत्रैव स्विष्टकृदन्वाभक्त एवꣳ ह्येनं देवा
8 यज्ञे ऽन्वाभजꣳस्तदग्नय इति क्रियते ॥ ६ ॥ अग्निर्वाव स देवस्तस्यैतानि ना-

---

1. Thus B., सब्दमह C. ( sec. m. ) P. ( sec. m. ), शब्दमहः C. ( pr m. ), P. ( pr. m. ), O., सशब्दमहः M. My. 2. सगराराात्रि° C., सगराराात्रि° O. P.; °त्रिर्यव्या MSS. 3. °त्सरः MSS. 4. ह्ययवा° C. O. 5. तदथ M. 6. तद्वाविहोत्र° M., तद्यामिहोत्र° C. O. P., तद्याहोत्र° B., तद्याग्निहोत्र° My. 7. स इहैवाहीयत MSS. 8. तथेतीह MSS. exc. M. 9. संबबर्ह M. 10. यावतीभ्यो MSS. 11. हवीꣳष्यभ्यघा° B. 12. हि ins. M.

II. 7. 1. 7.

ग्नानि यथा प्राच्या आचक्षते सर्व[1] इति यथा बाहीका[2] भव इति रुद्र इति पशूनां पतिरग्निरिति तस्येतराणि सर्वाण्यशान्तानि[3] नामान्यग्निरित्येवास्य शान्ततमं तस्मादग्नय इति क्रियते स्विष्टकृत इति ॥ ७ ॥ ते ह देवा ऊचुर्यत्त्वय्यमुत्र चरति पुरायक्ष्महीति तन्नः स्विष्टं कुर्विति तथेति होवाच तद्वः स्विष्टं करोमीति तस्मात्स्विष्टकृत इति भवति ॥ ८ ॥ सो ऽनुवाक्यामनूच्याथैतानि संपश्यत्ययाळग्निरग्नेः प्रिया धामानीत्ययाट्[4] सोमस्य प्रिया धामान्ययाळग्नेः प्रिया धामानीत्यथ यथादेवतमयाड् देवानामाज्यपानां प्रिया धामानीति तत्प्रयाजानुयाजानाह प्रयाजानुयाजा हि देवा आज्यपा यत्तदग्नेर्होतुः प्रिया धामानीत्येवं यावत्यो देवत्या इष्टा[5] भवन्ति ताः संपश्यति स यदेवꣳ संपश्यत्याहुतिमेवास्मा एतत्कल्पयित्वा तेन भूयः समशाम्यन्प्रिय एनं धामन्नुपाह्वयन्त[6] ॥ ९ ॥ तद्धैके ऽयाळग्निरग्नेः प्रिया धामानीत्युक्त्वा[7] सोमस्यायाळग्नेरयाळित्याहुस्तदु तथा न ब्रूयाद्विलोम ह ते यज्ञस्य कुर्वन्ति ये ऽयाट्कारं पूर्वमुक्त्वा [8]सोमस्यायाळग्नेरयाळित्याहुस्तस्मादयाट् सोमस्य प्रिया धामानीत्ययाट्कारमेव पूर्वं ब्रूयात् ॥ १० ॥ यक्षत्स्वं महिमानमा यजतामिति यत्र वा अदो देवता आवाहयति तद्वा अपि स्वं महिमानमावाहयति तदतः प्राङ् न किं चन स्वाय महिम्ने क्रियत एतेन ह तं प्रीणात्येतेनास्य[9] सो ऽमोघ[9] आवाहितो भवति ॥ ११ ॥ एज्या इषः कृणोत्विति प्रजा वा इषः प्रजा एवैतद्यायजूकाः करोति ता इमाः प्रजा अर्चन्त्यो यजमाना आसते[10] सो अध्वरा जातवेदा जुषताꣳ हविरिति यज्ञस्यैवास्मा एतत्समृद्धिमाशास्ते तेन हि महज्जयति यद्देवा हविर्जुषन्ते ॥ १२ ॥ अथ यदेते याज्यानुवाक्ये अत्रावक्लृप्ततमे भवतस्तृतीयसवनं वै स्विष्टकृद्वैश्वदेवं वै तृतीयसवनं पिप्रीहि देवां३[11] उशतो यविष्ठेति

1. Thus MSS. (cp. Mādhy. VI. 1. 3. 10). 2. वा° B. M. My. 3. सर्वाण्यशांतानि MSS. 4. इति om. M., perhaps rightly. 5. इष्ठा B. C. 6. धामन्नु° M. 7. °त्युक्त्का B. O., °त्युक्त्का C. M. 8. सोमस्याया° C. O. (in B. this passage is missing). 9. प्रीणात्येतेतस्य सोनि अमोघꣳ B̄. 10. आसते MSS. 11. देवां B., देवां२ My.

तदनुवाक्याया वैश्वदेवमग्ने यदद्य विशो अध्वरस्येति तद्याज्याया वैश्वदेवमेते हि तृतीयसवनस्य रूपं तस्मादेते याज्यानुवाक्ये अत्रावक्लृप्ततमे भवतः ॥ १३ ॥

17 त त्रिष्टुभौ भवतो ऽवीर्यं[1] वै वास्तु स्विष्टकृदिन्द्रियमु वै वीर्यं त्रिष्टुबिन्द्रियमेवैत-

18 द्वीर्यं वास्तुनि स्विष्टकृति दधाति ॥ १४ ॥ अनुष्टुभा उ हैके कुर्वन्ति वास्तु स्विष्टकृद्वास्त्वनुष्टुब्वास्तुनि वास्तु दधामेति पेसुकमु[2] वै वास्तु पिस्यति[3] ह प्रज-

19 या पशुभिर्यस्यैवं विदुषो ऽनुष्टुभौ कुर्वन्ति ॥ १५ ॥ तदु हेन्द्रद्युम्नो भाल्लवेयो ऽनुष्टुभमनुवाक्यां चक्रे त्रिष्टुभं याज्यामेतदुभयतः परिगृह्णानीति स ह रथात्प-पात स[4] रथात्पतित्वा बाहुमपिशश्रे ॥ १६ ॥ स हेक्षां चक्रे यत्किमकरं तत ईदृगापादिति स हैतदेव प्रतिपपात[5] यदेव यज्ञे विलोमाकरमिति[6] तस्माद्यज्ञे न विलोम कुर्यादुभे वैवानुष्टुभौ स्यातामुभे वा त्रिष्टुभौ सच्छन्दसावेव ॥ १७ ॥

20.21 स वा उत्तरार्धादवद्यत्युत्तरार्धे जुहोत्येषा हि तस्य देवस्य दिगत उ वा उत्पेदे तमेतेन भागेनाशमयꣳस्तस्मादुत्तरार्धादवद्यत्युत्तरार्धे जुहोत्यभ्यर्ध इतराभ्य आहु-तिभ्यो जुहोतीतरा वा आहुतीः पशवो ऽनुप्रजायन्ते ऽथैषा रुद्रिया[7] यत्स्विष्ट-कृत्स यद्धेतराभिराहुतिभिः सꣳसृजेद्रुद्रियेण ह पशून्प्रसजेत्ते ऽस्य गृहाः पशव उपमूर्यमाणा ईयुर्नेद्रुद्रियेण पशून्प्रसजानीति तस्मादभ्यर्ध इतराभ्य आहुतिभ्यो

22 जुहोति ॥ १८ ॥ तदेष वाव स यज्ञो येन देवा दिवमुपोदक्रामन्यदाहवनीयो ऽथ यो ऽहीयत स गार्हपत्यस्तस्माद्गार्हपत्यात्प्राञ्चमाहवनीयमुद्धरन्ति[8] तथैव दिव-

23.24 मुपोत्क्रामति ॥ १९ ॥ तमष्टासु विक्रमेष्वादधीताष्टाक्षरा वै[9] गायत्री गायत्र्यै-वैतद्दिवमुपोत्क्रामत्यथो एकादशस्वेकादशाक्षरा वै त्रिष्टुप् त्रिष्टुभैवैतद्दिवमुपो-त्क्रामत्यथो द्वादशसु द्वादशाक्षरा वै[10] जगती जगत्यैवैतद्दिवमुपोत्क्रामति ॥२०॥

---

1. वीर्यं B 2 पिषुक° M. 3. पिष्यति M. 4. सह B. 5. Thus MSS. ( also V. 1. 5. 3 ), read °पपाद ? 6. Thus emended, °करादिति MSS. 7. रुद्रिया MSS. 8. °रति B. 9. om. B M. O. 10. om B. C. O. M.

तदु नाद्रियेत यावद्वाव क्रियच्च[1] गार्हपत्यात्प्राश्चमाहवनीयमुद्धरन्त्यथैतावन्मात्रं[2] 25
तेनैव दिवमुपोत्क्रामति तस्माद्यत्रैव स्वयं मनसा मन्येत तदादध्यात्तदाहवनीये
हवींषि श्रपयन्ति[3] ॥ २१ ॥ एष वाव स यज्ञो येन देवा दिवमुपोदक्रामन्य- 26 27
दाहवनीयस्तेन ह्यर्चन्तः श्राम्यन्तो[4] ऽचरन्त्स यदाहवनीये हवींषि श्रपयन्ति
यज्ञे यज्ञं तनवामहा इत्यपस्खल इव स हविषां यद्गार्हपत्य उतो गार्हपत्ये श्रपय-
न्त्याहवनीयो वा एष इति तस्मै वा एष यदेतस्मिञ्छृतं जुहुयुरिति न वा एष
तस्मै यदेतस्मिन्नशृतꣳ श्रपयेयुरिति तस्माद्गार्हपत्य एव श्रपयेयुस्तदुभयमेव कृतम्
॥ २२ ॥ स हैष यज्ञ उवाच नग्नताया वै बिभेमीति का ते ऽनग्नतेत्यभित 28
एव मा परिस्तृणीयुरिति तस्मादभितः परिस्तरितवै ब्रूयाद्यज्ञस्यैवानग्नताया अथ[5]
होवाच पिपासाया वै बिभेमीति का ते तृप्तिरिति ब्राह्मणस्यैव तृप्तिमनु तृप्येयमिति
तस्मादु संस्थिते यज्ञे ब्राह्मणं तर्पयितवै ब्रूयाद्यज्ञमेवैतत्तर्पयति ॥ २३ ॥
प्रथमं ब्राह्मणम् ॥

M. I. 7. 4.

K. II. 7. 2.

प्रजापतिर्ह वै स्वां दुहितरमभिदध्यौ दिवं वोषसं वा मिथुन्येनाꣳ स्यामिति 1.
ताꣳ संबभूव ॥ १ ॥ तदु वै देवानामतथास[6] यत्रेत्थꣳ स्वां दुहितरमस्माकꣳ 2.3
स्वसारं करोतीति त ऊचुरिमं देवं यो ऽयं पशूनामीष्टे ऽतिसंधं वा अयं चरतीति
य इत्थꣳ स्वां दुहितरमस्माकꣳ स्वसारं करोति[7] विध्येममिति तथेति तमभ्यायत्य
विव्याध तस्य विद्धस्य सामि रेतः प्रचस्कन्द तथेन्नूनं तदास ॥ २ ॥ अथाप्ये- 4
तदृषिणाभ्यनूक्तं पिता यत्स्वां दुहितरमधिष्कन्क्ष्मया[8] रेतः संजग्मानो निषिञ्च-
दिति तद्वाग्निमारुतमित्युक्तं[9] तस्मिꣳस्तद्व्याख्यायते[9] यथा यथा तद्देवा रेतः सिक्तं

1. Thus M only, कीयत्स C. ( pr. m. ), My., कुर्यात्स B. O. P. C. ( sec. m. ). 2. °द्धरत्य° B ; all exc. M. त्यथै° instead of त्यप्ये°. 3. श्रपयंति MSS. 4. श्राम्यंतो MSS. 5. अथो B. 6. देवानामतथास MSS. 7. करोतीति M. 8. °धिष्कं-क्ष्मया M., °धिकांदयया C. O. P., °धिकांदमया B. My. 9. °मित्युक्तस्तस्मि° B.; cp. V 4. 4. 4.

प्राजनयꣳस्त उ वै देवा यदैषां क्रोधो वीयायाथैनं[1] ततो ऽभिषज्यꣳस्तस्य त-
5 शल्यं निरकृन्तन्त्स वै यज्ञ एव प्रजापतिः ॥ ३ ॥ त ऊचुरुपजानीतेति कनीयो
6 हाहुतेः कथमिदं नामुया स्यादुपजानीतेति ॥ ४ ॥ त ऊचुर्भगायैव दक्षिणत
आसीनाय परिहरतेति तद्भगः प्राशिष्यति तदेव यथा हुतमेवं भविष्यतीति[2] तद्भ-
गाय दक्षिणत आसीनाय पर्याजर्हुस्तद्भगो ऽवेक्षां चक्रे तदस्याक्षिणी निर्ददाह
7 तथेन्नूनं तदासाथाहुरन्धो[3] भग इति ॥ ५ ॥ त ऊचुर्नो न्वा अत्राशमत्पूष्णे
परिहरतेति तत्पूष्णे पर्याजहुस्तत्पूषा प्राश तदस्य दन्तान्निर्जघान तथेन्नूनं तदा-
साथाहुरदन्तकः पूषेत्यथो यथैवादन्तकायैवं प्रपिष्टानां पौष्णं चरुꣳ श्रपयन्ति
8 ॥ ६ ॥ त ऊचुर्नो न्वा अत्राशमद्बृहस्पतये परिहरतेति तद्बृहस्पतये पर्याजहुः
स[4] ह[4] बृहस्पतिः सवितारमेव प्रसवायोपससारेदं मे प्रसुवेति त्वत्प्रसूतं[5] मेदं मा
हिꣳसीदिति तथेति तदस्मै सविता प्रासुवत्तदेनꣳ सवितृप्रसूतं[6] नाहिनत्ततो[6]
9 ऽर्वाक् शान्तम् ॥ ७ ॥ तदेतन्निदानेन[7] यत्प्राशित्रꣳस यत्प्राशित्रमवद्यत्यावि-
द्धमेवैतद्यज्ञस्य रुद्रियं निर्मिमीते[8] तदाविद्धं यज्ञस्य रुद्रियं निर्मायाप उपस्पृश-
10-12 त्यापो वै शान्तिस्तदद्भिः शान्त्या शमयत्यथेळां पशून्त्समवद्यति ॥ ८ ॥ स
यावन्मात्रमिवैवावद्येत्तथाह शल्यः[9] प्रच्यवते[9] ऽन्यतरत आज्यं करोत्युपस्तीर्य
वा द्विर्हविषो ऽवदायोपरिष्टान्नाभिघारयत्यनुपस्तीर्य वाज्यं द्विर्हविषो ऽवदायो-
परिष्टादाज्यमभिघारयति तथा खदन्निस्रवति[10] तथा निःसरणवद्भवतीति तदु
तथा न कुर्यादुपस्तीर्यैवाज्यं द्विर्हविषो ऽवदायोपरिष्टादाज्यमभिघारयेत्तदेव[11] यथा
यज्ञस्यावदानमेवं तन्नाग्रेण परिहरेत्पुरस्ताद्धै प्रत्यञ्चो यजमानं पशव उपतिष्ठन्ते

1. Emended; वियायाथैनं B. C. P. वियाथैनं O, दि (धि) यायाथैनं M. 2. भवि-ष्यसीति C. O. P. 3. °रंधो MSS. 4. सह C. O My., स B., स M. 5. त्वत्प्रसूतं B. O. P. त्वत्प्रसूतं C. 6. प्रसूतं नाहिन° MSS. 7. तदेतंनिदानेन C. O. P., तदेतन्निदानेन B. 8. °मीते C. O. 9. शल्यः प्रच्यवते C. O. P., शल्यः प्रच्यवते B. 10. Emended; स्खदंनिस्रवति C. O., स्पदंनिस्रवति B., स्वदंनिस्खवति M. (स्प°=स्र°=ख°), स्कंदंनिस्रवति My. 11. °त्तथैव B.

यद्धाग्रेण परिहरेद्रुद्रियेण ह पशून्प्रसजेत्ते[1] ऽस्य[1] गृहाः पशव उपमूर्यमाणा ईयु-
स्तस्मात्तिर्यगेवातिप्रजिहीत तथाह रुद्रियेण पशून्न प्रसजति तिर्यगेव खलु निर्मि-
मीते ॥ ९ ॥ तद्ब्रह्मा प्रतिगृह्णाति देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां 13.14
पूष्णो हस्ताभ्यां प्रतिगृह्णामीति स यथैवादो बृहस्पतिः सवितारं प्रसवायोपससा-
रैवमेवैष एतत्सवितारं प्रसवायोपधावति तदस्मै सविता प्रसौति तदेनꣳ सवितृ-
प्रसूतं न हिनस्ति ॥ १० ॥ तत्प्राश्नात्यग्नेष्ट्वास्येन प्राश्नामीत्यग्निं वै[2] न किं 15-17
चन हिनस्ति तथैवैनं न हिनस्ति तन्न दद्भिः खादेन्नेन्म इदꣳ रुद्रियं दतो[3]
हिनसदित्यथाप आचामत्यापो वै शान्तिस्तदद्भिः शान्त्या शमयति ॥ ११ ॥
परिक्षाल्य पात्रं ब्रह्मभागं परिहरति ब्रह्मा वै दक्षिणतो यज्ञस्याभिगोप्तास्ते स एत- 18
मेव भागं प्रतिविदान आस्ते यत्प्राशित्रं तदस्मा एतत्पर्याहार्षुस्तत्प्राशीदथैतेन
भागी यदत ऊर्ध्वमसꣳस्थितं यज्ञस्य तदभिगोपायति ॥ १२ ॥ स यत्राह ब्रह्म- 19
न्प्रस्थास्याम इत्यैतस्माद्वचसो[4] ब्रह्मा वाचंयमः[5] स्याद्विवृहन्ति वा एतद्यज्ञं क्षिण्व-
न्ति[6] यन्मध्यतो[7] यज्ञस्येळया पाकयज्ञियया चरन्ति ब्रह्मा वा ऋत्विजां भिषक्त-
मस्तद्ब्रह्मा संदधाति न ह संदध्याद्यद्वाग्वद्यमान आसीत वाग्वै यज्ञस्तद्यज्ञꣳ संद-
धाति॥१३॥स यत्राह ब्रह्मन्प्रस्थास्याम इति तद्ब्रह्मा जपत्येतत्ते देव सवितर्यज्ञं प्राहु-21.22
रिति सविता वै देवानां प्रसविता सवितारमेवैतत्प्रसवायोपधावति बृहस्पतये ब्रह्मण
इति बृहस्पतिर्वै देवानां ब्रह्मा तद्य एव देवानां ब्रह्मा तस्मा एवैतन्निह्नुते तेन
यज्ञमव तेन यज्ञपतिमिति तद्यजमानमाह तेन मामवेति तदात्मानं नान्तरेति मनो
ज्योतिर्जुषतामाज्यस्येति मनसा वा इदꣳ सर्वमाप्तं तन्मनसैवैतत्सर्वꣳ संदधाति यत्किं
चिद्विवृळहं यज्ञस्याथ समृद्ध एव यज्ञो बृहस्पतिर्यज्ञमिमं तनोतु। अरिष्टं यज्ञꣳ स-

1. पशून्प्रसजेत्तस्य B., पशून्प्रसजेत्येस्य C. O. P., पशून्प्रसजेत्तस्य M.
2. Om. B.
3. दतो B., ततो the other MSS.
4. इत्येतस्मा° MSS.
5. °यमः MSS.
6. क्षुण्वन्ति M.
7. तन्मध्यतो B.

मिमं दधात्विति तदेनᳪ संदधाति विश्वे देवास इह मादयन्तामिति सर्वे वै विश्वे देवाः सर्वेणैवैतत्संदधाति यत्किं चिद्विवृळ्हं यज्ञस्याथ समृद्ध एव यज्ञः[1] प्रतिष्ठेति[1] ब्रूयाद्यदि कामयेत यद्यु कामयेतापि नैवाद्रियेत ॥ १४ ॥ द्वितीयं ब्राह्मणम् ॥

M. I. 8. 1. K. II. 7. 3.

1-3 मनवे ह वा उदकमाजह्रुः प्रातरवनेज्यं यथेदं पाणिभ्यामवनेजनायाहरन्ति तस्य हावनेनिजानस्य मत्स्यः पाणिमापेदे स हास्मै वाचमुवाद बिभृहि मा पारयितास्मि वै त्वेति ॥ १ ॥ स होवाच कस्मान्मा पारयितासीति स होवाचौघ इमाः सर्वाः प्रजा निर्वोळ्हेति तत्त्वा पारयितास्मीति स होवाच स कथं भार्योऽसीति स होवाच यावद्वै क्षुल्लका भवाम इति बह्वी वै नस्तावन्नाष्ट्रा भवतीति होवाचोत मत्स्य एव मत्स्यं गिरतीति स कुम्भ्यां माग्रे बिभृहीति स यदा तामतिवर्धा अथ कर्षू खात्वा स यदा तामतिवर्धा अथ मा समुद्रमभ्यवहरतादिति होवाच तर्हि वा अतिनाष्ट्रो भवितास्मीति शश्वद्ध झष आस[2] स[2] हि ज्येष्ठं

4.5 वर्धते ॥ २ ॥ स होवाचेतिथीं[3] वै समामौघ आगन्तेति तन्नावमुपकल्प्योपासासै स औघ उत्थिते नावमापद्यासै तत्त्वा पारयितास्मीति तं तथा भृत्वा समुद्रमभ्यवजहार स यतिथीᳪ समां परिदिदेश तदयं नावमुपकल्प्योप निषसाद स औघ उत्थिते नावमापेदे तᳪ स मत्स्य उपन्यापुप्लुवे तस्य नावः[4] पाशᳪ शृङ्गे प्रति-

6 मुमोच तेन हैतमुत्तरं गिरिमभिदुद्राव[5] ॥ ३ ॥ स होवाचापीपरं वै त्वा प्र मा मुञ्चेत्यत्र वृक्षे नावं प्रबध्नीष्व मा तु त्वा गिरौ सन्तमुदकमन्तश्छैत्सीन्मा त्वा विहासीद्यावद्यावदुदकᳪ[6] समवायत्तावत्तावदन्ववसर्पासीति[7] स ह मनुस्तथान्वव-

1. यज्ञः प्रतिष्ठाति MSS.
2. आसस MSS.
3. °चेतिधीयं B. C. O. P., °चेतिधीयं My., च । इतीदं M.
4. नावः MSS.
5. Thus C. O. P., °मधिदुद्राव B. My., °मतिद्रद्राव M.
6. Emended; विहासिद्या° M., विहासद्या° B., विहासैद्या° C. O. P. My., (cp. Böhtlingk in Z. D. M. G. LIV. 510 sqq.).
7. Thus all the MSS.

ससर्प तद्धाप्येतर्ह्येतस्योत्तरस्य गिरेर्मनोरवसर्पणमिति तदौघ इमाः सर्वाः प्रजा
निरुवाहाथेदं मनुरेवैकः परिशिशिषे ॥ ४ ॥ सोऽर्चञ्छ्राम्यन्प्रजाकामश्चचार 7
तत्र[1] हापि[1] पाकयज्ञेनेजे घृतं दधि मस्त्वामिक्षामिति तद्ध संवत्सरमप्सु जुहवां
चकार ततो ह संवत्सरे योषित्संबभूव सा[2] ह पिब्दमानेवोदेयाय[2] तस्या ह स्म
घृतं पदे संतिष्ठते तया ह मित्रावरुणौ[3] संजग्माते ताꣳ होचतुः[4] कासीति ॥५॥
सा होवाच मनोर्दुहितेति ताꣳ होचतुरावयोरेव ब्रूष्वेति नेति होवाच य एव माम- 8
जीजनत तस्यैवाहमस्मीति तस्यामपित्वमीषाते तद्वा जज्ञौ तद्वा नाति[5] त्वियाय[5]
स मनुमाजगाम ताꣳ होवाच मनुः कासीति ॥ ६ ॥ सा होवाच तव दुहितेति 9
स होवाच कथं भगवति मम दुहितेति सा होवाच या इमाः संवत्सरमप्स्वाहुती-
र्हौषीरिति घृतं दधि मस्त्वामिक्षामिति ततो मामजीजनथा इति होवाच[6] साशी-
रस्मि[7] तां मा यज्ञेऽवकल्पय यज्ञे चेद्वै मावकल्पयिष्यसीति बहुः प्रजया पशुभि-
र्भविष्यसि यामु कां च मयाशिषमाशासिष्यसे[8] तां ते समर्धयिष्यामीति तामे-
तन्मध्ये यज्ञस्यावाकल्पयन्मध्यꣳ हि तद्यज्ञस्य यदन्तरा प्रयाजानुयाजान् ॥ ७ ॥
तयार्चञ्छ्राम्यन्निमां प्रजातिं प्राजायत येयं मनोः प्रजातिर्याम्वेनया कां चाशि- 10.11
षमाशास्त[9] सास्मै समार्ध्यत सैषा निदानेन यदिळा स य एवं विद्वानिळया
चरत्येताꣳ हैव प्रजातिं प्रजायते येयं मनोः प्रजातिर्याम्वेनया कां चाशिषमा-
शास्ते सास्मै[10] समृध्यते ॥ ८ ॥ सा वै पञ्चावत्ता भवति पशवो वा इळा पाङ्क्ता 12-15
वै पशवस्तस्मात्पञ्चावत्ता भवति ताꣳ समवदाय पुरोळाशस्य पूर्वार्धे प्रश्रीय ध्रुवा-

---

1. Thus (without acc.) M. My., तत्राहापि B. C. O. P.
2. साहविद्मानेº C. (pr. m.), साहापिº C. (sec. m.), साहापिद्मानेº O. P, साहविद्यमानेº M., साहपिद्दुग्द्माने B., सहपितृमानेº My.
3. मित्राº C. O.
4. ºतुः MSS.
5. Thus (without acc.) M., ºतित्वीयाय the other MSS.
6. होवाच MSS.
7. साशिरº C. O. P.
8. Thus B, मयायूयमाशिषमाº (after IV. 5. 1. 13) C. O. P. and (without acc.) M. My, pointing perhaps to मयामुयाशिषº.
9. चाशिषमाशास्त MSS.
10. सोस्मै C. (sec. m.) O.

मग्रेण निधाय होत्रे प्रदाय दक्षिणातिक्रामति स इह होतुर्निलिम्पति तद्धोतौष्ठयोर्निलिम्पते[1] मनसस्पतिना ते हुतस्याश्नामीषे प्राणायेत्यथ द्वितीयं वाचस्पतिना

16 ते हुतस्याश्नाम्यूर्ज उदानायेति स यदेवमोष्ठयोर्निलिम्पते[2] ॥ ९ ॥ एतस्माद्ध वै मनुर्बिभयां चकारेदं वै मे तनिष्ठं यज्ञस्येति यदियमिळा पाकयज्ञिया यद्वै म इह यज्ञं नाष्ट्रा रक्षाꣳसि न हन्युरिति तामेतत्पुरा रक्षोभ्यः पुरा रक्षोभ्य इत्येव प्राप्रयत तथो वा एनामेष एतत्पुरा रक्षोभ्यः पुरा रक्षोभ्य इत्येव प्रापयते स यन्न प्राश्नाति नेदनुपहूतां प्राश्नानीत्येतदेव[3] प्रापयते यदोष्ठयोर्निलि-

17 म्पते[4] ॥ १० ॥ अथ होतुः पाणावक्षयति तदेनामक्षतामेव सतीं प्रत्यक्षꣳ हो-

18 तरि श्रयति तया होतात्मनि श्रितया यजमानायाशिष आशास्ते[5] ॥ ११ ॥ स उपाꣳशूपह्वयत एतस्माद्ध वै मनुर्बिभयां चकारेदं वै मे तनिष्ठं यज्ञस्येति यदियमिळा पाकयज्ञिया यद्वै म इह यज्ञं नाष्ट्रा रक्षाꣳसि न हन्युरिति तामेतत्पुरा रक्षोभ्यः पुरा रक्षोभ्य इत्येवोपाꣳशूपाह्वयत तथो वा एनामेष एतत्पुरा रक्षोभ्यः पुरा रक्षोभ्य

19 इत्येवोपाꣳशूपह्वयते ॥ १२ ॥ स उपह्वयत उपहूतꣳ रथंतरꣳ सह पृथिव्योप माꣳ रथंतरꣳ सह पृथिव्या ह्वयतामित्युपहूतं वामदेव्यꣳ सहान्तरिक्षेणोप मां वामदेव्यꣳ सहान्तरिक्षेण ह्वयतामित्युपहूतं बृहत्सह दिवोप मां बृहत्सह दिवा ह्वयतामिति स एतामेवोपह्वयमान[6] एतानि च सामान्युपह्वयत[7] इमाꣳश्च लोकान्

20-23 ॥ १३ ॥ उपहूता गावः सर्षभा उप मां गावः सर्षभा ह्वयन्तामिति तदेनां परोक्षमुपह्वयते पशवो वा इळा सर्षभा इति तदेनाꣳ समिथुनामुपह्वयत उपहूताः सप्तहोत्रा उप माꣳ सप्तहोत्रा ह्वयन्तामिति तदेनाꣳ सप्तहोत्राः[8] सौम्येनाध्वरेणोपह्वयत[9] उपहूतेळा ततुरिरिति तदेनां प्रत्यक्षमुपह्वयते ततुरिरिति सर्वान्ह्येष[10] पाप्म-

1. °लिंपति B.
2. Thus B., °र्निलिंपते C., °र्निलिंपति O.
3. MSS. exc. M. प्राश्नामी°.
4. °लिंपते C. O. °लिंपते B.
5. आशास्त C. O. P.
6. MSS. exc. M. स एतानेवो°.
7. °न्युवह्वयत B, °न्युपह्वयत C. O. P.
8. °होत्रा C. O. P. M.
9. We expect °यन्त.
10. We expect °ह्येषा.

नस्तरत्युपहूतः सखा भक्ष[1] इति प्राणो वै सखा भक्षस्तत्प्राणमुपह्वयत उपहूतꣳ हृगिति[2] तच्छरीरमुपह्वयते तदेनामेतत्सर्वामेव सशरीरमुपह्वयते[3] ॥ १४ ॥ अथे- 24 ळोपहूतोपहूतेळोपो ऽस्मां३ इळा ह्वयतामिळोपहूतेति तदेनामुपहूतामेव सतीं प्रत्य-क्षमुपह्वयते स वै[4] चतुरुपह्वयते[5] या वै सास गौर्वै सास चतुष्पदी वै गौस्तस्माच्च-तुरुपह्वयते तदेतत्समानमेव[6] सन्नानेवाजामितायै[6] ॥ १५ ॥ जामि हि कुर्याद्यदि- 25 ळोपहूतेळोपहूतेति वैवोपह्वयेतोपहूतेळोपहूतेळेति[7] वेळोपहूतेति[8] तदेनामर्वाचीमुप-ह्वयत उपहूतेळेति तदेनां पराचीमुपह्वयत उपो ऽस्मां३ इळा ह्वयतामिति तदात्मानं च नान्तरेत्यन्यथेव च भवतीळोपहूतेति[9] तदेनामर्वाचीमुपह्वयते तदेनामेतदर्वाचीं चैव पराचीं चोपह्वयते ॥ १६ ॥ मानवी घृतपदी मैत्रावरुणीति मनुर्ह्येतामग्रे[10] 26-29a ऽजनयत तस्मादाह मानवीति घृतपदीति यदस्या घृतं पदे समतिष्ठतोत मैत्रावरु-णीति यन्मित्रावरुणाभ्याꣳ संजग्मे[11] स मैत्रावरुणो न्यङ्गो ब्रह्म देवकृतोपहूतेति ब्रह्म ह्येषा[12] देवकृतोपहूतोपहूता दैव्या अध्वर्यव उपहूता मनुष्या इति तद्दैव्याꣳश्चाध्वर्यूनुपह्वयते य उ चेमे मानुषा वत्सा वै दैव्या अध्वर्यवो ऽथ य इतरे ऽध्वर्य-वस्ते मानुषा य इमं यज्ञमवान्ये च यज्ञपतिं वर्धानित्येते वै यज्ञमवन्ति ये ब्राह्मणा अनूचाना य एनं तन्वते य एनं जनयन्ति वत्सा उ वै वर्धा[13] यस्य ह्येते भूयिष्ठा भवन्ति स यज्ञपतिर्वर्धत उपहूते द्यावापृथिवी पूर्वजे ऋतावरी देवी देवपुत्रे इति तदिमे द्यावापृथिव्या उपह्वयते ययोरिदꣳ सर्वमध्युपहूतो ऽयं यजमान इति ॥१७॥ स न नाम गृह्णाति परोक्षꣳ ह्यत्राशीर्मानुषꣳ ह कुर्याद्यन्नाम गृह्णीयाद्यद्वै तद्यज्ञ- 29b-32

1. भक्षय C. O. P.
2. Thus B., हे इति C. (pr. m.), ह इति (हो इति) m., हगिति C. (sec. m.), हरगिति O., होगिति My.
3. सशरीं MSS.
4. वैव B.
5. चतुरुपह्वयते C. O.
6. °नमेव सन्नानेवा° B.
7. °पहूयेतो° (instead of °पह्वयेतो°) B.
8. °विलोपहूतेति C. O.
9. भवती° C. O.
10. °तामग्रे B., °तामग्रे C. (sec.m.) O.
11. संजग्मे MSS.
12. ह्येष C. O., ह्येषो M.
13. Thus MSS.; read वधान्?

स्य यन्मानुषं तस्मान्न नाम गृह्णात्युत्तरस्यां देवयज्यायामिति प्रजामेवास्मा एतत्परोक्षमाशास्ते ऽमुꣳ हि लोकमात्मनैत्यथेह प्रजा[1] यजते[1] तत्प्रजोत्तरा देवयज्या जीवातुमेवास्मा एतत्परोक्षमाशास्ते यो हि जीवति स पूर्वमिष्ट्वाथापरं यजते पशूनेवास्मा एतत्परोक्षमाशास्ते यस्य हि पशवो भवन्ति स पूर्वमिष्ट्वा-

33-37 थापरं यजते ॥ १८ ॥ उपहूतो भूयसि हविष्करण इति प्रजामेवास्मा एतत्परोक्षमाशास्त उत ह्येक[2] एवात्मना भवत्यथोत[3] प्रजायां[4] दशधा हविष्क्रियते तत्प्रजा भूयो हविष्करणं जीवातुमेवास्मा एतत्परोक्षमाशास्ते यो हि जीवति स पूर्वमिष्ट्वाथापरं भूयो भूय एव हविष्करोति[5] पशूनेवास्मा एतत्परोक्षमाशास्ते यस्य हि पशवो भवन्ति स पूर्वमिष्ट्वाथापरं भूयो भूय एव हविष्करोत्येषो[6] वा आशीर्जीवेयं प्रजा मे स्याच्छ्रियं गच्छेयमिति पशवो वै श्रीस्तदेताभ्यां द्वाभ्यां पर्याप्नोति तस्मादेते एव द्वे आशिषावाशास्त इदं मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूत इति यज्ञस्यैवास्मा एतत्समृद्धिमाशास्ते तेन हि महज्जयति यद्देवा हविर्जुषन्ते

38.39 ॥ १९ ॥ अथ खलु प्राश्नन्ति तां वा एतां नाग्नौ जुह्वति पशवो वा इळा नेत्पशूनग्नौ प्रवृणजामेत्येतेष्वेव प्राणेषु हूयते होतरि त्वदेवाध्वार्यौ ब्रह्मण्यग्नीधि यजमाने तद्यजमाने जुहोति यद्ध्रुवामग्रेण निदधाति ध्रुवा हि यजमानो ऽथ यत्प्रत्यक्षं यजमानो न प्राश्नाति नेदसꣳस्थिते प्राश्नानीत्येतदेव[7] प्राश्नाति यद्ध्रुवामग्रेण निदधाति ध्रुवा हि यजमानः सर्वे प्राश्नन्ति सर्वेषु मे हुतासदिति पञ्च

40 प्राश्नन्ति पशवो वा इळा पाङ्क्ता वै पशवस्तस्मात्पञ्च प्राश्नन्ति ॥ २० ॥ स यत्रैष एतादिळामुपह्वयते तच्चतुर्धा पुरोळाशं कृत्वा बर्हिषदं करोत्येतद्धात्र पितॄणां

---

1. प्रजायते B. My., प्रजाय(जि)ते M.
2. उतह्येक MSS.
3. भव॰ MSS.
4. ॰थोतत्प्रजायां MSS. exc. M.
5. ॰करोति B.
6. ॰करोत्येषो MSS.
7. प्राश्नामी॰ MSS. exc. M.

I. 7. 3. 21.

प्रजननेनावान्तरदिशो वै पितरश्चतस्रो वा अवान्तरदिशस्तस्माच्चतुर्धा पुरोळाशं कृत्वा बर्हिषदं करोति स यत्राहोपहूते द्यावापृथिवी इति तदग्नीदुपसीदति तस्मा प्रादधाति ॥ २१ ॥ स प्राश्नात्युपहूता पृथिवी मातोप मां पृथिवी माता ह्वयता- 41 मग्निराग्नीध्रात्स्वाहेत्यथ द्वितीयमुपहूतो द्यौः पितोप मां द्यौः[1] पिता[1] ह्वयतामग्नि-राग्नीध्रात्स्वाहेति द्यावापृथिव्यो[2] ह्यग्नीत्तस्मादेवं प्राश्नाति स यत्रैष एतदाशिषमा-शास्ते ॥ २२ ॥ तद्यजमानो जपति मयीदमिन्द्र इन्द्रियं दधात्वस्मान्रायो मघ- 42.43 वानः सचन्ताम् । अस्माकꣳ सन्त्वाशिषः सत्या नः सन्त्वाशिष इत्याशिषामेवैष प्रतिग्रहस्तद्या एवास्मा इम ऋत्विज आशिष आशासते ता एवैतत्प्रतिगृह्यात्मनि कुरुतेऽथ पवित्रवति मार्जयन्ते पाकयज्ञियया वा इदमिळयाचारिषुः[3] पवित्रपूता यदत ऊर्ध्वमसꣳस्थितं यज्ञस्य तत्तनवामहा इति ॥ २३ ॥ तृतीयं ब्राह्मणम् ॥

K. II. 7. 4. M. I. 8. 2.

ते वा एते उल्मुके उदूहन्त्यनुयाजेभ्यः स यदेते उल्मुके उदूहन्ति[4] यात- 1. याम्नेव वा एतदग्निर्भवति देवेभ्यो हि यज्ञमूहिवान्भवति तदस्मिन्नयातयाम्न्यनुयाजाꣳस्तꣳस्यामहा[5] इति तस्माद्वा एते उल्मुके उदूहन्ति ते पुनरनुसꣳस्पर्शयन्त्यग्निमेवैतत्पुनराप्याययत्ययातयामानं करोति तस्मात्पुनरनुसꣳस्पर्शयन्ति ॥ १ ॥ अथ समिधमभ्यादधाति समिन्द्ध एवैनं तया समिद्धे यदत ऊर्ध्वमसꣳ- 3 स्थितं यज्ञस्य तत्तनवामहा इति ॥ २ ॥ ताꣳ होतानुमन्त्रयत एषा ते अग्ने स- 4 मित्तया वर्धस्व चा च प्यायस्व । वर्धिषीमहि च वयमा च प्यासिषीमहीति स यथैवादोऽग्नये समिध्यमानायान्वाहैवमेवैतदन्वाह तदेतद्ध्रुवोतुः कर्म यदि तु

---

1. द्यौष्पिता C. (sec. m).
2. द्यावापृथिव्यो MSS.
3. °चार्षुः C. O.
4. उदूहंति C. O.
5. तदस्मिन्नयातयामनुयाजा° B., तदस्मिन्नयातयाम्यनुयाजा° the other MSS.

5 यजमानो मन्येत नैतद्धोता वेदेत्यपि स्वयमेवानुमन्त्रयेत ॥ ३ ॥ अथ संमार्ष्टि
ग्निमेवैतद्युनक्ति युक्तो यदत ऊर्ध्वमसंस्थितं यज्ञस्य तद्वहादिति स सकृत्सकृत्सं
मार्ष्टि त्रिस्त्रिर्वै देवेभ्यः संमार्ष्टि नेत्तथा करवाणि यथा देवेभ्य इत्यजामिताया

6 उ[1] एव[1] जामि हि कुर्याद्यत्त्रिः पूर्वंसंमृज्यात्त्रिरपरम्[2] ॥ ४ ॥ स संमार्ष्टि
वाजजिद्वाजं त्वा ससृवांसं वाजजितंसंमार्ज्मीति सरिष्यन्तमिति वा अग्र आह
सरिष्यन्निव हि तद्भवत्यथात्राह ससृवांसमिति ससृवानिव ह्यत्र भवति

7 ॥ ५ ॥ अथानुयाजान्यजति स यदनुयाजान्यजति या वा एतेन यज्ञेन देवता
ह्वयति याभ्य एष यज्ञस्तायते सर्वा वै ता एतदिष्टा भवन्ति स यत्तासु सर्वा-

8.9 स्विष्टास्वथानुयजति तस्मादनुयाजा नाम[3] ॥ ६ ॥ अथ यद्वेवानुयाजान्यजति
पशवो वै देवानां छन्दांसि तद्यथा[4] हेदं पशवो युक्ता मनुष्येभ्यो वहन्त्येवं[5]
ह छन्दांसि युक्तानि देवेभ्यो यज्ञं वहन्ति स[6] यदैतच्छन्दांसि[6] देवान्त्सम-
तर्पयन्नथैतच्छन्दांसि देवाः समतर्पयन्ननुयाजेषु तदतः प्राक्तदभूद्यच्छन्दांसि
देवेभ्यो यज्ञमवाक्षुर्यदेनान्त्समतीतृपन्नथैतच्छन्दांस्येव संतर्पयति यदनुयाजान्य-
जति तस्माद्येन वाहनेन चरेत्तद्विमुच्य[7] ब्रयात्पाययतोपादानं[8] गमयतेति स वाह-

10 11 नस्यापह्नवः ॥ ७ ॥ स वै बर्हिः प्रथमं यजति गायत्री वै प्रथमा युज्यते कनिष्ठा
छन्दः सती[9] तदु सा वीर्येण युज्यते यच्छ्येनो भूत्वा दिवः सोममाभरत्तेन वी-
र्येण तद्वयथायथं[10] मन्यन्ते यत्कनिष्ठा छन्दः सती[9] सा प्रथमा युज्यत[11] इति तद्वत्र
देवा यथायथं[12] छन्दांस्यकल्पयन्ननुयाजेषु[13] नेत्पापवस्यसमसदिति[14] तस्माद्बर्हिः

---

1. उयेव M. ( read उवेव ?).
2. संमृज्या° MSS.
3. नाम B.
4. तद्यथा C. O.
5. °वं MSS.
6. सयथैत° B. M.
7. चरेत्तस्माद्विमुच्य MSS. exc. M.
8. °तोपादनं C. O. P., °तोत्पादानं B., °तोपादान M. My.
9. सति MSS.
10. तद्वद्यथायथं C. O.
11. युज्यत MSS.
12. यथायथं C. O.
13. छंदांस्वकल्प° B.
14. °वस्यसनसादिति C O.

प्रथमं यजत्योषधयो[1] वै बर्हिस्ता अस्यां प्रतिष्ठितास्तदस्यामिदꣳ सर्वं जगत्तेनेयं
जगती तज्जगतीं प्रथमामकुर्वन् ॥ ८ ॥ अथ नराशꣳसं प्रजा वै नरस्ता इमा 12
अन्तरिक्षमनु वावद्यमानाश्चरन्ति य उ वै वदति शꣳसतीति वै तमाहुरन्तरिक्षं वै
नराशꣳसो ऽन्तरिक्षं त्रिष्टुप्तत्त्रिष्टुभमनूचीमकुर्वन् ॥ ९ ॥ अथाग्निमुत्तमं[2] गायत्री 13
वा अग्निस्तद्गायत्रीमुत्तमामकुर्वन्नेवमु खलु[3] छन्दाꣳसि यथायथं क्लृप्तानि प्रतिति-
ष्ठन्ति तस्माद्विदमपापवस्यसम् ॥ १० ॥ सो ऽतिक्रम्याध्वर्युराश्राव्याह[4] देवान्य- 14
जेति देवान्देवानिति सर्वान्होता यजति देवानाꣳ ह वै देवाः सन्ति छन्दाꣳ-
स्येव पशवो ह्येषां गृहा हि पशवः प्रतिष्ठा हि गृहाश्छन्दाꣳस्यु वा अनुयाजास्त-
स्माद्देवान्यजेत्येवाध्वर्युराह देवान्देवानिति सर्वान्होता यजति ॥ ११ ॥ अथ 15.16
यद्वसुवने वसुधेयस्य वेत्विति यजति देवतायै वै हविर्गृह्यते देवतायै वषट्क्रियते
नो वा अत्र देवतास्त्यनुयाजेषु देवं बर्हिरिति तन्नाग्निर्नेन्द्रो न सोमो देवो नराशꣳ-
स इति नातो ऽन्यतरच्चन य उ अत्राग्निर्गायत्री स निदानेन[5] तेषां देवते स्त[6] इन्द्राग्नी
एवाग्निरेव[7] वसुवनिरिन्द्रो वसुधेय एवमस्यैतद्देवतायै वषट्कृतं भवति देवतायै[8]
हुतं तस्मात्सर्वेष्वनुयाजेषु वसुवने वसुधेयस्य वेत्विति यजति ॥ १२ ॥ अथो- 17
त्तममनुयाजमिष्ट्वा समानीय जुहोति प्रयाजानुयाजा वा एते स यथैवादः प्रया-
जेष्वत्त आद्यं बलिꣳ हारयति यजमानाय द्विषन्तं भ्रातृव्यमेवमेवैतदनुयाजेषु
बलिꣳ हारयत्यत्त आद्यं यजमानाय द्विषन्तं भ्रातृव्यम् ॥ १३ ॥ चतुर्थं ब्राह्म-
णम् ॥ सप्तमो ऽध्यायः ॥

K. II. 8. 1. M. I. 8. 3.

स वै स्रुचावेव व्यूहत्यग्नीषोमयोरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहा- 1

1. यजत्यौषधयो C. O. P.
2. °त्तमं MSS.
3. खलु MSS.
4. read °राश्राव्याह ?
5. निदानेन B., विदानेन O. C.
6. स्त MSS.
7. एवाग्निरेव C. O., एवाग्निरेव B.
8. तद्देवतायै B.

मीति जुहूं प्राचीं दक्षिणेन पाणिनाग्नीषोमौ तमपनुदतां यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामीति प्रतीचीमुपभृतꣳ सव्येन पाणिना यदि स्वयं

2 यजमानः ॥ १ ॥ यद्यु वा अध्वर्युरग्नीषोमयोरुज्जितिमनूज्जयत्वयं यजमानो वाजस्यैनं प्रसवेन प्रोहाम्यग्नीषोमौ तमपनुदतां यमयं यजमानो द्वेष्टि यश्चेमं यजमानं द्वेष्टि वाजस्यैनं प्रसवेनापोहामीत्यग्नीषोमीयꣳ हि पौर्णमासꣳ हविर्भवति ॥ २ ॥

3 अथामावास्यायामिन्द्राग्न्योरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामीन्द्राग्नी तमपनुदतां यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामीति यदि स्वयं

4 यजमानः ॥ ३ ॥ यद्यु वा अध्वर्युरिन्द्राग्न्योरुज्जितिमनूज्जयत्वयं यजमानो वाजस्यैनं प्रसवेन प्रोहामीन्द्राग्नी तमपनुदतां यमयं यजमानो द्वेष्टि यश्चेमं यजमानं द्वेष्टि वाजस्यैनं प्रसवेनापोहामीत्यैन्द्राग्नꣳ ह्यामावास्यꣳ हविर्भवत्येवं यथादेवतं

5.6 व्यूहति ॥ ४ ॥ स यदेवꣳ स्रुचौ व्यूहति यजमानो वै जुहूमनु यो ऽस्मा अरातीयति स उपभृतꣳ स प्राञ्चमेव यजमानमुदूहत्यपाञ्चं तमपोहति यो यजमानायारातीयत्यत्ता वै जुहूमन्वाद्य उपभृतं प्राञ्चमेवात्तारमुदूहत्यपाञ्चमाद्यं तदेतत्समान एव कर्मणि व्याक्रियते तस्मात्समानादेव पुरुषादत्ता चाद्यश्च जायेते[1] उत हि तृतीये पुरुषे संगच्छामहे चतुर्थे संगच्छामह इति विदेवं विदीव्यमाना आसते

7 जातीया अस्य स इति[2] ॥ ५ ॥ अथ परिधीन्त्समनक्ति तद्यथैव देवेभ्यो ऽहौ-

8 षधिया यज्ञꣳ समतिष्ठिपत्तयैवैतत्परिधीन्प्रीणाति ॥ ६ ॥ स समनक्ति वसुभ्यस्त्वा रुद्रेभ्यस्त्वादित्येभ्यस्त्वेत्येते वै त्रया देवा यद्वसवो रुद्रा आदित्यास्तस्मादेनꣳ

9 समनक्ति ॥ ७ ॥ अथ परिधीनभिपद्याश्रावयति परिधिभ्यो ह्येतदाश्रावयति

10 यज्ञो वा आश्रावणं तदेनान्प्रत्यक्षं यज्ञेन प्रीणाति[3] ॥ ८ ॥ स वा आश्राव्याहेषिता दैव्या होतारो भद्रवाच्याय प्रेषितो[4] मानुषः सूक्तवाकायेति दैव्या वा एते

1. जायेते O., जायत B.
2. इति MSS.
3. प्रीणाति B.
4. प्रे॰ B.

होतारो यत्परिधयो ऽग्नयो हि तानेवैतदाहेष्टा[1] दैव्या होतार इति यदाहेषिता दैव्या होतार इति भद्रवाच्यायेति स्वयं वात्र देवा युक्ता यत्साधु कुर्युर्यत्साधु वदेयुस्तस्मादाह भद्रवाच्यायेति प्रेषितो मानुषः सूक्तवाकायेति तदिमं[2] मानुषꣳ होतारꣳ सूक्तवाकाय प्रसौति ॥ ९ ॥ अथ प्रस्तरमनुप्रहरति यजमानो वै प्रस्तरः 11 स यत्रैवास्यैतद्यज्ञो गच्छति तदेवैतद्यजमानꣳ स्वगाकरोति देवलोकं वा अस्य यज्ञो गच्छति देवलोकमेवैनमपिनयति ॥ १० ॥ तमादत्ते संजानाथां द्यावा- 12 पृथिवी इति यदि वृष्टिकामः स्याद्यदा वै द्यावापृथिव्यौ[3] संजानाते अथ वर्षति[4] मित्रवरुणौ त्वा वृष्ट्यावतामिति प्राणोदानौ वै मित्रावरुणावयमु वै वृष्टेरीष्टे यो ऽयं पवते स वा अयमेक इवैव पवते सो ऽयं पुरुषे ऽन्तः प्रविष्टः प्राङ् च प्रत्यङ् च तौ प्राणोदानौ स यो वृष्टेरीष्टे स त्वा वृष्ट्यावत्वित्येवैतदाह तदेतेनैवादेयं[5] यदा[6] ह्येव द्वा च वृष्ट्याꣳ शमिव ॥ ११ ॥ अथैनमनक्त्याहुतिमेवैनं तत्करोत्याहुतिर्भूत्वा देव- 13 लोकं गच्छादिति सो ऽग्रं जुह्वामनक्ति मध्यमुपभृति मूलं ध्रुवायामग्रमिव हि जुहूर्मध्य- मिवोपभृन्मूलमिव ध्रुवा ॥१२॥ सो ऽनक्ति व्यन्तु वयो रिप्तो[7] रिहाणा इति वय एवै- 14 नदेतत्कृत्वास्मान्मनुष्यलोकाद्देवलोकमभ्युत्पातयति ॥ १३ ॥ तमनुप्रहरति मरुतां पृषतीं गच्छेति देवलोको वै मरुतां पृषती तं गच्छेत्येवैतदाह तं नीचैर्हरति 15 द्वयं[8] तद्यस्मान्नीचैर्हरतीयं[9] वै पृथिवी प्रतिष्ठास्या न्वेवैनं प्रतिष्ठाया[9] नोद्धन्त्यस्यामु चैव वृष्टिं नियच्छति ॥१४॥ सो ऽनुप्रहरति वशा पृश्निर्भूत्वा दिवं गच्छ ततो नो वृष्टिमावहेतीयं वै पृश्निर्यदस्यां मूलि चामूलं चोभयं तेनेयं पृश्निरियं भूत्वा देव-

1. तानेवैतदाह॰ MSS.
2. तदिदं B.
3. ॰पृथिव्यौ MSS.
4. वर्षति MSS.
5. Thus MSS., read. ॰वादेयं ?
6. तदा B.
7. रिप्तो B. O. P.
8. तद्वद्वयं B.
9. Thus emended (cp. II. 8. 4. 4), ॰हरतीयं वै पृथिवी प्रतिष्ठास्यान्वेवैनं प्रतिष्ठाया C. O. My., ॰हरतियं वै पृथिवी प्रतिष्ठास्याखेवैतत्प्रतिष्ठास्यायो B., ॰हर- तीत्ययं वै पृथिवी प्रतिष्ठास्यान्नेवैन M.

लोकं गच्छेत्येवैतदाह ततो नो वृष्टिमावहेति वृष्टाद्ध्यूर्ग्रसः सुभूतं जायते ॥ १५ ॥

16.17 अथ तृणमेकमपगृह्णाति[1] यद्ध सकृत्सर्वमनुप्रहरेत्क्षिप्रꣳ हामुं लोकं यजमान इयात्स[2] यत्तृणमेकमपगृह्णाति यावदेवास्येह मानुषमायुस्तस्मा[3] एवास्यैतदात्मानमपगृह्णाति तन्मुहूर्तं धारयित्वानुप्रहरति यद्ध[4] नानुप्रहरेदन्तरियाद्ध[5] देवलोकाद्यजमानं

18 ॥ १६ ॥ तं प्राञ्चमनुसमस्यति प्राची हि देवानां दिगथो उदञ्चमुदीची हि मनुष्याणां दिक्तमङ्गुलीभिरेव योयुप्यते[6] न काष्ठैर्दारुभिर्वा इतरꣳ शवं व्यूषन्ति[7]

19 नेत्तथा करवाणि यथेतरꣳशवमिति[8] ॥ १७ ॥ अथाग्नीदाहानुप्रहरेति यत्रवा अस्येतर आत्मागꣳस्तदस्यैतद्गमयेत्येवैतदाहानुप्रहृत्य[9] चक्षुष्पा असि चक्षुर्मे पाहि

20 त्यात्मानमभिमृशति तथो अध्वर्युरात्मानं न प्रवृणक्ति ॥ १८ ॥ अथाग्नीदाह संवदस्वेति संवादयैनं देवैरित्येवैतदाहागादग्नीदित्यगान्नित्येवैतदाह श्रावयेति तं देवेभ्यः श्रावय तमनुबोधयेत्येवैतदाह श्रौषळिति शृण्वन्ति[10] वा एनं विदुर्वा एन-मित्येवैतदाहैवमध्वर्युश्चाग्नीच्च संविदानौ[11] यजमानं देवलोकमपिनयतः ॥ १९ ॥

21 अथ परिधीन्त्स्वगाकरोति स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्य इति दैव्या वा एते होतारो यत्परिधयो ऽग्नयो हि तानेवैतत्स्वगाकरोति स्वस्तिर्मानुषेभ्य इति

22 तदस्मै मानुषाय होत्रे[12] ऽह्वलामाशास्ते ॥ २० ॥ अथ मध्यमं परिधिमनुप्रहरति यं परिधिं पर्यधत्था अग्ने देवपाणिभिर्गुह्यमानः । तं त एतमनु जोषं भराम्येष नेत्त्वदपचेतयाता इत्यग्नेः प्रियं पाथो ऽपीतमितीतरा उपसमस्यत्यग्नेः प्रियं

23.24 धामापीतमित्येवैतदाह ॥ २१ ॥ अथ स्रुचौ संप्रगृह्णात्यदो हैवैनामाहुतिं करोति

---

1. तृणमेकम॰ C. O. P.
2. ईयात्स MSS. exc. B.
3. मानुषमायु॰ B., मानुषमायु॰ C. O. P.
4. यद्ध MSS.
5. ॰दंतरीयाद्ध B. C. O. P. My., ॰दंत्य-र्याद्ध M.
6. योयुप्यते MSS.
7. व्यृष्यंति B.
8. ॰मिति C. O. P.
9. आत्मावाꣳस्त॰ C. O. My., आत्मा-कस्त॰ M.
10. शृण्वंति MSS.
11. संविधानौ M., संविवानौ My.
12. होत्र C. O.

यदनक्त्याहुतिर्भूत्वा देवलोकं गच्छादिति तद्विश्वेभ्यो देवेभ्यः संप्रगृह्णाति यदु वा
अनादिष्टं देवतायै[1] हविर्गृह्यते सर्वा वै तस्मिन्देवता अपित्विन्यो[2] मन्यन्ते[3] नो
वा एतत्कस्यै चन देवतायै हविर्गृह्णन्नादिशति यदाज्यं[4] तद्या एवास्मिन्देवता
अपित्विन्यो[2] मन्यन्ते ता एवास्मिन्नेतदाभजति ॥२२॥ स संप्रगृह्णाति सꣳस्रव- 25
भागा[5] स्थेषा बृहन्त इति सꣳस्रवो ह्येष परिशिष्टो भवति प्रस्तरेष्ठाः परिधेयश्च
देवा इति प्रस्तरश्च हि परिधयश्चानुप्रहृता भवन्तीमां वाचमभि विश्वे गृणन्त इति
विश्वेदेवमासद्यास्मिन्बर्हिषि मादयध्वꣳ[6] स्वाहा वाळिति तद्यथा वषट्कृतꣳस्वाहा-
कृतꣳहुतमेवं भवति ॥ २३ ॥ स यस्यानसो गृह्णन्ति धुरि तस्य विमुञ्चन्ति यतो युन- 26.27
जाम तद्विमुञ्चामेति यस्यो पात्र्याः[7] स्फ्यमु तर्ह्यपोहन्ति यतो युनजाम तद्विमुञ्चा-
मेति युञ्जौ ह वा एते यज्ञस्य यत्स्रुचौ ते एतद्युङ्क्ते यदाभ्यां प्रचरति तस्माद्धा-
रयन्नेवावद्येद्यद्ध[8] निधायावद्येद्यथा वाहनमवार्छेदेवं तत्ते विमोचनमागच्छतः स्विष्ट-
कृतं ते तत्सादयति ते अनुयाजेभ्यः प्रयुङ्क्ते ते विमोचनमागच्छतो यदेने संप्र-
गृह्णाति स यां गतिमभियुङ्क्ते तां गतिं गत्वोत्तमं[9] विमुञ्चते यज्ञमु वा अनु
प्रजातस्मादयं पुरुषो युङ्क्ते ऽथ विमुञ्चते ऽथ युङ्क्ते स यां गतिमभियुङ्क्ते तां
गतिं गत्वोत्तमं विमुञ्चते स विमुञ्चति घृताची स्थो धुर्यौ पातꣳ सुम्ने स्थः सुम्ने
मा धत्तमिति ॥ २४ ॥ प्रथमं ब्राह्मणम् ॥

K. II. 8. 2. M. I. 9. 1.

स वै यदैतदध्वर्युराहेषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्त- 1
वाकायेति यदतो होतान्वाह सूक्तैव तदाह यजमानायैव तदाशिषमाशास्ते स वा

---

1. MSS. exc. M. ins. वै.
2. अपित्वन्यो MSS.
3. मन्यंते MSS.
4. यदाज्यं C. O.
5. °भागाः B.
6. मादयध्वꣳ MSS.
7. पात्र्या MSS. exc. B.
8. तस्माद्धारयंनेवावद्येद्यद्ध B., तस्माद्धारयं-नेवावद्येद्यद्धC., तस्माद्धारयंनेवाद्येद्यद्धO.
9. गत्वो° B.

उपरिष्टाद्यज्ञस्याशिषमाशास्ते द्वयं तद्यस्मादुपरिष्टाद्यज्ञस्याशिषमाशास्ते[1] ॥ १ ॥

3.2 देवान्वा एष प्रीणात्येतेन यज्ञेनर्ग्भिरिव[2] त्वद्यजुर्भिरिव त्वदाहुतिभिरिव त्वत्ता न्प्रीत्वाथाशिषमाशास्ते तामस्मै देवा आशिषꣳ संनमन्ति यामाशिषमाशास्ते यो नो ऽप्रैषीदिति यज्ञमु वा एष जनयते यो यजत एतेन ह्येनमुक्ता ऋत्विजस्तन्वते तं जनयन्ते[3] ऽथाशिषमाशास्ते तामस्मै यज्ञ आशिषꣳ संनमति[4] यामाशिषमाशास्ते यो माजीजनतेत्येतद्द्वयं यस्मादुपरिष्टाद्यज्ञस्याशिषमाशास्ते ॥ २ ॥

4 स आहेदं द्यावापृथिवी भद्रमभूदिति भद्रꣳ ह्यभूद्यो यज्ञस्य सꣳस्थामगन्माग्ने सूक्तवाकमुत नमोवाकमित्युभयꣳ ह वा एतद्यज्ञः सूक्तवाकश्च नमोवाकश्चाविदाम[5] यज्ञमरात्स्मेत्येवैतदाहाग्ने त्वꣳ सूक्तवागस्युपश्रुती दिवस्पृथिव्योरित्यग्निमेवैतदाह त्वꣳ सूक्तवागस्युपश्रृण्वत्योर्द्यावापृथिव्योरित्योमन्वती[6] ते ऽस्मिन्यज्ञे यजमान द्यावापृथिवी स्तामित्यन्नं वा ओमान्नवत्यौ[7] ते ऽस्मिन्यज्ञे यजमान द्यावापृथिव्यौ

5-8 स्तामित्येवैतदाह ॥ ३ ॥ शंगवी जीवदानू इति शंगवी ते स्तां जीवदानू इत्येवैतदाहात्रस्नू अप्रवेदे इति माह कस्माचन[8] प्रत्रासीर्मो[9] त[10] इदं कश्चन पुष्टं प्रविदेत्येवैतदाहोरुगव्यूती अभयंकृतावित्युरुगव्यूती ते स्तामभये इत्येवैतदाह वृष्टिद्यावारीत्यापेति वृष्टिमत्यौ ते स्तामित्येवैतदाह शंभुवौ मयोभुवाविति शंभुवौ ते मयोभुवौ स्तामित्येवैतदाहोर्जस्वती पयस्वती इति रसवत्यौ ते स्तामुपजीवनीये इत्येवैतदाह सूपचरणा च स्वधिचरणा चेति सूपचरणाह ते ऽसावस्तु यामधस्तादुपचरसि स्वधिचरणो त इयमस्तु यामुपरिष्टादधिचरसीत्येवैतदाह तयोराविद्यौति

---

1. °माशास्ते B.
2. यज्ञनर्ग्भिरिव C. O. P.
3. जनयते C. O. P.
4. संनमंति MSS.
5. °दाम MSS.
6. सूक्तवागस्युपश्रृ° MSS.
7. ओमा अन्नवत्यौ B.
8. Thus acc. (rightly) C. O., °पृथिव्यौ B.
9. °चनप्रत्रा° MSS.
10. त MSS.

तयोरनुमन्यमानयोरित्येवैतदाह यदाह तयोराविदीति ॥ ४ ॥ अग्निरिदꣳ हविर- 9.10
जुषतावीवृधत महो ज्यायो ऽक्रुतेति तदाग्नेयमाज्यभागमाह सोम इदꣳ हविरजु-
षतावीवृधत महो ज्यायो ऽक्रुतेति तत्सौम्यमाज्यभागमाहाग्निरिदꣳ हविरजुषता-
वीवृधत महो ज्यायो ऽक्रुतेति तदाग्नेयमेव पुरोळाशमाह यो ऽयमुभयत्राच्युतो
ऽथ यथादेवतं देवा आज्यपा आज्यमजुषन्तावीवृधन्त महो ज्यायो ऽक्रतेति
तत्प्रयाजानुयाजानाह प्रयाजानुयाजा हि देवा आज्यपा अग्निर्होत्रेणेदꣳ हविरजुष-
तावीवृधत महो ज्यायो ऽक्रुतेति तदग्निꣳ होत्रेणाहैवं यावत्यो देवता इष्टा[1] भवन्ति
ताः संपश्यति स यदेवꣳ संपश्यत्यसौ हविरजुषतासौ हविरजुषतेति यज्ञस्यैवासा
एतत्समृद्धिमाशास्ते तेन हि महज्जयति यद्देवा हविर्जुषन्ते ॥ ५ ॥ अथ यदाहा- 11.12
वीवृधतेति यद्वै देवा जोषयन्ते ऽप्यल्पमप्येकामाहुतिमपि तद्गिरिमात्रं वर्धयन्त्ये
ऽथो अपरिमितमेवैनद्वर्धयन्ते तस्मादाहावीवृधतेति महो ज्यायो ऽक्रुतेति[2] यज्ञो वै
देवानां महस्तꣳ ह्येतज्ज्यायाꣳसं कुर्वते तस्मादाह महो ज्यायो ऽक्रुतेत्यस्यामृधेद्धो-
त्रायां देवंगमायामित्यस्याꣳ राध्नोतु होत्रायां देवंगमायामित्येवैतदाहाशास्ते ऽयं
यजमान इति ॥ ६ ॥ स नाम गृह्णाति प्रत्यक्षꣳ ह्यत्राशीस्तदेनं प्रत्यक्षमाशिषा 13-16
संपादयति दीर्घायुत्वमाशास्त[3] इति[3] स यदमुत्रोत्तरा देवयज्या तदत्र प्रत्यक्षं
दीर्घायुत्वमाशास्त इति स यदमुत्र भूयो हविष्करणं तदत्र प्रत्यक्षꣳ सुप्रजास्त्वं
प्रशासनꣳ स कुर्याद्य एवं ब्रूयादुत्तरां देवयज्यामाशास्त इत्येव ब्रूयात्तदेव जीवातुं
तत्प्रजां तत्पशून्भूयो हविष्करणमाशास्त इति तदेवैतत्सर्वमाशास्ते सजातवनस्या-
माशास्त इति प्राणा वै सजाताः प्राणैर्हि सह जायते तत्प्राणानाशास्ते दिव्यं
धामाशास्त इति देवलोके मे ऽपि स्यादिति वै यजते यो यजते तदेनं देवलोके
ऽपित्विनं[4] करोति यदनेन हविषाशास्ते तदश्यादिति[5] यदनेन किं च हविषा-

1. इष्टा B. M., इष्ट्या C. O. My.
2. Thus MSS., read ऽक्रतेति.
3. °युत्वमाश° इति B.
4. पित्वंन B.
5. तदस्यादिति MSS. exc. M.

17-20 शास्ते तदस्मै समृध्यतामित्येवैतदाह ॥ ७ ॥ ता वा एताः पञ्चाशिषास्तिस्र इळायां ता अष्टौ संपद्यन्ते ऽष्टाक्षरा गायत्री वीर्यं गायत्री वीर्यमेवैतदाशिषो ऽभिसंपादयति तदेतावत्य एव स्युरतिरिक्तꣳ ह यदतो भूयस्यो[1] यदु[2] वै[2] यज्ञस्यातिरिच्यते द्विषन्तꣳ हास्य तद्भ्रातृव्यमभ्यतिरिच्यते तस्मादेतावत्य एव स्युरपीद्धै कनीयस्यः[3] स्युर्न त्वेवातिरेचयेत्तदस्मै देवा रासन्तामिति तदस्मै देवा अनुमन्यन्तामित्येवैतदाह तदग्निर्देवो देवेषु वनुते वयमग्नेः परि मानुषा[4] इति तथा[5] हाग्निर्देवो देवेषु वनुते वयम्वग्नेः परि मानुषा इत्येवैतदाहेष्टं च वित्तं चाभूदित्यैषिषुर्वा[6] एतद्यज्ञं तमविदꣳस्तस्मादाहेष्टं च वित्तं चाभूदित्युभे चैनं द्यावापृथिवी अꣳहसस्पातामित्युभे चैनं द्यावापृथिव्यावार्तेर्गोपायतामित्येवैतदाह ॥ ८ ॥

21-23 तदु हैक आहुरुभे च नो द्यावापृथिवी अꣳहसस्पातामिति तथो[7] होतात्मानं नान्तरेतीति तदु तथा न ब्रूयाद्यजमानस्य वा आशीः किमृत्विजामाशिषा[8] न ह स क चनैतामाशिषं प्रतिष्ठापयति य आहोभे च न इति तस्मादुभे चैनं द्यावापृथिवी अꣳहसस्पातामित्येव ब्रूयादिह[9] गतिर्वामस्येति तद्यदेव यज्ञस्य साधु तदस्मिन्दधातीदं च नमो देवेभ्य इति तद्यज्ञस्य सꣳस्थां गत्वा नमो देवेभ्यः करोति ॥ ९ ॥

24.25 अथ खलु शंयोराह शंयुर्ह वै बार्हस्पत्यो ऽञ्जसा यज्ञस्य सꣳस्थां विदां चकार स ह देवलोकमपीयाय तद्धै मनुष्येभ्यो ऽन्तर्हितमास तदृषीणामनुश्रुतमास शंयुर्वै बार्हस्पत्य इत्यञ्जसा यज्ञस्य सꣳस्थां विदां चकार स देवलोकमपीयायेति तामेवैतदृषयो ऽञ्जसा यज्ञस्य सꣳस्थामुपायन्यच्छंयोरब्रुवन्याꣳ[10] शंयुर्बार्हस्पत्यो ऽञ्जसा यज्ञस्य सꣳस्थामवेत्ताम् वा एष एत-

1. भूयस्यो C. O.
2. Thus M., यदेवै B. pr. m., यदोवै B. sec. m., यदोवै C. O. My.
3. कनीयस्यः MSS.
4. मानुषा C. O.
5. तथा MSS.
6. चाभूदित्यैषि B, चाभूत्यैषि° C. O.
7. तथो B, तथा C. O. My., तद्वा M.
8. Emended, °माशिष B., °माशिषि C. O. M. My.
9. ब्रूयादिह गति° MSS.
10. °योरब्रूव° C. O. P.

दञ्जसा यज्ञस्य सꣳस्थामुपैति यच्छंयोराह याꣳ शंयुर्बार्हस्पत्यो ऽञ्जसा यज्ञस्य सꣳस्थामवेत्तस्माच्छंयोराह ॥ १० ॥ स आह[1] तच्छंयोरावृणीमह इति तां यज्ञस्य सꣳस्थामावृणीमह इत्येवैतदाह याꣳ शंयुर्बार्हस्पत्यो ऽञ्जसा यज्ञस्य सꣳस्थामवेदिति गातुं यज्ञाय गातुं यज्ञपतय इति गातुं वा एष यज्ञायेच्छति[2] गातुं यजमानाय यो यज्ञस्य सꣳस्थां दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्य इति स्वस्ति नो देवत्रास्तु स्वस्ति मनुष्यत्रेत्येवैतदाहोर्ध्वं जिगातु भेषजमित्यूर्ध्वो नो ऽयं यज्ञो जयत्वित्येवैतदाह शं नो अस्तु द्विपदे शं चतुष्पद इत्येतावद्वा इदं द्विपाच्चैव चतुष्पाच्च तस्मा एवैतद्यज्ञस्य सꣳस्थां गत्वा शं करोति ॥ ११ ॥ अथ कनिष्ठिकया पृथिवीमुपस्पृशत्यमानुष इव वा एतद्भवति यदार्त्विज्ये प्रवृत इयमु वै पृथिवी प्रतिष्ठा तदस्यामेव प्रतिष्ठायामन्ततः प्रतितिष्ठति तथो खलु मानुषो भवति ॥ १२ ॥ द्वितीयं ब्राह्मणम् ॥

26-28

29

K. II. 8. 3. M. I. 9. 2.

1 स वै स्रुवं च स्रुचं[3] चाध्वर्युरादत्त वेदꣳ होताज्यविलापनीमग्नीत्ते पत्नीः 2 संयाजयिष्यन्तः प्रतिपरायन्ति ॥ १ ॥ तद्धैकेषामध्वर्युरग्रेणाहवनीयमेति तत्तेन 3 नैतव्यं बहिर्धा ह यज्ञात्स्याद्यत्तेनेयात्तस्मात्तेन नैतव्यम् ॥ २ ॥ जघनेनो हैकेषां पत्नीमेति नो एव तेनैतव्यं[4] पूर्वार्धो वै यज्ञस्याध्वर्युर्जघनार्धः पत्नी स यथा भसत्थः[5] शिरः प्रतिदध्यादेवꣳ ह तद्बहिर्धो[6] एव यज्ञात्स्याद्यत्तेनेयात्तस्मात्तेन नैत4 व्यम् ॥ ३ ॥ अन्तरेणो हैकेषां पत्नीमेति नो एव[7] तेनैतव्यमन्तरियाद्ध[8] यज्ञात्पत्नीं यत्तेनेयात्तस्मात्तेन नैतव्यमग्रेणैव गार्हपत्यमत्येयात्तथा[9] ह न बहिर्धा यज्ञा5 द्भवति[10] य उ एवास्यासौ प्रचरतः संचरः[11] स उ एवास्य संभवति ॥ ४ ॥ अथ

1. प्राह B.
2. येच्छति MSS.
3. स्रुचं C. O., स्रुचं B.
4. Thus C. (pr. m.) M., तेननैतव्यं the other MSS.
5. Thus MSS exc. M., which has वसस्त; read probably भसत्तः
6. °द्बहिर्धो C. B., °द्बहिर्धौ O. P.
7. तेन नैतव्य° B.C.O. My., एतेनैतव्य° M for एव etc.
8. °मंतरीयाद्ध B. C. My.
9. °मत्येयात्तथा B., °मत्येयात्तथा C.O.My.
10. Thus acc. also the Mādhy. rec.
11. संचरः MSS.

पत्नीः संयाजयन्ति[1] स यत्पत्नीः संयाजयन्ति[1] यज्ञाद्वै प्रजाः प्रजायन्ते यज्ञात्प्र-
जायमाना मिथुनात्प्रजायन्ते मिथुनात्प्रजायमाना अन्ततो यज्ञस्य मिथुनात्प्रजा-
यन्ते तदेतदन्ततो यज्ञस्य मिथुनं प्रजननं क्रियते तस्मान्मिथुनात्प्रजननादन्ततो
6 यज्ञस्येमाः प्रजाः प्रजायन्ते ॥ ५ ॥ स वै चतस्रो देवता यजति चतस्रो हि
7.8 मिथुनं द्वन्द्वꣳ हि मिथुनं मिथुनमेवैतत्प्रजननं क्रियते ॥ ६ ॥ ता आज्यहविषो
भवन्ति रेतो वा आज्यꣳ रेत एवैतत्सिञ्चत्युपाꣳश्वेनेन चरन्ति तिर इव वै मिथु-
9 नेन चरन्ति तिर इव खिद्वा[2] एतद्यदुपाꣳशु ॥ ७ ॥ अथ खलु सोमं यजति
10 रेतो वै सोमो रेत एवैतत्सिञ्चति ॥ ८ ॥ अथ त्वष्टारं यजति त्वष्टा वै रेतः
11 सिक्तं विकरोति तदेतद्रेतः सिक्तं तत्त्वष्टा विकरोति ॥ ९ ॥ अथ देवानां पत्नी-
र्यजति पत्नीषु वै योषासु रेतो योनौ सिक्तं प्रतितिष्ठति तत्ततः प्रजायते पत्नीष्वे-
12 वैतद्योषासु रेतो योनौ सिञ्चति तत्ततः प्रजनयति ॥ १० ॥ स यत्र देवानां
पत्नीर्यजति तत्तिरः कुर्वन्त्युपासते ह न्वै देवा इदं न्वै नः समिष्टयजुर्न जुह्वतीदं
नो होष्यन्तीति ताभ्य एवैतत्तिरः करोति तस्मात्पुꣳसोऽपीमा मानुष्यः[3] स्त्रिय-
13 स्तिर इवैव[4] जिघत्सन्ति ॥ ११ ॥ अथाग्निं गृहपतिं यजतीयं वै पृथिव्यग्निरिमामे-
वैतत्प्रतिष्ठामभीमाः प्रजाः प्रजनयति ता इमाः प्रजा इमां प्रतिष्ठामभि प्रजायन्ते
14-16 ॥ १२ ॥ तद्विळान्तमेव[5] स्यान्न ह्यत्र परिधयो न प्रस्तरो विकर्ष[6] इव ह स
यच्छꣳय्वन्तं पतिं वा अनु जाया स यत्र वा अदो यजमानं प्रस्तरेण स्वगाकरोति
तदेवापि पत्नीꣳ स्वगाकरोत्युतो प्रस्तरस्य रूपं क्रियते वेदस्यो तर्हि तृणमपच्छि-
द्याग्रं जुह्वामनक्ति मध्यꣳ स्रुवे मूलꣳ स्थाल्यामाहुतिमेवैनां तत्करोत्याहु-
तिर्भूत्वा देवलोकं गच्छादिति स यथैवादो यजमानं प्रस्तरेण स्वगाकरोत्येवमेवै-

1. Sing. B.M.
2. खिद्वा M. My., सिद्वा B., खिदा C. O.
3. ॰ य M.
4. इवैव C. P., इवैवृ O.
5. तद्विलांतमेव C. (M. My.), तद्विलांतमेव O., तद्विळांतमेव B.
6. ? Read ऽविकर्ष.

तत्पत्नीꣳ स्वगाकरोति ॥ १३ ॥ अथाग्नीदाहानुप्रहरेत्यनुप्रहृत्य चक्षुष्पा असि 17
चक्षुर्मे पाहीत्यात्मानमभिमृशति ॥ १४ ॥ अथाग्नीदाह संवदस्वेत्यगादग्नीदग- 18
न्श्रावय[1] श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्य इति सो ऽसावेव बन्धुः
॥ १५ ॥ अथ स्रुवं च स्रुचं[2] च संप्रगृह्णात्यदो[8] हैवैनामाहुतिं[3] करोति यदनक्त्या- 19.20
हुतिर्भूत्वा देवलोकं गच्छादिति तदग्नये संप्रगृह्णात्यग्ने ऽदब्धायो ऽशीतमेत्यमृतो[4]
ह्यग्निस्तस्मादाहादब्धायविन्त्यशीतमेत्यशिष्ठो[4] ह्यग्निः पाहि मा दिद्योः पाहि प्रसित्यै
पाहि दुरिष्ट्यै पाहि दुरद्मन्या इति सर्वाभ्यो मार्तिभ्यो गोपायेत्येवैतदाहाविषं नः
पितुं[5] कृण्वित्यन्नं वै पितुरनमीवं[7] नो[6] ऽकिल्विषमन्नं कुर्वित्येवैतदाह सुषदा[7] यो-
नाविति तदात्मन्याह स्वाहा वाळिति तद्यथा वषट्कृतꣳ स्वाहाकृतꣳ हुतमेवं
भवति ॥ १६ ॥ अथ पत्नी वेदं विस्रꣳसयति योषा वै पत्नी वृषा वेदो मिथुन- 22.21
मेवैतत्प्रजननं क्रियते मिथुनायो वा एष क्रियते यद्वेदः स यदेनेन यज्ञ उपालमते[8]
तन्मिथुनं[9] प्रजननं क्रियते ॥ १७ ॥ सा विस्रꣳसयति येन त्वं देव वेद[10] देवे- 23
भ्यो वेदो ऽभवः । तेन मह्यं वेदो भवेत्येतेनैव कुर्याद्यदि यजुषा कुर्यादथास्य
वेदस्य पत्नी तृणमादत्ते नेदस्मान्मिथुनाद्व्यवच्छिद्या[11] इति तदन्तरोरू न्यस्यते[12]
ऽन्तरेव[11] ह्यूरू[13] मिथुनं भवति ॥ १८ ॥ तꣳ होता[14] वेदैः सꣳस्तृणन्नेति[15] योषा 24
वै वेदिर्वृषा वेदः पश्चाद्वै परीत्य योषां वृषाधिद्रवति तदेनां[16] पुरस्तात्कृत्वा वृष्णा

---

1. ⁰दगंश्रावय C. O., ०दगन् श्रावय M., ०दगञ्छ्रावय B.
2. स्रुचं C. O., स्रुचं B.
3. ०त्यदोहैवै० B., ०त्यदोहैवै० C. O.
4. ०शीतमे० B. My., ०शितमे० C. O M.
5. पितुं MSS.
6. पितुरनमीवेनो B., पितुरनमीवनो C. (the anusvāra blotted out), पितुरनमीवनो O.
7. सुषदा C. O., सुषादा B.
8. ०लभते B., ०लभंते C. O. My., ०लभन्ते M.
9. तस्मिन्मिथुनं C. O.
10. वेद MSS.
11. ⁰छिद्या MSS.
12. न्यस्यते MSS.
13. ⁰व ह्यूरू MSS.
14. होता B.
15. सꣳस्तृणंनेति MSS.
16. तदेनं B.

25 वेदेनाधिद्रावयति ॥ १९ ॥ अथ समिष्टयजुर्जुहोति स यदग्रे[1] न[1] जुहोति नेन्मे
प्रत्यङ् यज्ञः संतिष्ठाता इति प्रत्यङ् ह्यस्य यज्ञः संतिष्ठत यत्समिष्टयजुर्हुत्वाथ
पत्नीः संयाजयेत्तथा ह्यस्य प्राग्भवति तस्मादेतर्हि समिष्टयजुर्जुहोति ॥ २० ॥
26 अथ यद्वेव समिष्टयजुर्जुहोति या वा एतेन यज्ञेन देवता ह्वयति याभ्य एष यज्ञ-
स्तायते सर्वा वै ता एतत्समिष्टा भवन्ति स यत्तासु सर्वासु समिष्टास्वथ जुहोति
27 तस्मात्समिष्टयजुरित्याख्यायते ॥ २१ ॥ अथ यद्वेव समिष्टयजुर्जुहोति या वा
एतेन यज्ञेन देवता ह्वयति याभ्य एष यज्ञस्तायत उपासते ह न्वै देवा इदं नै
नः समिष्टयजुर्न जुह्वतीदं नो होष्यन्तीति ता एवैतद्व्यवर्जति[2] यत्रासां चरणं
तदनु यस्तु चैव यज्ञमतत यमजीजनस्तस्मु[3] चैवैतत्प्रतिष्ठापयति[3] यत्रास्य प्रतिष्ठा
28 तत्तस्माद्वाव समिष्टयजुर्जुहोति ॥ २२ ॥ स जुहोति देवा गातुविद इति गातु-
विदो हि देवा गातुमित्वेति यज्ञमित्वेत्येवैतदाह गातुमितेति तदेनान्व्यवर्जति[4]
यत्रासां चरणं तदनु मनसस्पत इमं देव यज्ञꣳ स्वाहा वाते धा इत्यवरꣳ स्वाहा-
कारं करोति परां देवतामयं वाव यज्ञो यो ऽयं पवते तदेतं यज्ञꣳ संभृत्यैतस्मि-
29.30 न्यज्ञे प्रतिष्ठापयति तस्मादवरꣳ स्वाहाकारं करोति परां देवताम् ॥ २३ ॥ अथ
बर्हिर्जुहोति तां वा एतामोषधिभ्य आहुतिं जुहोत्योषधयो हि बर्हिरोषधीरेवैतदस्यां
पृथिव्यां दधाति ता इमा ओषधयो[5] ऽस्यां[5] पृथिव्यां प्रतिष्ठितास्तां वा एतामति-
रिक्तां जुहोति यदा हि समिष्टयजुर्जुहोत्यथैतां जुहोति तस्माद्धिमा ओषधयो
31 ऽपरिमिता असंमिताः प्रजायन्ते ॥ २४ ॥ स जुहोति सं बर्हिरङ्क्ताꣳ हविषा
घृतेन समादित्यैर्वसुभिः सं मरुद्भिः । समिन्द्रो विश्वदेवेभिरङ्क्तां दिव्यं नभो
32.33 गच्छतु यत्स्वाहेति[6] ॥ २५ ॥ अथ प्रणीता दक्षिणतः परीत्य निनयति तथा

1. Thus (without acc.) My., यदग्नेन B., यदग्नेन C. O., यदग्रेण M. (अग्रे "first" i.e. before the patnīsamyājas).
2. Emended; एवैतर्व्यवर्जति M., एवैतद्विवर्जति B., एवैतविवर्जति C. O. P.
3. Thus MSS
4. तदनाव्य° MSS.
5. °धयोस्यां B.
6. °हेति MSS.

उदीच्यो भवन्ति स यत्प्रणीता निनयति यज्ञं वा एष युङ्क्ते य एनं तनुते[1] स
यां गतिमभियुङ्क्ते तां गतिं गत्वोत्तमं विमुञ्चते यद्ध न विमुञ्चेत्पराङ् हैवा-
विमुक्तो यजमानं यज्ञः प्रक्षिणुयात्स विमुञ्चति कस्त्वा विमुञ्चति स त्वा विमुञ्चति
कस्मै त्वा विमुञ्चति तस्मै त्वा विमुञ्चति पोषायेति तत्पुष्टिमेवोत्तमां[2] यजमानाय
निराह स येनैव प्रणयति तेन विमुञ्चति येन ह्येव योग्यं युञ्जन्ति तेन विमुञ्चति
योक्त्रेण योक्त्रेण हि योग्यं युञ्जन्ति योक्त्रेण विमुञ्चन्त्यथाधो ऽधः[3] कृष्णाजिनं
फलीकरणानुपास्यति[4] रक्षसां भागो ऽसीति ॥ २६ ॥ देवाश्च ह वा असुराश्चो- 34.35
भये प्राजापत्या अस्पर्धन्त त एतस्मिन्नेव यज्ञे प्रजापतावस्पर्धन्तास्माकमयꣳ स्याद-
स्माकमयꣳ स्यादिति तं देवाः[5] संवृज्य[5] पापिष्ठेन[6] भागेनासुरान्निरभजन्नस्ना[7]
पशोः फलीकरणैर्हविर्यज्ञस्य सुनिर्भक्ता असन्निति स ह वै सुनिर्भक्तो यं भागिनं
निर्भजन्त्यनिर्भक्तो ह वै स यमभागं निर्भजन्त्युत हि किं चिद्वशं लब्ध्वाभिप-
द्याह किं मा बभक्थेति स यमेवैभ्यो देवा यज्ञे भागमकल्पयꣳस्तमेवैभ्य एष
एतत्करोति सो ऽधो ऽधः[8] कृष्णाजिनं फलीकरणानुपास्यति[9] रक्षसां भागो
ऽसीत्यनग्रावेवैभ्यस्तदन्धे[10] तमसि प्रवेशयति तथो एवासृङ्निनयति[11] रक्षसां भागो
ऽसीत्यनग्रावेवैभ्यस्तदन्धे[10] तमसि प्रवेशयति तस्मान्न कश्चन पशोस्तेजनीं[12] कुरुत
एतेषा हि तद्रक्षसां भाजनेन ॥ २७ ॥ तृतीयं ब्राह्मणम् ॥

K. II. 8. 4. M. I. 9. 3. 1.2

स वै सꣳस्थिते यज्ञे दक्षिणतः परीत्य पूर्णपात्रं निनयति तथा ह्युदग्भ-
वति स यत्पूर्णपात्रं निनयति देवलोके मे ऽपि स्यादिति वै यजते यो यजते स

1. तनुते MSS.
2. ०त्तमं MSS. exc. B.
3. ०धोध: MSS.
4. ०रणानपास्यति MSS. exc. M.
5. देवास्सम्मृज्य M., देवासंवृज्य B , देवा-न्संवृज्य C. (pr. m.), देवांत्संवृज्य C. (sec. m.), O. P. My.
6. पापिष्ठेन MSS.
7. ०स्ना C. O. P.
8. ०धोध: MSS.
9. ०रणानपास्यति MSS. exc. M.
10. ०भ्यस्तादंधे C. O. P.
11. एवासृङ्ञिनयति C. O. P.
12. ०स्तेजनिं M., ०स्तेदनीयं B., ०स्तेदनीयं C. O. P. My.

एष यज्ञो ऽग्रे देवानभिप्रैति यज्ञमन्वारभ्य दक्षिणा यां दक्षिणां ददाति दक्षिणा-
मन्वारभ्य यजमानः स यः स देवयानो वा पितृयाणो वा पन्थास्तमग्निशिखे
अभितः समोषन्त्यौ तिष्ठतस्ते प्रति[1] तमोषतो यः प्रत्युष्यो ऽति तꣳ सृजेते यो
3.4 ऽतिसृज्यस्तमेवैतत्पन्थामद्भिः शमयति शान्तिर्ह्यापः ॥ १ ॥ तं वै पूर्णं निनय-
ति सर्वं वै पूर्णꣳ सर्वेणैवैनं तच्छमयति संततमव्यवच्छिन्नं निनयति संततेनैवैनं तद-
व्यवच्छिन्नेन शमयति यदु[2] वै यज्ञस्य मिथ्या क्रियते विवृहन्ति[3] हास्य तत्क्षिण्व-
न्त्यापो[4] वै भेषजꣳ शान्तिस्तदद्भिः शान्त्या शमयति तदद्भिः संदधाति ॥ २ ॥
5 तं वै पूर्णं निनयति सर्वं वै पूर्णꣳ सर्वेणैवैनं तत्संदधाति संततमव्यवच्छिन्नं निन-
यति संततेनैवैनं तदव्यवच्छिन्नेन संदधाति ता आनीयमाना अञ्जलिना प्रति-
6.7 गृह्णाति ॥ ३ ॥ तत्र जपति सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सꣳ
शिवेन । त्वष्टा सुदत्रो विदधातु रायो ऽनुमार्ष्टु तन्वो[5] यद्विलिष्टमिति तद्यद्वि-
लिष्टं तत्संदधात्यथ मुखमुपस्पृशति द्वयं तद्यस्मान्मुखमुपस्पृशत्यमृतमापो ऽमृतेन[6]
8.9 न्वेवैतत्सꣳ स्पृशत एतदु चैव कर्मात्मनि कुरुते ॥ ४ ॥ अथ विष्णुक्रमान्क्रमते
स यद्विष्णुक्रमान्क्रमते देवलोके मे ऽपि स्यादिति वै यजते यो यजते देवान्वा
एष प्रीणात्येतेन यज्ञेनर्ग्भिरिव त्वद्यजुर्भिरिव त्वदाहुतिभिरिव त्वत्तान्प्रीत्वा तेष्व-
पित्वी मन्यते तेष्वपित्वी भूत्वा तानभिप्रक्रामति[7] यज्ञ उ वै विष्णुः स इमां
देवेभ्यो विक्रान्तिं विचक्रम इमामेव प्रथमेन पदेन पस्पाराथेदमन्तरिक्षं दिवं
तृतीयेन तामु वा एष एतस्मै यज्ञो विष्णुर्विक्रान्तिं विक्रमते तदितः पराञ्चो
10 भूयिष्ठाः क्रमन्ते तत्तत्[8] ॥ ५ ॥ पृथिव्यां विष्णुर्व्यक्रꣳस्त गायत्रेण छन्दसा ततो

1. प्रति C. O.
2. यदू C. O.
3. विवृहंति MSS.
4. तत्क्षुएवन्त्या° M.
5. तन्वो O. My., तंन्वो B. C., तन्नो M. (cp. the Madhy. rec. I. 9. 3.6 with IV. 4. 3. 14).
6. मृतेन MSS.
7. तामभिC°. O.
8. Thus B. M. My., क्रमंतेतत् C. O.; तत्तत् belongs to the next kaṇḍikā, as also infra k. 7; cp. k. 11 s. f.

निर्भक्तो[1] यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यन्तरिक्षे विष्णुर्व्यक्रꣳस्त त्रैष्टुभेन छन्दसा ततो निर्भक्तो[1] यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इति दिवि विष्णुर्व्यक्रꣳस्त जागतेन छन्दसा ततो निर्भक्तो[1] यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्येवमिमांल्लोकान्त्समारुह्याथैषा गतिरेषा प्रतिष्ठा य एष तपत्यथ ये रश्मयस्ते सुकृतो ऽथ यत्परं भाति प्रजापतिर्वैव स स्वर्गो[2] लोकस्तदेतां गतिमेतां प्रतिष्ठां गच्छत्येतन्नु[3] यस्मादितः क्रमेतामुतस्त्वेवार्वाक् क्रमेत य इतो ऽनुशासनं कुर्याद्द्वयं तद्यस्मादमुतो ऽर्वाक् क्रमेत ॥ ६ ॥ अपसरणतो ह वा अग्रे देवा जयन्तो जिग्युर्दिवमेवाग्रे ऽथान्तरिक्षमथास्या अनपसरणात्सपत्नाननुदन्त तथो वा एष एतदपसरणत एवाग्रे जयञ्जयति दिवमेवाग्रे ऽथान्तरिक्षमथास्या अनपसरणात्सपत्नान्नुदते ऽस्यामु चैव प्रतिष्ठायामन्ततो यज्ञस्य प्रतितिष्ठति यावदस्येह मानुषमायुस्तस्मै तत्तत् ॥ ७ ॥ दिवि विष्णुर्व्यक्रꣳस्त जागतेन छन्दसा ततो निर्भक्तो[1] यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यन्तरिक्षे विष्णुर्व्यक्रꣳस्त त्रैष्टुभेन छन्दसा ततो निर्भक्तो[1] यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इति पृथिव्यां विष्णुर्व्यक्रꣳस्त गायत्रेण छन्दसा ततो निर्भक्तो[1] यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्यस्मादन्नादस्यै प्रतिष्ठाया इत्यस्याꣳ हीदमन्नमियमु हि प्रतिष्ठाथ प्राङ् प्रेक्षते प्राची हि देवानां दिक् ॥ ८ ॥ स प्रेक्षते ऽगन्म स्वरित्यगन्म देवानित्येवैतदाह यदाहागन्म स्वरिति सं ज्योतिषाभूमेति सं देवैरभूमेत्येवैतदाहाथ सूर्यमुदीक्षते तदेतां गतिमेतां प्रतिष्ठां गच्छति ॥ ९ ॥ स उदीक्षते स्वयंभूरसि श्रेष्ठो रश्मिरित्येष वै श्रेष्ठो रश्मिर्यत्सूर्यस्तस्मादाह स्वयंभूरसि श्रेष्ठो रश्मिरिति वर्चोदा असि[4] वर्चो मे देहीत्येवाहं ब्रवीमीति होवाच याज्ञवल्क्यस्तद्धि ब्राह्मणेनैष्टव्यं यद्ब्रह्मवर्चसमिति गोदा गा[5] मे देहीत्येवाहं ब्रवी-

11 12.13 14.15 16.17

1. निर्भक्तो B., निर्भक्तः । C. O. M. My.
2. Thus MSS., read स्वर्गो वा ?
3. ०त्येतंनु B. C. O. P.
4. Om. C. O. M.; वर्चोदावर्चो C. O.
5. गां B.

मीति होवाच तुमिञ्ज औपोदितेयो[1] वैयाघ्रपद्य एष एव मह्यं गा दास्यतीत्येवं यं कामं कामयेत तं ब्रवीताथाह[2] सूर्यस्यावृतमन्वावर्त इति तदेतां गतिमेतां प्रतिष्ठां
18 गत्वैतस्यैवावृतमन्वावर्तते ॥ १० ॥ अथ गार्हपत्यमुपतिष्ठते गृहा वै गार्हपत्यः प्रतिष्ठा वै गृहा गृहेष्वेवैतत्प्रतिष्ठायामन्ततो यज्ञस्य प्रतितिष्ठति यावदस्येह मानुष-
19.20 मायुस्तस्मै ॥ ११ ॥ स उपतिष्ठते ऽग्ने गृहपत इति सुगृहपतिरहं त्वया गृहपत्या भूयासम् । सुगृहपतिस्त्वं मया गृहपत्या भूया इति नात्र तिरोहितमिवास्त्यस्थूरि णो गार्हपत्यानि सन्त्वित्यनार्तानि नो गार्हपत्यानि सन्त्वित्येवैतदाह शतꣳ हिमा इति शतं वर्षाणि जीव्यासमित्येवैतदाह यदाह शतꣳ हिमा इति तद्ध न[3] परिदिशेद्धुतो[3] ह परशतानि[4] वर्षाणि मनुष्या जीवन्त्यथाह सूर्यस्यावृतमन्वा-
21-23 वर्त इति तदेतां गतिमेतां प्रतिष्ठां गत्वैतस्यैवावृतमन्वावर्तते ॥ १२ ॥ अथ प्राङुन्दायन्पुत्रस्य[5] नाम गृह्णातीदं मे कर्मेदं वीर्यं पुत्रो ऽनुसंतनोत्विति तथा हास्यैतत्कर्मैतद्वीर्यं पुत्रो ऽनुसंतनोति यदि पुत्रो न स्यादप्यात्मन एव गृह्णीयादथ तूष्णीमेवाहवनीयमुपतिष्ठते प्राङ्मे कर्मानुसंतिष्ठाता इति तथा ह्यस्य प्राक्कर्मानुसंतिष्ठते[6] ऽथ व्रतं विसृजत इदमहं य एवास्मि स एवास्मीति तस्योक्तो बन्धुः ॥ १३ ॥ चतुर्थं ब्राह्मणम् ॥ अष्टमो ऽध्यायः ॥ हविर्यज्ञकाण्डं समाप्तम् ॥

M. II. 3. 2 K. III. 1. 1.

स यत्र ह वा एष प्रथमꣳ संप्रधूप्य प्रज्वलति तद्ध वरुणो भवत्यथ यत्र संप्रज्वलितो भवत्यन्तरेणेव वर्षिमाणं तद्ध रुद्रो भवत्यथ यत्र वर्षिष्ठं ज्वलति तद्धेन्द्रो भवत्यथ यत्र नितरामर्चयो भवन्ति तद्ध मित्रो भवत्यथ यत्राङ्गारा मल्मल-
10 लायन्तीव तद्ध ब्रह्म भवति ॥ १ ॥ स यदि ह कामयेत यथेदमिमाः प्रजा

1. °दितेय MSS.
2. °ब्रवीत MSS.
3. नपरदिशे° MSS exc M.(नपरिदिशे°).
4. Read परःश° ?
5. प्रङुन्दायन्पु° B. C., प्राङुदायन्पु° O. P.
6. अनु om. B.

वरुणो गृह्णाति सहसा निघातयत्येवꣳ स्यामिति यां वेलां वरुणः स्यात्तज्जुहुया-
द्यथा हैवेदमिमाः प्रजा वरुणो गृह्णाति सहसा निघातयत्येवꣳ ह भवति
वरुणस्यो ह सायुज्यꣳ सलोकतां जयति ॥ २ ॥ अथ यदि कामयेत यथा 9
रुद्रादिमाः प्रजा[2] बिभ्यत्येवं[2] मद्बिभ्यत्विति यां वेलाꣳ रुद्रः स्यात्तज्जुहुया-
द्यथा हैव रुद्रादिमाः प्रजा[3] बिभ्यत्येवꣳ[3] हास्माद्बिभ्यति रुद्रस्यो ह सायुज्यꣳ
सलोकतां जयति ॥ ३ ॥ अथ यदि कामयेत यथेन्द्रो ऽधिपतिः श्रेष्ठो देवा- 11
नामेवꣳ स्यामिति यां वेलामिन्द्रः स्यात्तज्जुहुयाद्यथा हैवेन्द्रो ऽधिपतिः श्रेष्ठो
देवानामेवꣳ ह[4] भवतीन्द्रस्यो ह सायुज्यꣳ सलोकतां जयति ॥ ४ ॥ अथ 12
यदि कामयेत मित्रꣳ स्यां प्रपदनं वधत्र इति यां वेलां मित्रः स्यात्तज्जुहुया-
न्मित्रꣳ ह भवति प्रपदनं वधत्रो मित्रस्यो ह सायुज्यꣳ सलोकतां जयति ॥५॥
अथ यदि कामयेत ब्रह्मवर्चसी स्यामिति यां वेलां ब्रह्म स्यात्तज्जुहुयाद्ब्रह्मव- 13
र्चसी हैव भवति ब्रह्मणः सायुज्यꣳ सलोकतां जयति ॥ ६ ॥ अत एकतम- 14
स्मिन्कामे[7] यं कामं कामयेतायं मे कामः समृध्यतामिति तस्मिन्त्सार्धमेव जुहु-
याद्यो वा अस्याः पृथिव्या[8] अप्यनूपे[8] ऽन्यत्रान्यत्र[7] खनेन्नैवापो[8] ऽभिविन्देदथ[9]
यो ऽस्या स्थलतमे ऽपि सार्धं खनेदभ्येवापो[10] विन्देदेवं यस्मै कामाय सार्धं
जुहोति सोऽस्मै कामः समृध्यते स यं कामं कामयेतायं मे कामः समृध्यता-
मिति तस्मिन्त्सार्धमेव जुहुयात्सꣳ हास्मै स काम ऋध्यते यस्मै कामाय सार्धं
जुहोति[11] ॥ ७ ॥ प्रथमं ब्राह्मणम् ॥

K. III. 1. 2. M. II. 3. 2

स यामेतां प्रथमामाहुतिं जुहोति ते देवा अथ यां द्वितीयां ते मनुष्या 16-18
अथ यत्स्रुचि परिशिनष्टि ते पशवस्तस्माद्यावन्मात्रमिवैवाग्रे जुहुयाद्यावन्मात्रा
इव हि सन्तो देवाः प्रभवो भूय इवोत्तरस्यां भूयाꣳसो हि देवेभ्यो मनुष्या
भूयिष्ठꣳ स्रुचि[12] परिशिꣳष्याद् भूयाꣳसो[12] हि मनुष्येभ्यः पशवो भूयाꣳसो ह वा

अस्य प्रभोः सतो भार्येभ्यः पशवो भवन्ति[1] य एवमेतद्वेद यस्य चैवं[2] जुह्वति तद्वै समृद्धं यस्य प्रभोः सतो भूयाꣳसो भार्येभ्यः पशवो[3] ऽसन्य[3] उ वा एतामुत्तरावतीमाहुतिं वेद पुत्रो हास्माच्छ्रेयान्भवति पुत्रात्पौत्र उत्तरावद्धैवास्मै श्वःश्रेयसं[4] भवत्येषो वा उत्तरावत्याहुतिर्यद्यावन्मात्रमिवैवाग्रे जुहोत्यथ भूयो ऽथ भूयिष्ठꣳ स्रुचि परिशिनष्टि ॥ १ ॥ द्वितीयं ब्राह्मणम् ॥

K III. 1. 3

स वै सायमुद्धरति यदह्ना पुण्यं करोति तद्रात्र्योद्धरत्युद्धरत्येव प्रातर्यद्रात्र्या पुण्यं करोति तदह्नोद्धरति[5] तस्मादुद्धरेत्येव ब्रूयात्पुण्यकृत्याꣳ ह्युद्धरति स यदुद्धृते ऽग्नावभ्यागताय नोदकं याचत्यकृता[6] ह्यस्य पूर्वा पुण्यकृत्या भवति करिष्यन्न[7] पराभवत्यथैतदुभयमन्तरेण[7] मन्यन्ते सा हास्यैषा पुण्यकृत्या न पापेन चन कर्मणा मीयत उद्धृता ह्यस्य भवति ॥ १ ॥ उन्नेष्यामीति सायमाहाग्नय एवैतदर्क्यमुपाकरोति तदग्नी रात्र्या शꣳसति तत्प्राणः प्रत्यागृणात्यन्नमन्नमिति[8] ॥ २ ॥ उन्नयामीति प्रातराहादित्यायैवैतदाश्विनमुपाकरोति तदादित्यो ऽह्ना शꣳसति तद्वाक्प्रत्यागृणात्यायुरायुरित्यर्क्यꣳ ह वा अस्य सायमाहुतिराश्विनं प्रातराहुतिस्तद्यथार्क्येण[9] चाश्विनेन च शस्तेन[10] लोकं जयेत्तावन्तꣳ ह सायंप्रातराहुतिभ्यां लोकं जयति ॥ ३ ॥ स यत्सायं जुहोत्यग्निमेवैतदनेन[11] सह सर्वेणादित्ये जुहोत्यग्निꣳ ह्येवेदमनु[12] सर्वं तद्यथानेन सकृत्सर्वेणेष्ट्वा[13] लोकं जयेत्तावन्तꣳ ह सायमाहुत्या लोकं जयति ॥ ४ ॥ अथ यत्प्रातर्जुहोत्यादित्यमेवैतदनेन सह सर्वेणाग्नौ जुहोत्यादित्यꣳ ह्येवेदमनु सर्वं तद्यथानेन सकृत्सर्वेणेष्ट्वा[13] लोकं जयेत्तावन्तꣳ ह प्रातराहुत्या लोकं जयति ते हास्यैते[14] आहु-

9. ०स्तथार्क्येण B., ०स्तद्यथार्क्केण C. (M. My).
10. The MSS. om. the acc.
11. ०दनेन MSS.
12. ह्येवेदमनु B.
13. सकृत्स० B.
14. हास्यैते B.

ती न[1] बद्धयाजी[1] चनाप्नोति न हि बहूनि चन[2] बध्नीते[2] तयोर्देवतयोरन्यतरा-
मनु[3] ॥ ५ ॥ तृतीयं ब्राह्मणम् ॥

K. III. 1. 4. M. XI. 3. 1.

वाग्घ वा एतस्याग्निहोत्रस्याग्निहोत्री मन एव वत्सो मनसा वै वाचं प्रप्या- 1
नां[4] दुहन्ति तस्माद्वत्सेन मातरं प्रप्यानां दुहन्ति तद्वा इदं मनः पूर्वं यत्पश्चा[5]
वागन्वेति[5] तस्माद्वत्सं पूर्वं यन्तं पश्चान्मातान्वेति ॥ १ ॥ प्राण एव रज्जुः 2
प्राणेन हि[6] मनश्च[6] वाक्चाभिहिते[7] तस्माद्रज्ज्वा वत्सं च मातरं चाभिदधाति
हृदयमेव मेथ्युपदोहनी[8] तेज एव श्रद्धा सत्यमाज्यꣳ सत्येन हीमे लोका
आजित्याः[9] ॥ २ ॥ तद्धैतज्जनको वैदेहो याज्ञवल्क्यं पप्रच्छ याज्ञवल्क्य वेत्था-
ग्निहोत्रा३मिति वेद सम्राळिति होवाच पय एवेति यत्पयो नाभविष्यत्केनाहो-
ष्य इति व्रीहियवाभ्यामिति होवाच यद्व्रीहियवौ नाभविष्यतां केनाहोष्य इत्या-
रण्याभिरोषधिभिरिति यदारण्या ओषधयो नाभविष्यन्केनाहोष्य इति वृक्ष-
फलैरिति यद्वृक्षफलानि नाभविष्यन्केनाहोष्य इत्यद्भिरिति होवाच यदापो
नाभविष्यन्केनाहोष्य इति स होवाच न वै सम्राळतो ऽग्र एकं चनासीदथैतद-
हूयतैव[10] सत्यꣳ श्रद्धायामिति ॥ ३ ॥ स होवाच नमस्ते ऽस्तु याज्ञवल्क्य[11] 3–8
वेत्थाग्निहोत्रꣳ सहस्रं ददामीति तदप्येषो[12] ऽस्ति श्लोकः किꣳ स्विद्विद्वान्प्रव-
सत्यग्निहोत्री गृहेभ्यः । कथꣳ स्विदस्य काव्यं कथꣳ संततो अग्निभिरिति यो
जविष्ठो भुवनेषु स विद्वान्प्रवसन्विदे तथा तदस्य काव्यं तथा संततो अग्निभि-

---

1 नबद्धयाजी C., नवद्धयाजी B., नबद्धयाजी M. My.
2 चनबध्नीते My. M., चनवद्धांते B., चनबध्नीते C.
3 °तयोरन्यत° B. C. (but in C. the accent blotted out).
4 प्राप्यानां B., प्रप्यन T.
5 Thus C. M. My., यत्पश्चाद्वागन्वेति (यत् is participle pres. neuter), cp. Jaim. Br. in J. A. O. S. 23. 328.
6 हिमनश्च B. C.
7 व क्चाभिहिते B. C.
8 मेथ्युपदोहिनी B., मत्युपदोहनी M.
9 आजित्याः B.
10 चनासी° B. C. (pr. m.).
11 या° B.
12 तदप्येषो B.

रिति तन्मनसैवान्ते भवति यत्स दूरं परेत्याथ[1] तत्र प्रमाद्यति[2] कस्मिन्त्सास्य हुताहुतिर्गृहे यामस्य जुह्वतीति यो जागार भुवनेषु विश्वा रूपाणि योऽस्मिन्तस्मिन्त्सास्य हुताहुतिर्गृहे यामस्य जुह्वतीति तत्प्राण एवैतामाहुतिं जुह्वति तस्माद्वा आहुः प्राण एवाग्निहोत्रमिति ॥ ४ ॥ चतुर्थं ब्राह्मणम् ॥

M. II. 3. 3 K. III. 1. 5.

17-19 स यथाग्निं चित्यमाप्नोति समिधमेतामभ्यादधातीष्टकामेवैतामुपधत्ते[3] तदप्येतदग्निर्ज्योतिषं त्वा वायुमतीं प्राणवतीम् । स्वर्ग्याᳫं[4] स्वर्गायोपदधामि भास्वतीमिति सायᳫं सूर्यज्योतिषं त्वा वायुमतीं प्राणवतीम् । स्वर्ग्याᳫं स्वर्गायोपदधामि भास्वतीमिति प्रातरथ यदास्मिन्जुहोति यथा संचिते जुहुयादेवं तत्स सप्त विᳫंशतिशतानि[5] सायंप्रातः समिधो ऽभ्यादधात्येतावत्यो ऽग्नेश्चित्यस्येष्टका इत्येक आहुः संवत्सरस्यैवैतावन्त्यहोरात्राणि प्रजापतिर्वै संवत्सरः प्रजापतिर्वा अग्निः स संवत्सरे संवत्सरे ऽग्निं चित्यमाप्नोति[6] तद्यथाग्निना चित्येनेष्ट्वा लोकं जयेत्तावन्तᳫं ह संवत्सरे संवत्सरे लोकं जयति ॥ १ ॥ पञ्चमं ब्राह्मणम् ॥

M. II. 3. 3. K. III. 1. 6.

20 स यथैतन्महदुक्थमाप्नोत्याहुतिमेतां जुहोति स सप्त विᳫंशतिशतानि[5] सायंप्रातराहुतीर्जुहोति[7] यैव पूर्वा तामेतत्संपश्यामः स्विष्टकृद्भाजनं वोत्तरा मिथुनं[8] वा या उ वै होता नवाशीतीः[9] शᳫंसति सप्त तानि विᳫंशतिशतानि[5] स संवत्सरे संवत्सर एतन्महदुक्थमाप्नोति[10] तद्यथोक्थेन शस्तेन लोकं जयेत्तावन्तᳫं ह संवत्सरे संवत्सरे लोकं जयति ॥ १ ॥ षष्ठं ब्राह्मणम् ॥

---

1 परेत्याथ B.
2 प्रमा॰ B.
3 Read ॰तामभ्यादधा॰ ?
4 स्वर्ग्याᳫं B.
5 विᳫंशतिशतानि B.
6 ॰माप्नोति B. C.
7 ॰र्जुहोति B.
8 मिथुनं B.
9 ॰शीतिः B., ॰शीति M.
10 ॰माप्नोति C.

K. III. 1. 7

अथ यथैते ऽध्यात्ममग्नयो भवन्ति मुखमेवास्याहवनीय उत्तरा नासिका[1] गार्हपत्यो दक्षिणान्वाहार्यपचन इयमेव[2] स्रुक्केपामन्नमेव दीप्तिः सर्वमायुरेति य एवमेतद्वेद ॥ १ ॥ सप्तमं ब्राह्मणम् ॥

K. III 1. 8. M. IX. 2. 5

स यथाश्वं[3] मेध्यमाप्नोत्येष वा अश्वो मेध्यो य एष तपति स वा एषो ऽस्तंयन्नग्निमेव प्रविशति ॥ १ ॥ स यत्सायं जुहोति पूर्वयोरेवास्य तत्पदयोर्जुहोत्यथ यत्प्रातर्जुहोत्युत्तरयोरेवास्य तत्पदयोर्जुहोति यत्र वा अश्वो मेध्यो निष्क्रामत्याहुतयस्तत्र हूयन्ते स वै चतस्रः सायंप्रातराहुतीर्जुहोति चतुष्पाद्वा अश्वो मेध्यस्तदश्वं मेध्यमाप्नोति तद्यथाश्वेन मेध्येनेष्ट्वा लोकं जयेत्तावन्तः ह[4] सायंप्रातराहुतिभ्यां लोकं जयतीति न्वग्निहोत्रे ऽश्वमेधस्याप्तिरथ दर्शपूर्णमासयोरपि[5] ह वा एतर्हि देवेभ्यो ऽश्वं मेध्यमालभन्ते ॥ २ ॥ तदाहुः प्राकृतो[6] ऽश्वमेध इतीतरो नूनः स प्राकृत एष वा अश्वो मेध्यो यच्चन्द्रमास्तमेतदश्वं मेध्यमालभते यत्पौर्णमासेन[7] यजते स एष आलब्ध एत्यामावास्यायास्तस्यैतत्पदे पदे जुहोति यदग्निहोत्रं जुहोति पदे पदे वा अश्वस्य मेध्यस्याहुतयो हूयन्ते ॥ ३ ॥ अथ यदामावास्येन यजते चन्द्रमा आदित्यं प्रविशत्यादित्यो ऽस्तंयन्नग्निं प्रविशति तस्यैताः रात्रिमग्नयः सार्धं संवसन्ति सो ऽस्यैषो अश्वो मेध्य एताः रात्रिमग्निषु विवर्तते[8] यत्र वा अश्वो मेध्यो विवर्तत इष्ट्या तत्र यजन्ते[9] ॥ ४ ॥ स यत्प्रातरामावास्येन यजते विवर्तन[10] एवास्य तद्यजते[11]

(margin numbers: 2, 1, 4, 5)

---

1 नासिको B.
2 इयमेव B. C. ( originally )
3 यथाश्वं B.
4 om. B.
5 पूर्ण० B. C. (originally)
6 प्रकृतो B.
7 ०मासेन B.
8 निवर्तते B.
9 यजन्ते B. C. ( orig. )
10 विवर्तन C. M., विवर्तत B. My. ( cp. T. Br. III. 9. 23. 2 )
11 तद्यजते B. C.

तमामावास्येनेष्ट्वोत्सृजते स एष उत्सृष्ट एत्या पौर्णमास्यास्तस्यो[1] एतस्यै
पद एव जुहोति यदग्निहोत्रं[2] जुहोति पदे पदे वा अश्वस्य मेध्यस्याहुतय
हूयन्ते तं पुनः पौर्णमास्यामालभन्ते स मासि मास्यश्वं मेध्यमालभते तद्यथा-
श्वेन[3] मेध्येनेष्ट्वा लोकं जयेत्तावन्तꣳ ह मासि मासि लोकं जयति ॥ ५ ॥

अष्टमं ब्राह्मणम् ॥

M. II. 3. 3 K. III. 1. 9.

7-8 एष वाव मृत्युर्य एष तपति तस्माद्या अतो ऽर्वाच्यः प्रजास्ता मर्त्या
अथ याः पराच्यस्ता अमृतास्तस्यैतस्य मृत्योरिमाः प्रजाः प्राणेषु रश्मिभि-
रभिहिता यथाश्वो रशनयाभिहितः[4] स्यादेवꣳ स यथा राजा विजिग्यानो न
किं चनावेप्सत्येवमेष[5] न किं चनावेप्सति स[6] यस्य कामयते[6] तस्य प्राणेना-
स्तमेति यस्य कामयते तस्य प्राणेनोदयते[7] स वा एषो ऽस्तंयन्नग्निमेव
9 प्रविशति ॥ १ ॥ स यत्सायं जुहोति यत्किं चाह्ना पुण्यं करोति तेन सह[8]
सर्वेणैतस्मिन्पूर्वाभ्यां पद्भ्यां प्रतितिष्ठत्यथ यत्प्रातर्जुहोति यत्किं च रात्र्या
पुण्यं करोति तेन सह सर्वेणैतस्मिन्नुत्तराभ्यां पद्भ्यां प्रतितिष्ठति स यथा रथे
वान्यस्मिन्वा याने चतुष्पदि प्रतितिष्ठेदेवꣳ हैतस्मिꣳश्चतुष्पदि प्रतितिष्ठति ॥२॥
11-12 तमेष आदायोदयते सपरेणास्यैतमात्मानꣳ[9] सꣳस्करोति स यदामुं[10] लोकमेत्य-
थैनमेष आदायोदयते तमेष आहुतिमयः सुकृतमय आत्माह्वयत्येह्ययं त आत्मे-
ति स यदाह्वयति[11] तस्मादाहूतयो नामाहूतयो ह वै नामैतद्यदाहुतय इत्या-
हुरत उ वा अर्वाची अहोरात्रे अहोरात्रे वै परिवर्तमाने पुरुषस्य सुकृतं क्षिणुत-

1 ०स्तस्या B.
2 यद्यग्नि० B.
3 तद्यथाश्वेन B.
4 रशनयाभि० B. C.
5 चनावे० B. C.
6 Thus M., सद्यःसकाम० C., सद्यः काम० B., सयःका० My. T.
7 कामोदयते B.
8 सह B.
9 ? सपरेणा० (also III. 2. 6. 3)
10 यदमुं B.
11 यदाह्वयति B.

स यथा रथेन धावयन्नथचक्रे[1] परिवर्तमाने प्रत्यवेक्षेतैवꣳ हाहोरात्रे परिवर्तमाने प्रत्यवेक्षते[2] तस्य ह नाहोरात्रे सुकृतं क्षिणुतो ऽक्षीयꣳ ह जयति य एवमेतद्वेद ॥ ३ ॥ तदेतदनीकं यज्ञस्य यदग्निहोत्रं स येन वा इषोरनीकमत्येति तेनैव सर्व इषुरत्येति तदेतेनैवास्य सर्वो यज्ञो ऽत्येत्येतेन सर्वो यज्ञो[3] ऽतिमुच्यते[3] ॥ ४ ॥ आगूर्ती ह वा एषो ऽमुं लोकमेति यो ऽग्निहोत्रं जुहोति सायꣳ हि हुत्वा होष्यन्प्रातर्भवति[4] प्रातर्हुत्वा होष्यन्त्सायं[5] भवति[5] तद्यथानागूर्ती[6] भवति यैवास्य सायं[7] पूर्वाहुतिः[8] सैवास्य सायमाहुतिस्तस्मात्तां मन्त्रेण जुहोत्यद्धा[9] हि[9] तद्यन्मन्त्रो ऽद्धा हि भूतं भूतꣳ ह्येषा तर्हि भवत्यथ यां द्वितीयां जुहोति सैवास्य प्रातराहुतिस्तस्मात्तां तूष्णीं[10] जुहोत्यनद्धा हि तद्यत्तूष्णीमनद्धा हि भविष्यद्भविष्यद्ध्येषा तर्हि भवति ॥ ५ ॥ तथो एव प्रातर्यैवास्य प्रातः[11] पूर्वाहुतिः[8] सैवास्य प्रातराहुतिस्तस्मात्तां मन्त्रेण जुहोत्यद्धा हि तद्यन्मन्त्रो ऽद्धा हि भूतं भूतꣳ ह्येषा तर्हि भवत्यथ यां द्वितीयां जुहोति सैवास्य सायमाहुतिस्तस्मात्तां तूष्णीं जुहोत्यनद्धा हि तद्यत्तूष्णीमनद्धा हि भविष्यद्भविष्यद्ध्येषा तर्हि भवत्येवमस्यैते उभे सायमाहुती हुते भवत उभे प्रातस्तथो[12] अनागूर्ती[13] भवति ॥ ६ ॥ नवमं ब्राह्मणम् ॥

K. III. 1. 10. M. II. 3. 3.

प्रजापतिर्ह वै प्रजाः ससृजे तदप्येतमग्निꣳ ससृजे सोऽग्निः सृष्ट इमाः प्रजा दग्धुं दध्रे[14] स इमाः प्रजा दहन्नभीयाय तमिमाः प्रजा दह्यमाना अनु-

1 Thus (without acc.) M., धावयन्न॰ थचक्रे the other MSS.

2 प्रत्यवेक्षते B. C. (sec. m.)

3 यज्ञोतिमु॰ B.

4 होष्यन्प्र तर्भवति C., होष्यन्प्रातर्भवति B.

5 ॰सायंभवति B. N.

6 तद्यथानागूर्ति B.

7 सायं B. C. N.

8 पूर्वाहुतिः B. N.

9 ॰त्यद्धाहि B. N.

10 B. ins. हंत्रेण (!)

11 प्रातः B. C. N.

12 स्तद्यो B.

13 ॰गूर्ति B.

14 दध्रे B.

2 गमयितुं[1] विपेष्टुं दध्रिरे ॥ १ ॥ सो[2] ऽनुगम्यमान उवाच पुरुषं त्वां प्रवि-
शामीति तं मा[3] त्वं जनयित्वा बिभृहीति स यथा वै मां त्वमस्मिंल्लोके भरि-
ष्यसीत्येवमेवाहं त्वाममुष्मिंल्लोके जनयित्वा भरिष्यामीति तथेति तं प्राविशत्त-
स्मादाहुः सर्वः पुरुषो ऽग्निमानिति[4] पुरुषꣳ ह वा अग्निः प्रविष्टस्तस्मादेवं

3-4 पुरुष एव जनयते नान्यः पशुः ॥ २ ॥ स यदग्नी आधत्ते तदेनं जनयते-
ऽथ यदस्मिन्जुहोति यद्यजते तदेनं जनयित्वा बिभर्ति सोऽग्निः पौरुषिर्भवति
पुरुषाद्ध्यधि जायते तस्मादग्नी आधाय नोद्वासयेत स यावद्ध वा एनौ भृत्वो-
द्वासयते तावद्धैनमेषो ऽमुष्मिंल्लोके भृत्वा परास्यत्येतावद्धै[5] नो ऽबिभरित्यथ[6]
यो हैनं यावज्जीवमेवाजरसं[7] बिभर्ति यावदेवाग्नेरायुस्तावद्धैनमेषो ऽमुष्मिंल्लोके
जनयित्वा बिभर्त्यजरं[8] वा अमृतमग्नेरायुः सो ऽजरो ऽमृतः संभवति ॥ ३ ॥

5 स यदामुं लोकमेत्यथाग्निमेव प्रविशति तमु तत्राग्निर्जनयित्वा बिभर्ति[9] स
उ तत्र पुरुष आग्नेयो भवत्यग्नेर्ह्यधि जायते तस्मादग्नी आधाय नोद्वासयेत
स यावद्ध वा एनौ भृत्वोद्वासयते तावद्धैनमेषो ऽमुष्मिंल्लोके भृत्वा परास्यत्ये-
तावद्धै[10] नो ऽबिभरित्यथ[6] यो हैनं यावज्जीवमेवाजरसं[7] बिभर्ति यावदेवाग्नेरायु-
स्तावद्धैनमेषो ऽमुष्मिंल्लोके जनयित्वा बिभर्त्यजरं[8] वा अमृतमग्नेरायुः सो ऽजरो
ऽमृतः संभवति ॥ ४ ॥ दशमं ब्राह्मणम् ॥

---

1 अनुगमयितुं B. C. N.
2 सो B.
3 मां B.
4 ग्निमानिति B. N. C. (orig.)
5 •तावद्दै B.
6 Thus (without acc.) M. only, बिभर्त्यथ the other MSS.
7 यावज्जीवमेवा• MSS.
8 •जरं MSS.
9 बिभर्ति B. N.
10 •तावद्धै M. T., •तावद्धै B. C. N. M.

K. III. 1. 11 M. II. 3. 3

स वा अग्रेणाहवनीयं परीत्य जघनेन वा गार्हपत्यमन्तरेणेत्वोपविशति स यदन्तरेणेत्वोपविशति न ह वै देवा मनुष्यं विदुरयमस्माकमस्य वयꣳ स्म इति तꣳ हैवमन्तरेण यन्तं विदुरयमस्माकमस्य वयꣳ स्म इति तस्मै ह तं कामꣳ समर्धयति यस्मै कामायान्तरेणोपविशति[1] ॥१॥ 13

अथ यद्वेवान्तरेणोपविशत्यपहतपाप्मानो[2] वै देवा अनपहतपाप्मानो मनुष्या-स्तस्य हैवमन्तरेण यतो[3] ऽग्नी पाप्मानमपहतस्तं पाप्मा नाभ्यत्येति सो ऽपहतपाप्मा भवति ॥२॥

अथ यद्वेवान्तरेणोपविशत्येषा वै नौः[4] स्वर्ग्या यदग्निहोत्रं तस्या एतस्या नावः[5] स्वर्ग्यायाः क्षीरहोतैव नावाजस्तामतः[6] प्राचीमभ्यजति तस्या अतो ऽधिरोहणं तामतो ऽधिरोहति ॥३॥ 15.16a

स यद्ध दक्षिणत उपासीत यथा पारार्थं[7] नौर्जह्यादेवꣳ ह तदथ यद्धुते पुनरैति तत्स्वर्गे लोके प्रतितिष्ठत्येतद्धै स्वर्गस्य लोकस्य द्वारꣳ स यदन्तरेणेत्वोपविशति तत्स्वर्गं लोकं प्रपद्यते ॥४॥ 16b.14

अथ यद्ध दक्षिणत उपासीत यथा द्वारेण प्रपिपत्सेतैवꣳ[8] ह तदथ यद्धुते पुनरैति तत्स्वर्गे लोके प्रतितिष्ठति ॥५॥

एष वाव प्रजापतिर्यज्ञो यदग्निहोत्रं तस्यैतस्य प्रजापतेर्यज्ञस्य यजमान एव प्राणो यावद्ध्येव[9] यजमानः प्राणेन प्राणिति तावदेव जुहोत्यथ यदा प्राणो ऽपक्रामत्यथ[10] व्यवच्छिद्यते स यदन्तरेणेत्वोपविशति प्राण एव तद्भूत्वा प्रविशत्यथ यद्धुते पुनरैत्युदान एव तद्भूत्वा पुनरैति स वा अयं पुरुषो ऽसं प्राणायानार्तिं कामयत एवꣳ हास्मा एता देवता अनार्तिं[11] कामयन्ते स ह[12] नर्च्छत्यक्षीयꣳ[13] ह जयति य एवमेतद्वेद स यदास्मा-ल्लोकात्प्रैत्यथास्यैत एवाग्नयः प्राणा भवन्त्यक्षीयं[13] वा अमृतमेते प्राणास्तस्य हाक्षीयꣳ[13] सुकृतं भवत्यक्षीयꣳ[13] ह जयति य एवमेतद्वेद[14] ॥६॥ एकादशं ब्राह्मणम् ॥

1 विशति B. 2 °पाप्मानो B. 3 यतो B.
4 नौ B N My. 5 नावः C N. 6 नावाज° B.
7 Thus B C N, पाराद्धं My, पाराध्यं T, हरातं M.
8 प्रपिपत्सेतैवꣳ C, प्रपिपत्येतैवꣳ M, प्रतिपत्सेतैवꣳ B N My.
9 यावद्ध्येव B N. 10 पक्रामत्यथ B N.
11 अनार्तिं B N. 12 हानर्छत्य° B N, हानर्छत्य° C My,

हानर्चत्य॰ M; ॰क्षय्य॰ instead of ॰क्षीय॰ again M.
13 अक्षय्य instead of अक्षीय each time M.
14 ॰वेद MSS.

M. XI. 1. 6 K. III. 1. 12

1 आपो ह वा इदमग्र आसुः सलिलमेव ता अकामयन्त कथं नु प्रजायेमहीति ता अश्राम्यꣳस्तास्तपो ऽतप्यन्त तास्वन्तर्हिरण्मयमाण्डꣳ संबभूव तद्जातो ह तर्हि संवत्सर आसीद्यावती तु संवत्सरस्य वेला तावदिदꣳ हिरण्मयमाण्डमास्वेवाप्सु परिपुप्लुवे ॥१॥

2 तदन्तः पुरुषः सबभूव स प्रजापतिर्यत्स[1] पुरुषः संबभूव स इदं द्विधाण्डं[2] व्यरुजत् ॥२॥

तद्धै सो ऽजायत तस्मात्संवत्सर एव स्त्री वा गौर्वा वलबा वा विजायते संवत्सरे हि प्रजापतिरजायत तद्जातो ह तर्हि संवत्सर आसीद्यावती तु संवत्सरस्य वेला तावदयमिमे त्रकले बिभ्रदास्वेवाप्सु[3] परिपुप्लुवे ॥३॥

3 स संवत्सरे व्याजिहीर्षत्स भूरिति व्याहरत्तदिमं लोकमजनयत भुव इति द्वितीयं तदिममन्तरिक्षलोकꣳ[4] स्वरिति तृतीयं तदमुं देवलोकमेवमिमांल्लोकानजनयत तान्जनयित्वानूदतिष्ठत्तस्मात्संवत्सर[5] एव जातः कुमार उत्तिष्ठासति संवत्सर उत्तिष्ठति संवत्सरे व्याजिहीर्षति[6] संवत्सरे व्याहरत्येवꣳ हि प्रजापतिरकरोत् ॥४॥

4 स वा एतत्प्रजापतिः प्रथमं वदन्नेकाक्षरद्व्यक्षरमवदत्तस्मादयं[7] जातः कुमारः प्रथमं वदन्नेकाक्षरद्व्यक्षरं वदति ॥५॥

5.6 तानि वा एतानि पञ्चाक्षराणि तानृतूनकुरुत तस्मात्पञ्चर्तव इत्याहुरेता नृतूनकुरुतेति स ह सहस्रायुषे[8] जज्ञे स यथा नद्याः पारं परापश्येदेवꣳ ह स्वस्यायुषः पारं पराचख्यौ ॥६॥

7.8 सो ऽर्चञ्छ्राम्यन्प्रजाकामश्चचार स आत्मन्येव प्रजातिमधत्त सो ऽसिसृक्षत स आस्येनैव[9] देवान्जनयां चक्रे ते देवा दिवमेवाभिपद्याजायन्त तस्माद्देवा नाम यद्दिवमभिपद्याजायन्त तस्मा उ वै प्रजापतये देवान्ससृजानाय दिवेवाभवत्तस्माद्देव[10] देवा नाम यदस्मै देवान्ससृजानाय दिवेवाभवद्वाचा प्राणेनासुराꣳस्ते ऽसुरा इमामेव पृथिवीमभिपद्याजायन्त ॥७॥

स होवाचास्विव वत मे ऽराधीति[11] तस्मादसुरा नाम तस्मा उ वै प्रजाप-

तये ऽसुरान्त्ससृजानाय तम[12] इवाभवत् ॥८॥

9 स हेक्षां चक्रे प्रजापतिः पाप्मानं वा असृक्षि य इमानसृक्षीति ताᳪं स्तत एव पाप्मनाविध्यत्तान्पराभावयत्तस्मादाहुर्नैतदस्ति[13] यद्दैवासुरमिति जनयित्वा ह्येव तान्प्रजापतिः पिता पराभावयदिति ॥९॥

10 तस्मादप्येतदृषिणाभ्यनूक्तं यदचरस्तन्वा वावृधानो बलानीन्द्र[14] प्रब्रुवाणो जनेषु । मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रुं[15] ननु[15] पुरा विवित्स[16] इति जनयित्वा ह्येव तान्प्रजापतिः पिता पराभावयदित्यथ[17] प्रजननेनैवेमाः प्रजाः ससृजे या इमाः प्रजाः[18] प्रजननेन प्रजायन्ते तस्माद्धीमाः प्रजाः प्रजननेनैव प्रजायन्ते ॥१०॥

11 स होवाच मन इव बत मे ऽमोषिपुरिति तस्मान्मनुष्या नामैवं प्रजापतिरिमाः प्रजा असृजत स यदस्मै देवान्त्ससृजानाय दिवेवाभवत्तदहरकुरुताथ यदस्मा असुरान्त्ससृजानाय तम इवाभवत्ताᳪं रात्रिमकुरुतैवमुभे अहोरात्रे असृजत ॥११॥

12 स हेक्षां चक्रे प्रजापतिः सर्वं वा इदमत्सारिषं य इमा देवता असृक्षीति तस्मात्सर्वत्सरो नाम सर्वत्सरो ह वै नामैतद्यत्संवत्सर इत्याहुः स यो हैनं पाप्मा[19] मायया त्सरति स हैव पराभवत्यथ[20] यᳪं स त्सरति यं तुस्तूर्षत्यभि[21] हैवैनं भवति य एताᳪं संवत्सरस्य सर्वत्सरतां वेद ॥१२॥

13 स हेक्षां चक्रे प्रजापतिरिमां वा आत्मनः प्रतिमामसृक्षि यत्संवत्सरमिति तस्मात्संवत्सरः प्रजापतिरित्याख्यायते चतुरक्षरो[22] हि संवत्सरश्चतुरक्षरः[23] प्रजापतिस्तेनो एवास्य प्रतिमा ॥१३॥

14.15 ता वा एता देवता असृज्यन्ताग्निरिन्द्रः सोमः परमेष्ठी प्राजापत्यस्ते ह सहस्रायुषे जज्ञिरे ते यथा नद्याः पारं परापश्येयुरेवᳪं ह स्वस्यायुषः पारं पराचख्युः ॥१४॥

16 ते हार्चन्तः श्राम्यन्तश्चेरुस्ततो हैतं परमेष्ठी प्राजापत्यो यज्ञं ददर्श यद्दर्शपूर्णमासौ ताभ्यामीजे ताभ्यामिष्ट्वाकामयताहमेवेदᳪं सर्वᳪं स्यामिति स आपो ऽभवत्तस्मादाहुराप एवेदᳪं सर्वᳪं[24] सर्वᳪं[24] हि सो ऽभवदित्यथ यत्परमेष्ठीत्याख्यायते[25] यो वा इह खनेत्परम[26] एवैनाः स्थाने विन्देत्परमाद्धि तत्स्थानाद्वर्षति तस्मात्परमेष्ठीत्याख्यायते ॥१५॥

17 स होवाच प्रजापतिं कामप्रं वा इमं यज्ञमदर्शं तेन त्वा याजयानीति तथेति तेन हैनं याजयां चकार स एतेनेष्ट्वाकामयत प्रजापतिरहमेवेदᳪं सर्वᳪं स्यामिति

स प्राणो ऽभवत्तस्मादाहुः प्राणः प्रजापतिरिति तस्मादाहुः प्राण एवेदꣳ सर्वꣳ सर्वꣳ हि सो ऽभवदित्ययं वाव प्राणो यो ऽयं पवते तस्य हैतस्य दृष्टिर्यदेवैनं वेदेतो वा तीति तदु तत्परोक्षमिव यद्वाव किं च प्राणिति स प्राणः स यो हैतां प्रजापतेर्दृष्टिं वेदाविरिव हैव भवति ॥१६॥

18 स होवाचेन्द्रं येन मामयं परमेष्ठी यज्ञेनायीयजत्तेन त्वा याजयानीति तथेति तेन हैनं याजयां चकार स एतेनेष्ट्वाकामयतेन्द्रो ऽहमेवेदꣳ सर्वꣳ स्यामिति स वागभवत्तस्मादाहुरिन्द्रो वागिति तस्मादाहुर्वागेवेदꣳ सर्वꣳ सर्वꣳ हि सो ऽभवदिति ॥१७॥

19 स होवाचाग्नीषोमौ येन मामयं प्रजापतिर्यज्ञेनायीयजत्तेन वां याजयानीति तथेति तेन हैनौ याजयां चकार तावेतेनेष्ट्वाकामयेतामग्नीषोमावावमेवेदꣳ[२७] सर्वꣳ स्यावेति तयोरन्नमेवान्यतरो ऽभवदन्नादो ऽन्यतरो ऽन्नमेव सोमो[२८] ऽभवदन्नादो[२८] ऽग्निरेतावद्वा[२९] इदमन्नं चैवान्नादश्च ॥१८॥

20 स एष[३०] कामप्रो यज्ञस्तद्यत्कामा वा एतेन यज्ञेनैता देवता अयजन्त स आभ्यः कामः समार्ध्यत स यत्कामो हैतेन यज्ञेन यजते सो ऽस्मै कामः समृध्यते ॥१९॥

21 तेभ्यो देवेभ्य ईजानेभ्य इयं प्राची दिक् प्रारोचत तां प्राचीमकुर्वत तस्मादेषा प्राची दिगित्याख्यायत उपैनामितः कुर्वीमहीति तामूर्जमकुर्वत[३१] प्राचीꣳ हि वै दिशमूर्जमकुर्वत तस्माद्धिमाः प्रजा[३२] प्राच्य[३२] एव सर्पन्तीमामूर्जं[३३] पश्येमेति ते ऽमुं देवलोकमकुर्वत[३४] तस्मादमुतो ऽर्वाचीमूर्जमुपजीवन्ति ॥२०॥

22 अथैभ्य[३५] इयं दक्षिणा दिक् प्रारोचत तां दक्षिणामकुर्वत तस्माद्दक्षिणतो[३६] दक्षिणा उपकद्धा[३७] उपतिष्ठन्ते[३८] दक्षिणतो ऽभ्यवयन्त्येताꣳ हि दक्षिणामकुर्वतोपैनामितः कुर्वीमहीति तं लोकमकुर्वतेमं लोकं पश्येमेति त इममन्तरिक्षलोकमकुर्वत तद्यदाहुः[३९] परोक्षमिवासौ लोक इति यदस्माल्लोकादेतं लोकमनारम्भणमिवायतमिव[४०] मन्यन्ते यथाविरिव[४१] यथा प्रतिष्ठेवास्मिंल्लोके[४२] ऽयं लोक एवमाविरिव वा एवं प्रतिष्ठेवामुष्मिंल्लोक[४३] एष[४४] लोकः ॥२१॥

23 अथैभ्य[४५] इयं प्रतीची दिक् प्रारोचत तामाशामकुर्वतैताꣳ हि वै दिशमाशामकुर्वत तस्माद्यो ऽपीहाग्रेण लभत एतामेव दिशं धावयत्युपैनामितः[४६] कुर्वीमहीति ताꣳ श्रियमकुर्वतेमाꣳ श्रियं पश्येमेति त इमां पृथिवीमकुर्वतेमाꣳ हि वै श्रियमकुर्वत तस्माद्यो ऽस्या भूयिष्ठं भजते स श्रैष्ठ्यं गच्छति ॥२२॥

अथैभ्य[४६] इयमुदीची दिक् प्रारोचत तामपो[४७] ऽकुर्वतोपैनामितः कुर्वीमहीति तं धर्ममकुर्वतापो[४८] हि वै धर्ममकुर्वत तस्माद्यदेहाप आगच्छन्त्यथ यथाधर्म[४९] भवत्यथ यदापो[५०] नागच्छन्ति बलीयानबलीयस आदत्ते न हि धर्म आगच्छति ॥२३॥ 24

ता वा एता एकादश देवता असृज्यन्तैकादशो[५१] वा एता आहुतयः पञ्च प्रयाजा द्वावाज्यभागौ त्रयो ऽनुयाजाः स्विष्टकृत्त एताभिरेकादशभिराहुतिभिर्देवा एता दिश एतांल्लोकानजयꣳस्तथो वा एष एताभिरेकादशभिराहुतिभिरेता दिश एतांल्लोकान् जयति ॥२४॥ 25.26

अथेलान्नाद्यमेवैतया देवा अजयꣳस्तथो वा एष एतयान्नाद्यमेव जयति ॥२५॥ 28

अथ चत्वारः पत्नीसंयाजाश्चतस्रो वा अवान्तरदिशो ऽवान्तरदिशो वा एतैर्देवा अजयꣳस्तथो वा एष एतैरवान्तरदिश[५२] एव जयतीति[५३] न्वधिदेवतम् ॥२६॥ 27

अथाध्यात्मं पञ्च प्रयाजास्त इमे पञ्च शिरस्याः[५४] प्राणा द्वावाज्यभागौ ते चक्षुषी त्रयो ऽनुयाजास्तानि शिश्नानि य[५५] एष वर्षिष्ठो ऽनुयाजस्तदेतद्वर्षिष्ठꣳ शिश्नं तस्मात्तमनवानं यजेदित्याहुस्तथास्यामूर्द्धꣳ[५६] शिश्नं भवतीति तद्वावान्यादेव[५७] सकृद्यद्यनवानं यजेत्प्रतृण्णं[५८] वा हैव तिष्ठेत्पन्नं[५९] वा स यत्सकृदेवावानित्येकं[६०] वा एतस्य पर्व तदेवास्मिन्नेतद्दधाति तस्मादेतदुच्च तिष्ठति पद्यते च ॥२७॥ 29.31.32

अथ[६१] यो ऽयमवाङ् प्राण एष स्विष्टकृत्स[६२] यदवत्तस्यावत्तस्य[६२] स्विष्टकृते ऽवद्यति तस्माद्यत्किं चेमान्प्राणानापद्यत एतमेव प्राणं गच्छत्यथ यदभ्यर्ध इतराभ्य आहुतिभ्य एतामाहुतिं जुहोति तस्माद्धीमे प्राणा एतस्मात्प्राणाद्बीभत्सन्ते ऽथेला सो ऽयमनिरुक्तः प्राणः स यदेतामाहुतिꣳ सतीं नाग्नौ जुहोत्येष्वेव प्राणेषु हूयते तस्मादयं प्राणः सन्ननपविद्धः ॥२८॥ 30

अथ चत्वारः पत्नीसंयाजास्ता इमाः प्रतिष्ठा बाहू द्वा ऊरू द्वावस्थीनि ह वाव याज्यानुवाक्या माꣳसमेव हविस्तानि वा एतानि मितानि छन्दाꣳसि यद्याज्यानुवाक्या अथामितमेव हविरुताल्पं भवत्युत[६३] बहु तस्मान्माꣳसान्येव कृश्यतः[६४] कृश्यन्ति[६४] माꣳसानि मेद्यतो मेद्यन्ति[६५] स यावन्मात्राण्येवास्थीन्यꣳसलस्य च भवतः[६६] कृशस्य[६७] च स एतेन यज्ञेन यां देवतां कामयते तां यजति स नात एकतमां चनाहुतिमुद्धरति[६८] यद्धात एकतमां चिदाहुतिमुद्धरेद्यथाङ्गं वा प्रश्शृणीयात्प्राणं[६९] वा निर्हण्यादेवꣳ ह तद्धविरेवा[७०] वा[७०] हरत्यप वोद्धरति षोलशकलो वै पुरुषः पुरुषो 33-36

वै यज्ञस्तस्मादेता॰[1] अच्युताः॰[1] षोलशाहुतयो भवन्ति पुरुषो हि यज्ञः ॥२९॥ द्वादशं ब्राह्मणम् ॥ प्रथमो ऽध्यायः ॥

1 Thus B N C My, ॰पतिर्यस्तु T, ॰पतिर्यस्य M Read प्रजापतिर्यः स ? 2 द्विधा॰ MSS. 3 Thus MSS. 4 ॰ममंतरिक्षलोकᳫ B N. 5 ॰त्वानूद्तिष्ठतस्मा॰ B. 6 ॰हीर्षति B. 7 वदंक्षेकाक्षरमवद॰ B. 8 सहस्रायुषे C, सहस्रायुषे B N, सहस्रायुषी M (cp. K. 14). 9 आस्येनैव B N. 10 ॰त्तस्माद्वेव C My, ॰त्तस्मादेव B N, ॰त्तस्माद्देव M. 11 रायीति C B N, रायाति M My. 12 तम B N. 13 ॰त्तान्पराभवय॰ B. 14 बलानींद्र B N My. 15 शत्रुर्नंनु B N My. 16 See RV X. 54. 2. 17 पराभव॰ B. 18 Om. MSS. except T. 19 प्राप्या B N My. 20 पराभावयत्यथ B N My. 21 तुस्तूर्षत्यभि B N, तुस्तूरिषत्यभि C, तुस्तुरिषत्यभि T. 22 Without accent the MSS. 23 संवत्सरश्चतुरक्षरः MSS. 24 Om. B T, सर्वंᳫ once in N My. 25 ॰यते B N. 26 ॰त्परम B N. 27 ॰षोमावावामेवेदᳫ B N. 28 Thus accented the MSS. Read सोमो ऽभवद॰ ? 29 म्रिरेता॰ B N. 30 एव B N. 31 तामूर्जमकुर्वत MSS. 32 प्रजाः प्राच्य B N. 33 ॰मूर्जं B N. 34 ॰लोकमकुर्वंत B. 35 अथैम्य MSS. 36 ॰द्क्षिणतो B N. 37 उप॰ B N. 38 उपतिष्ठंते B N C (originally), उपति॰ C (sec. m.). 39 तद्यदाहुः B N. 40 ॰कमना-रोहणमि॰ T. 41 यथात्रिरिवैवै N My (in B this word is wanting). 42 प्रतिष्ठेवा॰ C N, प्रतिष्ठेवा॰ B; ॰लोके B N. 43 प्रतिष्ठेवा॰ MSS. 44 एषु B My.

45 अथैभ्य MSS. 46 धावयत्युपनामितः MSS. 47 तामपो B N. 48 °वैतापो C. 49 Emended; यथाधर्मो B, यथाधर्मा C M My. 50 यदापो MSS. 51 Without accent the MSS. 52 दिश B. 53 °ति B. 54 शिरस्याः C, शिरस्याः B. 55 स B C My. 56 °थास्यमत्वं B. 57 Thus conjecturally; तद्धवान्यादेव B C My, तद्यवान्यादेव M. 58 यजेत्प्रतृण्णं C, यजेत्यतृणं B. 59 तिष्टेत्यन्नं B My. 60 Thus M only; °देवावागित्येकं B, °देवागित्येकं C My. 61 अथ B. 62 स्विष्टकृत्स-यदवत्तस्यावत्तस्य C, स्विष्टकृत्ययदवत्तस्यवतस्य B. 63 Read भवत्युत ? 64 Thus emended; कृष्यतः and कृष्यंति the MSS. 65 मेद्यंति MSS. 66 भवतः B C (orig.). 67 कृशस्य MSS. 68 °मुद्धरति C (orig.) corrected into मुद्धरति. 69 Conjecturally; प्यश्रुणी° C M My, प्यश्रुणी° B. 70 °वावा B. 71 °देता अच्युताः B.

K. III. 2. 1 M. XI. 1. 2

घ्नन्ति ह वा एतद्यज्ञं यदेनं तन्वते यद्राजानमभिषुण्वन्ति तत्तं घ्नन्त्यथ यत्पशुं संज्ञपयन्ति यद्विशासति तत्तं घ्नन्त्युलूखलमुसलेन दृषदुपलेन हविर्यज्ञं घ्नन्ति तमेवं हत्वाग्नौ योनौ रेतो भूतं सिञ्चत्यग्निर्वै यज्ञस्य योनिः स ततः प्रजायते ॥१॥ 1-3

स दश ता आहुतीः संपादयेद्याभ्यो वषट्क्रियतेऽयं वाव यज्ञो योऽयं पवते स वा अयमेक इवैव पवते सोऽयं पुरुषेऽन्तः प्रविष्टो दशधाविहितः स एवं प्राणैः कृत्तेरग्नेर्योनेरधि जायते दशाक्षरा वै विराट् सैषा संपदेव यज्ञ एव ॥२॥

अथो नव स्युर्न्यूनामेवैतद्विराजं करोति प्रजननाय न्यूनाद्धीमाः प्रजाः प्रजायन्ते सैषा संपदेव यज्ञ एव ॥३॥ 4

अथो एकातिरिक्ता स्यात्प्रजापतिमेव साभ्यतिरिच्यते सैषा संपदेव यज्ञ एव ॥४॥ 5

6 अथो द्वे अतिरिक्ते स्यातां द्वन्द्वं[1] मिथुनं प्रजननं[2] सैषा संपदेव[3] यज्ञ एव ॥५॥

7 अथो तिस्रो ऽतिरिक्ताः स्युर्द्वन्द्वं मिथुनं प्रजनन यज्जायते तत्तृतीयं[4] सैषा संपदेव[3] यज्ञ एव ॥६॥

8-9 अथो चतस्रो ऽतिरिक्ताः स्युर्यथैकैवं[6] चतस्रस्त्रय इमे लोकाः प्रजापतिमयाति चतुर्थीं[7] प्रजापतिमेव साभ्यतिरिच्यते सैषा संपदेव[3] यज्ञ एव तद्धोनं यद्व्रभ्यामूनं तदु ह्यतिरिक्तं यत्पश्वभिः स ह्ययज्ञस्तदेतदेवाधि[8] दशस्वा विंशतेरा सहस्रादेवा न्वाहुतिसंपत् ॥७॥

10-13 आजिं ह वा एते धावन्ति ये दर्शपूर्णमासाभ्यां यजन्ते स पञ्चदश वर्षाणि यजेत पञ्चदशानां वै वर्षाणां त्रीणि च शतानि षष्टिश्च पौर्णमास्यश्चामावास्याश्च त्रीणि च वै शतानि षष्टिश्च संवत्सरस्य रात्रयस्तद्रात्रीराप्नोत्यथापराणि पञ्चदश वर्षाणि यजेत पञ्चदशानां वै वर्षाणां त्रीणि च शतानि षष्टिश्च पौर्णमास्यश्चामावास्याश्च त्रीणि चो एव शतानि षष्टिश्च संवत्सरस्याहानि तदहान्याप्नोति स यदा त्रिंशतं वर्षाणि यजते[9] ऽथ संवत्सरमाप्नोति यदा ह वै देवाः संवत्सरमाप्नुवन्नथामृता[10] आसुर्मर्त्या[11] हैव ततः पुरा बभूवुः सर्वं वै संवत्सरो ऽक्षीयं[12] वै सर्वं तेन हास्याक्षीयं[12] सुकृतं भवति य एवं विद्वांस्त्रिंशतं वर्षाणि यजते पञ्चदशो एव वर्षाणि यजते[13] दाक्षायणयज्ञी[14] सो एवास्त्रैव संपद् द्व हि पौर्णमास्यौ यजते द्वे अमावास्ये ॥८॥ प्रथमं ब्राह्मणम् ॥

1 वषट्क्रियते B. 2 °क्षरा C (sec. hand).
3 °व B. 4 स्युन्यूनामेवं° B. 5 द्वंद्वं B.
6 स्युर्यथैकव B. 7 Thus (and cp. V. 8. 1. 5) B C My, चतुर्थि M, चतुर्थं T. 8 ह्यज्ञ B.
9 यजते MSS. 10 संवत्सरमाप्न° MSS. 11 मंत्या B 12 अक्षय्य instead of अक्षीय again M.
13 यजेत B. 14 दाक्षायणयज्ञी B.

M. XI. 1. 3 K. III. 2. 2

1 पौर्णमासेनेष्ट्वेन्द्राय विमृधे ऽनुनिर्वपति तेन यथेष्ट्यैवं चरन्त्यामावास्येनेष्ट्वादितये चरुमनुनिर्वपति तेन यथेष्ट्यैवं चरन्ति ॥१॥

2 स यन्नु[1] पौर्णमासेनेष्ट्वेन्द्राय विमृधे ऽनुनिर्वपतीन्द्रो वै यज्ञस्य देवता

ग्नीषोमीयमु वा इदं पौर्णमासꣳ हविर्भवति नात्रेन्द्रायेति किं चन क्रियते तथास्यैतत्सेन्द्रꣳ हविर्भवति[1] सेन्द्रो यज्ञो ऽथ यद्विमृधे पौर्णमासेन वा इन्द्रो मृधो हन्ति तस्माद्विमृधे ॥२॥

3 अथ यदामावास्येनेष्ट्वादितये[3] चरुमनुनिर्वपत्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स एताꣳ रात्रिं न[4] पुरस्तान्न पश्चाद्ददृशे तदस्यानद्धेव हविर्भवत्यप्रतिष्ठितमिवेयमु वा अदितिः साद्धा सा प्रतिष्ठितैतेनास्यैतदद्धा हविर्भवत्येतेन प्रतिष्ठितं तस्मादामावास्येनेष्ट्वादितये चरुमनुनिर्वपत्येतन्नु यस्मादनुनिर्वपेदथ यस्मान्नानुनिर्वपेत् ॥३॥

4 इदं नु यत्पौर्णमासेनेष्ट्वेन्द्राय विमृधे ऽनुनिर्वपति सेन्द्रं मे हविरसदिति यो वै कश्च यज्ञस्तायत इन्द्रस्यैव स सेन्द्र एव स तस्मान्नाद्रियेत ॥४॥

5 अथ यदामावास्येनेष्ट्वादितये चरुमनुनिर्वपत्यामावास्यं[5] वा अनुनिर्वाप्यं पौर्णमासेन वा इन्द्रो वृत्रमहꣳस्तस्मा एतदाप्यायनमनुनिरवपꣳस्तत्किमनुनिर्वाप्ये ऽनुनिर्वपेत्तस्मान्नाद्रियेत ॥५॥

6 स यो ह पौर्णमासेनेष्ट्वान्यद्धविरनुनिर्वपत्यामावास्येनेष्ट्वान्यद्धविरनुनिर्वपति[6] द्विषन्तꣳ हैव स भ्रातृव्यं प्रत्युच्छ्रयति प्रत्युद्यामिनं करोति ॥६॥

7 अथ यो ह पौर्णमासेनैव पौर्णमासीं यजत आमावास्येनामावास्यां क्षिप्रꣳ हैव पाप्मानमपहते क्षिप्रं प्रजायते पौर्णमासेन ह वै देवाः पौर्णमासीं यजमाना आमावास्येनामावास्यां क्षिप्रं पाप्मानमपाघ्नत क्षिप्रं प्राजायन्त स य एवं विद्वान्पौर्णमासेनैव पौर्णमासीं यजत आमावास्येनामावास्यां क्षिप्रꣳ हैव पाप्मानमपहते क्षिप्रं प्रजायत एतदु यस्मान्नानुनिर्वपेद्यद्युवनुनिर्वपेद्दद्याद्दक्षिणां[7] दर्शपूर्णमासयोर्वा[8] एषा दक्षिणा यदन्वाहार्यो[9] नादक्षिणꣳ स्याद्धविरित्यु वा आहुस्तस्मादु दद्याद्दक्षिणां यद्यनुनिर्वपेत् ॥७॥ द्वितीयं ब्राह्मणम् ॥

1 यज्ञ B. 2 हविर्भवति B. 3 अथामा° B.
4 Om. B. 5 °स्यामावास्यं B. 6 °निर्वपति C.
7 °पेद्यद्युमनुनिर्वपे° M, °पेद्यद्यवनुनिर्वपे° C, °पेद्यद्यनुनिर्वपे° B My. 8 दर्श° B. 9 यदन्वाहार्यो B C.

M. XI. 1. 4 K. III. 2. 3

1-3 दृष्ट्वा वैक उपवसन्ति श्वो नोदेतेति वाभ्रस्य वा हेतोर्न[1] निर्जानन्त्यथाभ्युदेति[2] तद्यद्यगृहीतꣳ हविरभ्युदियात्प्रज्ञातं[3] न्वेव[3] सैव व्रतचर्या समवर्जेयुर्वत्सानपराह्णे[4] पर्णशाखया वत्सानपाकुर्युरथ यदिदं पूर्वेद्युर्दुग्धं[5] दधि हविरातञ्चनं[6] तत्सर्वमेव[7] स्यात्तत्तत्प्रज्ञातमेव यदि तु व्रतचर्यां वा[8] नाशꣳसेत हविर्वा गृहीतमभ्युदियादथेतरथा कुर्यात् ॥१॥

द्वेधा तण्डुलान्व्यूहेद्ये ऽणिष्ठास्तान्त्साधं ये स्थविष्ठास्तान्त्साधं तद्ये[9] ऽणिष्ठास्तानग्नये दात्रे ऽष्टाकपालं पुरोलाशꣳ श्रपयेयुरथ यदिदं पूर्वेद्युर्दुग्धं[10] दधि तदिन्द्राय प्रदात्रे स्यादथ य इमे स्थविष्ठास्तण्डुलास्तान्विष्णवे शिपिविष्टाय शृते चरुꣳ श्रपयेयुः सर्वो हि स चरुर्यत्र क्व च तण्डुलानावपन्ति ॥२॥

4 स यदेवमेतेन यजत एष वै सोमो राजा देवानामन्नं यच्चन्द्रमास्तमेतदुपैप्सीत्तमपारात्सीत्तमस्मा अग्निरेव दाता ददातीन्द्रः प्रदाता[11] प्रयच्छति सो ऽस्यैष इन्द्राग्निभ्यां यज्ञो दत्तो भवत्यथ यद्विष्णवे शिपिविष्टाय यज्ञो वै विष्णुः शिपिविष्टः स यदुपैप्सीत्तदपारात्सीत्तच्छिपितमिव भवति तस्माच्छिपिविष्टायेति भवति[12] तेन यथेष्ट्यैवं चरन्ति तत्र यच्छक्नुयात्तद्द्यादथातो[13] दृष्ट्वैव संप्रत्येवोपवसेत् ॥३॥ तृतीयं ब्राह्मणम् ॥

1 Thus accented the MSS. 2 Thus accented the MSS. 3 °त्प्रज्ञातन्वेव B M My. 4 सभवर्जेयु° B. 5 पूर्वेद्युर्दुग्धं C, पूर्वेद्युर्दुग्ध B. 6 हविरातंचनं B, हविरातंचनं C. 7 °र्वमेव C. 8 वा MSS. Read वा? 9 तद्ये B. 10 °दुग्धं B C. 11 प्रदाता B. 12 भवति MSS. 13 °द्द्यादथातो MSS.

M. XI. 2. 1 K. III. 2. 4

2.3 ता वा एता एकादश सामिधेनीरन्वाहैकादशो वा अयं पुरुषो दश प्राणा आत्मैकादशो जनयत्येवैनं तदथ य एष ऊर्ध्वो निगदः प्रतिष्ठैवास्य सा प्रतिष्ठापयत्येवैनं तेनाथाग्निर्होता वेत्वग्नेर्होत्रमिति ता नव व्याहृतयो नव वै पुरुषे प्राणा जनयत्येवैनं तत्तस्याश्रावणप्रत्याश्रावणे[1] एव प्रतिष्ठे अथ यथादः सृष्टौ तद्वेनं तज्जनयत्येव तस्य पत्नीसंयाजाः प्रतिष्ठा ॥१॥

त्रिरु वा अयं पुरुषो जायत इदं नु यन्मातुश्च पितुश्च जायते तदस्यैकं[1] 1
जन्म तस्यायमेव लोकः प्रतिष्ठाथ यद्यज्ञाज्जायते[3] तदु तज्जायत एव तस्यान्तरिक्ष-
लोक एव प्रतिष्ठाथ यत्रैनमदो ऽग्नावभ्यादधति तदग्नेर्योनेर्जायते तस्य स्वर्ग एव
लोकः प्रतिष्ठा सर्वाणि हैतानि जन्मानि जायते य एवमेतद्वेद य उ वै परमतां
गच्छति स एतानि सर्वाणि जन्मानि जायते ॥२॥

तदाहुरनुवाक्या एताः सामिधेन्या३ याज्या३ इति स[4] ह[4] ब्रूयादनुवाक्या 5.6
इति तासां काहुतिः का याज्येति द्वावाघारौ पञ्च प्रयाजास्त्रयो ऽनुयाजा इला प्रस्तरो
ऽथ यत्रादः परिधीननुप्रहृत्य स्रुचौ संप्रगृह्णात्यथ यत्रादः पत्नीसंयाजान्त्संयाज्य
स्रुवं च स्रुचं च संप्रगृह्णाति समिष्टयजुरेतासाꣳ हाहुतीनामेता अनुवाक्याः सा वा
आहुतिः समृद्धा यानुवाक्यवती सो अनुवाक्या समृद्धा[5] या[5] याज्यवत्येवमस्यैता[5]
अनुवाक्या याज्यवत्यो भवन्त्येवं याज्या अनुवाक्यवत्य एवमस्यैता उभय्यः समृद्धा
भवन्ति ॥३॥ चतुर्थं ब्राह्मणम् ॥

1 °प्रत्याश्रावणे B, °प्रत्याश्रावणे C. 2 तदस्यैकं
MSS. 3 यद्यज्ञाज्जायते B C (orig.). 4 सह
MSS. 5 समृद्धायायाज्यवत्ये° C, समृद्धयायाज्यवत्ये° B.

K. III. 2. 5 M. XI. 2. 3

ब्रह्म ह वा इदमग्र आस तदकामयत कथं नु प्रजायेयेति तदश्राम्यत्तत्तपो 1.2
ऽतप्यत तद्देवता असृजत ता देवताः सृष्ट्वा यथालोकं व्यारोहयां चकाराग्निमेवा-
स्मिँल्लोके यो ऽयं पवते तमन्तरिक्षे दिव्येव सूर्यं तत ऊर्ध्वा य इतरे लोकास्तेष्वितरा
देवतास्तद्यथा ह वा एषु लोकेष्विमा देवता एवꣳ ह तेषु लोकेषु ता देवतास्तद्ध ब्रह्म
परार्धमेव परीयाय तस्माद्यश्चैतद्वेद यश्च न ब्रह्मोत्तरमित्येवाचक्षते ॥१॥

तद्धेक्षां चक्रे ब्रह्म कथं न्विमांल्लोकान्प्रत्यवेयां केन[1] न्विमांल्लोकान्त्संतनुया- 3
मिति तदेताभ्यां द्वाभ्यां प्रत्यवेयाय नाम्ना च रूपेण चैतावद्वा इदं नाम चैव रूपं च
स यस्याह नामास्ति तन्नाम यस्यो नु[2] नामास्ति तद्रूपं तयोरन्यतरज्ज्यायो रूपमेव
यस्य च हि नामास्ति[3] यस्य च रूपमुभे एव रूपे ज्यायान्ह वै तस्माद्भवति यस्मा-
ज्ज्यायान्बुभूषति य एवमेतद्वेद ॥२॥

ते हैते ब्रह्मणी[4] महती अभ्वे स यो हैते ब्रह्मणी[4] महती अभ्वे वेद मह- 4.6
द्धैवाभ्वं[5] गच्छति ते हैते ब्रह्मणी[4] महती यक्षे स यो हैते ब्रह्मणी[4] महती यक्षे वेद

महद्धैव यक्षं गच्छति यद्दो वै परमतां गच्छत्यथाहुर्महद्धैवाभ्वं[6] प्राप्तो महद्यक्षमिति[7] यद्दो वै देवा एते ब्रह्मणी[8] आप्नुवन्नथामृता[8] आसुर्मर्त्या हैव ततः पुरा बभूवुर्मनो वै रूपं मनसा हि रूपं वेदेदमिद[9] रूपमिति मनसे वै पूर्वमाघारमाघारयति[10] तेन रूपमाप्नोति वाग्वै नाम वाचा हि नामाभिव्याहरति वाचे[11] वा उत्तरमाघारमाघारयति[12] तेन नामाप्नोति ते देवा एते ब्रह्मणी[13] आप्त्वामृतत्वमजयन्ब्रह्मणः[13] सलोकतामजयन्त्स य एवमेते ब्रह्मणी[14] आप्नोति सर्वमु हैवास्मिंल्लोक आयुरेत्यक्षीयममुष्मिंल्लोके[15] ऽमृतत्वं जयति देवानां ब्रह्मणः सलोकतां जयति ॥३॥ पञ्चमं ब्राह्मणम् ॥

1 केन B C. 2 नु all. 3 नास्ति B C. 4 °णी My, °णि B C M. 5 °णि M. 6 Thus C, महद्धैवाभ्वं B My, महदेवाभ्यं M. 7 Uncertain reading; °मंहद्वताभ्यं C My, °मंहद्धताभ्यं M, °मंहद्वाताभ्यं B. 8 Thus C My, ब्रह्मणि आप्नु° B, ब्रह्मणि आप्न° M. 9 वेदेदमिद B. 10 Thus accented MSS., cp. III. 2. 9. 4. 11 वाचे B, C (orig.). 12 Thus accented C (cp. note 10), उत्तरमाघारयति B. 13 ब्रह्मणि आ° B M. 14 ब्रह्मणि M. 15 अक्षय्य instead of अक्षीय M.

M. XI. 2. 2
1-4

K. III. 2. 6

गायत्रीं त्रिपदीमनुवाक्यामन्वाह त्रयो वा इमे लोका इमानेवैतल्लोकान्प्रतिष्ठापयति त्रिष्टुप् चतुष्पदी भवति याज्या चतुष्पदा[1] वै पशव एष्वेवैतल्लोकेषु प्रतिष्ठितेषु पशून्प्रतिष्ठापयति[2] द्व्यक्षरो[3] वषट्कारो भवति द्विपाद्यजमानः पशुष्वेवैतत्प्रतिष्ठितेषु यजमानं प्रतिष्ठापयति प्रति हास्मा इमे लोकास्तिष्ठन्ते प्रति पशवः प्रत्यात्मना य एवमेतद्वेद ॥१॥

असौ वा अनुवाक्येयं याज्याथैष एव वषट्कारो य एष तपत्येष उ वाव मृत्युस्तस्माद्या अतो ऽर्वाच्यः प्रजास्ता मर्त्या अथ याः पराच्यस्ता अमृता आहुतिमयमु वा एतꣳ सुकृतमयं यजमानस्यात्मानꣳ सꣳस्कुर्वन्ति यमेतद्यज्ञꣳ सꣳस्कुर्वन्ति स यद्वषट्कृते जुहोति तदस्यैतमाहुतिमयꣳ सुकृतमयं यजमानस्यात्मानमेतस्मिन्वषट्कारे[1] प्रतिष्ठापयति ॥२॥

तमेष आदायोदयते स परेणास्यैतमात्मानꣳ संꣳस्करोति स यदामुं लोकमेत्यथैनमेष आदायोदयते तमेष आहुतिमयः सुकृतमय आत्माह्वयत्येह्ययं त आत्मेति स यदाह्वयति तस्मादाह्वतयो नामाह्वतयो ह वै नामैतद्यदाहुतय इत्याहुरत उ वा अर्वाची अहोरात्रे अहोरात्रे वै परिवर्तमाने पुरुषस्य सुकृतं क्षिणुतः स यथा रथेन धावयन्रथचक्रे परिवर्तमाने प्रत्यवेक्षेतैवꣳ हाहोरात्रे परिवर्तमाने प्रत्यवेक्षते तस्य ह नाहोरात्रे सुकृतं क्षिणुतोऽक्षीयꣳ ह जयति य एवमेतद्वेद ॥३॥ षष्ठं ब्राह्मणम् ॥

1 °पादा M. 2 °तिह्यक्षरो B. 3 °न्वषट्कारे MSS. 4 ? Thus MSS. ( cp. III. 1. 9. 3 ). 5. तस्मादाहुतयो नामाहुतयो B M and C ( orig. ). 6 क्षुणु° M. 7 धावयन्नथचक्रे B My. 8 Thus C ( orig. ), प्रत्यवेक्षते B C ( sec. m. ). 9 क्षय्यꣳ M.

K. III. 2. 7 M. XI. 1. 8

देवाश्च ह वा असुराश्चोभये प्राजापत्या अस्पर्धन्त त एतस्मिन्नेव यज्ञे प्रजापतावस्पर्धन्तास्माकमयꣳ स्यादस्माकमयꣳ स्यादिति ततो हासुरा अतिमानेन कस्मिन्नु वयं जुहुयामेति स्वेष्वेवास्येषु जुह्वतश्चेरुस्ते ह तथा जुह्वतः पराबभूवुस्तस्माद्ध नातिमानी स्यादित्याहुः पराभूतेरेतन्मुखं यो ऽतिमान इति ॥१॥ 1

अथ ह देवा अनतिमानिन इवासुस्ते ऽन्योऽन्यस्मिन्नेव जुह्वतश्चेरुस्तेभ्यस्तथा जुह्वद्भ्यः प्रजापतिरात्मानं प्रददौ यज्ञो वै प्रजापतिः स एषामन्नमभवद्यज्ञो हि देवानामन्नम् ॥२॥ 2. 3

स हायं प्रजापतिर्यावानात्मनास यावत्यस्य मात्रा तावन्तं यज्ञꣳ संभृत्य तं देवेभ्यः प्रददौ तेनात्मानं निष्क्रिक्रिये स हविषैवात्मानं निरक्रीणीत हविरनुवाक्ययानुवाक्यां याज्यया याज्यां वषट्कारेण वषट्कारमाहुत्या सास्याहुतिरेवानिष्क्रीतासाथान्यत्सर्वं निष्क्रीतं तदस्य यथा वृक्षस्य वाग्रं प्रशीर्णं वꣳशस्य वैवमस्य तदास तदन्वाहार्येणान्वाहरत्स यदन्वाहरत्तस्मादन्वाहार्यो नाम स कृत्स्नः सर्वतनूरभवत् ॥३॥

तथो वा एष एताꣳ रात्रिमुपवसथ्याꣳ हविर्भूत्वात्मानं देवेभ्यः प्रयच्छति तस्मादेनमेताꣳ रात्रिꣳ सुगुप्तं गोपायेयुर्यथा हविर्गोपायेयुरेवꣳ स हविषैवात्मानं निष्क्रीणीते हविरनुवाक्ययानुवाक्यां याज्यया याज्यां वषट्कारेण वषट्कारमाहुत्या 4-6

सास्याहुतिरेवानिष्क्रीता भवत्यथान्यत्सर्व[10] निष्क्रीतं तदस्य यथा वृक्षस्य वाग्रं[7] प्रशीर्णं[7] वꣳशस्य[7] वैवमस्य तद्भवति तदन्वाहार्येणान्वाहरति स यदन्वाहरति तस्मादन्वाहार्यो नाम स कृत्स्नः सर्वतनूर्भवति[11] स य एवमेतद्वेद सर्वमु हैवास्मिंल्लोक आयुरेति कृत्स्नो ऽमुष्मिंल्लोके सर्वतनूः संभवति प्रजापतेः सायुज्यꣳ सलोकतां जयति ॥४॥ सप्तमं ब्राह्मणम् ॥

1 कस्मै नु all, but cp. VI. 1. 1. 1. 2 °वास्येषु B. 3 इति MSS. 4 जुह्वतश्चेरु° B. 5 °र्यावानात्मनास MSS. 6 मृत्योर्निश्चिक्रिये M. 7 Thus accented MSS. Read perhaps वाग्रप्रशीर्णं वꣳशस्य. 8 सकृत्स्नः B. 9 सर्वतनू° B. 10 भवत्य° B, C (orig.). 11 भैवति B.

M. XI. 2. 3

## K. III. 2. 8

देवा वै यज्ञेनेमां जितिं जित्वा येयमेषां जितिस्ते होचुर्हन्तेदं तथा करवामहा इति यथा न इदमनभ्यारुह्यं मनुष्यैरसदिति ते यज्ञस्य रसं निर्धीय यथा मधुकृतो निर्धयेयुरेवं विदुह्य यज्ञं यूपेन योपयित्वा तिरो बभूवुस्तद्यदेनेनायोपयꣳस्तस्माद्यूपो नाम ॥१॥

तद् वृषीणामनुश्रुतमास देवा वै यज्ञेनैतां जितिं जित्वा येयमेषां जितिरिति विदुह्य यज्ञं यूपेन योपयित्वा तिरो[1] ऽभूवꣳस्तमन्विच्छामेति[1] ते हार्चन्तः श्राम्यन्तश्चेरुः श्रमेण ह स्म वै तद्देवा जयन्ते यदेषां जय्यमासर्षयश्च ॥२॥

7 तान्ह[2] ऋषीन्यज्ञं[2] तन्वानानेते गन्धर्वा उपनिषेदुः शूर्प यवमद्वानो[3] ऽन्तर्वान्कृषिः[3] सोल्वाला[3] ते[4] ह स्म यदतिरेचयन्ति[4] तद्ध स्म निदधत्येतदतिरिक्तमिति यद्ध स्म न्यूनं भवति तद्ध स्म निदधत्येतन्न्यूनमिति[5] यो ऽसंपत्सा संपत् ॥३॥

8 ते होचुः सꣳस्थिते यज्ञ ऊनातिरिक्तं वै यज्ञमतध्वमिति[6] ते होचुस्तद्वै नो दर्शयतेति तद्धैनान्दर्शयां चक्रुः स यदतिरिक्तमास यथा गिरयो[7] यथा मरव[8] एवꣳ ह तदास यन्न्यूनमास यथा श्वभ्रा[8] प्रदराः[9] कर्ता[9] एवꣳ ह तदास ॥४॥

9 ते होचुरिदं चेन्नो[10] ऽदीदृशतेति ब्रूतैव नो ऽस्य प्रायश्चित्तमिति तेभ्यो हैता व्याहृतीरूचुः स सꣳस्थिते यज्ञ पूर्णपात्रे प्रत्यन्तर्वेद्यञ्जलिं करोति यज्ञ[11] शं च त उप चेति स यदतिरिक्तं तच्छंकारेण[12] शमयत्युप च त इति यन्न्यूनं तत्संद

घाति शिवं मे संतिष्ठस्वेति तदेनं[13] शिवं[14] शग्मं[15] कुरुते ऽरिष्टे मे संतिष्ठस्वेति तदेनमरिष्टं कुरुते[15] स्विष्टं मे संतिष्ठस्वेति तदेनं स्विष्टं कुरुत एवमस्यैष यज्ञो ऽन्यूनातिरिक्तः सर्वः समृद्धो भवति ॥५॥

तदाहुर्न वै यज्ञस्य व्यृद्धमस्तीति सर्व एव यज्ञः समृद्ध इति यद्वै न्यूनं यज्ञस्य प्र तस्माज्जायते यो[16] ऽसंपद्देवलोकं[16] तया जयत्यथ यदतिरिक्तमन्नमेवास्य तदभ्यतिरिच्यते[17] ऽन्नाद्यमेवास्य[18] तदभ्यतिरिच्यत[19] एवम्वस्यैष[20] यज्ञो ऽन्यूनातिरिक्तः सर्वः समृद्धो भवति ॥६॥ अष्टमं ब्राह्मणम् ॥

1 तिरोभवंस्त° B. 2 तान्ह ऋषी° MSS. 3 यवमद्धानोंत्तवान्नृषिः सोल्वाला C, यवमद्धानो त्तर्वान्कृषिः सोल्वाला B. 4 तहस्मयदतिरेचयंति C M, तहयस्माति यदतिरेचयंति B. 5 Thus C, °मिति B. 6 यज्ञमतद्ध इति B C My, यज्ञमदध्वमिति M. 7 गिरयो MSS. 8 Thus accented MSS. 9 प्रदारः कर्त My. 10 चेन्नो C, °दं चेन्नो B. 11 यज्ञ MSS. 12 °छंकरेण B, C (orig.). 13 तथैनं M. 14 शग्मं B. 15 कुरुते B. 16 Thus C (sec. m.) and My, योसंयद्देवलोकं C (orig.) B; M corrupt. Read perhaps यो असंप°, cp. तया. 17 तदभ्यतिरिच्यते B, तदभ्यतिरिच्यते C. 18 स्राद्यमेवास्य MSS. 19 Without accents B. 20 एवभ्यस्यैष B M.

## K. III. 2. 9

M. XI. 2. 4

सूर्यो ह वाव दर्श एष ह्ययमहरहरेव ददृशे[1] चन्द्रमा एव पूर्णमा एतस्य हि पूरणमनु पौर्णमासीत्याख्यायते[2] ऽथो इतरथाहुः सूर्य एव पूर्णमा इत्येष ह्ययमहरहरेव पूर्ण इति चन्द्रमा एव दर्श इत्येतस्य हि दर्शो भवतीत्यतो[3] ऽन्यतरथाहरेव दर्शो ऽहरु[4] हीदं ददृश इव रात्रिरेव पूर्णमा रात्र्या हीदं सर्वं पूर्णमसावेव द्यौर्दर्श एषा हीयं ददृश इवेयमेव पूर्णमा अनया हीदं सर्वं पूर्णमिति न्वधिदेवतम् ॥१॥ 1-4

अथाध्यात्मं प्राण एव दर्शः प्राणो ह्ययं ददृश इवोदान एव पूर्णमा उदानेन हीदं सर्वं पूर्णं[5] ते हैते देवते अन्नादश्चान्नप्रदश्च प्राण एवान्नादः प्राणेन ह्यन्नमद्यत 5.6

उदानो ऽन्नप्रद[6] उदानेन ह्यन्नं प्रदीयते स यो हैते देवते वेदान्नादं चान्नप्रदं चान्नादो ह भवति प्रास्मा अन्नं दीयते ॥२॥

7 स यमदः पूर्वेद्युर्व्रतोपायनीयमश्नाति[7] यावेवास्याध्यात्मं दर्शपूर्णमासौ तावेवैतत्प्रीणाति चक्षुरेव दर्शश्चक्षुर्हीदं[8] ददृश इव श्रोत्रमेव पूर्णमाः श्रोत्रेण हीदं सर्वं पूर्णं वागेव दर्शो वाग्घीयं[9] ददृश इव मन एव पूर्णमा मनसा हीदं सर्वं पूर्णम् ॥३॥

8 तदाहुर्यद्दर्शपूर्णमासौ यजत इत्याहुरिति न[10] पौर्णमास्यामाहुः[11] पूर्णमासायानुब्रूहि पूर्णमासं यजेति नामावास्यायामाहुर्दर्शायानुब्रूहि दर्शं यजेति कथमस्य दर्शपूर्णमासाविष्टौ[12] प्रीतौ भवत इति तद्यथास्येष्टौ भवतो मनो वै पूर्णमा मनसा हीदं सर्वं पूर्णं मनसे वै पूर्वमाघारमाघारयति[13] तेन पूर्णमासं प्रीणाति[14] वाग्वै दर्शो[15] वाग्घीयं ददृश इव वाचे वा उत्तरमाघारमाघारयति[16] तेन दर्शं प्रीणात्येवमस्य दर्शपूर्णमासाविष्टौ प्रीतौ भवतः ॥४॥

9 तद्धैके हविषी एवैते निर्वपन्ति पौर्णमास्यामह[17] सरस्वते ऽमावास्यायां सरस्वत्यै मनः सरस्वान्वाक्सरस्वत्येतदेनौ प्रत्यक्षं हविषा प्रीणीम इति वदन्तस्तदु तथा न कुर्याद्यद्वा एतावाज्यभागौ[18] भवतस्तदेवैनौ प्रत्यक्षं हविषा प्रीणाति तस्मादाज्यभागावेव स्याताम् ॥५॥

10 आगूर्ती ह वा एषो ऽमुं लोकमेति यो दर्शपूर्णमासाभ्यां यजते पौर्णमासेन[19] हीष्ट्वामावास्येन यक्ष्यमाणो भवत्यामावास्येनेष्ट्वा[20] पौर्णमासेन यक्ष्यमाणो भवति[21] तद्यथानागूर्ती भवत्युभावेवेतरत्रोभावितरत्र[22] स संस्थापयत्यागूर्ती ह स्याद्यदेते हविषी निर्वपेत्तस्मादाज्यभागावेव स्याताम् ॥६॥ नवमं ब्राह्मणम् ॥

1 ददृशे B. 2 पौर्णमासीत्या° B. 3 Thus M My, भवत्यतो B C. 4 हरू C My. 5 पूर्णं B, C (orig.). 6 अन्नप्रदा B. 7 °द्युर्व्रतोपा° B. 8 दर्शश्चक्षुर्हीदं B. 9 °यं B. 10 नु MSS. 11 °माहुः B, C (orig.). 12 दर्शौ° B. 13 Thus accented MSS., cp. III. 2. 5. 3. 14 प्रीणाति C. 15 From दर्शो on accents in this section are omitted in B. 16 Thus accented C. 17 पौर्णमास्यमहः B.

18 एना° MSS. except My. 19 °सेन MSS.
20 भवत्य° B. 21 भवति B. 22 Accents ?
°भावेवेतरत्रोभाव्वितरत्र B, °भावेवेतरत्रोभावितरत्र C.

K. III. 2. 10 M. XI. 2. 6

शिरो वा एतद्यज्ञस्य यत्प्रणीताः स यत्प्रणीताः प्रणयति शिर एवैतद्यज्ञस्य संस्करोति स विद्याच्छिर एव म एतत्संस्क्रियत इति ॥१॥ 1

प्राण एवास्येध्मः प्राणेन हीदꣳ सर्वमिद्धं यत्प्राणभृन्निमिषति यदेजति स विद्यादहमेवैष इध्म इति ॥२॥ 2

अनूकमेवास्य सामिधेन्यस्तस्मात्ता ब्रूयात्संतन्वन्निव मेऽनुब्रूहीति संततमिव हीदमनूकं मनश्च हैवास्य वाक्चाघारौ सरस्वाꣳश्च सरस्वती च स विद्यान्मनश्चैव मे वाक्चाघारौ सरस्वाꣳश्च सरस्वती चेति ॥३॥ 3

पञ्च प्रयाजा इम एवास्यैते शिरस्याः पञ्च प्राणा मुखमेवास्य प्रथमः प्रयाजो दक्षिणा नासिका द्वितीयः सव्या नासिका तृतीयो दक्षिणः कर्णश्चतुर्थः सव्यः कर्णः पञ्चमः स यच्चतुर्थे प्रयाजे समानयते तस्माद्धीदमन्तरतः श्रोत्रꣳ संतृण्णं चक्षुषी एवास्याज्यभागौ स विद्याच्चक्षुषी एव म एते इति ॥४॥ 4

अथ य आग्नेयः पुरोलाशोऽयमेवास्य स दक्षिणोऽर्धोऽथ योऽग्नीषोमीय उपाꣳशुयाजो हृदयमेवास्य स स यत्तेनोपाꣳशु चरन्ति तस्माद्धीदं गुहा हृदयमथ यद्दचमनूच्य जुषाणेन यजति तस्माद्धीदमस्थिन्यनस्थिकꣳ हृदयमथ योऽग्नीषोमीयः पुरोलाशोऽयमेवास्य स सव्योऽर्ध ऐन्द्रं वा सांनाय्यमन्तराꣳसमेवास्य स्विष्टकृद्विषमेवास्य प्राशित्रम् ॥५॥ 5. 6

स यत्प्राशित्रमवद्यति यथैवादः प्रजापतेराविद्धं निरकृन्तन्नेवमेवैतस्यैतद्वेष्टितं यद्ग्रथितं यद्व्रुण्यं तन्निष्कृन्तन्ति स विद्याद्यथैवादः प्रजापतेराविद्धं निरकृन्तन्नित्येवमेव म इदं यदिह वेष्टितं यद्ग्रथितं यद्व्रुण्य तन्निष्कृन्तन्तीति ॥६॥ 7

उदरमेवास्येला स यथैवाद इलायाꣳ समवद्यन्त्येवमेवेदं विश्वरूपमन्नमुदरे समवधीयते ॥७॥ 8

त्रयोऽनुयाजा इम एवास्यैतेऽवाञ्चस्त्रयः प्राणा बाहू एवास्य सूक्तवाकश्च शंयुवाकश्च ॥८॥ 9

चत्वारः पत्नीसंयाजास्चतस्रो वै प्रतिष्ठा ऊरू द्वावष्ठीवन्तौ द्वौ पादावेवास्य

समिष्टयजुः ॥९॥

10-12 ता वा एता एकविꣳशतिराहुतयो द्वावाघारौ पञ्च प्रयाजा द्वावाज्यभागावाग्नेयः पुरोलाशस्तद्दशाग्नीषोमीय उपाꣳशुयाजो ऽग्नीषोमीयः पुरोलाशः स्विष्टकृद्ऽनुयाजाश्चत्वारः पत्नीसंयाजाः समिष्टयजुर्द्वादश वै मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविꣳश एतेन[3] ह[4] स्म[5] वै[6] तदारुणिराहार्धमासशो[7] वा अहमसुं लोकमित्येन सलोको भवामि तामहं दर्शपूर्णमासयोः संपदं वेदेति ॥१०॥

13.14 तदाहुरात्मयाजी३ श्रेयान्देवयाजी३[11] इत्यात्मयाजीति ह ब्रूयात्स ह आत्मयाजी यो वेदेदं मे ऽनेनाङ्गꣳ सꣳस्क्रियत इदं मे ऽनेनाङ्गमुपधीयत इति यथाहिस्त्वचो निर्मुच्येतैवमस्मान्मर्त्याच्छरीरात्पाप्मनो निर्मुच्यते स ऋङ्मयो यजुर्मय आहुतिमयो वेदमयः संभवति[12] स हैतासां देवतानामेको भवत्यथ ह स देवयाजी यो वेद देवानेवाहमिदं यजे देवानेवाहमिदꣳ सपर्यामीति स यथा पापीयाञ्छ्रेयसे बलिꣳ हरेद्वैश्यो वा राज्ञे बलिꣳ हरेदेवꣳ हैव स बलिꣳ हरति स ह न तावन्तं लोकं जयति यावन्तमितरः ॥११॥ दशमं ब्राह्मणम् ॥ द्वितीयो ऽध्यायः ॥ उद्धारीकाण्डं समाप्तम् ॥

1 इह MSS. except B. 2 °मंतरतः B. 3 एते इति B, एते इति N. 4 दक्षिणोर्ध्वो MSS. 5 °याजो B N. 6 ससब्योर्ध C. 7 °षमेवास्य प्रा° B N. 8 एवा ins. B N. 9 एतेनहस्मावै B N. 10 °र्द्धमाससे B N. 11 °याजी३ B. 12 संभवतीति M.

M. III. 1. 1

## K. IV. 1. 1

1 तद्धै देवयजनमीक्षन्ते तद्यदेव वर्षिष्ठं भूमेस्तदेव देवयजनꣳ स्याद्यत्रान्यद्भूमेर्नाभिशयीतेतो वै देवा उत्क्रान्ता देवानेव तदुपोत्क्रामति स सदेवे देवयजने यजते ऽथ यो ह तत्र यजेत यत्रान्यद्भूमेरभिशेते ऽधस्तरामिव[1] हैव तस्मिन्भवति तस्माद्यत्रैव वर्षिष्ठं भूमेस्तदेव देवयजनꣳ स्यात्तद्वर्षिष्ठꣳ सत्समꣳ स्यात्तत्प्रतिष्ठितमविभ्रꣳशि यत्समꣳ समꣳ सत् ॥१॥

2 प्रागिव[1] प्रवणꣳ स्यात्प्राची हि देवानां दिगथो उदक्प्रवणमुदीची हि मनुष्याणां दिग्दक्षिणतः प्रत्युच्छ्रितमिव स्यादेषा वै पितृणां दिग्यद्ध दक्षिणाप्रवणं स्यात्क्षिप्रꣳ हामुं लोकं यजमान इयात्तथा[1] ज्योग्यजमानो जीवति तत्र देवयजनमा°

प्राग्यूपादतिरिक्तꣳ स्याद्द्विषन्तꣳ हास्य तद्भ्रातृव्यमभ्यतिरिच्येत कामं दक्षिणतः कामुत्तरतस्तद्ध त्वै समृद्धं देवयजनं यत्र पश्चाद्देवयजनमात्रमतिरिक्तं[4] भवत्युप रिमुत्तरा देवयज्या नमति ॥२॥

तदु होवाच याज्ञवल्क्यो वार्ष्णो[5] ऽयक्ष्यतेति[5] तस्मै देवयजनमीक्षितुम- यमेति सो ऽब्रवीत्सात्ययज्ञिरिति सर्वा वा इयं पृथिवी देवी देवयजनं यत्र वा अस्याः क्व च यजुषा परिगृह्य यजेतेत्येतदु ह स मेन ऋत्विजस्तु ह वाव देवयजनं यत्रैवा- नुष्ठ्या विद्वाꣳसो याजयन्ति सैवाह्वलैतन्नु[6] देवयजनस्य रूपम् ॥३॥ 3.4

अथैताꣳ शालां प्राग्वꣳशां कुर्वन्ति प्राची हि देवानां दिक्पुरस्ताद्वै देवाः प्रत्यञ्चो मनुष्यास्तस्मादेभ्यः प्राङ् तिष्ठञ्जुहोति तस्मादु न प्रत्यङ् शयीत नेद्देवान- भिप्रसार्य शया[7] इत्यथ येयं दक्षिणा सा पितॄणामथ येयं प्रतीची सर्पाणां वैषा दिग्यत्र वा देवाः प्राञ्च उदक्रामꣳस्तद्धैषाहीयत[8] हीना[9] वोदीची मनुष्याणां तस्माद्या- न्मानुषे शाला वा विमितं वा भवत्युदग्वꣳशमेव भवत्युदीची हि मनुष्याणां दिक्तस्माद्यदैव दीक्षिष्यमाणो भवत्यथ प्राग्वꣳशां कुरुते देवान्वा एष उपावर्तते यो दीक्षते स देवतानामेवैको भवति तस्माद्दीक्षिष्यमाण एव प्राग्वꣳशां कुरुते ॥४॥ 5-7

तां परिघ्नन्ति नेत्सꣳश्यायादिति[10] हेमनि नेत्प्रोक्षादिति वर्षासु नेद्घृणिर- सदिति ग्रीष्मे देवान्ह्येष उपावर्तते[11] यो दीक्षते स देवतानामेवैको भवति तिर इव वै देवा मनुष्येभ्यस्तिर इवैतद्भवति ॥५॥ 8

तन्न[12] सर्व इवाभिप्रपद्येत न हि देवाः सर्वेणेव संगच्छन्त[13] आर्य एव ब्राह्मणो वा क्षत्रियो वा वैश्यो वैते हि यज्ञिया नो एव सर्वेणेव[14] संवदेत न हि देवाः सर्वेणेव[15] संवदन्त[16] आर्येणेव[17] ब्राह्मणेन वा क्षत्रियेण वा वैश्येन वैते हि यज्ञिया यद्येनꣳ शूद्रेण संवादो विन्देदित्थमेनं[18] विचक्ष्वेत्यन्यं ब्रूयादेष दीक्षितस्योपचारः[19] ॥६॥ 9.10

अथाध्यवस्यति सा यासौ वर्षिष्ठा पूर्वार्धे शालास्थूणा भवति तामभिपद्य जपत्येदमगन्म[20] देवयजनं पृथिव्या इत्या ह्येनद्गच्छति यत्र देवासो अजुषन्त विश्व इति तद्विश्वैश्च देवैर्जुष्टे देवयजने यजते य उ चेमे मनुष्यदेवा ब्राह्मणाः शुश्रुवाꣳसो ऽनूचाना यदहैनत्ते ऽक्षिभ्यां जोषयन्ते तदु[21] ह[21] तैर्जुष्टं भवति यद्वाह यत्र देवासो अजुषन्त विश्व इति तद्विश्वैर्देवैर्जुष्टं भवति[22] तदुभयैर्देवैर्जुष्टे देवयजने यजत ऋक्सा- माभ्याꣳ संतरन्तो यजुर्भिरित्यृचा वै साम्ना यजुषा यज्ञस्योदृचं गच्छन्ति[23] तस्मादाह 11.12

ऋक्सामाभ्याᳪं संतरन्तो यजुर्भिरिति रायस्पोषेण समिषा मदेमेति भूमा[24] इति रायस्पोषो भूमो वै श्रीराशिषमेवैतदाशास्ते श्रियं गच्छेयमिति समिषा मदेमेति मदतीति वै तमाहुर्यः श्रियं गच्छति तस्मादाह समिषा मदेमेति ॥७॥ प्रथमं ब्राह्मणम् ॥

1 धस्तरामिव MSS. except C (sec. m.). 2 प्रागेव M. 3 ईया° MSS. except M. 4 देवयजनमात्रं MSS. (C the second time; originally without accent). 5 वार्ष्णो यक्ष्यतेति MSS. exc. M, which has वार्षे इयक्षतेति. 6 Thus (without accent) M only; °तंन or °तन्न the other MSS. 7 शया MSS. 8 °हीयत O P C[2] C (orig.). 9 हीना MSS.; M reads °हीयतवानादीची. 10 Thus my conjecture; नेच्छᳪंस्यायादिति M, नेछᳪंशायादिति the other MSS. 11 उपावर्तते O C; C[2] P without accent. 12 तंन some of the MSS. 13 संग° MSS. 14 °णैव My. 15 °णैव MSS. exc. M. 16 संवदंत MSS. 17 आर्येणैव MSS. 18 विंदेदित्थ° MSS. exc. C[1] (pr. m.). 19 °चारः B. 20 i. e. जपति । आ । इदम् । अगन्म । 21 तदह M. 22 भवति O P C C[2] 23 Thus accents B O C C[1] and Mādhy.; गछंति P. 24 भूमो B W My.

M. III. 1. 2

## K. IV. 1. 2

1 स वा अपराह्णे दीक्षते स पुरैव केशश्मश्रुणो वप्तोः[1] पुरा नखेभ्यो निकर्तितोरथ यत्कामयेत तदश्नीयाद्यद्वा लभेत यद्यु न[2] जिघत्सेदपि[3] नाश्नीयान्न ह्यस्य ततोऽन्यद्व्रतादशनमवकल्पते व्रतᳪं ह्येवास्य ततो ऽशनं भवति तस्मादश्नीयादि जिघत्सेत्तदिति[4] ॥१॥

2.3 उत्तरेण शालां परिश्रितं भवति तत्केशश्मश्रु च वपते नखाᳪंश्च निकृन्तते स यत्केशश्मश्रु च वपते नखाᳪंश्च निकृन्तते[5] यत्र वै पुरुषस्यापो नोपतिष्ठन्ते ऽमेध्यᳪं हास्य तन्नो वा अत्राप उपतिष्ठन्ते यत्केशश्मश्रुणि च नखेषु च मेध्यो भूत्वा दीक्षा

ति तस्माद्धपि सर्व एव वपेत तदु केशश्मश्रु चैव वपते नखाꣳश्च निकृन्तते तन्न[5] त्वेवु यजुरस्ति ॥२॥

स दक्षिणानेवाग्रे निकृन्तेताथ सव्यान्त्सव्यान्वा अग्रे मानुषे निकृन्तते ऽथैवं त्राङ्गुष्ठयोरग्रे निकृन्तेताथ कनिष्ठिकयोः[6] कनिष्ठिकयोर्वा अग्रे मानुषे निकृन्तते ऽथैवं देवत्रा ॥३॥ 4

स प्राङासीनः श्मश्रूण्यभ्युन्त्त[7] इमा आपः शमु मे सन्तु देवीरिति वज्रो वा आपो वज्रो हि वा आपस्तस्माद्येन यन्ति निम्नं[8] तद्भवति यत्रोपतिष्ठन्ते निर्दहन्ति तत्थैनमेष वज्रो न हिनस्ति स दक्षिणामेवाग्रे[9] वपते ऽथ सव्याꣳ सव्यां वा अग्रे मानुषे वपते ऽथैवं देवत्रा ॥४॥ 6.5

स कुशतरुणकमभिनिदधात्योषधे[10] त्रायस्वेति वज्रो वा एष यत्क्षुरस्तदेन-मेतदोषधिभिरेवान्तर्दधाति तथैनमेष वज्रो न हिनस्ति स्वधिते मैनꣳ हिꣳसीरिति प्रच्छिनत्ति वज्रो वा एष यत्क्षुरस्तथैनमेष वज्रो न हिनस्ति तदुदपात्रे ऽवदधाति स एतेन वैव यजुषा तूष्णीं वोत्तरां प्रच्छिनत्ति तदुदपात्रे ऽवदधाति ॥५॥ 7.8

अथ नापिताय प्रयच्छति स यदा वपते ऽथ स्नाति स यत्स्नात्यमेध्यो वै पुरुषस्तेन ह पुरुषो ऽमेध्यो यदनृतं वदति तेनेदमन्तरतः शुक्तः पूतिर्वाति मेध उ वा आपो मेध्यो भूत्वा दीक्षा इति पवित्रमापः पवित्रपूतो दीक्षा इति[11] ॥६॥ 9.10

सो ऽभिषिञ्चत आपो अस्मान्मातरः शुन्धयन्त्वित्येतद्वा एनꣳ शोधयन्ति यत्स्नाति घृतेन नो घृतप्वः पुनन्त्विति तद्धै सुपूतं यद्घृतेन पूयते विश्वꣳ हि रिप्रं प्रवहन्ति देवीरिति सर्वं वै विश्वं यदु वा अमेध्यं तद्रिप्रꣳ सर्वꣳ ह्यस्यैतदमेध्यं प्रवहन्ति स्नात्वोत्क्रामत्युदिदाभ्यः शुचिरा पूत एमीत्युद्ध्याभ्य एतच्छुचिः[12] पूत एति ॥७॥ 11.12

अथ दीक्षितवसनं परिधत्ते सर्वत्वाय वै दीक्षितवसनं परिधत्ते कृत्स्नतायै पुरुषे ह वा इयमग्रे त्वगास येयं गवि ॥८॥ 13

ते ह देवा ऊचुरियं वा इदꣳ सर्वं बिभर्ति यद्गौरिति हन्त येयं पुरुषे त्वक्ता-मवच्छाय गवि दधाम[13] तयेयं घृणिं तितिक्षिष्यते[14] तया वर्षन्तं तया हिममिति तथेति तामवच्छाय गव्यदधुस्तयैषा घृणिं तितिक्षते[15] तया वर्षन्तं तया हिममथाय-मवच्छितः पुरुषो ऽवच्छितो हि वै पुरुषस्तस्माद्यत्र क चास्यापि कुशो विकृन्तति तत एव लोहितमुत्पतति तस्मिन्नेतां त्वचमदधुर्यद्वासः पुरुषस्य हि वा एषा त्वक्तस्मादेतां 14-17

नान्यः पशुर्बिभर्ति तस्मादु सुवासा एव बुभूषेत्तद्धि स्वया त्वचा समृद्धो भवति तस्मादप्यश्लीलꣳ सुवाससं दिदृक्षन्त एव स्वया हि त्वचा समृद्धो भवति तस्माद्गोर्न[15] नग्नः स्याद्वेद ह गौरहमस्य त्वचं बिभर्मीति सा हास्मादीश्वरस्त्रसितोर्यन्मे त्वचं[17] नादधीतेति[17] तस्मात्सुवाससमुपैव निश्रयन्ते पशवः ॥९॥

18.19 तस्य[18] वाससो ऽग्नेरेव पर्यासो वायोरनुच्छादः पितृणां नीविः सर्पाणां प्रघातो विश्वेषां देवानां तन्तवो नक्षत्राणामारोका एवꣳ ह्येतत्सर्वा देवता अन्वायत्ता स्तस्मादेतद्दीक्षणीयं तद्दहतꣳ स्यादित्याहुस्तदुभयं[19] निष्पेष्ट्वै ब्रूमो यदेवास्यामेध्या कृणत्ति वा वयति वा तदेवास्यैतदद्भिर्मेध्यं कुर्वन्त्यथो यत्स्नातवास्यमपल्पूलनपल्पूलितं[20] तत्स्यात् ॥१०॥

20 तत्परिधत्ते दीक्षातपसोस्तनूरसीति मानुषी वा अस्यैषाग्रे त्वग्भवत्यथैषा दीक्षातपसोर्यद्दीक्षितस्य तस्मादाह दीक्षातपसोस्तनूरसीति तां त्वा शिवाꣳ शग्मां परिदध इति तां त्वा साध्वीं परिदध इत्येवैतदाह भद्रं वर्णं पुष्यन्निति पाप इव वा एतदग्रे भवत्यवच्छित इवाथैतद्भद्रं वर्णं पुष्यति यत्स्वां त्वचं तस्मादाह भद्रं वर्णं पुष्यन्निति ॥११॥

21 तदाहुर्धेनोश्चानलुहश्च नाश्नीयादिति धेनुश्च ह वा अनड्वाꣳश्चेदꣳ सर्वं बिभृतस्ते ह देवा ऊचुरिमौ वा इदꣳ सर्वं बिभृत इति यद्धेनुश्चानड्वाꣳश्च हन्त यदन्येषां वयसां वीर्यं यदन्येषां पशूनां तदनयोर्दधाम तेनेमाविदꣳ सर्वं भरिष्यत इति तद्यदन्येषां वयसां वीर्यमासीद्यदन्येषां पशूनां तदेतयोरदधुस्तेनैताविदꣳ[21] सर्वं बिभृतस्तस्मादेतयोर्नाश्नीयात्सर्वाश्यमिव ह तदन्तगतिरिव सा तꣳ हेश्वरो ऽद्भुतमभिजनितोर्जायाया वा गर्भं निरवधीद्येति तदु होवाच याज्ञवल्क्यो ऽश्नीयामेवाहामित्यꣳसलं चेत्स्यादिति ॥१२॥ द्वितीयं ब्राह्मणम् ॥

1 वस्तोः MSS. 2 Thus accented MSS. Read न जिघ° ? 3 जिघत्सेत्तदिति MSS. Read जिघ° ? 4 निकृंतते MSS. 5 तंन B O P C¹ C (orig.). 6 °ष्ठकयो M My. 7 °भ्युंत O P C C², °भ्युंतक B, °भ्युंतक W. 8 निम्नं MSS. 9 Note the femin., cp. उत्तराम् in section 5. 10 °कमधिनिदधा° M (cp. IV .8. 2. 9). 11 इति B. 12 एतच्छुचिः O P.

13 दधाम O P C C[1]. 14 °ब्यते MSS. 15 Thus accented O P C C[2]. 16 न MSS. 17 Thus MSS. Read त्वचं नाददीतेति ? 18 तस्यह M. 19 Thus MSS. Read perhaps : °स्तदु वयं. 20 Thus, without accents, M only; °मपल्पूलीनपल्पूलितं B W O (sec. m.) C (pr. m.) C[1] (sec. m.), °मपल्पुलीनपल्पूलितं O (sec. m.) P C[1] (pr. m.), °मपल्पूलिन° C (sec. m.). 21 तदेतयोरदधु° MSS.

K. IV. 1. 3 M. III. 1. 3

1 स वा एतमाग्नावैष्णवमेकादशकपालं पुरोलाशं निर्वपति दीक्षणीयं तद्यदेत- ग्नावैष्णवं दीक्षणीयꣳ हविर्भवत्यग्निर्वै सर्वा देवता अग्नौ हि सर्वाभ्यो देवताभ्यो हुत्याग्निरु वा अवरार्धो यज्ञस्य विष्णुः परार्धस्तत्सर्वाश्च देवता इति सर्वं च यज्ञं गृह्य दीक्षा इति तस्मादाग्नावैष्णवो भवति ॥१॥

2.3 तदाहुरादित्येभ्यो ऽपि चरुं निर्वपेदिति तदप्येतदष्टौ पुत्रासो अदितेर्ये जातास्तन्वस्परि देवां३ उप प्रैत्सप्तभिः परा मार्ताण्डमास्यदित्यष्ट[1] ह पुत्रासो[2] ऽदितेतस्ते[2] सप्त ये देवा य देवत्राथ हाष्टमं[3] जनयां चकार मार्ताण्डमित्याविकृतमिवैव दंघमिवैव स ह पुरुषमात्र एवोर्ध्व आस पुरुषमात्रस्तिर्यङ् ॥२॥

4 ते हेम आदित्या ऊचुर्मायममुया[4] भूदिति हन्तेमꣳ संकृन्ताम यथायं पुरुष एवं विकरवामैनमिति तꣳ ह संचकृतुस्तꣳ[5] ह विचक्रुर्यथायं पुरुष एवं तस्य यत्संकर्तनमास[6] तत्साधꣳ संन्यासुः स हस्त्यभवत्तस्माद्धस्ती दुष्प्रतिग्रह[7] इत्याहुः पुरुषः प्रतिगृह्यमिव तद्यो हस्तिनं प्रतिगृह्णादिति तद्यं तꣳ समकृन्तन्यं[8] तं व्यकुर्वन्त्स विवस्वानादित्यस्तस्येमाः प्रजा वैवस्वत्यो[9] यदिदं किं च ॥३॥

5 स होवाच यन्मे प्रजायां यज्ञ उपनमादिति राध्नवदेव स य आदित्येभ्यश्चरुं निर्वपादिति राध्नोति हैव स य एवं विद्वानादित्येभ्यश्चरुं निर्वपतीतरं[10] त्वेव प्रज्ञातं यदेतदाग्नावैष्णवं दीक्षणीयꣳ हविर्भवति ॥४॥

6 तस्यावृद्धैवेयं[11] दार्शपौर्णमासिका तेन यथेष्ट्यैवं चरन्ति सप्तदश सामिधेनीरन्वाह सर्वत्वायोपाꣳशु देवतां यजति[12] संयाजयन्ति पत्नीः समिष्टयजुरेव न जुहोति

नेदिदं दीक्षितवसनं परिधायेति यमिमं यज्ञमनसि तस्य पुरा सꣳस्थाया अन्तं ग
नीत्यन्तो ह्येव यज्ञस्य यत्समिष्टयजुः ॥५॥

7 अथैनं पूर्वार्धे शालाया वा विमितस्य वा तिष्ठन्तं तदेनमभ्यनक्ति स
मभ्यनक्त्यरुर्वै[13] पुरुषस्तेन ह पुरुषो ऽरुर्यद्वाच्छितो ऽनरुरेवैनं तत्करोत्यथो ग
अस्य त्वचमदधुर्गोरु वा एतद्भवति स्वयैवैनमेतत्स्वया[14] त्वचा समर्धयति
करोति तस्मादेनमभ्यनक्ति ॥६॥

8 तन्नवनीतं भवति घृतं वै देवानामाज्यं निष्पाण्टं[15] मनुष्याणामथैतन्नव
मयातयाम वै नवनीतं यदि[16] ह[16] कामयते घृतमेनत्कुरुते यदि कामयते ऽभ्यञ्जनम
तयान्नैवैनमेतदयातयामानं करोति तस्मादेनमभ्यनक्ति ॥७॥

9 सो ऽभ्यनक्ति महीनां पयो ऽसीति मह्यो वा एता एकेन नाम्ना यद्गावस
सामेतत्पयस्तस्मादाह महीनां पयो ऽसीति वर्चोदा[17] असि वर्चो मे देहीति न
तिरोहितामिवास्ति तꣳ शिरस्तो ऽग्रे ऽनुलोमाभ्यनक्ति शिरस्तो ह्यग्रे जायमा
जायते[18] ॥८॥

10.11 अथास्याक्षिणी आनक्त्यरुर्वा अक्षिणी प्रशान्ममेति[19] होवाच याज्ञवल्क
दुरक्ष इव हास तस्य या दूषीका यथा पूय[20] एवं तदनरुरेवैने तत्करोत्यथो यत्र
देवा असुररक्षसानि जघ्नुस्तद्ध शुष्णो[21] दानवः प्रजानां चक्षूꣳषि प्रविवेश स
कुमारक इव कनीनकायां तस्मा एवैतद्यज्ञमुपप्रयन्नश्मपुरां[22] करोत्यश्मा ह्याञ्जनम् ॥

12 तत्त्रैककुदꣳ स्याद्यत्र वा इन्द्रो वृत्रमहꣳस्तस्य ह या कनीनकास यच्चक्षुर
मेतं गिरिं चकार त्रिककुदꣳ[23] स यत्त्रैककुदं भवति चक्षुष्येवैतच्चक्षुर्दधाति यदि त्रै
कुदं न विन्देदपि यदेव किं च स्यात् ॥१०॥

13 तच्छरेषीकयानक्ति[24] वज्रो वै शरो विरक्षस्तायै सतूलयाप्रतिशीर्णाग्र
तथा ह रक्षाꣳस्यपबाधते यथा ह्ययं पुरुषो ऽमूल उभयतः परिच्छिन्नो ऽन्तरिक्ष
चरत्येवꣳ[25] हि रक्षाꣳस्यमूलान्युभयतः परिच्छिन्नान्यन्तरिक्षमनु[26] चरन्ति तस्मात्स
लयानक्ति ॥११॥

14.17 स दक्षिणमेवाग्र आनक्त्यथ सव्यꣳ सव्यं वा अग्रे मानुष आनक्त्य
देवत्रा द्विर्दक्षिणमानक्ति त्रिरुत्तरमुत्तरामेवैतदुत्तरं[27] करोति तद्वेव पञ्च कृत्वः संप
पाङ्क्तो वै यज्ञः पाङ्क्ताः पशवः पञ्चर्तवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्प
कृत्व आनक्ति ॥१२॥

15.16 स आनक्ति वृत्रस्य कनीनकासीति[30] वृत्रस्य वा एषा कनीनका यदाञ्जनं तस्मादाह वृत्रस्य कनीनकासीति चक्षुर्दा असि[31] चक्षुर्मे देहीति नात्र तिरोहितमिवास्ति स सकृदेव यजुषा दक्षिणमानक्ति तूष्णीं द्वितीयꣳ सकृद्धेव यजुषोत्तरमानक्ति तूष्णीं द्विः ॥१३॥

18-21 अथैनं कुशतरुणकैः पवयति पवित्रं वै मेधः कुशाः पवित्रपूतो मेध्यो दीक्षा इति तदेकमेव[32] स्यादयं वाव पवित्रं यो ऽयं पवत स वा अयमेक इवैव पवते सो ऽयं पुरुषे ऽन्तः प्रविष्टः प्राङ्च प्रत्यङ्च तौ प्राणोदानौ तदेतस्यैवानु मात्रां तस्मादेकमेव[33] स्यादथो त्रीणि स्युरित्याहुस्त्रेधाविहितो ह्ययं पुरुषे प्रविष्टः प्राण इति तदेतस्यैवानु मात्रां तस्मात्त्रीणि स्युस्तदु खलु सप्तैव भवन्ति सप्त हीमे शिरसि प्राणास्तदु त्रिरेव सप्त भवन्ति ॥१४॥

22.23 स पवयति चित्पतिर्मा पुनातु वाक्पतिर्मा पुनात्विति प्रजापतिर्वै चित्पतिः स हि चित्तानामीष्टे तदेनं प्रजापतिः पुनाति[34] वाक्पतिर्मा पुनात्वित्ययं वाव वाक्पतिर्यो ऽयं पवते तदेनमेष पुनाति[35] देवो मा सविता पुनात्विति सविता वै देवानां प्रसविता तदेनं देव एव सविता पुनात्यच्छिद्रेण[36] पवित्रेणेत्यच्छिद्रं वा अयं पवित्रं यो ऽयं पवते तस्मादाहाच्छिद्रेण पवित्रेणेति सूर्यस्य रश्मिभिरित्येते वा अपिपवितारो[37] यत्सूर्यस्य रश्मयस्तस्मादाह सूर्यस्य रश्मिभिरिति तस्य ते पवित्रपते पवित्रपूतस्येति पवित्रपतिर्ह्येष भवति यो दीक्षते पवित्रपूतस्येति पवित्रपूतो हि भवति यत्कामः पुने तच्छकेयमिति यज्ञस्योदृचमशीयेत्येवैतदाह यज्ञस्योदृचमशीयेति हि स कामयते यो दीक्षते तस्मादाह यत्कामः पुने तच्छकेयमिति स एतेनैव त्रिः पवयति तन्नव कृत्वो नव वै प्राणाः प्राणा उ वै पवित्रं तस्मान्नव कृत्वः पवयति ॥१५॥

24 अथैनमाशिषामारम्भं वाचयत्या वो देवास ईमहे वामं प्रयत्यध्वरे । आ वो देवास आशिषो यज्ञियासो हवामह इत्याशिषामेवैष आरम्भ आशिष एवैतदारभते ता अस्मा आरब्धाः स्वाः सतीरृत्विज एता आशिष आशासते ता अस्मै समृध्यन्ते ॥१६॥

25 अथाङ्गुलीर्न्यचति स्वाहा यज्ञं मनस इति द्वे स्वाहोरोरन्तरिक्षादिति द्वे स्वाहा द्यावापृथिवीभ्यामिति द्वे स्वाहा वातादारभ इति द्वे ॥१७॥

26.27 स यदेवमङ्गुलीर्न्यचति न वा इत्थं यज्ञ आरभे[38] यथेदं वासो वा दण्डो वा यद्वेदमन्यन्मानुष देवा हि यज्ञः परोक्षमिव हि देवा यज्ञमेवैतत्परोक्षमारभते स्वाहा यज्ञं मनस इति तदेनं मनस आरभते स्वाहोरोरन्तरिक्षादिति तदेनमस्मादुरुणो

ऽन्तरिक्षादारभते स्वाहा द्यावापृथिवीभ्यामिति तदेनमाभ्यां द्यावापृथिवीभ्यामारभते ययोरिद१ँ सर्वमधि स्वाहा वातादारभ इत्ययं वाव यज्ञो यो ऽयं पवते तदेनं प्रत्यक्षमारभते स यत्स्वाहा स्वाहेत्याह स्वीकुरुत एवैनमेतदात्मन्येवैनमेतत्कुरुत आत्मनि यज्ञं कृत्वा दीक्षा इत्यथ वाचं यच्छति वाग्वै यज्ञ आत्मनि यज्ञं कृत्वा दीक्षा इति[27] ॥१८॥

28 अथैनं प्रपादयति तस्यान्तरेणाहवनीयं च गार्हपत्यं च संचरो भवति स यदस्यैष संचरो भवत्यग्निर्वै यज्ञस्य योनिरेष उ वा अत्र यज्ञो भवति यो दीक्षत एष ह्येनं तनुत[10] एष ह्येनं जनयते ऽन्तरेण वै योनिं गर्भः संचरति स[11] यत्स[11] तत्रैजति त्वत्परि त्वदावर्तते[12] तस्माद्धिमे गर्भा एजन्ति त्वत्परि त्वदावर्तन्ते ॥१९॥ तृतीयं ब्राह्मणम् ॥

1 °त्यष्ट thus MSS. 2 पुत्रासो अदिते° B W M; पुत्रासो C (sec. m.). 3 स्वाष्टमं B. 4 Thus MSS. Read ऊचुर्मा° ? 5 MSS. except C (sec. m.) संचक्रतु°. 6 Read यत्संकर्तनमास ? 7 दुःप्र° MSS. except M. 8 समकृंतन्यं MSS. 9 Read वैवस्वत्यो (i. e. vaivasvatyò)? 10 निर्वपतीतरं MSS. 11 तस्यावृथैवेयं MSS. 12 यजति O P. 13 °नमभ्यनक्त्यरुवैं O P C C², °मभ्यनक्त्यरुवैं B W. 14 तयैवैन° M. The second स्वया is superfluous; cp., e. g., IV. 9. 4. 2. 15 निष्पा° M changed into निष्फा°; cp. Vait. Sūtra 28. 11. 16 यदिह B O W. 17 वर्चोदा B W O P C C² (the last four MSS. omitting the following असि); My om. असि. 18 जायते MSS. 19 Thus C (sec. m.) only; प्रशांममेति (प्रशाम्नमेति M) the other MSS. 20 Thus accented MSS. 21 शिश्नो MSS. except M. 22 °प्रयज्ञइमपुरां B W O P. 23 Thus accented MSS. 24 तछरेषी° MSS. 25 °र्णांम्रया O P C C². 26 चरत्येवं O P C C². 27 परिछिन्नान्य° MSS. 28 चरंति O P C C².

29 Thus ( °मुत्तरामेवैत° ) MSS. 30 कनीनिका instead of कनीनका M throughout. 31 All MSS. exc. M om. असि, reading चक्षुर्दाश्चक्षुर्मे. 32 तदेकमेव O P C C', तदेकमेव B W. 33 °देकमेव B W, °देकमेव O P C C'. 34 पुनातु MSS. 35 पुनातु M. 36 पुनात्व° MSS. 37 Cp. II. 1. 3. 3. 38 Thus accented MSS. Read आरभे (Inf. dative). 39 इति MSS. 40 Thus accented MSS. 41 सयस्स O P C C' (sec. m.). 42 स्वदावर्तते MSS. (also Mādhy.) except C (sec. m.).

K. IV. 1. 4 M. III. 1. 4

1 सर्वाणि ह वाव दीक्षाया यजूꣳष्यौद्ग्रभणान्युद्गृह्णीते ह वा एषो ऽस्मान्मनुष्यलोकाद्देवलोकमभ्यात्मानं यो दीक्षते स वा एतैरेव तद्यजुर्भिरुद्गृह्णीते यैर्दीक्षते तस्मात्सर्वाण्येव दीक्षाया यजूꣳष्यौद्ग्रभणान्यथ यदेतान्यवान्तरामौद्ग्रभणानीत्याचक्षते ख्यायन्त आहुतयो ह्येता आहुतिर्ह्येव[1] यज्ञः परोक्षमिव हि तद्यद्यजुर्जपत्येतेन हि तद्यज्ञेनोद्गृह्णीते[2] ॥१॥

2 तद्यानि त्रीणि स्रुवेण जुहोत्याधीतयजूꣳषीति[3] तान्याख्यायन्ते संपदः कामाय चतुर्थꣳ हूयते ऽथ यामेवादः स्रुचानुष्टुभा जुहोति सैव प्रत्यक्षमौद्ग्रभणमनुष्टुभा हि तां जुहोति वाग्घ्यनुष्टुब् वाग्घि यज्ञस्तेन ह सा प्रत्यक्षमौद्ग्रभणमथ यत्सर्वाणि जुहोति ॥२॥

3 देवा वै यज्ञेनेमां जितिं जित्वा येयमेषां जितिस्ते होचुर्हन्तेदं तथा करवामहा इति यथा न इदमनभ्यारुह्यं मनुष्यैरसदिति ते यज्ञस्य रसं निर्धीय यथा मधुकृतो निर्धयेयुरेवं विदुह्य यज्ञं यूपेन योपयित्वा तिरो बभूवुस्तद्यदेनेनायोपयꣳस्तस्माद्यूपो नाम ॥३॥

4 तदृषीणामनुश्रुतमास तं यथा यथर्षयो यज्ञꣳ समभरꣳस्तथायं यज्ञः संभृतो यथो वै तदृषयो यज्ञꣳ समभरन्नेवमु वा एष एतद्यज्ञꣳ संभरति यो दीक्षते ॥४॥

5 एष उ वै स यज्ञो यदेता आहुतयस्तस्मात्पञ्च जुहोति संवत्सरसंमितो यज्ञः पञ्चर्तवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च जुहोति ॥५॥

6 स जुहोत्याकूत्यै प्रयुजे ऽग्नये स्वाहेत्याकुवते वै यजेयेति स यदेनं तनुते तदेनं प्रयुङ्क्ते तद्यदेवैतद्यज्ञस्य रूपं तदेवैतेन संभरति तदात्मनि कुरुते ॥६॥

7.8 मेधायै मनसे ऽग्नये स्वाहेति मेधया वै मनसाभिगच्छति यजेयेति तद्यदेवै-तद्यज्ञस्य रूपं तदेवैतेन संभरति तदात्मनि कुरुते दीक्षायै तपसे ऽग्नये स्वाहेत्यन्वाहु-रेवैतन्न तु जुह्वति ॥७॥

9.10 सरस्वत्यै पूष्णे ऽग्नये स्वाहेति वाग्वै सरस्वती वाचा वा अभिव्याहरति यक्ष्य इति पशवो वै पूषा पुष्टिर्हि पूषा पुष्टिर्हि पशवो यदा वै पशून्पुष्यत्यथ यज्ञं प्राप्नोति तद्यदेवैतद्यज्ञस्य रूपं तदेवैतेन संभरति तदात्मनि कुरुते स यत्सर्वेष्वग्नये स्वाहेति जुहोत्यनद्धेव वा एता आहुतयो हूयन्ते ऽप्रतिष्ठिता इव न हि कस्यै चन देवतायै हूयन्ते ॥८॥

11 आकूत्यै प्रयुज इति तन्नाग्निर्नेन्द्रो न सोमो मेधायै मनस इति नातो ऽन्य-तरच्चनैवमेव सर्वेष्वग्निरु वा अद्धाग्निः प्रतिष्ठित एतेनास्यैतदद्धाहुतयो हुता भवन्त्ये-तेन प्रतिष्ठितास्तस्मात्सर्वेष्वग्नये स्वाहेति जुहोत्यथ यदाधीतयजूꣳषीत्याख्यायन्त आत्मनि ह्यस्यैता देवता आधीता आत्मनि प्रतिष्ठिताः ॥९॥

12 आकूत्यै प्रयुजे ऽग्नये स्वाहेत्यात्मना वा आकुवते यजेयेति स यदेनं तनुते तदेनमात्मन एव प्रयुङ्क्ते ते अस्मिन्नेते उभे देवते आत्मन्याधीते ॥१०॥

13 मेधायै मनसे ऽग्नये स्वाहेति मेधया वै मनसाभिगच्छति यजेयेति तदस्यैत-दुभयमात्मन्येव यन्मेधा च मनश्च ते अस्मिन्नेते उभे देवते आत्मन्याधीते ॥११॥

14 सरस्वत्यै पूष्णे ऽग्नये स्वाहेति वाग्वै सरस्वती वाचा वा अभिव्याहरति यक्ष्य इति सेयमस्यात्मन्येव पशवो वै पूषा पुष्टिर्हि पूषा पुष्टिर्हि पशवो यदा वै पशून्पुष्यत्यथ यज्ञं प्राप्नोति त उ अस्येम आत्मन्येव ते अस्मिन्नेते उभे देवते आत्म-न्याधीत एवꣳ ह्यस्यैता देवता आत्मन्याधीता आत्मनि प्रतिष्ठितास्तस्मादाधीतयजूꣳ-षीत्याख्यायन्ते ॥१२॥

15.16 अथ जुहोत्यापो देवीर्बृहतीर्विश्वशंभुवो द्यावापृथिवी उर्वन्तरिक्ष। बृहस्पतये हविषा विधेम स्वाहेत्येषा हि नेदिष्ठा यज्ञस्यापाꣳ ह्यत्र कीर्तयत्यापो हि यज्ञो द्यावा-पृथिवी उर्वन्तरिक्षेति तदेषां त्रयाणां लोकानां कीर्तयति तदेभ्यस्त्रिभ्यो लोकेभ्यः संभरति बृहस्पतये हविषा विधेम स्वाहेति ब्रह्म वै बृहस्पतिर्ब्रह्म यज्ञ एतेन हैषा नेदिष्ठा

२०३

यज्ञस्याथ यामेवादः स्रुचानुष्टुभा जुहोति स एव प्रत्यक्षं यज्ञो ऽनुष्टुभा हि तां जुहोति वाग्घ्यनुष्टुब् वाग्घि यज्ञस्तेन ह सा प्रत्यक्षं यज्ञः ॥१३॥

तद्यद्ध्रुवायामाज्यं भवति तत्सर्वमेव जुह्वामानयत्यथ द्विः स्रुवेण स्थाल्या गृहीत्वाभ्येव स्रुवं यत्स्थाल्यां परिशिष्टं भवति तदानयति तज्जुहोति विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् । विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहेति ॥१४॥ 17.18

तदाहुरेतामेवाप्येकां[12] जुहुयादिति यदाहुः संवत्सरसंमितो यज्ञः पञ्चर्तवः संवत्सरस्येत्येतयैव तदाप्नोतीति विश्वो देवस्येति तदस्या वैश्वदेवं नेतुरिति तत्सावित्रं मर्त इति तन्मैत्रं विश्वो द्युम्नमिति तद्बार्हस्पत्यं द्युम्नꣳ हि बृहस्पतिः पुष्यस इति तत्पौष्णꣳ सैषा देवताभिः पङ्क्तिस्तद्वेव तदाप्नोति यत्संवत्सरसंमितो यज्ञः पञ्चर्तवः संवत्सरस्येत्यनुष्टुभो वै जुहोति वाग्वा अनुष्टुब् वाग्वै यज्ञस्तद्वेव यज्ञꣳ संभरति स यद्येतामेवैकां जुहुयात्पूर्णां तर्हि जुहुयात्सर्वꣳ ह्येषा तर्हि भवति सर्वꣳ हि पूर्णꣳ सैषा मीमाꣳसैव सर्वास्त्वेव जुह्वति सैषानुष्टुप्सत्येकत्रिꣳशदक्षरैकत्रिꣳशो वा अयं पुरुषो दशेमाः[13] पाण्या अङ्गुलयो दशामूः पाद्या दशेमे प्राणा आत्मैकत्रिꣳशः पुरुषो वै यज्ञस्तस्मादनुष्टुभैकत्रिꣳशदक्षरया जुहोति पुरुषो हि यज्ञः ॥१५॥ चतुर्थं ब्राह्मणम् ॥ 19-23

प्रथमो ऽध्यायः ॥

1 आहुतीर्ह्येव B W O P C C². 2 °गृह्णीते MSS. 3 °धीतयजूꣳषीति MSS., but cp. section 9. 4 Thus accented MSS. 5 स्वाहेत्य° MSS.; °वैतंन MSS. except M. 6 तनाग्निं B W O P C. 7 न्यत-रच्चनैवमेव MSS. 8 Read हुता भव°? 9 यदाधी° MSS. 10 Thus accented MSS. again. 11 Thus, without accent, M only; प्रतिष्ठितास्तस्मात्सर्वेष्वग्नये स्वाहेति जुहोत्यथ यदाधीतयजूꣳषीत्याख्यायंते the other MSS. 12 °रेतामेवाप्येकां MSS. 13 Thus accented MSS. Read दशेमाः, पाण्य being = pāṇyà ?

K. IV. 2. 1 M. III. 2. 1

ते वा एते कृष्णाजिने प्राग्ग्रीवे उपस्तृणाति तयोरेनमधि दीक्षयति ते यदि द्वे भवतो ऽनयोरेवैनं तल्लोकयोरधि दीक्षयति ते संबद्धान्ते स्याताꣳ संबद्धान्ताविव 1.2

हीमौ लोकौ तन्नसमुते पश्चात्स्यातामिमावेवैतल्लोकौ[१] मिथुनीकृत्य तयोरेनमधि दीक्षयति तस्मात्तन्नसमुते पश्चात्स्याताम् ॥१॥

3.4 यद्युवेकं भवत्येषामेव तल्लोकाना॑ँ रूपं यानि शुक्लानि तान्यस्या यानि कृष्णानि तानि दिवो यदि वेतरथा यानि कृष्णानि तान्यस्या यानि शुक्लानि तानि दिवो ऽथ यान्येव मध्ये बभ्रूणि वा हरीणि वा तान्यन्तरिक्षस्य तद्धेनं तद्‌ष्वेव लोकेष्वधि दीक्षयति तत्पश्चादन्तं प्रत्यस्यति तदिमौ लोकौ मिथुनीकृत्य तयोरेनमधि दीक्षयति तस्मात्पश्चादन्तं प्रत्यस्यति ॥२॥

5-7 अथ पश्चाज्जान्वक्ण[२] उपविशति स शुक्लानां च कृष्णानां च लोम्ना॑ँ संधिमभिमृश्य जपत्यृक्सामयोः शिल्पे स्थ इति यद्वै प्रतिरूपं तच्छिल्पमृचां च साम्नां च प्रतिरूपे स्थ इत्येवैतदाह ते वामारभे ते मा पातमिति ते वां प्रविशामीत्येवैतदाह यदाह ते वामारभ इति ते मा पातमिति ते मा गोपायतमित्येवैतदाहास्य[३] यज्ञस्योदृच इत्यास्य यज्ञस्य स॑ँस्थाया इत्येवैतदाह गर्भो वा एष भूतश्छन्दा॑ँसि प्रविशति यो दीक्षते तस्मात्समक्णाङ्गुलिरिव[४] भवति समक्णाङ्गुलिरिव[४] ह्ययं गर्भः[५] ॥३॥

8 अथोरुणाधिसर्पति शर्मासि शर्म मे यच्छ नमस्ते अस्तु मा मा हि॑ँसीरिति कृष्णस्य[६] वा एतच्चर्म तदस्यैतन्मानुषं नाम शर्म देवत्रा स यदेव देवत्रा तत्करोति तस्मादाह शर्मासि शर्म मे यच्छेति नमस्ते अस्तु मा मा हि॑ँसीरिति श्रेया॑ँसं वा एष उपाधिरोहति यो मनुष्यः सन्यज्ञमुपाधिरोहति यज्ञो हि कृष्णाजिनं तस्मा एवैतन्नमस्करोति तस्मै निह्नुते तथैनमेष यज्ञो न हिनस्ति तस्मादाह नमस्ते अस्तु मा मा हि॑ँसीरिति ॥४॥

9 स निरन्त इवैवाग्र आसीत यद्ध प्रथमेनैव मध्यं प्रविशेद्यो हैनं तत्रानुव्याहरेद्‌द्रप्स्यति वा मरिष्यति वा प्र वा पतिष्यतीतीश्वरो ह तथैव स्यात्तस्मान्निरन्त इवैवाग्र आसीत ॥५॥

10 अथ मेखलां परिहरते स यन्मेखलां परिहरते यत्र ह वा अङ्गिरसो दीक्षिता अबलयं निजग्मुस्तद्धोपाजिज्ञासन्त[७] कथं नु समाप्नुयामेति ते नाहान्यद्व्रतादशनमुपाजान॑ँस्त[८] एतामेवोर्जमपश्यन्नेतां मेखलां तां मध्यतो ऽदधत समाप्तये तया समाप्नुव॑ँस्तथो वा एष एतामूर्जं मध्यतो धत्ते समाप्तये तया समाप्नोति तस्मान्मेखलां परिहरते ॥६॥

11 सा शाणी भवति मृद्व्यसदिति तस्मान्न्वेव[१] शाणी यत्र ह वै तत्प्रजापतिः

प्रथमं गर्भो भूतो ऽजायत तस्य ह यन्नेदिष्ठमुल्बमास ते शणास्तस्माच्छणा दुर्गन्धयो[१०] वान्त्यथ यद्वाह्यं जरायु तद्दीक्षितवसनं यतो वै तत्प्रजापतिरतः प्रथमं गर्भो भूतो ऽजायतैवमु वा एष एतदतः प्रथमं गर्भो भूतो जायते तस्माच्छाणी मेखलान्तरा दीक्षितवसनाद्भवत्यन्तरꣳ ह्युल्बं जरायुणो भवति तस्माच्छाणी भवति ॥७॥

सा त्रिवृद्भवति त्रिवृद्व्यन्नं पशवो ह्यन्नं पिता माता यज्जायते तत्तृतीयं तस्मात्त्रिवृद्भवति ॥८॥ 12

तस्यां मुञ्जवल्शो ऽन्वस्तो भवति वज्रो वै शरो विरक्षस्तायै सा स्तुकासर्गꣳ सृष्टा भवति यद्धेत्थꣳ[११] सृष्टा[११] स्याद्यथेयꣳ रज्जुर्मानुषी ह स्याद्यदु ह्यपसलवि[१२] सृष्टा स्यात्पितृदेवत्या स्यादथैवं देवत्रा तस्मात्स्तुकासर्गꣳ सृष्टा भवति ॥९॥ 13

तां परिहरत ऊर्गस्याङ्गिरसीत्यङ्गिरसो ह्येतामूर्जमपश्यꣳस्तस्मादाहाङ्गिरसी-त्यूर्णम्रदा इत्यूर्णम्रद्धीत्येवैतदाहोर्जं मे यच्छेत्यूर्जं मे यच्छेत्येवैतदाह ॥१०॥ 14

अथ नीविं कुरुते सोमस्य नीविरसीति मानुषी वा अस्यैषाग्रे नीविर्भव-त्यथैषा सोमस्य नीविर्यद्दीक्षितस्य तस्मादाह सोमस्य नीविरसीति ॥११॥ 15

अथैनं प्रार्णोति गर्भो वा एष भवति यो दीक्षते प्रावृत इव वै गर्भ उल्बेनेव त्वज्जरायुणेव त्वद्गर्भरूपमेवैनं तत्करोति ॥१२॥ 16

स प्रोर्णोति विष्णोः शर्मासि शर्म यजमानस्येत्युभयं वा एष एतद्भवति विष्णुश्च यजमानश्च यो दीक्षते तस्मादाह विष्णोः शर्मासि शर्म यजमानस्येत्य-थोत्तरसिचे कृष्णविषाणां बध्नाति ॥१३॥ 17

देवाश्च ह वा असुराश्चोभये प्राजापत्याः प्रजापतेः पितुर्दायमुपेयुर्यज्ञमेव देवा वाचमसुरा मनो वै तद्देवा उपायन्वाचमसुरा अमूं वै तद्देव। दिवमुपायन्निमामसुराः स हायं यज्ञो देवैर्वोक्तः स्वयं वा दध्रे हन्तेमां वाचमुपमन्त्रयामहा इति देवा वैनमूचुर्योषा वा इयमित्युपमन्त्रयस्व भगवो[११] ह्वयिष्यते[१३] वै त्वेति ॥१४॥ 18.19

ताꣳ होपमन्त्रयां चक्रे सा हास्मै दूरमिवैवाग्रे ऽसूयां चकार तस्मादु स्त्री प्रथममुपमन्त्रिता दूरमिवैवाग्रे ऽसूयति स होवाच दूरमिव वै म आसूयदिति[१४] ते होचुरुपैव भगवो मन्त्रयस्व ह्वयिष्यते वाव त्वेति ॥१५॥

ताꣳ ह द्वितीयमुपमन्त्रयां चक्रे सा हास्मै निपलाशतरमिवोवाद तस्मादु स्त्री द्वितीयमुपमन्त्रिता निपलाशतरमिवैव वदति स होवाच निपलाशतरमिव वै मे ऽवादीदिति ते होचुरुपैव भगवो मन्त्रयस्व ह्वयिष्यते वाव त्वेति ॥१६॥ 20

21-23 तां ह तृतीयमुपमन्त्रयां चक्रे सा हैनं जुहुवे तस्मादु स्त्र्युपमन्त्रयमाणा[15] ह्वयत एवान्ततः स होवाचाह्वत वै मेति त उ ह देवा बिभयां चक्रुर्योषा वा इयमिति यद्वा एनं न युवीतेति ते होचुरिहैव माभ्येहीति भगवो ब्रूहीति तां न आगतां प्रब्रवीति स होवाचेहैव माभ्येहीति तस्मादु स्त्र्येव पुमांसं संस्कृते ऽभ्यैति तां ह्यागतां प्रोवाचेयं वा आगन्निति तां देवा असुरेभ्यो ऽन्तरायंस्तामेषामनृञ्जतां सर्वहुतमजुहवुर्हुतं हि देवानां सैषा वाङ् निदानेन यामद औद्ग्रभणेष्वनुष्टुभा जुहोत्येषा सा वाङ् निदानेन ॥१७॥

24 ते हात्तवाचो ऽसुरा हैलो हैल इत्येतां ह वाचं वदन्तः पराबभूवुस्तत्रापि उपजिज्ञासेन्यां वाचमुपाजिज्ञासन्त स म्लेच्छस्तस्माद्ब्राह्मणेन न म्लेच्छितव्यमसुर्या ह्येषा वागेवं ह वाव द्विषतः सपत्नस्य वाचमादत्त आत्तवाचो[16] हास्य सपत्नाः पराभवन्ति य एवमेतद्वेद ॥१८॥

25 तदुभयं देवेष्वासीद्वाक्च यज्ञश्च स हायं यज्ञ इमां वाचमभिदध्यौ मिथुन्येनां स्यामिति तां संबभूव तस्यां रेतः प्रसिषेच तस्मादु हेन्द्रो बिभयां चकार महद्वा इदं देवेषु मिथुनं समागादिति यद्यज्ञस्य च वाचश्च यदितो जायेत यद्वै मा तन्न प्रतिप्रति[17] स्याद्धन्ताहमेवेदं[17] गर्भो भूत्वा प्रविशानीति तद्ध गर्भो भूत्वा प्रविवेश स यद्ध ततो जनिष्यमाणमासीत्तस्मान्मिथुनादिन्द्रश्च तदुभयमेवेन्द्रो ऽजायत तस्मादाहुरिन्द्र एव देवानां वीर्यवत्तम इत्येतस्माद्धि स मिथुनादजायतेति ॥१९॥

27.28 स ह संवत्सरे जायमान ईक्षां चक्रे महावीर्या वा इयं योनिर्या मामदीधरदिति यद्वै मा किं चिदद्भुतमस्या नानुप्रजायेतेति[18] तामनुपरामृश्य निवेष्ट्याचिच्छेद तस्मान्निवेष्टितेव[19] भवति निवेष्ट्यैनामाच्छिनत्तां[20] यज्ञस्य शिरसि प्रतिदधौ सा कृष्णविषाणा तदेषो ऽह स यज्ञो यत्कृष्णाजिनमेषो सा योनिर्यत्कृष्णविषाणा यथो वै तदिन्द्र एतन्मिथुनं गर्भो भूत्वा प्राविशत्स एतस्मान्मिथुनादजायतैवमु वा एष एतन्मिथुनं गर्भो भूत्वा प्रविशति स एतस्मान्मिथुनाज्जायते[21] तस्मादाहुर्य एव यजते स स्वानां वीर्यवत्तम इत्येतस्माद्धि स मिथुनाज्जायत इति तस्मादेतामुत्तानामिव बध्नीयादुत्तानेव हि योनिर्गर्भं बिभर्ति ॥२०॥

29 स शिरस्त उपस्पृशतीन्द्रस्य योनिरसीतीन्द्रस्य ह्येषा योनिरेतस्या उ हीन्द्रो ऽजायत तस्मादाहेन्द्रस्य योनिरसीति स यच्छिरस्त उपस्पृशत्यतो वा

तामेतदग्रे प्रविशन्प्रविशत्यतो वा[२१] अग्रे[२२] जायमानो जायते तस्माच्छिरस्त उपस्पृशति सुसस्याः कृषीस्कृधीति भूमेरुल्लिखति यज्ञमेवैतज्जनयति[२३] यदा हि सुपक्वत्योषधयः[२४] पच्यन्ते ऽथ हि यजन्ते न ह्यात्मने[२५] चन दुःषमे[२६] ऽलं भवन्ति तस्मादाह सुसस्याः कृषीस्कृधीति ॥२१॥

स दीक्षितो न नखेन न काष्ठेन कण्डूयेत गर्भो वा एष भवति यो दीक्षते यत्र वै गर्भस्य नखेन वा काष्ठेन वा कण्डूयेदपमृत्येदस्य[२७] तत्स हेश्वरो दीक्षितः पामनो भवितोरेतमु वा अनु रेताꣳसि ते हेश्वरो गर्भाः पामना जनितोस्तस्मादेतयैव कण्डूयेत न हि स्वा योनिर्गर्भꣳ हिनस्ति ॥२२॥ 31

अथास्मा औदुम्बरं प्रयच्छन्ति[२८] प्रतिलम्बायैवौदुम्बर[२९] इति होवाच याज्ञवल्क्यो नेदौपसदो[३०] ऽतिवर्ता इत्यथो वज्रो वै दण्डो विरक्षस्ताया औदुम्बरो भवत्यन्नं वा ऊर्गुदुम्बरस्तस्मादौदुम्बरो भवति मुखसंमितो भवति मुखसंमितꣳ हीदं वीर्यम् ॥२३॥ 32-34

स प्रयच्छत्युच्छ्रयस्व वनस्पत ऊर्ध्वो मा पाह्यꣳहसः । आस्य यज्ञस्योदृच इत्यूर्ध्वो मा गोपायास्य यज्ञस्य सꣳस्थाया इत्येवैतदाह ॥२४॥ 35

अत्र हैके ऽङ्गुलीर्न्यचयन्त्यत्र[३१] वाचं यमयन्ति न ह्यतो यजुर्जपिष्यन्भवतीति[३२] नान्यां वाचमपव्याहरिष्यन्नेतदन्ततो[३३] यज्ञस्य यज्ञमारभत इति[३४] ॥२५॥ 36-38

अथ यममुत्राङ्गुलीर्न्यचयन्त्यमुत्र[३५] वाचं यमयन्तीत्युतास्य[३६] यजुर्वा जपतो ऽन्यां वा वाचमपव्याहरतो यज्ञः प्रस्रꣳसत इति वदन्तस्तदु तथा न कुर्याद्यथा यं जिघृक्षेत्तमतिसृज्यानुलिप्सऽमानो नानुलभेत नान्वाप्नुयादेवꣳ ह स यज्ञं नान्वाप्नोति तस्मादमुत्रैवाङ्गुलीर्न्यचयेदमुत्र[३७] वाचं यमयेत्स यथा यं जिघृक्षेत्तमायन्तमुपोत्थायाभिपद्येतैवꣳ[३७] ह स यज्ञमारभते स यत्तत्र यजुर्वा जपत्याहुतिं वा जुहोति[३८] यज्ञो वै यजुर्वाहुतिर्वाभिस्थिरमभिस्थिरमेव[३९] तद्यज्ञमारभते यद्यु पुरा मानुषीं कां चिद्वाचमपव्याहरेद्वैष्णवं यजुर्वाचं वा जपेद्यज्ञो वै विष्णुस्तत्पुनर्यज्ञमारभते ॥२६॥

अथैनं प्राहुरदीक्षिष्टायं ब्राह्मण इति निवेदितमेवैनमेतत्सन्तं देवेभ्यो भूयो निवेदयत्ययं यौष्माक[४०] इतीमं गोपायतेमं वित्तेति देवान्ह्येष उपावर्तते यो दीक्षते स देवतानामेवैको भवत्यथ यदाह ब्राह्मण इत्येतर्हि वा एष ब्रह्मणो जायते[४१] यो यज्ञाच्छन्दोभ्यः श्लेष्मणो वा ह्यग्रे जायते यस्माद्वा को हि तद्वेद यद्यपि[४१] स्त्रियꣳ रक्षाꣳस्यभिसचन्ते ऽथैतर्हि ब्रह्मणो जायते[४३] यो यज्ञाच्छन्दोभ्यस्तस्माद्यद्यप्यब्राह्मणो[४४] दीक्षते राजन्यो वा वैश्यो वा ब्राह्मण इत्येवैनमाहुरेतर्हि हि ब्रह्मणो जायते तस्मादाहुर्न 39.40

सवनकृद्धन्तव्य[45] इत्येनस्व्येव सवनकृतातो हि स जायत इति ॥२७॥ प्रथमं ब्राह्मणम् ॥

1 °वैतंलोकौ P C C², °वैतंलोकौ B O W. 2 °न्वक्र C (sec. m.) M. 3 °तदाहास्य B W O (sec. m.) P C C¹, °तदाहास्य O (orig.) : एतत् । आह । आ । अस्य. 4 तस्मात्समक्णा° B W O P C (pr. m.) My, °त्समक्णा° C² (second time, pr. m.); °त्समक्रा° C (sec. m.) M. 5 गर्भः C C¹ (pr. m.), गर्भं B W O P C² (sec. m.). 6 कृष्णस्य MSS., but cp. II. 1. 3. 8. 7 निजग्मतुस्तद्धोपाजि° MSS. 8 Thus emended; °दशनमूपाजा° M, °दशनमपाजा° the other MSS. 9 तस्मान्वेव B O P C (pr. m.) C² 10 Without accents B O P. 11 यद्धेत्थ॰ सृष्टा O P C C², यद्धेच्छ॰ सृष्टा B W. 12 हापसलवि B W O P C C² (sec. m.). 13 भगवो वैह्वयि° B W C C¹, भगवो हैव्य° M, भगवो वैव्य° O My. 14 आसूयदिति MSS. except M, which has आसूयादिति. Read आसूयीदिति ? 15 °मंत्रयमाण॰ MSS. 16 आत्तवाचो MSS. 17 i. e. प्रतिप्रति । स्यात् । हन्त etc. 18 नानुप्रजा° MSS. 19 तस्मान्निवेष्टितेव MSS. 20 ? निवेष्टिह्येनामाछिनत्तां B W C C¹ M, निवेष्टिह्येनामाछिनत्तां O P My. Read निवेष्ट्य ह्येना° ? 21 °थुनाज्जायते MSS. 22 Thus MSS. Read वाग्रे ( वा । अग्रे ) ? 23 °जनयति O P. 24 Thus MSS. except M (सुपक्त्वौष°). 25 ह्यात्मने MSS. 26 दुःखमे B W O P C (pr. m.) C¹, दुखमे My. 27 °दुंपमृत्येदस्य B W C, °दुयंमृत्येदस्य O P, °दुपमृत्येदस्य C¹ M (without accent), °दुपंमृत्ये° My. 28 °यछति B. 29 प्रतिलंभायै° C (sec.

m.) My, प्रतीलंभायै° B W O P C (pr. m.) C¹, प्रतिलम्बायै° M. 30 नेदउपस° M. 31 Thus accented MSS. Read कुलीन्यंचय°? 32 यजुर्जपिष्य° MSS. 33 °ऱ्याहरिष्य° MSS. 34 इति W O P C (sec. m.), इति B. 35 °लीन्यंचय° O P. 36 यमयंती° MSS. 37 °यंतमुपोत्थाया° MSS. 38 जुह्वति MSS. 39 °स्थिरमभिस्थिर° MSS. 40 यौष्माक MSS. 41 जायते W B C C². 42 यद्यपि MSS. 43 जायते MSS. 44 °स्तस्माद्य-थप्यन्ना° MSS. 45 Without accents MSS.

K. IV. 2. 2 M. III. 2. 2

1 स वै वाचंयमो भवत्यास्तमेतोरादित्यात्स यदास्तमेतोरादित्याद्वाचंयमो भवति ॥१॥

2 देवा वै यज्ञेनेमां जितिं जित्वा येयमेषां जितिस्ते होचुर्हन्तेदं तथा करवामहा इति यथा न इदमनभ्यारुह्यं मनुष्यैरसदिति ते यज्ञस्य रसं निर्धीय यथा मधुकृतो निर्धयेयुरेवं विदुह्य यज्ञं यूपेन योपयित्वा तिरो बभूवुस्तद्यदेनेनायोपयꣳस्तस्माद्यूपो नाम ॥२॥

3 तदृषीणामनुश्रुतमास तं यथा यथर्षयो¹ यज्ञꣳ समभरꣳस्तथायं यज्ञः संभृतो यथो वै तदृषयो यज्ञꣳ समभरन्नेवमु वा एष एतद्यज्ञꣳ संभरति यो दीक्षते ॥३॥

4 स वै वागेव यज्ञस्तꣳ संभृत्यात्मनि कृत्वा संयत² आस्त आस्तमेतोरादित्यात्सो ऽस्तमित आदित्ये वाचं विसृजते स यदस्तमित आदित्ये वाचं विसृजते संवत्सरो वै यज्ञः प्रजापतिर्हि³ संवत्सरः प्रजापतिर्हि यज्ञो ऽहोरात्रे उ वै संवत्सर एते हि परिप्लवमाने संवत्सरं कुरुतः स वा इदमहन्यदीक्षिष्ट⁴ स रात्रिं प्रापत्तत्सर्वं यज्ञमाप्त्वाथ वाचं विसृजते ॥४॥

5 तद्धैके नक्षत्राणि दर्शयित्वाथ विसर्जयन्त्येतर्ह्यनुष्ठ्यास्तमित इति वदन्तस्तदु तथा न कुर्यात्क⁵ ते स्युर्यदभ्रः स्यात्तस्माद्यदैव कदा चास्तमितं मन्येताथैव वाचं विसर्जयेत् ॥५॥

6-8 सो ऽग्निमीक्षमाणो विसृजते व्रतं कृणुत व्रतं कृणुत व्रतं कृणुतेत्येतद्वा

एतस्य हविरेष यज्ञो यद्व्रतं यथास्य पुराग्निहोत्रं तदेतं यज्ञꣳ संभृत्यैतस्मिन्प्रतिष्ठापयति यज्ञेन यज्ञꣳ संतनोति सो ऽस्यैष संततो यज्ञो भवत्या सुत्यायाः संततꣳ ह्यस्यैतद्व्रतं भवति ॥६॥

तदु हैके भूर्भुवः स्वरिति वा विसर्जयन्त्यन्येन[6] वा न ह ते यज्ञꣳ संदधति त्रयो वै त्रिराह त्रिवृद्धि यज्ञः ॥७॥

9 अथाहाग्निर्ब्रह्माग्निर्यज्ञो वनस्पतिर्यज्ञिय इति तत्सत्यमेवैतत्प्रथमं वाचाभिव्याहरत्यग्निर्हि ब्रह्माग्निर्हि यज्ञो वनस्पतयो हि यज्ञिया न हि मनुष्या यजेरन्यद्वनस्पतयो न स्युस्तस्मादाह वनस्पतिर्यज्ञिय इति[7] ॥८॥

10 अथ कामं वाचयते तदेतद्वा एतस्य हविरेष यज्ञो यद्व्रतं यथास्य पुराग्निहोत्रं तस्मादेतच्छ्रपयन्ति शृतꣳ हि देवानां तदेष एव व्रतयति नाग्नौ जुह्वति स यदेष एवैतद्व्रतयति[8] नाग्नौ[8] जुह्वति[8] ॥९॥

11 देवा वै यज्ञेनेमां जितिं जित्वा येयमेषां जितिस्ते होचुर्हन्तेदं तथा करवामहा इति यथा न इदमनभ्यारुह्यं मनुष्यैरसदिति ते यज्ञस्य रसं निर्धीय यथा मधुकृतो निर्धयेयुरेवं विदुह्य यज्ञं यूपेन योपयित्वा तिरो बभूवुस्तद्यदेनेनायोपयꣳस्तस्माद्यूपो नाम ॥१०॥

12 तदृषीणामनुश्रुतमास तं यथा यथर्षयो यज्ञꣳ समभरꣳस्तथायं यज्ञः संभृतः स वा एष एव यज्ञो यो दीक्षत एष ह्येनं तनुत[9] एष ह्येनं जनयते स यत्रैव तत्र यज्ञस्य देवैर्निर्धीतं यद्विदुग्धं तदेवैतेन हविषैतेन रसेनाप्यायययति न ह्याप्याययेद्यदग्नौ जुहुयात्तस्मादेष एव व्रतयति[10] नाग्नौ जुह्वति ॥११॥

13 तदु जुह्वदेव मन्येतेमे वै प्राणा मनोजाता मनोयुजो दक्षक्रतवो ऽग्निरेव वाङ्मित्रावरुणौ प्राणोदानौ सूर्यश्चक्षुर्विश्वे देवाः श्रोत्रं तदस्यैतासु देवतासु यथा[11] हुतमेवं भवति तस्माज्जुह्वदेव मन्येत ॥१२॥

14 तद्धैके प्रथमे व्रत[12] उभौ व्रीहियवावावपन्त्युभाभ्यां चैताभ्याꣳ रसाभ्यां यद्यज्ञस्य निर्धीतं यद्विदुग्धं तदाप्याययिष्याम इत्यथो उत गौरवभिनत्तीति स यतरस्यातः कामयेतेति तस्य व्रतꣳ श्रपयेयुस्तस्य[13] यवागूं कुर्युरिति तदस्य यथा हविरारब्धमित्येवमस्य तद्भवतीति तदु तथा न कुर्याद्धविर्वा एतद्यद्व्रीहियवौ हविः पयो यद्वा एतौ हविस्तेनैवास्यैतावारब्धौ तस्मादप्यन्यतरमेवावपेद्यद्यु कामयेतापि पयोव्रत[14] एव स्यात् ॥१३॥

तद्धैके प्रथमे व्रते सर्वौषधꣳ सर्वसुरभ्यावपन्त्युत दीक्षितमार्तिर्विन्दतीति ततो येनागदं भविष्यन्तं मन्यन्ते तेन भिषज्यन्तीति स यथा हविषारब्धेन भिषज्येदित्येवमेतदिति तदु तथा न कुर्यान्मानुषꣳ ह कुर्याद्यत्तथा कुर्याद्व्यृद्धं वै तद्यज्ञस्य यन्मानुषं तस्मात्तथा न कुर्यात्स्वयं वाव येनागदं भविष्यन्तं मन्यन्ते तेन[15] भिषज्यन्त्यार्तिश्चेद्विन्दति[16] समाप्तिर्ह्येव पुण्या[17] सो ऽतिनीयेव तं कालं प्रयच्छन्ति यत्र मनुष्या अश्नन्त्यपरमिवानुरात्रेरपराह्णे[18] प्रातर्दुग्धममानुषेणैवैनं तद्दैवेनैवोपचरति ॥१४॥ 15.16

स यत्रास्मै व्रतं प्रदास्यन्भवति तदवनेजयति सो ऽवनेनिक्ते दैवीं धियं मनामहे सुमृलीकामभिष्टये । वर्चोधां[19] विश्वधायसꣳ सुतीर्था नो असद्वश इति मानुषाय वा इदं पुरावनेनिक्ते ऽथैतद्दैव्यै धिये यद्दीक्षितस्तस्मादाह दैवीं धियं मनामह इति ॥१५॥ 17

अथास्मै व्रतं प्रयच्छन्ति तदाचामति ये देवा मनोजाता मनोयुजो दक्षक्रतवः। ते नो ऽवन्तु ते नः पान्तु तेभ्यः स्वाहेतीमे वै प्राणा मनोजाता मनोयुजो दक्षक्रतवस्तदस्यैषु प्राणेषु यथा हुतꣳ स्वाहाकृतꣳ स्यादेवं भवति ॥१६॥ 18

व्रतयित्वाप उपस्पृश्योदरमभिमृशते श्वात्राः पीता भवत यूयमापो अस्माकमन्तरुदरे सुशेवाः । ता अस्मभ्यमयक्ष्मा अनमीवा अनागसः स्वदन्तु देवीरमृता ऋतावृध इति ॥१७॥ 19

उत वै तीव्रं व्रतं भवति तत्क्षुद्रतरमसदिति वोपोत्सिञ्चत्यल्पं[20] वा भवति तद्भूयस्कास्योपोत्सिञ्चति[21] देवान्वा एष उपावर्तते यो दीक्षते स देवतानामेवैको भवत्यनुत्सिक्तमु वै देवानाꣳ हविस्तत्तन्मिथ्याकरोति व्रतं प्रमिनाति यदुपोत्सिञ्चति[22] तथास्य तन्न मिथ्याकृतं भवति तथा व्रतं न प्रमिनात्येषो अत्र प्रायश्चित्तिस्तदभिमृश्यमेव[23] को हि तद्वेद यदि व्रतप्रद[24] उप वोत्सिञ्चति[25] यथा वा ॥१८॥

अथ यत्र प्रस्नावयिष्यमाणो भवति तत्कृष्णविषाणयोपहन्ति पाꣳसून्वा परिपदं वा लोकं वेयं ते यज्ञिया तनूरिति[15] सर्वा वा इयं पृथिवी देवी[26] देवयजनꣳ सेयं दीक्षितेन नाभिमिह्या तस्या एतद्यदेव यज्ञियं तदुद्गृह्णात्यथास्या अयज्ञियमेव शरीरमभिमेहत्यपो मुञ्चामि न प्रजामिति प्रस्नावयते ऽतो वै रेत एति तदात्मन्येव प्रजां कुरुते ऽप एव मुञ्चति तस्मादाहापो मुञ्चामि न प्रजामित्यꣳहोमुचः स्वाहाकृताः पृथिवीमाविशतेत्यꣳहस इव वा एता मुञ्चन्ति यदिह किं चिदुपवेष्टितं वा भवति 20

यद्वा तस्मादाहाꣳहोमुच इति स्वाहाकृताः पृथिवीमाविशतेत्याहुतिमेवैनामेतच्छमयित्वा पृथिवीं प्रापयति तस्मादाह पृथिवीमाविशतेति ॥१९॥

21 प्रस्नाव्य पुनर्न्यस्यति[27] पृथिव्या संभवेति तद्यदेवास्या यज्ञियं तदेतदुद्धायज्ञियꣳ शरीरमभिमिह्य तदस्यामेव पुनर्यज्ञियं दधाति तस्मादाह पृथिव्याः संभवेति[28] ॥२०॥

22 अथ यत्र स्वप्स्यन्भवति[29] तदग्नये परिदाय स्वपिति देवान्वा एष उपावर्तते यो दीक्षते स देवतानामेवैको भवति न वै देवाः स्वपन्त्यनवरुद्ध उ वा एतस्य स्वप्नो[30] ऽग्निरु वै देवानां व्रतपतिस्तद्य एव देवानां व्रतपतिस्तस्मा एवैतत्परिदाय स्वपिति ॥२१॥

स आहाग्ने त्वꣳ सु जागृहि वयꣳ सु मन्दिषीमहीति त्वं जागृहि वयꣳ स्वप्स्याम इत्येवैतदाह रक्षा णो अप्रयुच्छन्निति गोपाय नो ऽप्रमत्त इत्येवैतदाह प्रबुधे नः पुनस्कृधीति यथा प्रबुध्यामहै तथा नः पुनः कुर्वित्येवैतदाह प्रबुध्य यतः पुनः स्वप्स्यन्भवति[31] ॥२२॥

23 तज्जपति पुनर्मनः पुनरायुर्म आगात्पुनश्चक्षुः पुनः श्रोत्रं म आगात्पुनः प्राणः पुनरात्मा म आगादिति सर्वा वा अस्मादेता देवता अपक्रान्ताः स्वपतो भवन्ति प्राण एवास्मादनपक्रान्तो भवत्येता ह्येनमेतद्देवताः पुनराविशन्ति तस्माद्वेवं जपति वैश्वानरो अदब्धस्तनूपा अग्निर्मा पातु दुरितादवद्यादिति स यदिह[32] मिथ्याकर्म यदस्वाप्स्मेत्यग्निरेव[33] नस्तस्मात्पात्वित्येवैतदाह तथास्य तन्न मिथ्याकृतं भवति तथा व्रतं न प्रमिनात्येषो अत्र प्रायश्चित्तिः ॥२३॥

24 अथ यद्यव्रत्यां कां चिद्वाचमपव्याहरेत्क्रुद्धो वा प्रमत्तो वा तदु जपेत्त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्य इत्यग्निर्वै देवानां व्रतपतिस्तमेवैतदुपधावति तथास्य तन्नाव्रत्यं कृतं भवति तथा व्रतं न प्रमिनात्येषो अत्र प्रायश्चित्तिः ॥२४॥

25 अथ यद्यस्मै दीक्षितायाहरेयुर्वासो वा गां वा तदभिमन्त्रयेत रास्वेयत्सोमा भूयो भरेति सोमो ह वा अस्मा एतद्धुते यदस्मै सोमेन यक्ष्यमाणायाहरन्ति तस्मादाह रास्वेयत्सोमेत्या भूयो भरेत्या नो भूयो भरेत्येवैतदाह देवो नः सविता वसोर्दाता वस्वदादिति सविता वै देवानां प्रसविता तथो हास्मा एतत्सवितृप्रसूतमेव दानाय भवति ॥२५॥

26-29

तं पुरास्तमेतोराह दीक्षित वाचं यच्छेति पुरोदेतोराह दीक्षित वाचं यच्छेति संततय एवाह्नैवैतद्रात्रिं संतनोति रात्र्यो[34] पुनरहस्तं नान्यत्र चरन्तमभ्यस्तमियाद्रात्रेहैनं[35] तदन्तरियान्नो[35] एव स्वपन्तमभ्युदियादह्न[35] उ हैनं तदन्तरियात्तत्प्रतिगुप्यमेवात्र[35] नात्र प्रायश्चित्तिरिवास्ति स न पुरावभृथादपो[36] वाभ्यवेयादभि वैनं वर्षेत्स्वकामिनं[37] न हि तदवकल्पते यत्पुरावभृथादपो वाभ्यवेयादभि वैनं वर्षेत्स्वकामिनं[38] स परिह्वालं वाचं वदति न प्रसृतां मानुषीं स यत्परिह्वालं वाचं वदति न प्रसृतां मानुषीम् ॥२६॥

देवा वै यज्ञेनेमां जितिं जित्वा येयमेषां जितिस्तं होचुर्हन्तेदं तथा करवामहा इति यथा न इदमनभ्यारुह्यं मनुष्यैरसदिति ते यज्ञस्य रसं निर्धीय यथा मधुकृतो निर्धयेयुरेवं विदुह्य यज्ञं यूपेन योपयित्वा तिरो बभूवुस्तद्यदेनेनायोपयंस्तस्माद्यूपो नाम ॥२७॥

तदृषीणामनुश्रुतमास तं यथा यथर्षयो[39] यज्ञं समभरंस्तथायं यज्ञः संभृतो यथो वै तदृषयो यज्ञं समभरन्नेवमु वा एष एतद्यज्ञं संभरति यो दीक्षते ॥२८॥[40]

स वै वागेव यज्ञः स यदेव तत्र यज्ञस्य देवैर्निर्धीतं यद्विदुग्धं तदेवैतेन हविषैतेन रसेनाप्याययति न ह्याप्याययेद्यत्प्रसृतां मानुषीं वाचं वदेत्तस्मात्परिह्वालं वाचं वदति न प्रसृतां मानुषीम् ॥२९॥

30

अथ यद्दीक्षितो[41] नाम वाचे वा एष एतद्धीक्षते[42] यज्ञाय हि धीक्षते यज्ञो हि वाक्तस्माद्धीक्षितो नाम धीक्षितो ह वै नामैतद्यद्दीक्षित इत्याहुः ॥३०॥ द्वितीयं ब्राह्मणम् ॥

1 यथऋषयो M. 2 संयत MSS. 3 °पतिर्वै M.
4 इदमहन्यदीक्षिष्ट MSS. 5 कुर्यात्क MSS. 6 Read विसर्जयन्त्यन्येन ? 7 इति O P C C[2] ( sec. m. ).
8 °यति नाम्नौ जुह्वति B O, °यति नाम्नौ जुहति P C C[2] W.
9 Thus accented MSS. 10 °यति B. 11 यथा B W C[1] ( orig. ). 12 सुव्रत B W. 13 अपये° O P C C[2] ( sec. m. ). 14 पयोव्रत MSS.
15 तेनैव M. 16 °ह्विंदति MSS. 17 पुण्या MSS.

18 Thus MSS. Read अश्नन्त्यपरमित्रानुरात्रे ऽपराह्णे ? 19 वचोंदां B M My. 20 वोपोत्सिंचत्यल्पं MSS. 21 तद्भूय° MSS. 22 °त्सिंचति MSS. 23 Read perhaps °स्तदभिमृष्यमेव. 24 °प्रद उपवोत्सिंचति MSS. 25 तनुः the Saṃhitā. 26 Om. M. 27 पुनर्न्यस्यति B. 28 संभवेति MSS. 29 स्वप्स्यन्भवति MSS. 30 एतस्यास्वप्नो O C C². 31 स्वप्स्यन्भवति MSS. 32 यदिह MSS. 33 यदस्वाप्स्मे° B, यदस्वाप्स्मे° O P C C² W. 34 रात्रियो MSS. except M. 35 ईयात् instead of इयात् most of the MSS. 36 पुरावभृ° MSS. 37 °त्स्वकामिनं B, °स्वकामिनं O P C C' W. 38 °त्स्वकामिनं B O P C W. 39 यथऋषयो M. 40 B W C² give only the first words of section 27 and 28. 41 यद्दीक्षितो MSS. except M My. 42 एतद्दीक्षते M My.

M. III. 2. 3 K. IV. 2. 3

1-4 स वा एतमादित्यं चरुं निर्वपति प्रायणीयꣳ स यदेष आदित्यश्चरुः प्रायणीयो भवति देवा ह वै यज्ञमस्यां तेनिरे ते हास्यां तन्वाना इमां यज्ञादन्तरीयुः[1] ॥१॥

सो[2] हेयमीक्षां चक्रे हन्तैषां यज्ञं मोहयानीति य एव मयि तन्वाना मां यज्ञादन्तरगुरिति[2] तेषाꣳ ह यज्ञं मोहयां चकार ते देवा इमामेवोपाधवन्[3] त्वय्येव यज्ञमतꣳस्महीति[4] कथं नो यज्ञो न प्ररोचते कथं नो ऽमुहदिति[5] ॥२॥

5-7 सा होवाचाहमेव वो यज्ञममूमुहमिति होवाच यदेव मयि तन्वाना इति मां यज्ञादन्तरगात[6] तेनैव वो यज्ञममूमुहमिति ते मह्यं नु भागं कल्पयतेत्यथ वो यज्ञः प्ररोचिष्यत इति तथेति होचुस्तयैव प्रायणीयं तवोदयनीयमिति तादियं वा अदितिस्तस्मादेष आदित्य एव चरुः प्रायणीयो भवत्यादित्य उदयनीयस्तत एभ्यो यज्ञः प्रारोचत तमसृजन्त तमतन्वत स यदेष आदित्यश्चरुः प्रायणीयो भवति यज्ञस्यैव दृष्ट्यै यज्ञमेवैतेन पश्यति तं दृष्ट्वा क्रीत्वा तꣳ सृजते तं तनुते तस्माद्वा एष आदित्यश्चरुः प्रायणीयो भवति[7] तन्निरुप्तमेव[8] हविरासीदनिष्टा[9] देवता ॥३॥

अथैभ्यः पथ्या स्वस्तिः प्रारोचत तामयजन्वाग्वै पथ्या स्वस्तिर्यज्ञ उ वै वाक्तद्यज्ञमपश्यꣳस्तमसृजन्त तमतन्वत ॥४॥ 8

अथैभ्यो ऽग्निः प्रारोचत तमयजꣳस्ततो यदाग्नेयं यज्ञ आसीत्तदपश्यन्यद्वै शुष्कं तदाग्नेयं यदग्निदाह्यं तदसृजन्त तदतन्वत ॥५॥ 9

अथैभ्यः सोमः प्रारोचत तमयजꣳस्ततो यत्सौम्यं यज्ञ आसीत्तदपश्यन्यद्वा आर्द्रं तत्सौम्यं तदसृजन्त तदतन्वत ॥६॥ 10

अथैभ्यः सविता प्रारोचत तमयजꣳस्ततो यत्सावित्रं यज्ञ आसीत्तदपश्यन्पशवो वै सावित्रा यज्ञ उ वै पशवस्तद्यज्ञमपश्यꣳस्तदसृजन्त तदतन्वत ॥७॥ 11

अथादितिमयजꣳस्तत एभ्यो यज्ञः प्रारोचत तमसृजन्त तमतन्वत ॥८॥

ता वा एताः पञ्च देवता यजति पाङ्क्तो वै स यज्ञो मुग्ध आसीत्तमेताभिरेव पञ्चभिः प्राजानन्पञ्चर्तवो मुग्धा आसꣳस्तानेताभिरेव पञ्चभिः प्राजानन्पञ्च दिशो मुग्धा आसꣳस्ता एताभिरेव पञ्चभिः प्राजानन् ॥९॥ 12-14

उदीचीं पथ्यया स्वस्त्या वाग्वै पथ्या स्वस्तिस्तस्मादत्रोत्तराहै[10] वाग्वदतीत्याहुः कुरुपञ्चालेषु कुरुमहावृषेष्वित्येताꣳ[11] हि तया दिशं प्राजानन्नेषा हि तस्या दिक् प्रज्ञाता ॥१०॥ 15

प्राचीमग्निना तस्मादग्निं पश्चात्प्राञ्चमुद्धृत्योपासत एताꣳ हि तेन दिशं प्राजानन्नेषा हि तस्य दिक् प्रज्ञाता ॥११॥ 16

दक्षिणाꣳ[12] सोमेन तस्मादाहुः पितृदेवत्यः सोम इति तस्मात्तं दक्षिणा[13] परिवहन्त्येताꣳ हि तेन दिशं प्राजानन्नेषा हि तस्य दिक् प्रज्ञाता ॥१२॥ 17

प्रतीचीꣳ सवित्रैष वाव सविता य एष तपति तस्मादेष एतामेवाहरहर्दिशमेत्येताꣳ हि तेन दिशं प्राजानन्नेषा हि तस्य दिक् प्रज्ञाता ॥१३॥ 18

ऊर्ध्वामदित्येयं वा अदितिस्तस्मादस्या ऊर्ध्वा ओषधयो वनस्पतय इमाः प्रजा वर्धन्त एताꣳ ह्येतया दिशं प्राजानन्नेषा ह्येतस्या दिक् प्रज्ञाता ॥१४॥ 19

बाहू वै यज्ञस्य प्रायणीयोदयनीये[14] शिर आतिथ्यं तस्मादेते हविषी अभित आतिथ्यं भवत उभयतो हीमौ शिरो बाहू स यत्पञ्च प्रायणीये देवता यजति पञ्चोदयनीये तस्माद्धिमाः पञ्चाङ्गुलयः पञ्चो इमाः ॥१५॥ 20

तदाहुर्यदेव प्रायणीये कुर्यादिति तदुदयनीये स्यादिति तदेव मेक्षणं 21-23

प्रयुत्य निदध्यादिति तथैवानिर्णिक्तां स्थालीं निदध्यादिति तदेव बर्हिः संनह्य निदध्यादिति त एवर्त्विजः स्युरिति तत्सदृक्करोतीति तस्मादिमौ सदृशौ बाहू तस्मात्सरूपाविति[15] तदु तथा न कुर्यादभ्यादध्यादेव मेक्षणं निर्णेनिज्यात्स्थालीं यदु कामयेताप्यन्यैव स्थाली स्यादभ्यादध्याद्बर्हिर्यदि त ऋत्विजो ऽविप्रेताः[16] स्युस्त एव स्युर्यद्यु ते विप्रेताः स्युरप्यन्य एव स्युर्यद्वाव स एव यज्ञो भवति ता देवता यजति[17] तदेव सदृक्करोति तस्मादेवेमौ सदृशौ बाहू तस्मात्सरूपौ[15] तच्छंद्यवन्तं भवति बाहू वै यज्ञस्य प्रायणीयोदयनीये पूर्वार्धे उ वै बाहू पूर्वार्धमेवैतद्यज्ञस्याभिसंस्करोति ॥१६॥ तृतीयं ब्राह्मणम् ॥

1 °रीयुः ॥१॥ सो O P C C' (sec. m.), °रीयुः ॥१॥ सो C' (orig.). 2 यज्ञादंतरगुरिति MSS. 3 Thus MSS. Read probably इमामेवोपाधावन्यन्नु. 4 ः om. MSS. except M. 5 मुहमिति MSS. except M. 6 यज्ञादंतरागत MSS. 7 भवति MSS. 8 तंनि° B W O P C' C (orig.). 9 हविरासी° MSS. 10 Thus all. 11 Thus M only (cp. Ath. S. V. 22. 4, 5), कुरुमहाविषेष्वि° B W, कुरुमहविषेष्वि° the other MSS. 12 दक्षिणा MSS. except C' sec. m. 13 सोमेन ins. M. 14 प्रायणीयोद° B W. 15 तस्मात्स्वरूपाविति M. 16 विप्रेताः MSS. 17 यजति MSS.

M. III. 2. 4

## K. IV. 2. 4

1 दिवि ह वै सोम आसाथेह देवास्ते[1] देवा ऐच्छन्ना नः सोमो गच्छेदिति तेनागतेनेह यजेमहीति तत एते माये असृजन्त सुपर्णीं च कद्रूं च वाग्वै सुपर्णीयं कद्रूस्तदु तत्सौपर्णीकाद्रवमिति[2] धिष्ण्यानां ब्राह्मणे[3] व्याख्यायते यथा यथा तदासीत्तत एभ्यो गायत्री सोममच्छापतत्तस्या आहरन्त्या विश्वावसुर्गन्धर्वो ऽन्तरा परिमुमोष ॥१॥

2 ते होचुर्देवाः प्र वै परस्तात्सोमो ऽच्योष्टेति तमन्तरा गन्धर्वाः पर्यमोषिषुरुपजानीत यथा नः स आगच्छादिति ॥२॥

(3) ते होचुर्योषित्कामा वै गन्धर्वा इति वाचमेवैभ्यः प्रहिणवाम सैव न एनमागमयिष्यतीति ते ह वाचं प्रजिघ्युः[4] सा हैनान्त्सह सोमेनाजगाम तामु ह गन्धर्वा अन्वाजग्मुः ॥३॥

(4-6) ते होचुर्युष्माकꣳ सोम इत्यस्माकं वाग्यया नो ऽक्रैष्टेति त उ होचुरिहो[5] वेदागमदिति मैव न एनाꣳ सहसेव निसृज्य[6] नैष्ट विह्वयामहा एवैनामिति तथेति तां व्यह्वयन्त तस्यै ह गन्धर्वा यज्ञमेव वेदं प्रोचिर इत्थं यज्ञं विद्मेत्थं[7] विद्म वीर्यवन्तः[8] स्म इत्यथ ह देवा विदां चक्रुर्मोघा वै स्त्रिय इति ते ह वीणामेव सृष्ट्वा वीणां जनयित्वा तया हास्यै निजगुरित्थं वै वयं तुभ्यं निगास्याम[9] इत्थं त्वा प्रमादयिष्यामहे ऽस्मानेवोपावर्तस्वेति सा तदुपाववर्त सा वै सा तन्मोघमुपावर्तत या नृत्तं[10] गीतꣳ स्तुवतः शꣳसतस्तस्माद्य एव मोघसꣳहितो यो नृत्यति यो गायति तत्रैव योषा निमिश्लतमा एवꣳ ह्यग्रे वागुपावर्तत[11] यामनु योषाः ॥४॥

(7) तदुभयं देवेष्वासीद्वाक्च सोमश्च स यत्सोमं क्रीणात्यागतय एवागतेन सोमेन यजा इति तस्माद्वाव सोमं क्रीणाति ॥५॥

(8) तद्यद्ध्रुवायामाज्यं भवति तच्चतुर्जुह्वां विगृह्णात्यथ बर्हिषा हिरण्यं प्रबध्यावदधाति समानजन्म वा एतद्यत्पयश्च हिरण्यं चाग्नेर्ह्येवोभयꣳ रेतः कृत्स्नेन पयसा जुहवानीति तस्माद्धिरण्यमवदधाति ॥६॥

(9) सो ऽवदधात्येषा ते शुक्र तनूरेतद्वर्च इति वर्चो ह्येतद्यद्धिरण्यं तया संभवेति तया संपृच्यस्वेत्येवैतदाह भ्राजं गच्छेति सोमो वै भ्राट् सोमं गच्छ यस्मै त्वा प्रहिणम[12] इत्येवैतदाह यदाह भ्राजं गच्छेति[13] ॥७॥

(10) अथ जुहोति स यज्जुहोत्येतद्वा एनामेतत्प्रहिणोति यथैनामदो देवाः प्राहिण्वन्वाग्वा एषा निदानेन यत्सोमक्रयणी तामेतयाहुत्या प्रीणाति प्रीतया सोमं क्रीणानीति तस्माद्वाव जुहोति ॥८॥

(11.12) स जुहोति जूरसीत्येतद्ध वा एकं वाचो नाम यज्जूरिति तस्मादाह जूरसीति धृता मनसेति मनसा हि वाग्धृता मनो हीदं पुरस्ताद्वाचश्चरति वदैतन्मैतद्वादीरित्यलग्लꣳ ह्यभक्तं वाग्वदेद्यन्मनो न स्यात्तस्मादाह धृता मनसेति जुष्टा विष्णव इति सोमो वै विष्णुर्जुष्टा सोमाय यस्मै त्वा प्रहिणम[14] इत्येवैतदाह यदाह जुष्टा विष्णव इति तस्यास्ते सत्यसवसः प्रसव इति सत्यप्रसवा न एधि सोमं नो ऽच्छेहीत्येवैतदाह तनुयन्त्रमशीय स्वाहेति यज्ञस्योदृचमशीयेत्येवैतदाह यज्ञस्योदृचमशीयेति हि

स कामयते यो दीक्षते तस्मादाह तनुयन्त्रमशीय स्वाहेति ॥९॥

13 अथ हिरण्यमुद्धरति स यद्धापि हिरण्यमहोष्यत्पराग्घैव मनुष्येभ्यो हिरण्यमभविष्यत्स यद्धिरण्यमुद्धरति तस्माद्धिदं मनुष्येषु हिरण्यम् ॥१०॥

14 स उद्धरति चन्द्रमसि शुक्रमस्यमृतमसि वैश्वदेवमसीति कृत्स्नेनैवैतत्पयसा हुत्वा यदेवैतद्भवति तदेनत्करोति चन्द्रꣳ ह्येतच्छुक्रꣳ ह्येतदमृतꣳ ह्येतद्वैश्वदेवमसीति वैश्वदेवꣳ ह्येतत् ॥११॥

15 अथापरं चतुर्गृहीतमाज्यं गृहीत्वाहेहि यजमानेति तत्पुरस्तात्सोमक्रयण्युपतिष्ठते प्रत्यस्यन्ति द्वारं तामाहुरुदीचीमतिविच्छायतेति तामुदीचीमतिविच्छमानामभिमन्त्रयते स यदेनामभिमन्त्रयते प्रहितां वैवैनामेतत्सतीं भूयः प्रहिणुतो वाग्वा एषा निदानेन यत्सोमक्रयणी तामेतयाहुत्या प्रीत्वैतद्धैवैनामेतत्प्रथमं प्रहिणोति यथैनामदो देवाः प्राहिण्वन् ॥१२॥

16 सो ऽभिमन्त्रयते चिदसि मनासीति मनसो वै चित्तमनु वाग्वदति तस्मादाह चिदसि मनासीति धीरसीति वाग्वै धीर्वाचा हि धिया मनुष्या जीवन्त्यनूक्तेन ब्रह्मणा प्रकामोद्येन तस्मादाह धीरसीति दक्षिणासीति वाग्वै दक्षिणा वाचा हि दक्षिणां ददाति तस्मादाह दक्षिणासीति क्षत्रियासि यज्ञियासीति क्षत्रिया ह्येषा यज्ञिया ह्येषादितिरस्युभयतःशीर्ष्णीति यद्धिपर्यासं वाचा वदति यदेव पूर्वं तदपरं यदपरं तत्पूर्वं तस्मादाहोभयतःशीर्ष्णीति ॥१३॥

17 सा नः सुप्राची सुप्रतीची भवेति सुप्राची न एधि सोमं नो ऽच्छेहीत्येवैतदाह सुप्रतीची भवेति सुप्रतीची न एहि सोमं न आहरेत्येवैतदाह यदाह सा नः सुप्राची सुप्रतीची भवेति ॥१४॥

18 मित्रस्त्वा पदि बध्नीतामिति न वा एतामभिदधति वरुण्या हि रज्जुर्वरुणो हैनां गृह्णीयाद्यदभिहिता स्यादयतो वै स्याद्यदनभिहिता स्यादेतदु वा अवरुण्यं यन्मैत्रं तथाह यता भवति तथो एनां वरुणो न गृह्णाति तस्मादाह मित्रस्त्वा पदि बध्नीतामिति ॥१५॥

19 पूषाध्वनस्पात्विति इयं वै पूषेमामेवास्मा एतदध्वनि गोप्तारं करोति तस्य हि नार्तिरस्ति न ह्वला यमियमध्वन्गोपायति तस्मादाह पूषाध्वनस्पात्विति ॥१६॥

20 इन्द्रायाध्यक्षायेति स्वध्यक्षासदिति तस्मादाहेन्द्रायाध्यक्षायेत्यनु त्वा माता मन्यतामनु पितेति मातुश्च हि पितुश्च संभवत्यनु भ्राता सगर्भ्यो ऽनु सखा

सयूथ्य इति यदस्या जन्म तेनानुमतया सोमं क्रीणानीति ॥१७॥

सा देवि देवमच्छेहीति देवी ह्येषैतद्देवमच्छैति यद्वागिन्द्राय सोमं तस्मादाह सा देवि देवमच्छेहीतीन्द्राय सोममितीन्द्रो यज्ञस्य देवता तस्मादाहेन्द्राय सोममिति ॥१८॥

रुद्रस्त्वावर्तयत्विति रुद्रो वा आसामीष्टे तं हि पशवो नातियन्ति तथा नात्येति तस्मादाह रुद्रस्त्वावर्तयत्विति ॥१९॥

स्वस्ति सोमसखा पुनरेहीति स्वस्ति नः सोमेन सह पुनरागच्छेत्येवैतदाहैतद्वा एनामेतत्प्राहैषीद्यथैनामदो देवाः प्राहिण्वन्त्सा यथा सा सह सोमेनागच्छदेवमेतद्भवति तां यथा तद्देवा व्यह्वयन्त गन्धर्वैरेवमेनामेतद्यजमानो विह्वयते सा यथा देवानुपावर्तत गन्धर्वेभ्य एवमेतद्यजमानमुपावर्तत उदीची वै मनुष्याणां दिक् सा यजमानस्य सा यदस्य स्वां दिशमुपावर्तते तद्यजमानमुपावर्तते तत्स्वायामेवैनामेतद्दिशि वृङ्क्ते ॥२०॥ चतुर्थं ब्राह्मणम् ॥ द्वितीयो ऽध्यायः ॥ 21.22

1 ह ins. M. 2 °हसौपर्णिका° M, °हसौपर्णका° the other MSS.; cp. IV. 6. 2. 3. 3 viz. infra IV. 6. 2. 4 प्रजिग्युः MSS. except M (प्रयुन्जुः). 5 Thus M only, होचुर्हो the other MSS. 6 निस्पृज्य M. Read perhaps निस्पृत्य or निःस्पृत्य. 7 वि° MSS. 8 °तः O P C (pr. m.) C'. 9 Read निगास्याम ? 10 नृत्यं M. 11 वागुपावर्तत MSS. 12 प्र° MSS. 13 गछेति MSS.

K. IV. 3. 1 M. III. 3. 1

1 स वै पदान्येवानुनिक्रामति स यत्पदान्यनुनिक्रामति वृङ्क्त एवैनां तत्स सप्त पदान्यनुनिक्रामति यत्र वै वाचः प्रजातानि छन्दांसि सप्तपदा वै शक्करी परार्ध्या छन्दसां तस्मादेतानि सप्त पदान्यनुनिक्रामति स वै वाच एव रूपेणानुनिक्रामति ॥१॥

2 सो ऽनुनिक्रामति वस्व्यस्यदितिरस्यादित्यासीति वाचमेवैतदाह रुद्रासि चन्द्रासीति वाचमेवैतदाह बृहस्पतिष्ट्वा सुम्ने रम्णात्विति ब्रह्म वै बृहस्पतिर्यज्ञ उ वै सुम्नं ब्रह्म त्वा यज्ञे साधौ रमयत्वित्येवैतदाह रुद्रो वसुभिराचक इति रुद्रो वा आसामीष्टे तं हि पशवो नातियन्ति तथा नात्येति तस्मादाह रुद्रो वसुभिराचक इति ॥२॥

3 अथ पदमभिजुहोति वज्रो वा आज्यꣳ स्तृणुत एवैनां तत्ताꣳ स्तृत्वा सो
कुरुते तस्मात्पदमभिजुहोति हिरण्यमुपास्य न वा अनग्नावाहुतिर्हूयते ऽग्नेरु वा एत
द्रेतो यद्धिरण्यं तथास्यैषाग्निमत्याहुतिर्हुता भवति ॥३॥

4.5 स जुहोत्यदित्यास्त्वा मूर्धन्नाजिघर्मीतीयं वा अदितिरस्या वा एतदुपरि
ष्टाज्जुहोत्युपरिष्टाद्धयं मूर्धा तस्मादाहादित्यास्त्वा मूर्धन्नाजिघर्मीति देवयजने
पृथिव्या इति देवयजने ह्येतत्पृथिव्या जुहोतीलायास्पदमसीति गौर्वा इला तस्या
एतत्पदं तस्मादाहेलायास्पदमसीति घृतवत्स्वाहेति घृतवद्धि भवति प्रदाय स्रुच
पोद्धृत्य हिरण्यꣳ स्फ्येन परिलिखति वज्रो वै स्फ्यो वज्रेणैवैनामेतत्सम
परिगृह्णाति तथा नात्येति ॥४॥

6 स परिलिखत्यस्मे रमस्वेति यजमानायैवैतदाहाथ स्थाल्यां वा चमसे
वावपत्यस्मे ते बन्धुरिति यजमानायैवैतदाह ॥५॥

7 अथ तत्राप उपनिनयति यद्देवास्याः परिलिखन्तो वोल्लिखन्तो वा वि
वा लिशन्ति क्षिण्वन्ति वापो वै भेषजꣳ शान्तिस्तदद्भिः शान्त्या शमयति
तदद्भिः संदधाति ॥६॥

8.9 अथ यजमानाय प्रयच्छति त्वे राय इति पशवो वै रायस्त्वयि पशव
इत्येवैतदाहास्मे राय इति यजमानः प्रतिगृह्णाति पशवो वै रायो मयि पशव इत्येवैतदाह
मा वयꣳ रायस्पोषेण वियौष्मेत्यात्मानमभिमृशति तथो अध्वर्युरात्मानं पशुभ्यो
नान्तरेति ॥७॥

10 अथ सोमक्रयण्याः पदं पत्न्यै प्रयच्छन्ति गृहा वै पत्नी पशवो वै सोमक्र
यण्याः पदं गृहेष्वेवैतत्पशून्प्रतिष्ठापयति ॥८॥

11 स प्रयच्छति तोतो राय इति पशवो वै रायस्त्वयि त्वयि पशव
इत्येवैतदाह ॥९॥

अथ सोमक्रयण्या पत्नीꣳ संख्यापयति सोमो वा एषा भवति यया सोमं
क्रीणन्ति वृषा वै सोमो योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते ॥१०॥

12 स संख्यापयति समख्ये देव्या धिया सं दक्षिणयोरुचक्षसा । मा म आयुः
प्रमोषीर्मो अहं तव वीरान्विदेय तव देवि संदृशीत्याशिषमेवैतदाशास्ते वीरान्पुत्रा
न्विदेय तव संदृशीति ॥११॥

13 सा या बभ्रुः पिङ्गाक्षी सा सोमक्रयणीन्द्राविष्णू वै यत्र त्रेधा सहस्रं व्यै

येतां तदेकात्यशिष्यत तस्मादप्येतर्हि यत्त्रेधा सहस्रं व्याकुर्युरेकैवातिशिष्येत तां त्रेधा व्याकुरुतां त्रेधा प्राजनयताम् ॥१२॥

तस्मादप्येतदृषिणाभ्यनूक्तमुभा जिग्यथुर्न पराजयेथे न पराजिग्ये कतरश्चनैनोः। इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथामिति ॥१३॥

14-16 सा या बभ्रुः पिङ्गाक्षी ताँ सोमक्रयणीमथ या रोहिण्यश्येताक्षी तां वार्त्रघ्नीं यां क्षत्रियाय संग्रामं जिग्युषे वार्त्रघ्नीमुदजन्त्यथ या रोहिणी श्येताक्षी तां पितृलोकं यते ऽनुस्तरणीं तस्माद्येव बभ्रुः पिङ्गाक्षी सा स्यात्सा हि सोमक्रयणी यद्यु तां न विन्देयुरपि यारुणा सा स्यात्तद्ध्यस्या नेदीयो रूपं यद्यु तां न विन्देयुरपि या रोहिण्यश्येताक्षी सा स्याच्छ्येताक्ष्यास्त्वाशां नेयात्साप्रवीता स्याद्वाग्वा एषा निदानेन यत्सोमक्रयण्ययातयामा वै वागयातयामो वा एषा भवति याप्रवीतानुपार्ष्टकर्णाकाणाकूटावण्डाश्रोणासप्तशफैकरूपा सा ह्ययातयामा भवति ॥१४॥

प्रथमं ब्राह्मणम् ॥

## K. IV. 3. 2 M. III. 3. 2

2 स वै पाणी अवनिज्यास्याँ हिरण्यं बध्नीते स यदस्याँ हिरण्यं बध्नीते द्वयं वा इदं न तृतीयमस्ति सत्यं चैवानृतं च ततः सत्यं देवा अनृतं मनुष्या अग्नेरु वा एतद्रेतो यद्धिरण्यँ सत्येनाँशुनुपस्पृशानीति सत्येन सोमं पराहणानीति तस्मादस्याँ हिरण्यं बध्नीते ॥१॥

3 अथाह सोमोपनहनमाहर सोमपर्याणहनमाहरोष्णीषमाहरेति तद्यदेव शोभनतमं तत्सोमोपनहनँ स्याद्वासो ह्यस्यैतद्भवति स यो हैतच्छोभनतमं कुरुते शोभते हैव सो ऽथ यो हैतद्यदेव किं च कुरुते तथा हैव भवति तस्माद्यदेव शोभनतमं तत्सोमोपनहनँ स्यात् ॥२॥

4 स यद्यहोष्णीषं विन्देयुः स एव स्याद्यद्युष्णीषं न विन्देयुः सोमपर्याणहनस्यैव पूर्वार्धमवकृत्य तदुष्णीषभाजनँ स्यात्तदध्वर्युर्वा यजमानो वादत्ते ॥३॥

6 तौ प्राञ्चौ जपन्तावित एष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतादेष ते जागतो भाग इति मे सोमाय ब्रूताच्छन्दोमानानाँ साम्राज्यं गच्छतादिति मे सोमाय ब्रूतादिति ॥४॥

तौ यदेवं जपन्तावित एकं वा एष भागं क्रीयमाणो ऽभिक्रीयते यत्सोमश्छन्दसामेव साम्राज्यं छन्दसाँ राज्यं तस्मा एवैतत्पुरस्तान्निवेदयति छन्दसां वै

त्वा साम्राज्याय क्रीणामि छन्दसाꣳ राज्याय न वधायेति घ्नन्ति ह्येनमेतद्यदभि-षुण्वन्ति तथा शतमनाः क्रयाय भवति ॥५॥

7 अथ जघनेन जान्वक्ण उपविशत्यास्माको ऽसीत्यागतो ह्येनं भवति यमागतमद्धका क्रेष्यन्भवति तस्मादाहास्माको ऽसीति शुक्रस्ते ग्रह्य इति शुक्रꣳ ह्यस्माद्ग्रहं ग्रहीष्यन्भवति विचितस्त्वा विचिन्वन्त्विति कृत्स्नमेवैनं तत्करोति कृत्स्नतायै ॥६॥

8 तद्धैके यान्यौषधिरापन्ना भवति तामपास्यन्ते तदेनं कृत्स्नं कुर्म इति वदन्तस्तदु तथा न कुर्यात्क्षत्रं वै सोमो विशो ऽन्या ओषधयो यथा वै ग्रस्तमेवमेतस्यै-तद्भवति यात्रान्यौषधिरापन्ना भवति स यथा ग्रस्तमाच्छिद्यापास्येदेवꣳ ह तत्तस्माद्धै-तद्यजुरेव जपेत्तदेवैनं कृत्स्नं करोति ॥७॥

9 अथ सोमोपनहनं द्विगुणं वा चतुर्गुणं वा कृत्वा प्राग्दशं वोदग्दशं वोप-स्तीर्य तस्मिन्नेनं मिमीते स यदेनं मिमीते तस्माद्धियं मनुष्येषु मात्रा यत्कौष्ठी यत्कुम्भी येयं का च मनुष्येषु मात्रा ॥८॥

10.11 सावित्र्या मिमीते सविता वै देवानां प्रसविता सवितृप्रसूत एवैतन्मिमीते ऽतिच्छन्दसैषा वै सर्वाणि छन्दाꣳसि यदतिच्छन्दाः सर्वैर्मे छन्दोभिर्मितो ऽसदिति ॥९॥

12 स मिमीते ऽभि त्यं देवꣳ सवितारमोण्योः कविक्रतुमर्चामि सत्यसवꣳ रत्नधामभि प्रियं मतिं कविम् । ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपा-णिरमिमीत सुक्रतुः कृपा स्वरिति ॥१०॥

13 एतयैव सर्वाभिरेतया चतसृभिरेतया तिसृभिरेतया द्वाभ्यामेतयैकयैतया पुनरेकयैतया द्वाभ्यामेतया तिसृभिरेतया चतसृभिरेतया सर्वाभिरथाप्यञ्ज-लिनावपति ॥११॥

16 स यदुदाचं न्याचं मिमीते विराजमेवैतत्पराचीं चार्वाचीं च युनक्ति सा पराची देवेभ्यो यज्ञं वहत्यर्वाची मनुष्यानवति ॥१२॥

15 अथ यद्वेवोदाचं न्याचं मिमीत इमा एवैतदङ्गुलीर्नानावीर्याः करोति तस्माद्धिमा अङ्गुलयो नानावीर्यास्तस्मादप्येकयार्धं कुरुते ऽथो द्वाभ्याम् ॥१३॥

14.17 अथ यद्वेवोदाचं न्याचं मिमीते तस्माद्धिमा असꣳश्लिष्टा अङ्गुलयः स वै

दश कृत्वो मिमीते दशाक्षरा वै विराड्विराळु वै यज्ञो विराजमेवैतद्यज्ञमभिसंपादयति ॥१४॥

अथ समुत्पार्योपनह्यति प्रजाभ्यस्त्वेति प्रजाभ्यो ह्येनमेतत्स यदुपनद्धस्योपेनितमिव भवति तस्माच्छिरश्चाꣳसौ चान्तरेणोपेनितमिव ॥१५॥ 18

अथाकाशमिव करोति प्रजास्त्वानुप्राणन्त्वित्यपिदधातीव वा एतत्प्राणं यत्समायच्छति प्राणमेवैतदुत्सृजति तेनैनमुत्सृष्टेन प्राणेनेमाः प्रजा अनुप्राणन्ति तस्मादाह प्रजास्त्वानुप्राणन्त्विति ॥१६॥ द्वितीयं ब्राह्मणम् ॥ 19

K. IV. 3. 3 M. III. 3. 3

तं वै पणत एव स यदेनं पणते तस्माद्धिदꣳ सकृत्सर्वं पण्यं तं वै पृष्ट्वा पणते सोमविक्रयिन्क्रय्यस्ते सोमा३ इति क्रय्य इत्याह तं वै ते क्रीणानीति क्रीणीहीत्याह कलया ते क्रीणानीति ॥१॥ 1.2

स आह सोमविक्रयी भूयो वा अतः सोमो राजार्हतीति भूयो वा अतः सोमो राजार्हति महाꣳस्तु गोर्महिमेत्यध्वर्युर्गोर्वै प्रतिधुक्तस्याः शृतं तस्या दधि तस्या आतञ्चनं तस्या आमिक्षा तस्या वाजिनं तस्या नवनीतं तस्या घृतं तस्याः शरस्तस्या मस्तु ॥२॥

शफेन ते क्रीणानीति भूयो वा अतः सोमो राजार्हतीत्येवाह सोमविक्रयी भूयो वा अतः सोमो राजार्हति महाꣳस्त्वेव गोर्महिमेत्येवाध्वर्युरेतान्येव प्रतिसंख्यायाह पदा ते ऽर्धेन ते गवा ते क्रीणानीति क्रीतः सोमो राजेत्याह वयाꣳसि संपश्येति ॥३॥ 3

स संपश्यति चन्द्रं छागा वस्त्रं धेनुर्मिथुनौ गावावन्यास्तिस्र इति स यदर्वाक्प्राहाथ परः संपादयति तस्मादपीदं मानुषे ऽर्वागेवाग्रे प्राहुरथ परः संपादयति स यद्भूयो वा अतः सोमो राजार्हतीत्येतावदेव सोमविक्रय्याहाथैतान्प्रसानेतानि वीर्याणि गोरध्वर्युः संपश्यति महितो वै सोमो देवो हि स गामेवैतन्महयत्येतान्प्रसानेतानि वीर्याणि विद्वानस्याः क्रीणात्विति स वै पञ्च कृत्वः पणते संवत्सरसंमितो यज्ञः पञ्चर्तवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च कृत्वः पणते ॥४॥ 4.5

अथैनꣳ हिरण्येन क्रीणाति चन्द्रं त्वा चन्द्रेण क्रीणामीति चन्द्रꣳ ह्येनमेतच्चन्द्रेण क्रीणाति यत्सोमꣳ हिरण्येन शुक्रꣳ शुक्रेणेति शुक्रꣳ ह्येनमेतच्छुक्रेण क्रीणाति 6

यत्सोमꣳ हिरण्येनामृतममृतेनेत्यमृतꣳ ह्येनमेतदमृतेन क्रीणाति यत्सोमꣳ हिरण्येन ॥५॥

7 अथ पुनरपादत्ते सग्मे ते गोरित्यस्मै ते चन्द्राणीति न्यस्यति तद्यदेवास्य शुक्रं तदस्मिन्दधात्यथास्यैतच्छरीरेणैव क्रीणाति तस्मादाहास्मे ते चन्द्राणीति ॥६॥

8 अथैनमजयावाग्ग्रीवया पणते तपसस्तनूरसीति तपसो ह वा अस्यै संभूता तस्मादाह तपसस्तनूरसीति प्रजापतेर्वर्ण इति यत्त्रिः संवत्सरस्य विजायते तेन प्रजापतेर्वर्णः परमेण पशुना क्रीयस इति यत्त्रिः संवत्सरस्य विजायते तेन परमः पशुः सहस्रपोषं पुषेयमित्याशिषमेवैतदाशास्ते भूमा वै सहस्रपोषो भूमो वै श्रीराशिषमेवैतदाशास्ते श्रियं गच्छेयमिति तस्मादाह सहस्रपोषं पुषेयमिति ॥७॥

9 स यदजां प्रदाय सोममादत्ते यदेनमजयैव प्रच्यावयति तस्माद्धयाजा नामाजा ह वै नामैतद्यदजेत्याहुस्तस्मादजां प्रदाय सोममादत्ते ॥८॥

10 स आदत्ते मित्रो न एहि सुमित्रध इत्यहिꣳसन्नः शिव एधीत्येवैतदाह यदाह मित्रो न एहि सुमित्रध इतीन्द्रस्योरुमाविश दक्षिणमितीन्द्रो यजमानस्तस्मै तद्दक्षिण ऊरावासादयति तस्मादाहेन्द्रस्योरुमाविश दक्षिणमित्युशन्नुशन्तमिति प्रियः प्रियमित्येवैतदाह यदाहोशन्नुशन्तमिति स्योनः स्योनमिति शिवः शिवमित्येवैतदाह ॥९॥

12 अथ शिरो ऽपोर्णुते गर्भो वा एष भवति यो दीक्षते स एतं यज्ञमजीजनत्स एष गर्भो भवत्या सुत्यायास्तस्मात्परिवृत इव भवति तिर इव हि गर्भो जायते यजमानस्तस्माच्छिरो ऽपोर्णुते ॥१०॥

11 शिरो ऽपावृत्य जपति स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानो एते वः सोमक्रयणास्तान्रक्षध्वं मा वो दभन्नित्येतेषाꣳ ह वा एते भाजनेन य एते गन्धर्वाः सोमपाला धिष्ण्या एतान्यु वै तेषां नामानि तेभ्य एवैनानेतदनुदिशति तथो तेषामनृणो भवति ॥११॥

13.14 अथ जपति परि माग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भजेत्यासीनं वा एष मेतत्सोम आगच्छति स आगत उपोत्तिष्ठति तत्तन्मिथ्याकरोति व्रतं प्रमिनाति यदासीनमागच्छत्यागत उपोत्तिष्ठत्यग्निर्वै देवानां व्रतपतिस्तमेवैतदुपधावति तथास्य तन्न मिथ्याकृतं भवति तथा व्रतं न प्रमिनाति परि माग्ने दुश्चरिताद्बाधस्वेति नात्र तिरोहितमिवास्त्या मा सुचरिते भजेत्या मा साधौ भजेत्येवैतदाहोदायुषा स्वायुषोदस्थाम्

अन्वित्यमृतो वै सोमस्तमेतदनूत्तिष्ठति तस्य नार्तिर्न ह्वला भवति य एतम-
ꣳ सोममनूत्तिष्ठति ॥१२॥

अथ जपति प्रति पन्थामपद्महि स्वस्तिगामनेहसमित्येतस्माद्ध वै देवा 15-17
विभयां चक्रुर्यन्न इममन्तरा नाष्ट्रा रक्षाꣳसि न हन्युरिति त एतेन स्वस्त्यत्यायꣳस्तथो
एवैष एतेन स्वस्त्यत्येति प्रति पन्थामपद्महि स्वस्तिगामनेहसमिति नात्र तिरोहित-
मिवास्ति येन विश्वाः परि द्विषो वृणक्ति विन्दते वस्विति येन विश्वा नाष्ट्राः परि-
वृणक्ति श्रेय इदमभिगच्छतीत्येवैतदाह तं वा इति पाणिना हरन्त्यथानसा परिवहन्ति
यत्येवैनं तद्वीर्यमेवास्मिन्दधाति यद्वामु वा अनु प्रजास्तस्माच्छिरसा बीजमभ्य-
हरन्त्यनसोदावहन्ति ॥१३॥

स यदेनमपामन्ते क्रीणात्यापो वा अस्य रसः सरसमेवैनं तत्क्रीणात्यथ 18
यदेनꣳ हिरण्येन क्रीणाति सशुक्रमेवैनं तत्क्रीणात्यथ यदेनमजया क्रीणाति सतपस-
मेवैनं तत्क्रीणात्यथ यदेनं वाससा क्रीणाति त्वग्वा अस्य वासः सत्वचमेवैनं तत्क्रीणा-
त्यथ यदेनं धेन्वा क्रीणाति साशिरमेवैनं तत्क्रीणात्यथ यदेनं मिथुनाभ्यां क्रीणाति
समिथुनमेवैनं तत्क्रीणाति तस्मादेता अच्युताः सोमक्रयण्यो भवन्ति तं वै दशभिरेव
क्रीणाति नादशभिर्दशाक्षरो वै विराड्विरालु वै यज्ञो वैराजः सोमो विराजमेवैतद्यज्ञ-
मभिसंपादयत्यपीद्ध पुरा क्रय इति हैके ऽनड्वाहं वान्यं वा गां प्रयच्छन्ति ॥१४॥

तृतीयं ब्राह्मणम् ॥

K. IV. 3. 4 M. III. 3. 4

स वै कृष्णाजिनं नील आस्तृणात्यदित्यास्त्वगसीति सो ऽसावेवैतस्य 1
शुषो बन्धुस्तस्मिन्राजानमासादयत्यदित्यै सद आसीदेत्यन्तरिक्षरूपमिव वा
एतद्यदन इयमु वा अदितिरियं प्रतिष्ठा तदेनमनस्यासादयन्नस्यां प्रतिष्ठायां प्रतिष्ठा-
पयति तस्मादाहादित्यै सद आसीदेति ॥१॥

अथाभिमृशत्यस्तभ्नाद् द्यामृषभो अन्तरिक्षममिमीत वरिमाणं पृथिव्या 2-5
इत्येतस्माद्ध वै देवा विभयां चक्रुर्यन्न इममन्तरा नाष्ट्रा रक्षाꣳसि न हन्युरिति
तदेनेनेमांल्लोकानास्पृणोति ज्यायाꣳसमेनं वधात्करोति तस्य हि न हन्तास्ति येनेमे
लोका आस्पृताः स्युरासीदद्विश्वा भुवनानि सम्रालिति तदेनेनेदꣳ सर्वमास्पृणोति
ज्यायाꣳसमेनं वधात्करोति तस्य हि न हन्तास्ति येनेदꣳ सर्वमास्पृतꣳ स्याद्वि-
श्वानि वरुणस्य व्रतानीति तदस्मा इदꣳ सर्वमनुवर्त्म करोत्यप्रत्युद्यामि तस्मादाह

विश्वेत्तानि वरुणस्य व्रतानीति ॥२॥

6 अथैनं पर्यातनोति नेदेनꣳ सर्वतो नाष्ट्रा रक्षाꣳसि हिनसन्निति तिर वै देवा मनुष्येभ्यस्तिर इवैतत्करोति गर्भो वा एष भवत्या सुत्यायास्तिर गर्भस्तस्मात्पर्यातनोति ॥३॥

7 स पर्यातनोति वनेषु व्यन्तरिक्षं ततानेति वनेषु हीदमेषु वृक्षा न्तरिक्षं विततं तस्मादाह वनेषु व्यन्तरिक्षं ततानेति वाजमर्वत्सु पय उ स्विति पुमाꣳसो वा अर्वन्तो वीर्यं वाजः पुꣳसु वीर्यमित्येवैतदाह वाजमर्वत्स्विति पय उस्रियास्विति पय उ हीदमुस्रियासु हृत्सु क्रतुं विक्ष्वग्निमिति हृत्सु ह्ययं क्रतुरासां प्रजानां मनोजवः प्रविष्टस्तस्मादाह क्रतुमिति वरुणो विक्ष्वग्निमिति विक्षु ह्ययमाग्निरासु प्रजासु प्रविष्टो दिवि सूर्य धात्सोममद्राविति दिवि ह्यसौ सूर्यो हितः सोममद्रावित्यद्रिषु ह्ययमेषु गि सोमो हितस्तस्मादाह सोममद्राविति ॥४॥

8 अथ यदि द्वे कृष्णाजिने भवतस्तयोरन्यतरत्पुरस्तात्प्रत्यानह्यति यद्यु भवति कृष्णाजिनग्रीवा अवकृत्य प्रत्यानह्यति ॥५॥

तदभिमन्त्रयते सूर्यस्य चक्षुरारोहाग्नेरक्ष्णः कनीनकाम्। यत्रैतशेभिरी भ्राजमानो विपश्चितेति सूर्यमेवास्यैतत्पुरस्तात्पुरोगां करोति तथो हास्य सूर्यः पुरस्तान्नाष्ट्रा रक्षाꣳस्यपघ्नन्प्रभिन्दन्नेत्यथैतमभये ऽनाष्ट्रे निवाते वहति ॥६॥

9.10 अथोद्धते फलके भवतस्तदन्तरीषे तिष्ठन्त्सुब्रह्मण्या प्राजति को ह्येतमर्ह भ्यारोढुꣳ श्रेयान्ह्येष उपाधिरोढास्तस्मादधस्तिष्ठन्प्राजति पर्णशाखया प्राजत्यप अरूक्षा यत्पर्णशाखा तस्मात्पर्णशाखया प्राजत्यथो यथाद आमावास्ये यदि चित्सोमस्य न्यक्तं तदिहाप्यसदिति तस्मात्पर्णशाखया प्राजति ॥७॥

11 अथानड्वाहावाजन्ति तौ यद्युभौ वा कृष्णौ भवतो ऽन्यतरो वा तद्धि हुवर्षी पर्जन्यो भविष्यति वर्षिष्यतीत्येतदु विज्ञानम् ॥८॥

स दक्षिणमेवाग्रे युनक्त्यथ सव्यꣳ सव्यं वा अग्रे मानुषे युनक्ति देवत्रा ॥९॥

12 तावभिमन्त्रयत उस्रा एतं धूर्वाहावित्युस्रौ ह्येतौ धूर्वाहौ ह्येतौ युज्येथाम् इत्यनार्तावित्येवैतदाह यदाहानश्रू इत्यवीरहणावित्यपापकृतावित्येवैतदाह ब्रह्मचो विति ब्रह्मचोदनौ ह्येतौ स्वस्ति यजमानस्य गृहान्गच्छतमिति नेदनमन्तरा

शꣳसि ह्विनसन्निति ॥१०॥

अथाह सोमाय प्रोह्यमाणायानुब्रूहीति पर्युह्यमाणायेति वान्वाह होता वाच- 13-16
ध्वर्युर्भद्रो मे ऽसि प्रच्यवस्व भुवस्पत इत्येष वा एतस्य भद्रो भवति तस्मादेष
राजानं वनाद्रियते ऽथो पूर्वो राज्ञो ऽभिवदति तथास्यैष एव भद्रो भवति तस्मा-
ह भद्रो मे ऽसीति प्रच्यवस्व भुवस्पत इत्येष ह्येषाꣳ सर्वेषां भुवनानामीष्टे विश्वा-
भि धामानीत्यङ्गानि वै धामानि सर्वाण्यभ्यङ्गानीत्येवैतदाह मा त्वा परिपरिणो
विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो विदन्निति नेदेनमन्तरा नाष्ट्रा
रक्षाꣳसि ह्विनसन्निति श्येनो भूत्वा परापत यजमानस्य गृहान्गच्छ तन्नौ सꣳस्कृत-
मिति वय एवैनमेतद्भूतं प्रपादयत्येतद्वा ओजिष्ठं बलिष्ठं वयसां यच्छ्येनस्तद्धि रक्षाꣳ-
सि नान्ववयन्ति तद्वय एवैनमेतद्भूतं प्रपादयत्यथास्येदꣳ शरीरमेवानसान्वाव-
र्तते यजमानस्य गृहान्गच्छ तन्नौ सꣳस्कृतमिति नात्र तिरोहितमिवास्ति ॥११॥

अथ सुब्रह्मण्यामाह्वयति यथा येभ्यः पक्ष्यन्त्स्यात्तेभ्यो निवेदयेदा मा 17
गच्छाथ पक्तास्मि व इत्येवमेतद्देवेभ्य एतं यज्ञं निवेदयति ब्रह्म वै देवान्प्रच्यावयति
ब्रह्मणो एतद्देवान्प्रच्यावयत्येतं यज्ञमभि तस्मात्सुब्रह्मण्यामाह्वयति ॥१२॥

स आह्वयति सुब्रह्मण्यो३ꣳ सुब्रह्मण्यो३ꣳ सुब्रह्मण्यो३मितीन्द्रागच्छेतीन्द्रो 18-20
यज्ञस्य देवता तस्मादाहेन्द्रागच्छेति हरिव आगच्छ मेधातिथेर्मेष वृषणश्वस्य मेने
गौरावस्कन्दिन्नहल्यायै जारेति यान्येवास्य चरणानि तैरेवैनमेतत्प्रमुमोदयिषति तैरेनं
प्रमोदयति कौशिक ब्राह्मण गौतम ब्रुवाणेति शश्वद्धैतदारुणिनोपज्ञातं यद्गौतम ब्रुवा-
णेति देवा ब्रह्माण आगच्छतेति तद्देवाꣳश्च ह्वयति य उ चेमे मनुष्यदेवा ब्राह्मणाः
शुश्रुवाꣳसो ऽनूचानास्तैर्ह्यन्यत्रार्थो भवति ये याजयन्तीत्यहे सुत्यामागच्छतेति स
यथा येभ्यः पक्ष्यन्त्स्यात्तेभ्यो निवेदयेदितिथं माहरागच्छाथ तद्वः पक्तास्मीत्येवमेतद्दे-
वेभ्य एतं यज्ञं निवेदयति ॥१३॥

अथाग्नीषोमीयेण पशुना प्रतिप्रस्थाता प्रत्युपतिष्ठते ऽग्नीषोमौ वा एतमन्त- 21
र्जम्भमादधाते यो दीक्षत आग्नावैष्णवꣳ ह्यदो दीक्षणीयꣳ हविर्भवति य उ वै विष्णुः
सोमो वै स हविर्ह्येनयोर्भवति तस्मादेनमग्नीषोमावन्तर्जम्भमादधाते स एतेन पशुना
पशुमात्मानं निष्क्रीणाति तेन निष्क्रीतेन स्वेन सतात्मना यजते ॥१४॥

स द्विरूपः स्याद्द्विदेवत्यो हि भवति स कृष्णसारङ्गः स्यात्तद्ध्येनयो रूप- 23
तं यदि कृष्णसारङ्गं न विन्देदपि रोहितसारङ्गः स्याद्द्विरूपस्तु स्यात् ॥१५॥

22 तद्धैक आहवनीयादुल्मुकमादाय प्रत्युपतिष्ठन्ते ऽयमग्निरयꣳ सोम … भाभ्याꣳ सह सद्भ्यां निष्क्रीणीम इति वदन्तस्तदु तथा न कुर्याद्यत्र वा एतौ … सन्तौ सहैव तस्मादुल्मुकं नाद्रियेत ॥१६॥

24 सो ऽभिमन्त्रयते नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तत् … सपर्यत । दूरे दृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शꣳसतेति नम एव … एतया करोति मित्रधेयमेवैनेनैतत्कुरुते ॥१७॥

25 अथोपस्तभ्नाति वरुणस्योत्तम्भनमसीति वरुणस्य स्कम्भसर्जनी स्थ … शम्ये उद्धन्ति वरुण्यो ह्येष भवत्या सुत्यायाः ॥१८॥

26-28 अथ चत्वार आसन्दीमुद्यच्छन्ति द्वौ वा अस्मै मानुषाय राज्ञ उद्यच्छ … ऽथैतस्मै चत्वारो यो ऽस्य सक्तुस्सर्वस्येष्ट औदुम्बरी भवत्यन्नं वा ऊर्गुदुम्बरस्तस्मादौ … दुम्बरी भवत्यधोनाभि भवत्येष हि रेतस आशयो रेतो हि सोमः ॥१९॥

29 तामभिमृशति वरुणस्य ऋतसदन्यसीति वरुणस्य ऋतसदनमसीति … कृष्णाजिनमास्तृणाति वरुणस्य ऋतसदनीमासीदेत्यासादयति वरुण्यो ह्येष भवत्या … सुत्यायाः ॥२०॥

30 अथैनं प्रपादयति या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु … यज्ञम् । गयस्फानः प्रतरणः सुवीरो ऽवीरहा प्रचरा सोम दुर्यानिति गृहा वै दुर्याः … अपापक्तन्नः शिवः शान्तो गृहान्प्रचरेत्येवैतदाह तं दक्षिणेनाहवनीयं निदधाति तथा … न्तरेण संचरेत् ॥२१॥

31 तद्धैक उदपात्रमुपनिनयन्ति यथा ब्राह्मणाय वा राज्ञे वोदकयायोदकं याव … देवमेतदिति तदु तथा न कुर्यान्मानुषꣳ ह कुर्याद्यत्तथा कुर्याद्व्यृद्धं वै तद्यज्ञस्य यन्मा … नुषं तस्मात्तथा न कुर्यात् ॥२२॥ चतुर्थं ब्राह्मणम् ॥ तृतीयो ऽध्यायः ॥

M. III. 4. 1

## K. IV. 4. 1

1 शिरो वा एतद्यज्ञस्य यदातिथ्यं बाहू एव प्रायणीयोदयनीये तस्मादेते … हविषी अभित आतिथ्यं भवत उभयतो हीमौ शिरो बाहू ॥१॥

2 अथ यदातिथ्यं नामातिथिर्वा एष एतस्य गृहानभ्यागच्छति यत्सोमः … क्रीतस्तस्मै यथातिथये ऽभ्यागताय ब्राह्मणाय वा राज्ञे वा महोक्षं वा महाजं वा … पचेत्तन्मानुषꣳ हविर्देवानामेवमस्मा एतदातिथ्यं निर्वपति तस्मादातिथ्यं नाम ॥२॥

3 स पूर्वो ऽतीत्य गृह्णीयाच्छ्रेयान्वा एष एतस्य गृहानभ्यागच्छति यत्सोमः

क्रीतो यत्र वै श्रेयानभ्यागच्छति यदि वै तत्र तं नापचायन्ति क्रुध्यति वै स तत्र तथा ह्यापचितो भवति तस्मात्पूर्वो ऽतीत्य गृह्णीयात् ॥३॥

4 तदु विमुक्त एवान्यतरः स्यादनड्वानविमुक्तो ऽन्यतरो ऽथ गृह्णीयात्तद्यो ह्ययं विमुक्तस्तेनागतो ऽथ यो ऽविमुक्तस्तेनापचितस्तस्माद्विमुक्तो ऽन्यतरः स्याद्विमुक्तो ऽन्यतरो ऽथ गृह्णीयात् ॥४॥

5 तदुभावेव विमुच्य प्रपाद्यासाद्य गृह्णीयाद्यथा वै देवानां चरणं तद्वा अनु मनुष्याणां तद्वा इदं मनुष्याणां यद्यपि राजाभ्यागच्छति यावन्न विमुञ्चते नैवोदकꣳ हरन्ति नापचितिं कुर्वन्त्यथ यदैव विमुञ्चन्ते ऽथैवोदकꣳ हरन्त्यथापचितिं कुर्वन्ति तस्मादुभावेव विमुच्य प्रपाद्यासाद्य गृह्णीयात्स संत्वरमाण इव क्षिप्रमिव गृह्णीयात्तथा ह्यापचितो भवति ॥५॥

6 तत्पत्न्यन्वारभते यजमानो वै पर्युह्यमाणमन्वारभते ऽथैतत्पत्न्युभयत एवैनमेतन्मिथुनेनान्वारभते यत्र वै श्रेयानभ्यागच्छति सर्वगृह्या इव वै तत्र चेष्टन्ति तथा ह्यापचितो भवति ॥६॥

7.8 सो ऽन्येन ततो यजुषा गृह्णाति यथो चान्यानि हवीꣳषि गृह्णाति स यदन्येन ततो गृह्णात्येकं वा एष भागं क्रीयमाणो ऽभिक्रीयते यत्सोमश्छन्दसामेव साम्राज्यं छन्दसाꣳ राज्यं तस्य छन्दाꣳस्यभितः साचयानि यथा राज्ञो ऽराजानो राजकृतः सूतग्रामण्यो ऽभितः साचय एवमस्य छन्दाꣳस्यभितः साचयानि स नाह तदवकल्पते यच्छन्दोभ्य इति द्वितीयꣳ हविर्गृह्णीयाद्यथैवात्र छन्दाꣳस्यन्वाभजेत्तथैव गृह्णीयात्तस्माद्यत्रैव राज्ञे कुर्वन्ति तदेवाभितः साचयो ऽन्वाभक्ताः ॥७॥

9-14 स गृह्णात्यग्नेस्तनूरसि विष्णवे त्वेत्यग्निर्वै गायत्री तद्गायत्रीमन्वाभजति सोमस्य तनूरसि विष्णवे त्वेति क्षत्रं वै सोमः क्षत्रं त्रिष्टुप्तत्त्रिष्टुभमन्वाभजत्यतिथेरातिथ्यमसि विष्णवे त्वेत्येष हास्योद्धारो यथा श्रेष्ठिन उद्धार एवꣳ हास्यैष उद्धार ऋते छन्दोभ्यः श्येनाय त्वा सोमभृते विष्णवे त्वेति तद्द्वितीयं गायत्रीमन्वाभजति स यच्छ्येनो भूत्वा दिवः सोममाभरत्तेन गायत्री श्येनः सोमभृत्तेनो वा एनामेतद्वीर्येण द्वितीयमन्वाभजत्यग्नये त्वा रायस्पोषदे विष्णवे त्वेति पशवो वै जगती पशवो रायस्पोषस्तज्जगतीमन्वाभजति स यद्विष्णवे त्वा विष्णवे त्वेति गृह्णाति विष्णवे ह्येतद्यज्ञाय गृह्णाति स वै पञ्च कृत्वो गृह्णाति संवत्सरसंमितो यज्ञः पञ्चर्तवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च कृत्वो गृह्णाति ॥८॥

15 स वा एष नवकपालः पुरोलाशो भवति नवाक्षरा वै गायत्र्यष्टौ तानि यान्यन्वाह प्रणवो नवमः पूर्वार्धो वै यज्ञस्य गायत्री पूर्वार्ध उ वै शिरस्तस्मादेष नवकपालः पुरोलाशो भवत्येतामभि संपदम् ॥९॥

16 काष्मर्यमयाः परिधयो भवन्ति वनस्पतिषु ह वै देवा एतꣳ राक्षोघ्नं ददृशुर्यत्काष्मर्यꣳ शिरो वै यज्ञस्यातिथ्यं नेच्छिरस्तो नाष्ट्रा रक्षाꣳसि यज्ञꣳ हिनसन्निति तस्मात्काष्मर्यमयाः परिधयो भवन्ति ॥१०॥

17 आश्ववालः प्रस्तरो यज्ञो ह वै देवेभ्यो ऽपचक्राम सो ऽश्वो भूत्वा पराङाववर्त तस्य ह देवा अनुहाय वालानभिपेदुस्ते प्रलुलुपिरे तान्न्यासुस्त एता ओषधयो जज्ञिरे यदश्ववालाः शिरो वै यज्ञस्यातिथ्यं जघनार्धो वाला उभयत एवैतद्यज्ञं परिगृह्णाति ॥११॥

18 ऐक्षव्यौ विधृती नेद्बर्हिश्चाश्ववालश्च प्रस्तरः संमुह्यादित्यसंमोहाय चतुर्गृहीतान्याज्यानि गृह्णाति न ह्यत्रानुयाजान्यजति ॥१२॥

19 आसाद्य हवीꣳष्यग्निं मन्थति शिरो वा एतद्यज्ञस्य यदातिथ्यमग्निरु वै यज्ञो जायत उ वा एतद्यदेनं मन्थन्ति शिरस्तो वै जायमानो जायते शिरस्त एवैतद्यज्ञमग्निं जनयति शिरो वा एतद्यज्ञस्य यदातिथ्यमग्निरु वै सर्वा देवता अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वति शिरस्त एवैतत्सर्वाभिर्देवताभिर्यज्ञꣳ समर्धयति ॥१३॥

20 सो ऽधिमन्थनमादत्ते ऽग्नेर्जनित्रमसीत्येतस्माद्धि दारुणो ऽधिजायते वृषणौ स्थ इति कुशतरुणके तद्याविमौ स्त्रिया एतावेवैता उर्वश्यसीत्यधरारणिमायुरसीत्याज्यविलापन्यामनक्ति पुरूरवा असीत्युत्तरारणिमुर्वशी जायाप्सराः पतिः पुरूरवा अथ यदेतस्मान्मिथुनादजायत तदायुस्तथो वा एनमेष एतस्मान्मिथुनादेतं यज्ञमग्निं जनयति ॥१४॥

23 अथाहाग्नये मथ्यमानायानुब्रूहीत्यन्वाह होता मन्थत्यध्वर्युर्गायत्रेण त्वा छन्दसा मन्थामि त्रैष्टुभेन त्वा छन्दसा मन्थामि जागतेन त्वा छन्दसा मन्थामीत्येवमात्मानमभिमन्थति तथो यज्ञमात्मनो न पराञ्चं कुरुते तं वै छन्दोभिर्मन्थति छन्दोभिर्जनयति छन्दाꣳसि मथ्यमानायान्वाह छन्दाꣳस्येवैतद्यज्ञमन्वायातयति यथामुꣳ सूर्यꣳ रश्मयो ऽन्वायत्ता एवमेतच्छन्दाꣳसि यज्ञमन्वायातयति जातायानुब्रूहीत्यनुप्रह्रियमाणायानुब्रूहीति ॥१५॥

24 सो ऽनुप्रहरति भवतं नः समनसौ सचेतसा अरेपसौ । मा यज्ञꣳ हिꣳ

सिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य न इति शान्तिमेवाभ्यामेतद्वदति शमयत्येवैनावेतत् ॥१६॥

अथाभिजुहोत्यग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अभिशस्तिपावा। स नः स्योनः सुयजा यजेह देवेभ्यो हव्यꣳ सदमप्रयुच्छन्त्स्वाहेत्याहुतये वा एतं मन्थन्ति तमेतयाहुत्या शमयति ॥१७॥ 25

अथ प्रचरन्ति तदिलान्तमेव भवति शिरो वा एतद्यज्ञस्य यदातिथ्यं पूर्वार्धं उ वै शिरः शिरस्त एवैतद्यज्ञमभिसꣳस्करोति नानुयाजान्यजति यद्धानुयाजान्यजेद्यथा शिरस्तः पादौ प्रतिदध्यादेवꣳ ह तत्तस्मादिलान्तमेव भवति नानुयाजान्यजति ॥१८॥ 26

प्रथमं ब्राह्मणम् ॥

K. IV. 4. 2 M. III. 4. 2

आतिथ्येन वै देवा इष्ट्वा तान्त्समद्विवेद ते न समजानतान्यो ऽन्यस्य श्रैष्ठ्यायातिष्ठमानास्ते चतुर्धा व्यद्रवन्नग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैर्बृहस्पतिर्विश्वैर्देवैरित्येक आहुरेते त्वेव ते विश्वे देवास्तान्ह तथा विद्रुतानसुररक्षसान्यनुव्येयुः ॥१॥ 1

ते होचुरसुररक्षसानि वै नो ऽनुव्यवागुरिति द्विषद्भ्यो वै रध्याम इति ते हन्त संजानामहा इति मा द्विषद्भ्यो रध्यामैकस्य श्रिये तिष्ठामहा इति ते ह सर्वे देवा इन्द्रस्य श्रिये ऽतिष्ठन्त तस्मादाहुरिन्द्रः सर्वा देवता इतीन्द्रश्रेष्ठा देवा इत्येतस्य हि श्रिये सर्वे देवा अतिष्ठन्तेति तस्मादु स्वा नर्तीयेरन्यो ह परस्तरामिव द्विषन्भ्रातृव्यो भवति स हैनानुतानुव्यवैत्यप्रियꣳ ह द्विषतां करोति न ह द्विषद्भ्यो रध्यति य एवं विद्वान्त्संजानीते ॥२॥ 2.3

ते होचुः संज्ञाय हन्तेदं तथा करवामहा इति यथा न इदमाप्रदिवमेवाजय्यमसदिति तथेति होचुस्ते वै जुष्टास्तनूः प्रियाणि धामानि समवदाय ब्रवामेत्येतेन नः स नानासदिति यो नो ऽन्यो ऽन्यस्मै द्रुह्याद्यो नो ऽतो ऽन्यद्वदादिति तथेति होचुस्तस्य नः क उपद्रष्टेति तनूनप्त्रैव शाक्वर इति होचुस्तदयं वाव तनूनप्ता शाक्वरो यो ऽयं पवत एष ह वै प्रजानामुपद्रष्टा स वा अयमेक इवैव पवते सो ऽयं पुरुषे ऽन्तः प्रविष्टः प्राङ् च प्रत्यङ् च तौ प्राणोदानौ तस्मादाहुर्मनो देवा मनुष्यस्याजानन्तीति मनसा संकल्पयति तत्प्राणमपिपद्यते प्राणो वातमपिपद्यते वातो देवेभ्य आचष्टे यथा पुरुषस्य मनः ॥३॥ 4-6

7.8 तस्मादप्येतदृषिणाभ्यनूक्तं मनसा संकल्पयति तद्वातमपिगच्छति वातो देवेभ्य आचष्टे यथा पुरुष[3] ते मन इति ते देवा जुष्टास्तनूः प्रियाणि धामानि समवदायोचुरेतेन नः स नानासदिति यो नो ऽन्यो ऽन्यस्मै द्रुह्याद्यो नो ऽतो ऽन्यद्वदादिति तदेदानमेव[4] देवा नातिक्रामन्ति के ह्यभविष्यन्यदत्यक्रमिष्यन्ननृतं[5] ह्यवदिष्यन्नेतद्ध वा एकं देवा व्रतं चरन्ति यत्सत्यं तस्माद्यशस्तस्मादेषां जितमनपजय्यं यशो ह भवति य एवं विद्वान्त्सत्यं वदति ॥४॥

9 तदेतन्निदानेन यत्तानूनप्त्रं ते देवा जुष्टास्तनूः प्रियाणि धामानि समवाद्यन्ताथैत[6] आज्यान्येव गृह्णते त आज्यानि गृह्णानास्तथो एव जुष्टास्तनूः प्रियाणि धामानि समवद्यन्ते तस्मादु नैव सर्वेणेव समवेयान्नेन्मे सर्वेणेवेति जुष्टास्तन्वः प्रियाणि धामानि[7] सहासन्निति येनो समवेयान्न[8] तस्मै द्रुह्येदित्याहुर्न सतानूनप्त्रिणे द्रोग्धव्यमिति ह्याहुः ॥५॥

10-12 अथ वा अतो गृह्णात्येवापतये त्वा गृह्णामि परिपतये त्वा गृह्णामीत्ययं वा आ च पतति परि च पतति यो ऽयं पवत एतस्मा उ हि गृह्णाति तस्मादाहापतये त्वा गृह्णामि परिपतये त्वा गृह्णामीति तनूनप्त्रे शाक्वरायेत्ययं वाव तनूनप्ता शाक्वरो यो ऽयं पवत एतस्मा उ हि गृह्णाति तस्मादाह तनूनप्त्रे शाक्वरायेति शक्मन्नोजिष्ठायेत्ययं वाव शक्मन्नोजिष्ठो यो ऽयं पवत एतस्मा उ हि गृह्णाति तस्मादाह शक्मन्नोजिष्ठायेति ॥६॥

13 अथ समवमृशन्त्येतद्ध देवा भूयः समामिर इत्थं नः सो ऽमुथासदिति यो नो ऽन्यो ऽन्यस्मै द्रुह्याद्यो नो ऽतो ऽन्यद्वदादिति तथो वा एते भूयः समामत इत्थं नः सो ऽमुथासदिति यो नो ऽन्यो ऽन्यस्मै द्रुह्याद्यो नो ऽतो ऽन्यद्वदादिति ॥७॥

14 ते समवमृशन्त्यनाधृष्टमस्यनाधृष्यमित्यनाधृष्टा हि देवा अनाधृष्या आसन्त्सह सन्तः समानं वदन्तः समानं दधाणा देवानामोज इति देवानाꣳ हि जुष्टास्तन्वः प्रियाणि धामान्यनभिशस्त्यभिशस्तिपा इति श्रेयाꣳसो हि देवा अभिशस्तेरनभिशस्तेन्यमित्यनाधृष्यमित्येवैतदाहाञ्जसा[9] सत्यमुपगेषमित्यञ्जसा सत्यमुपगेषं मेदमतिक्रमिषमित्येवैतदाह सुविते[10] मा धा इति सुविते[11] ह्येतद्देवानदधुर्ये समानमवदन्त्समानमध्रियन्त[12] ॥८॥

15.16 तत्पत्नीङ्क्त्यापिधाय निदधति तस्मिन्नभ्युन्नीय गृहपतये व्रतं प्रयच्छन्ति स हि तेषामिन्द्रभाजनं[13] भवति यद्यु दक्षिणावता यजेत यजमानाय ते प्रयच्छन्ति स

हि तेषामिन्द्रभाजनं भवति तद्या देवा जुष्टास्तनूः प्रियाणि धामानि समवाद्यन्त तदिन्द्रे संन्यदधत स एष एवेन्द्रो य एष तपति तेन हैष एतद्वीर्येण तपति शश्वद्धैष पुरा कृष्ण[14] एवासाथ ये बहवो दीक्षन्ते गृहपतौ ते संनिदधते तथो एव जुष्टास्तनूः प्रियाणि धामानि[7] स हि तेषामिन्द्रभाजनं भवति यद्यु दक्षिणावता यजेत यजमाने ते संनिदधते तथो एव जुष्टास्तनूः प्रियाणि धामानि स हि तेषामिन्द्रभाजनं भवति तद्या देवा जुष्टास्तनूः प्रियाणि धामानि समवाद्यन्त तत्सार्धं संजघ्ने ततः साम संबभूव तस्मादाहुः सत्यं सामेति देवजं सामेत्यतो हि तत्संभूतमिति ॥९॥

द्वितीयं ब्राह्मणम् ॥

1 These words are probably corrupt. 2 तनूनप्त्रैव MSS. 3 पुरुष MSS. 4 तदेदानमेव MSS. (तदेवानमेव M). 5 °क्रमिषन्ननृतं all MSS. except M. 6 Thus C[2] pr. m., समवाद्यंताथैत the other MSS. 7 धामानि O P. 8 समवेयान्न B O P W C. 9 अभिशस्तेरन्नभि° MSS. except M. 10 स्विते M. 11 सुविते MSS. (M स्विते). 12 °समानमध्रियंत MSS. 13 तेषामिंद्र° O P. 14 कृत्स्न or कृस्न MSS. except M.

## K. IV. 4. 3 — M. III. 4. 3

1 आतिथ्येन वै देवा इष्ट्वा तान्त्समद्विवेद ते[1] न[1] समजानतान्यो ऽन्यस्य श्रैष्ठ्यायातिष्ठमानास्त उ वै तानूनप्त्रे समजानत ते होचुस्तानूनप्त्रे संज्ञायामत्यमिव वा इदमचारिष्मेति[2] ये दीक्षिताः सन्तो ऽन्यो ऽन्यं पापमवादिष्म प्रायश्चित्तिमस्येच्छामहै[3] प्रायश्चित्तिं करवामहा[4] इति ते नाह पुरावभृथात्पुनर्दीक्षामुपाजानंस्त[5] एतामेवावान्तरां दीक्षामपश्यन्[6] ॥१॥

2 ते ऽग्निनैव त्वचं विपल्यैङ्गयन्त तपो वा अग्निस्तपो दीक्षा संतरां मेखलामौहन्त तदेनां पर्यस्तां सतीं पुनः पर्यास्यन्त तद्यदवान्तरां दीक्षामपश्यंस्तस्मादवान्तरदीक्षा नाम तथो वा एष एतदवान्तरां[7] दीक्षामुपैति[7] ॥२॥

3 सो ऽग्निनैव त्वचं विपलीङ्गयते तपो वा अग्निस्तपो दीक्षा संतरां मेखलामूहते तदेनां पर्यस्तां सतीं पुनः पर्यस्यते स यदतः प्रागव्रत्यं करोति वा वदति वा

तस्यैषा प्रायश्चित्तिस्त ऊचुः प्रजामुपायामेति ॥३॥

4 ते ऽग्निनैव त्वचं विपल्यैङ्गयन्ताग्निर्वै मिथुनस्य कर्ता प्रजनयिता तत्प्रजामुपायन्त्संतरां मेखलामौहन्त तत्प्रजामात्मन्यकुर्वत तथो वा एष एतत्प्रजामेवोपैति ॥४॥

5 सो ऽग्निनैव त्वचं विपलीङ्गयते ऽग्निर्वै मिथुनस्य कर्ता प्रजनयिता तत्प्रजामुपैति संतरां मेखलामूहते तत्प्रजामात्मनि कुरुते तस्माद्वा अवान्तरदीक्षामुपैति ॥५॥

6 अथ यद्वेवावान्तरदीक्षामुपैति देवा ह स्म वै दीक्षिताः सन्तः समिधमभ्याधायमिति[८] वितिष्ठन्ते तान्ह तथा विष्ठितानसुररक्षसान्यनुव्यवेत्य जिघांसां चक्रुरितरस्यैवेतरं[९] रूपेणेतरस्येतरं ते हान्यो ऽन्यं पापं वदन्त उपसमेयुरित्थं वै मा[८] त्वमवादीरित्थं मावादीरित्यग्निर्हैव तथा नान्यमुवाद नो हान्यः कश्चनाग्निं तथोवाद ॥६॥

7.8 ते ह देवा अग्निमूचुरग्ने[१०] ऽपि त्वामित्थं वदन्ती३ इति न मामिति होवाच ते ह देवा ऊचुरयं वै नो विरक्षस्तमो[११] यदग्निरिति हन्तास्यैव सर्वे रूपं भवामेति तथा रक्षांस्यतिमोक्ष्यामह इति तथा स्वर्गं लोकं समश्नुविष्यामह इति त एतस्यैव[१२] सर्वे रूपमभवन्यदग्नेस्तथा रक्षांस्यत्यमुच्यन्त तथा स्वर्गं लोकं समाश्नुवत तथो वा एष एतदेतस्यैव[१३] रूपं भवति यदग्नेस्तथा रक्षांस्यतिमुच्यते[१४] तथा स्वर्गं लोकं समश्नुते तस्माद्वा अवान्तरदीक्षामुपैति ॥७॥

9 स समिधमभ्यादधदवान्तरदीक्षामुपैत्यग्ने[१५] व्रतपास्त्वे व्रतपा इत्यग्निर्वै देवानां व्रतपतिस्तस्मादाहाग्ने व्रतपास्त्वे व्रतपा इति या तव तनूरियं सा मयि या मम तनूरेषा सा त्वयीति तदग्निना त्वचं विपलीङ्गयते सह नौ व्रतपते व्रतान्यनु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पतिरिति नात्र तिरोहितमिवास्त्येतदवान्तरां[१६] दीक्षामुपैत्यत्र[१६] खलु संतरां मेखलामूहते संतरामङ्गुलीरचति संतरां नीविम् ॥८॥

10.11 अथ मदन्तीभिरुपचरन्ति तप्त इव वा अग्निस्तप्ता इव मदन्त्यो ऽग्नेर्ह्येष एतद्रूपं भवति तस्मान्मदन्तीभिरुपचरन्ति मदन्तीरुपस्पृश्य सोममाप्याययन्ति वज्रो वा आज्यं रेतः सोमो नेद्वज्रेणाज्येन रेतः सोमं हिनसानीति तस्मान्मदन्तीभिरुपचरन्ति मदन्तीरुपस्पृश्य सोममाप्याययन्ति ॥९॥

12 तदाहुर्यथापूर्वमेव कुर्यादित्यातिथ्येनैवेष्ट्वेत्याप्यायनमेवाग्रे यस्मा एतदाप्यायनं क्रियते ऽथ तानूनप्त्रमथावान्तरदीक्षेति तदु तथा न कुर्याद्यज्ञस्य वा एतत्कर्मात्रो

वा एनान्त्समद्धिवेद त उ वै तानूनप्त्रे समजानत तस्मात्तानूनप्त्रमेवाग्रे ऽथावान्तर-दीक्षाथाप्यायनमेतदेव स्थितम् ॥१०॥

13 स यत्सोममाप्याययन्ति दिवि वै सोमो देवो हि सोमो वृत्रो वै सोमस्तस्यैतच्छरीरं यद्गिरयो यदश्मानस्तदेषौशान्या[17] नामौषधिर्जायत[18] इति होवाच श्वेतकेतुरौद्दालकिस्तामेतदाहृत्याभिषुण्वन्तीति तां दीक्षोपसद्भिस्तानूनप्त्रेणाप्यायनेन सोमं कुर्वन्ति तथो खलु सोमो भवतीति[19] ॥११॥

14 अथ यद्धेव सोममाप्याययन्ति मधु सारघमित्याहुर्यज्ञो वाव मधु सारघमथैत एव सरघा[20] यदृत्विजः स यथा मधु मधुकृत आप्याययेयुरेवमेवैतदाप्याययन्ति[21] ॥१२॥

15 अथ यद्धेव सोममाप्याययन्ति देवा वै यज्ञेनेमां जितिं जित्वा येयमेषां जितिस्ते होचुर्हन्तेदं तथा करवामहा इति यथा न इदमनभ्यारुह्यं[22] मनुष्यैरसदिति ते यज्ञस्य रसं निर्धीय यथा मधुकृतो निर्धयेयुरेवं विदुह्य यज्ञं यूपेन योपयित्वा तिरो बभूवुस्तद्यदेनेनायोपयꣳस्तस्माद्यूपो नाम ॥१३॥

16 तदृषीणामनुश्रुतमास तं यथा यथर्षयो[23] यज्ञꣳ समभरꣳस्तथायं यज्ञः संभृतो यथो[24] वै तदृषयो यज्ञꣳ समभरन्नेवमु वा एष एतद्यज्ञꣳ संभरति यो दीक्षते ॥१४॥

17 स वै वागेव यज्ञः स यदेव तत्र यज्ञस्य देवैर्निर्धीतं यद्विदुग्धं तदेवैतदाप्याययन्त्यथ समृद्ध एव यज्ञः षलाप्याययन्ति षड्वा ऋतव ऋतव एवैतद्भूत्वाप्याययन्ति ॥१५॥

18 त आप्याययन्त्यꣳशुरꣳशुष्टे देव सोमाप्यायतामिति तदस्याꣳशुमꣳशुमेवाप्याययन्त्यꣳशावꣳशावेव रसं दधाति तस्मादाहाꣳशुरꣳशुष्टे देव सोमाप्यायतामितीन्द्रायैकधनविद इतीन्द्रो यज्ञस्य देवता तस्मादाहेन्द्रायेत्येकधनविद इति दश वा ह स्मैष एकैको ऽꣳशुर्देवान्प्रतीन्द्रायैकधनानाप्याययन्ति शतꣳ शतं वा तस्मादाहैकधनविद इत्या तुभ्यमिन्द्रः प्यायतामितीन्द्रो यज्ञस्य देवता या ते देवता सा त आप्यायतामित्येवैतदाहा त्वमिन्द्राय प्यायस्वेति तदेतास्मिन्नाप्यायनं दधात्याप्याययास्मान्त्सखीन्त्सन्या मेधयेति यत्सनोति तेन तदाह मेधयेति यन्मेधयानुब्रूते स्वस्ति ते देव सोम सुत्यामुदृचमशीयेत्याशीरेषर्त्विजां च यजमानस्य च स्वस्ति यज्ञस्योदृचꣳ सꣳस्थां गच्छेमेति[25] ॥१६॥

19 अथ प्रस्तरे निह्नवत उत्तरतउपचारो वै यज्ञो जिह्मा उ वा एते यज्ञाघ्नन्ति ये सोममाप्याययन्ति दक्षिणेव ह्यन्ववयन्ति ते देवताभ्य आवृश्च्यन्ते यज्ञ उ वै प्रस्तरस्तत्पुनर्यज्ञमारभते[16] तथा न जिह्मा यज्ञाघ्नन्ति तथो देवताभ्यो नावृश्च्यन्ते तस्मात्प्रस्तरे निह्नवते ॥१७॥

21 ते निह्नवत एष्टा रायः प्रेषे भगायेत्यृतमृतवादिभ्य इति सत्यꣳ सत्यवादिभ्य इत्येवैतदाह नमो दिवे नमः पृथिव्या इति तदाभ्यां द्यावापृथिवीभ्यां नमस्करोति ययोरिदꣳ सर्वमधि ॥१८॥

20.22 तदाहुरक्ते[19] निह्नवीता३[20] अनक्ता३ इति तद्धनक्त एव निह्नवीतानुप्रहरणꣳ ह्यवाक्तस्य समुल्लुप्यादायाहाग्नीन्मदन्त्यापा३ इति मदन्तीति तत्समुदितभाजनं ताभिरेहीत्युपर्युपर्यतिहरति स यदुपर्युपर्यतिहरति तदनुप्रहृतभाजनमथ यज्ञानुप्रहरत्येतेनो ह्या श्वः सुत्यायाश्चरन्ति ॥१९॥ तृतीयं ब्राह्मणम् ॥

1 तेन MSS. 2 चाष्मेंति B W. 3 Thus C sec. m. only; °त्तिमत्स्येछेत्स्यामहै B W, °त्तिमछामहै P, °न्तिमछा ( in margin त्स्ये ) था ( blotted out ? )-महै O, °तिमछस्यामहै C¹ ( pr. m. ), °त्तिमत्स्येत्स्यामहै C² ( sec. m. ), °त्तिमन्वेच्छामहै M, °त्तिमछयैछामहै My. 4 करवा° MSS. 5 °क्षामपाजा° MSS. except M. 6 °पश्यन् B O P W. 7 °वांतरदीक्षामुपैति B, changed into °वांतरांदीक्षा° ( without accent ). 8 Conjectural reading, °भ्याधायाहमिति M, °भ्याधायमति all the other MSS. 9 मां MSS. except M. 10 Thus the accent B W, °चुरभ्रे the other MSS. 11 विरक्षस्तमो MSS. 12 एतदेव MSS. except M. 13 ? एतदेतदेव MSS. except M ( एतदेव ). 14 Read रक्षाꣳस्यतिमुच्यते ? 15 समिधमभ्यादधद° MSS. 16 °वांतरदीक्षा° B M. 17 Thus M, °स्तदेषैसंज्ञा W O P C¹ My, °स्तदेषोसंज्ञा C, °स्तदेषासंज्ञा B ( cp. V. 3. 1. 12 ). 18 नामोष°

MSS. except M. 19 °तीति B W O P C. 20 Thus accented MSS. 21 In M Kaṇḍikā 12 precedes 11; the first words, however, स यत्... °यन्ति and अथ यद्वेव ... °यन्ति, are given by M also, as is natural, in the order of the other MSS. 22 °स्त्वं B W O P C C². 23 यथऋषयो O P C² C (pr. m.). 24 यतो M. 25 °मेति MSS. 26 Thus accented MSS. 27 Read °तदाहुरक्के नि° ?

K. IV. 4. 4 M. III. 4. 4

ग्रीवा ह वा अस्योपसदस्तस्माद्यदि प्रवर्ग्यवान्भवति प्रवर्ग्येण चरित्वा (1.2)
शिरः प्रवर्ग्यो ऽथास्मिन्नेता ग्रीवाः प्रतिदधाति[1] तद्याः पूर्वाह्णे ऽनुवाक्या अन्वाह
ता अपराह्णे याज्या या याज्यास्ता अनुवाक्या एवं व्यतिषजति ग्रीवाणामेवैतदस्थी-
नीमान्स्कन्धान्व्यतिषजति[2] तानीमानि ग्रीवाणामस्थीनीमे स्कन्धा[3] व्यतिषक्ता अथ
यदुपसद्भिर्यजते ॥१॥

देवाश्च ह वा असुराश्चोभये प्राजापत्या अस्पर्धन्त ततो हासुरा एषु लोकेषु (3)
पुरश्चक्रिरे ऽयस्मयीमस्याꣳ रजतामन्तरिक्षे हरिणीं दिवि ॥२॥

तदु वै देवा अस्पृण्वत ता उपसद्भिरुपासीदꣳस्ताः प्राभिन्दन्प्राजयꣳ- (4.5)
स्तस्मान्मानुष उपसदा पुरं जयन्तीत्याहुरथैताभिरेव देवा अजयन्नथ यदेष एताभि-
र्यजते नाहैवैतस्मा एषु लोकेषु तथा पुरः कुर्वत इमाꣳस्त्वेवैतल्लोकान्प्रभिनत्तीमां-
ल्लोकान्प्रजयति तस्माद्वा उपसद्भिर्यजते ॥३॥

ता आज्यहविषो भवन्ति वज्रो वा आज्यमेतेनैव वज्रेणाज्येन देवा (6)
इमांल्लोकान्प्राभिन्दन्प्राजयꣳस्तथो वा एष एतेन वज्रेणाज्येनेमांल्लोकान्प्रभिनत्तीमांल्लो-
कान्प्रजयति तस्मादाज्यहविषो भवन्ति ॥४॥

सो ऽष्टौ कृत्वो जुह्वां गृह्णाति चतुरुपभृति तद्वा आहुश्चतुरेव जुह्वां गृह्णीया- (7-9)
दित्यष्टौ कृत्व उपभृतीत्यष्टौ त्वेव कृत्वो जुह्वां गृह्णाति चतुरुपभृति वज्रमेवैतदभिभारं
करोत्यग्नीषोमा उ वै देवानाꣳ सयुजौ ताभ्यामेव सह गृह्णाति तौ सयुजौ करोत्ये-
काकिने विष्णवे स पूर्वमेवाघारमाघारयति नोत्तरं प्रतिक्रामति वा उत्तरमाघारमा-

घार्याभिजितय एव तस्मात्पूर्वमेवाघारमाघारयति नोत्तरम् ॥५॥

10-13 आश्राव्य न होतारं प्रवृणीते सीद होतरित्येवाह सीदति होता होतृषदने प्रसूतः स्रुचावादायाहाग्नये ऽनुब्रूहीत्यतिक्रम्याश्राव्याहाग्निं यजेति वषट्कृते जुहोति सोमायानुब्रूहीत्याह तत्रैव तिष्ठन्नाश्राव्याह सोमं यजेति वषट्कृते जुहोति समायमान आह विष्णवे ऽनुब्रूहीत्याश्राव्याह विष्णुं यजेति वषट्कृते जुहोति यत्सार्धमेव तिष्ठञ्जुहोति न यथेदमुतान्यस्मिन्यज्ञे प्रचरन्त्संचरत्यभिजितय एव तस्मात्सार्धमेव तिष्ठञ्जुहोति न संचरति ॥६॥

14-16 ता वा एतास्तिस्रो देवता यजति स यदेतास्तिस्रो देवता यजति वज्रमेवैतत्सꣳस्करोत्यग्निमनीकꣳ सोमꣳ शल्यं विष्णुं कुल्मलं तद्वज्रमेवैतत्सꣳस्करोत्यहर्वा अग्नी रात्रिः सोमो ऽथ यो ऽहोरात्रयोः संधिस्तद्विष्णुरेते उ वै संवत्सरमेते हि परिप्लवमाने संवत्सरं कुरुतस्तद्वज्रमेवैतत्संवत्सरꣳ सꣳस्करोत्येतेन वै वज्रेण संवत्सरेण देवा इमांल्लोकान्प्राभिन्दन्प्राजयꣳस्तथो वा एष एतेन वज्रेण संवत्सरेणेमांल्लोकान्प्रभिनत्तीमांल्लोकान्प्रजयति तस्माद्वा एतास्तिस्रो देवता यजति ॥७॥

17.18 स यदि तिस्र उपसदो भवन्ति त्रयो वा ऋतवः संवत्सरस्य संवत्सररूपमेवैतत्क्रियते संवत्सरमेवैतत्सꣳस्करोति द्विरेकया द्विरेकया प्रचरति तत्षड् षड्वा ऋतवः संवत्सरस्य संवत्सररूपमेवैतत्क्रियते संवत्सरमेवैतत्सꣳस्करोति ॥८॥

19.20 यद्यु वै द्वादशोपसदो भवन्ति द्वादश वै मासाः संवत्सरस्य संवत्सररूपमेवैतत्क्रियते संवत्सरमेवैतत्सꣳस्करोति द्विरेकया द्विरेकया प्रचरति तच्चतुर्विंꣳशतिश्चतुर्विंꣳशतिर्वा अर्धमासाः संवत्सरस्य संवत्सररूपमेवैतत्क्रियते संवत्सरमेवैतत्सꣳस्करोति ॥९॥

21.22 स यत्सायंप्रातः प्रचरति संपदश्च कामाय तथा हि संपत्संपद्यते सुजितमसदिति चेदं नु यत्प्रातः प्रचरति जयत्येव तदथ यत्सायं प्रचरति सुजितमसदित्यथ यज्जुहोतीदं वै पुरं युध्यन्ति तां जयन्ति तां जित्वा स्वाꣳ सतीं प्रपद्यन्ते स यत्प्रचरति युध्यत्येव तदथ यत्संतिष्ठते जयत्येव तदथैतत्स्वाꣳ सतीं प्रपद्यते यज्जुहोति स प्रथमया द्विरेकया द्विरेकया प्रचरति ॥१०॥

23 स जुहोति या ते अग्ने ऽयःशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहेत्येवꣳरूपा हि सासीदयस्मयी हि सासीदथापरया

द्विरेकया द्विरेकया प्रचरति ॥११॥

स जुहोति या ते अग्ने रजःशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहेत्येव ऽऽरूपा हि सासीद्रजता हि सासीदथापरया द्विरेकया द्विरेकया प्रचरति ॥१२॥ 24

स जुहोति या ते अग्ने हरीशया[11] तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहेत्येव ऽऽरूपा हि सासीद्धरिणी[12] हि सासीत्स यदि द्वादशोपसदो भवन्ति चतुरहमेकया चरति[13] चतुरहमेकया चतुरहमेकया ॥१३॥ 25

अथ वा अतो व्रतोपसदामेव परउर्व्यो वा अन्या उपसदः परोऽऽह्व्यो[14] ऽन्यास्तद्याः परउर्व्य एकं प्रथमेन दोग्ध्यथ द्वावथ त्रीऽऽस्ताः परउर्व्यो ऽथ याः परोऽऽह्व्यस्त्रीन्प्रथमेन दोग्ध्यथ द्वावथैकं ताः परोऽऽह्व्यस्तद्या इमाः परउर्व्यस्ताः परोऽऽह्व्यो ऽथ याः परोऽऽह्व्यस्ताः परउर्व्यस्तपसा वै लोकं जयन्ति तत्परः पर एवैतद्वरीयो वरीयस्तपो भवति स श्वः श्वः श्रेयान्भवति परः परो वरीयाऽऽसं वरीयाऽऽसं[15] लोकं जयति[16] य एवं विद्वान्परोऽऽह्वीरुपैति तस्मात्परोऽऽह्वीरेवोपेयात्स यदि द्वादशोपसदो भवन्ति त्रीऽऽश्चतुरहं दोग्धि द्वौ चतुरहमेकं चतुरहम् ॥१४॥ चतुर्थं ब्राह्मणम् ॥ चतुर्थो ऽध्यायः ॥ 26.27

1 °दधति O P C C¹ (orig.) My. 2 Thus emended, °नीमास्कंधाव्यति° MSS. except M which has : °नीमां and omits the following words up to °स्थीनीमे. Are we to emend व्यतिषजन्ति ? 3 स्कंधा MSS. 4 °भिजितय MSS. 5 प्रवृणीते B. 6 होरात्रयोः O P. 7 प्रचरति MSS. 8 जयत्येव B W O P C². 9 युध्यत्येव MSS. 10 प्रचरति B W. 11 हरिशया M ( sec. m. ). 12 °ह्वरिणी B W O P. 13 Thus MSS., but in C accent blotted out. Read प्रचरति ? 14 परोह्° instead of परोऽऽ° B W O P C here and after. 15 वरी° B W O P C C¹ ( sec. m. ). 16 जयंति B W, जयन्ति M.

M. III. 5. 1 K. IV. 5. 1

1-6 स वै शालायाः पूर्वार्धात्प्राङ् प्रक्रामति त्रीन्विक्रमाꣳस्तच्छङ्कुं निहन्ति सो ऽन्तःपातो वेदेस्तस्माच्छङ्कोर्दक्षिणा प्रक्रामति पञ्चदश विक्रमाꣳस्तच्छङ्कुं निहन्ति सा दक्षिणा श्रोणिरथास्मादेव मध्यमाच्छङ्कोरुदङ् प्रक्रामति पञ्चदश विक्रमाꣳस्तच्छङ्कुं निहन्ति सोत्तरा श्रोणिरथास्मादेव मध्यमाच्छङ्कोः प्राङ् प्रक्रामति षट्त्रिꣳशतं विक्रमाꣳस्तच्छङ्कुं निहन्ति स पूर्वार्धो वेदेस्तस्माच्छङ्कोर्दक्षिणा प्रक्रामति द्वादश विक्रमाꣳस्तच्छङ्कुं निहन्ति स दक्षिणो ऽꣳसो ऽथास्मादेव मध्यमाच्छङ्कोरुदङ् प्रक्रामति द्वादश विक्रमाꣳस्तच्छङ्कुं निहन्ति स उत्तरो ऽꣳस एषा मात्रा वेदेः ॥१॥

7.8 सा यत्त्रिꣳशद्विक्रमा पश्चाद्भवति त्रिꣳशदक्षरा वै विराड्विराजा वै देवा अस्यां प्रत्यतिष्ठꣳस्तथो वा एष एतद्विराजैवास्यां प्रतितिष्ठति त्रयस्त्रिꣳशद्विक्रमा वा त्रयस्त्रिꣳशदक्षरा वाव विराट् तदु विराजैवास्यां प्रतितिष्ठति सैषा मीमाꣳसैव त्रिꣳशद्विक्रमैव पश्चात्स्यात् ॥२॥

9 अथ यत्षट्त्रिꣳशद्विक्रमा प्राची भवति षट्त्रिꣳशदक्षरा वै बृहती बृहत्या वै देवाः स्वर्गं लोकꣳ समाश्नुवत तथो वा एष एतद्बृहत्यैव स्वर्गं लोकꣳ समश्नुते तदस्य दिव्याहवनीयो भवति ॥३॥

10 अथ यच्चतुर्विꣳशतिविक्रमा पुरस्ताद्भवति चतुर्विꣳशत्यक्षरा वै गायत्री पूर्वार्धो वै यज्ञस्य गायत्री पूर्वार्धो वा एष वेदेस्तस्माच्चतुर्विꣳशतिविक्रमा पुरस्ताद्भवति[1] ॥४॥

11 सा पश्चाद्वरीयसी स्यात्पश्चाद्वरीयसीव वै श्रोणिमतीव[2] योषा भवति तत्प्रजाभ्य एवैतद्वरीयः प्रजननं[3] करोति तस्माद्वरीयसः प्रजननादिमाः प्रजाः प्रजायन्ते ॥५॥

12.13 नासिका ह वा एषा यज्ञस्य यदुत्तरवेदिः स यदेनामुत्तरां वेदेरुपकिरति तस्मादुत्तरवेदिर्नाम द्वय्य उ वाव प्रजा आदित्या एवान्ये ऽङ्गिरसो ऽन्ये ततो हाङ्गिरसः पूर्वे यज्ञꣳ संजह्रुः ॥६॥

ते होचुर्यज्ञꣳ संभृत्य श्वःसुत्यामादित्येभ्यः प्रब्रवामेति तेन नो यज्ञेन याजयन्त्विति ते हाग्निमेव दूतं प्रजिघ्युस्तान्हाग्निरित्योवाच श्वःसुत्यां वो ऽङ्गिरसः प्राहुरिति तेन नो यज्ञेन याजयतेति ॥७॥

त उ होचुरादित्या उपजानीतेति यथास्मानेवाङ्गिरसो याजयेयुर्न वयमङ्गिरस इति ते होचुरन्तरामेव सुत्यां ध्रियामहा इति[4] नापक्रमणमस्त्विति[5] ह यज्ञꣳ संजह्रुः ॥८॥ 14-16

ते होचुर्यज्ञꣳ संभृत्य श्वःसुत्यां वा अस्मभ्यमङ्गिरसः प्रावोचन्नित्य-श्वःसुत्यामेव वयं तुभ्यं प्रब्रूमो ऽङ्गिरोभ्यश्च तेषां नस्त्वꣳ होतासीति साह तत्रैवा-ङ्गिरसाथान्यमेव[6] दूतं प्रजिघ्युस्त उ हाङ्गिरसो ऽन्वेत्याग्निमूदुरिवापि[7] कथं नः प्रहितो न प्रत्यागा इति ॥९॥

स होवाचानिन्द्या एव मावृषतेति तेषां वृतो ऽपक्रमितुं नाशकमिति तस्मादनिन्द्येन वृतो नापक्रामेत्ततो हैषां वितरामियाय क्रोधस्तेन सद्यःक्रिया-ङ्गिरस आदित्यान्याजयां चक्रुः स सद्यःक्रीस्तेभ्यो ह दक्षिणानां काले वाचमेव दक्षिणामानिन्युस्ताꣳ ह न प्रतिजगृहुर्हास्यामहे यदि प्रतिग्रहीष्याम इति तत्कर्म व्यमुच्यत[8] दाक्षिणं तेभ्यो हापरꣳ सूर्यमानिन्युस्तꣳ ह प्रतिजगृहुस्तस्माद्धा-ङ्गिरस आहुर्वयमेवार्त्विजीनाः[9] स्मो वयं दक्षिणीया इति येभ्यो नो ऽपि सूर्यं दक्षिणामनयन्निति[10] तस्मादप्येतर्हि सद्यःक्रियो[11] ऽश्वः श्वेतो दक्षिणा तस्य रुक्मः पुरस्तात्तद्ध्येतस्य रूपं क्रियते[12] य एष तपति ॥१०॥ 17-20

सो हेयं वाक् चुक्रोध न मदेष केन चन श्रेयानिति न बन्धुना न केन चन कथमेतं[13] प्रतिगृह्णीयुर्न[13] मामिति सा ह सिꣳही भूत्वान्तरा देवासुरान्त्सं-यत्तानाददानाक्षिणती[14] चचार ताꣳ होभय एव विदां चक्रुर्यतरानेव न इयमुपा-वर्त्स्यतीति ते भविष्यन्ति परेतरे भविष्यन्तीति तामुभय एवोपमन्त्रयां चक्रिरे सो ऽग्निरेव देवानां दूत आस सहरक्षा इत्यसुररक्षसमसुराणाम् ॥११॥ 21

सा होवाचाग्निमुपावर्त्स्यन्ती किं मम ततो भविष्यतीति यद्युष्मानुपाव-र्त्स्यामीति[15] ते होचुः प्रथमामेव त्वाहुतिः प्राप्स्यतीत्यपि त्वा पूर्वामग्नेराहुतिः प्राप्स्य-तीति तस्माद्धारयन्त्यग्निमथैतां[16] व्याघारयन्ति तदेनां प्रथमामाहुतिः प्राप्नोति ॥१२॥ 22

सा होवाचोपावर्तमाना यामु कां च मया यूयमाशिषमाशासिष्यध्वे तां[17] वः समर्धयिष्यामीति स याꣳ हैनया[18] कां चाशिषमाशासते तामस्मै समर्धयति[19] ॥१३॥

सैषा निदानेन यदुत्तरवेदिः स यदुत्तरवेदिमुपकिरति यज्ञस्यैव सर्व-त्वाय कृत्स्नतायै वाग्वा उत्तरवेदिर्यज्ञ उ वै वाक्तस्मादुत्तरवेदिमुपकिरति ॥१४॥ 23

24.25 तां वै युगशम्येन विमिमीते युगेन यत्र कुर्वन्ति शम्यया यत आहा युगशम्येन वै योग्यं युञ्जन्ति[10] सा यददो बहिर्धेव[11] यज्ञाद्भवत्तदेनामेतद्युगशम्येन नैव यज्ञे युनक्ति तस्माद्यामन्यस्मै दक्षिणामानयेयुर्न तां निवृत्तदक्षिणां[12] प्रतिगृह्णी सिꣳही हैनं भूता[13] विक्षिणाति[13] नो वा एनां यजमान आत्मना[14] कुर्वीत[14] सिꣳ हैवैनं भूता[13] विक्षिणाति[13] नो वा एनामन्यस्मै दद्याद्यज्ञꣳ ह्यात्मनः पराञ्चं कुर्या यदेनामन्यस्मै दद्यात्तस्माद्य[15] एष समानबन्धुरपि दुरनुभूत[16] इव स्यात्तस्मा एनां दद्यात्[15] स यद्धैनां[17] ददाति तेनैनꣳ सिꣳही भूता न विक्षिणाति यद्वै ददत्समानाय[18] ददाति तेनो यज्ञमात्मनो न पराञ्चं कुरुत एषा प्रति निवृत्तदक्षिणायाः ॥१५॥

26-30 अथ खलु शम्यां च स्फ्यं चादाय[19] यो ऽसा[19] उत्तरार्धे शङ्कुर्भवति त प्रत्यङ् प्रक्रामति त्रीन्विक्रमाꣳस्तत्स्फ्येन परिलिखति तप्तायनी मे ऽसीति पश्चादु चीमिमां तत्पृथिवीमाहास्याꣳ हि तप्त एति वित्तायनी मे ऽसीत्यग्रेणोदीचीमि तत्पृथिवीमाहास्याꣳ हि विविदान एत्यवतान्मा व्यथितमिति दक्षिणतः प्राचीमि तत्पृथिवीमाह यत्र व्यथैतन्मावतादित्यवतान्मा नाथितमित्युत्तरतः प्राचीमि तत्पृथिवीमाह[20] यत्र नाथैतन्मावतादिति[21] ॥१६॥

31 अथाग्नीनां नामानि गृह्णन्हरति स यदग्नीनां नामानि गृह्णन्हरति यत्र वा अग्रे देवा अग्निꣳ होत्राय प्रावृणत तत्प्राधन्वन्त्स इमाः पृथिवीः प्राविशदियमे परे द्वे तैरेवैनमेतं निदानैर्हरति ॥१७॥

32a स प्रहरति विदेरग्नेर्नभो नामाग्ने अङ्गिर आयुना नाम्नेहीति यत्प्राधन्व दस्मिन्नायुर्दधाति तदेनꣳ समीरयति यो ऽस्यां पृथिव्यामसीति स यो ऽस्यां पृथिव्यां भवति तꣳ हरति पराहृत्य निदधाति यत्ते ऽनाधृष्टं नाम यज्ञियं तेन त्वा इति यत्ते ऽनाधृष्टꣳ रक्षोभिर्नाम यज्ञियं तेन त्वादधामीत्येवैतदाह ॥१८॥

अथ द्वितीयं प्रहरति विदेरग्नेर्नभो नामाग्ने अङ्गिर आयुना नाम्नेहीति यत्प्राधन्वत्तदस्मिन्नायुर्दधाति तदेनꣳ समीरयति यो द्वितीयस्यां पृथिव्यामसीति स यो द्वितीयस्यां पृथिव्यां भवति तꣳ हरति पराहृत्य निदधाति यत्ते ऽनाधृष्टं नाम यज्ञियं तेन त्वादध इति यत्ते ऽनाधृष्टꣳ रक्षोभिर्नाम यज्ञियं तेन त्वादधामीत्येवैतदाह ॥१९॥

अथ तृतीयं प्रहरति विदेरग्नेर्नभो नामाग्ने अङ्गिर आयुना नाम्नेहीति यत्राधन्वत्तदस्मिन्नायुर्दधाति तदेनꣳ समीरयति यस्तृतीयस्यां पृथिव्यामसीति स यस्तृतीयस्यां पृथिव्यां भवति तꣳ हरति पराहृत्य निदधाति यत्ते ऽनाधृष्टं नाम यज्ञियं तेन त्वादध इति यत्ते ऽनाधृष्टꣳ रक्षोभिर्नाम यज्ञियं तेन त्वादधामीत्येवैतदाह ॥२०॥

32b अनु त्वा देववीतय इति चतुर्थꣳ हरति देवेभ्यस्त्वा जुष्टꣳ हरामीत्येवैतदाह स वै चतुःस्रक्तेश्चात्वालाद्धरति[32] दिशो वै स्रक्तयः सर्वाभ्य एवैनं तद्दिग्भ्यः समीरयति तस्माच्चतुःस्रक्तेश्चात्वालाद्धरति ॥२१॥

33 अथाभिमृशति सिꣳह्यसि सपत्नसाही देवेभ्यः कल्पस्वेति सा यत्सिꣳही भूत्वाददाना[33] क्षिणत्यचरत्तस्मादाह सिꣳह्यसीति सपत्नसाहीति त्वया सपत्नान्पापीयसः करवामेत्येवैतदाह देवेभ्यः कल्पस्वेति योषा वा एषा यद्वेदिस्तदेनामेतद्देवेभ्य एव कल्पयति ॥२२॥

34 अथ युगेन सर्वतः परिमिमीते यजमानस्य वा पदैर्दश दश सर्वतो दशाक्षरा वै विराड्वाग्वै विराड्वाग्वा एषा निदानेन तस्माद्यजमानस्य पदैर्दश दश सर्वतो ऽथ जघनेन[34] नाभिकां करोति[35] सार्धमासीनो व्याघारयाणीति ॥२३॥

35 अथाद्भिरभ्युक्षति सा यत्सिꣳही भूत्वाददाना[33] क्षिणत्यचरदशान्तापो वै शान्तिस्तदद्भिः शान्त्या शमयति योषा वा एषा यद्वेदिर्हिन्वत्येवैनां[36] तत्सो[37] ऽभ्युक्षति सिꣳह्यसि सपत्नसाही देवेभ्यः शुन्धस्वेति[38] ॥२४॥

36 अथ सिकताभिरनुप्रकिरत्यलंकारो ह वा अस्याः सिकता म्लाशान्त इव हि सिकता म्लाशात इव योषालंकृताग्नेरु वा एतद्वैश्वानरस्य भस्माग्निमु वा अस्यामभ्याधास्यन्भवति[39] तथाहैनां नातिदहति तथो एनां न हिनस्ति सो ऽनुप्रकिरति सिꣳह्यसि सपत्नसाही देवेभ्यः शुम्भस्वेति ॥२५॥ प्रथमं ब्राह्मणम् ॥

1 °द्भवति MSS. 2 श्रोणिमतीव C. 3 भवति MSS. 4 प्रजनने B W. 5 इति नापक्रमणहास्त्विति W. 6 Read °म्रिरासाथा° ? 7 Thus B W My, न्वेयाम्रिमृदुरिवापि C (pr. m.), न्वेयाम्रिमूदुरिवापि others. What is to be read ? 8 °च्यत MSS. 9 B W

C My omit the visarga. 10 Read दक्षिणामानयन्निति. 11 °क्रेयो W. 12 क्रियते MSS. 13 कथमेतं MSS. (कथम् । एतम् । प्रतिगृह्णीयुः । न । माम् । इति). 14 Cp. IV. 5. 1. 22, IV. 5. 2. 7. 15 °नुपावत्स्यामीति MSS. 16 तस्माद्धा° C. 17 After तां B W insert प्र. 18 हैनया C. 19 °यति MSS. 20 युंजंति MSS. 21 बहिर्धेव B W. 22 निवृत्तदक्षिणां MSS. 23 भुता विक्षिणाति MSS. 24 Thus MSS., probably corrupt; अमा कुर्वीत the Mādhy. 25 दधा° MSS. 26 Thus accented MSS. 27 यदहैनां MSS. 28 दद° MSS. 29 चादाय योसा MSS. 30 C adds in the margin : यत्र नाथैतन्मावतादित्यवतान्मा नाथितमित्युत्तरतः प्राचीमिमां तत्पृथिवीमाह. 31 °तादिति C. 32 चतुस्र° B. 33 भूत्वाददाना MSS. 34 जघने C My. 35 करोति MSS. 36 Thus accented MSS. 37 Read तत्सो. 38 °स्वेति MSS. 39 अस्यामभ्या° MSS.

M. III. 5. 2

K. IV. 5. 2

1 स वै संभारान्त्संभरति पैतुद्रवान्परिधीन्गुग्गुलु सुगन्धितेजनं वृष्णे स्तुकामभ्यादधातीध्मं[1] चात्वालादुपयमनीरुपकल्पयत्यधिश्रयत्याज्यं[2] स्रुवं च स्रुचं[3] च संमार्ष्ट्युद्वास्याज्यमुत्पूय पञ्चगृहीतं गृह्णीते सीदति होता होतृषदन उद्यच्छन्तीध्ममुपयच्छत्युपयमनीः ॥१॥

2 अथाहाग्नये प्रह्रियमाणायानुब्रूह्येकस्फ्ययानूदेहीति[1] स यदेकस्फ्ययानूदैत्यन्तर्वेदि[2] वा अस्येतरे धिष्ण्या भवन्त्यथास्यायमनेनान्तःपातेन व्यवच्छिन्नो भवति[3] तमेवैतदनुसंतनोति तथास्यैष संततोऽव्यवच्छिन्नो भवति ॥२॥

3-7 तद्धैक ओत्तरवेदेर्यन्ति तदु तथा न कुर्यादेवैतस्माच्छङ्केरियादथ[1] प्रोक्षणीरादायोत्तरवेदिं प्रोक्षति स समान एव प्रोक्षणस्य बन्धुर्मेध्यमेवैतत्करोति यत्किं च प्रोक्षति ॥३॥

स प्रोक्षतीन्द्रघोषस्त्वा वसुभिः पुरस्तात्पात्वितीन्द्रघोषस्त्वा वसुभिः पुरस्ताद्गोपायत्वित्येवैतदाह प्रचेतास्त्वा रुद्रैः पश्चात्पात्विति प्रचेतास्त्वा रुद्रैः पश्चाद्गोपायत्वित्येवैतदाह मनोजवास्त्वा पितृभिर्दक्षिणतः पात्विति मनोजवास्त्वा पितृभिर्दक्षिणतो गोपायत्वित्येवैतदाह विश्वकर्मा त्वादित्यैरुत्तरतः पात्विति विश्वकर्मा त्वादित्यैरुत्तरतो गोपायत्वित्येवैतदाह ॥४॥

अथ याः परिशिष्टाः प्रोक्षण्यो भवन्ति ताः पूर्वार्धे दक्षिणार्धे निनयतीदमहं तत्तं वार्बहिर्धा यज्ञान्निःसृजामीति सा यददस्तन्नेव शोचन्त्यचरत्तामेवास्या[7] एतच्छुचं बहिर्धा यज्ञान्निःसृजत्येवं ब्रूयाद्यदि नाभिचरेद्यद्युवभिचरेदिदमहं तममुं वार्बहिर्धा यज्ञादमुमभिनिःसृजामीति ब्रूयात्तथाह तं खलु शुचा विध्यति तथो स शोचन्नेव म्रियते ॥५॥ 8

अथ व्याघारयति तदेतदेकं कुर्वन्तो द्वे कुर्वन्ति यदहाब्रवीत्प्रथमां[8] त्वाहुतिः प्राप्स्यतीति तदेनामेतत्प्रथमामाहुतिः प्राप्नोत्यथ यदब्रवीद्यामु कां च मया यूयमाशिषमाशासिष्यध्व इति तां वः समर्धयिष्यामीति स याꣳ हैनया कां चाशिषमाशास्ते तामस्मै समर्धयति ॥६॥ 10a.9

स व्याघारयति सिꣳह्यसि स्वाहेति सा यत्सिꣳही भूत्वाददाना[9] क्षिणत्यचरत्तस्मादाह सिꣳह्यसि स्वाहेति सिꣳह्यस्यादित्यवनिः स्वाहेति यदेनामादित्या दक्षिणामनयन्त्सिꣳह्यसि ब्रह्मवनिः क्षत्रवनिः स्वाहेति ते अस्मा एते आशिषावाशास्ते यद्ब्रह्म च क्षत्रं च सिꣳह्यसि सुप्रजावनी रायस्पोषवनिः स्वाहेति तदस्मै[10] प्रजां च पशूꣳश्चाशास्ते सिꣳह्यस्यावह देवान्यजमानाय स्वाहेति तदेतस्मै यज्ञाय देवानावाहयति भूतेभ्यस्त्वेति स्रुचमुद्यच्छति प्रजा वै भूतं[11] तदाभ्यः सर्वाभ्यः प्रजाभ्य आह तस्मादाह भूतेभ्यस्त्वेति[12] ॥७॥ 11-13

अथ परिधीन्परिदधाति गुप्तये वाव परिधीन्परिदधाति गोपीथाय दूरे ह्येनमितरे परिधय आगमिष्यन्तो भवन्ति ॥८॥

स परिदधाति ध्रुवो ऽसि पृथिवीं दृꣳहेति मध्यमं ध्रुवक्षिदस्यन्तरिक्षं दृꣳहेति दक्षिणतो ऽच्युतक्षिदसि दिवं दृꣳहेत्युत्तरत एवमिमांल्लोकान्दृल्हान्कृत्वा तैरेनꣳ सर्वतः परिदृꣳहति[13] नेदेनं नाष्ट्रा रक्षाꣳसि हिनसन्नित्यथाग्नेः पुरीषमसीतीतरानुपनिवपति पुरीषꣳ ह्यस्यैतद्भवति[14] ॥९॥ 14

15-18 स यदेते संभारा भवन्त्यग्नेरेव सर्वत्वाय कृत्स्नताया इदं नु यत्पैतुद्र
परिधयो भवन्त्यस्थि ह वा अस्य पीतुदारु[15] स्वेनैवैनं तदस्थ्ना समर्धयत्यथ य
गुग्गुलु[16] भवति माꣳसꣳ ह वा अस्य गुग्गुलु[17] स्वेनैवैनं तन्माꣳसेन समर्धयत्य
यत्सुगन्धितेजनं भवति गन्धो ह वा अस्य सुगन्धितेजनꣳ स्वेनैवैनं तद्गन्धेन समर्ध
त्यथ यद्वृष्णे स्तुका भवति वृष्णेर्ह वा अन्तरा विषाणे एकाꣳ रात्रिमग्निरुवास
यदिह किं चिदग्नेर्न्यक्तं तदिहाप्यसदिति तस्माद्या[18] शिरसो नेदीयसी[19] तां[20] ग्रीवाभ्य
आच्छिद्याहरेद्यद्यु तां[21] न विन्देदपि यत एव कुतश्चाहरेदथ यदाहाग्नेः पुरीषमसीति
पुरीषꣳ ह्यस्यैतद्भवति ॥१०॥

अथाह[22] व्युत्क्रामतेत्यथोत्तरं परिग्राहं[23] परिगृह्णाति दक्षिणमेवाग्रे ऽथ
पश्चादथोत्तरतो ऽथ प्रतियौति यत्रासौ जघनार्धे शङ्कुर्भवत्यथ प्रोक्षणीरासादय
तीध्माबर्हिरुपसादयन्ति[24] स प्रोक्षणीरादायेध्ममेवाग्रे प्रोक्षत्यथ वेदिमथास्मै बर्हिः
प्रयच्छन्ति तत्प्रोक्ष्योपनिनीय संनहनमुपसंगृह्योत्तरवेदे स्तृणन्नेति न वा एतामु
त्तरेण परिग्राहेण परिगृहीतामवस्पृशन्ति[25] नाभितिष्ठन्त्या[25] बर्हिषस्तदेनां बर्हिषा
शमयति तस्याꣳ शान्तायाꣳ सदोहविर्धानं[26] त्वच्छमयन्त्यभि[26] त्वत्तिष्ठन्ति ॥११॥
द्वितीयं ब्राह्मणम् ॥

1 स्तुका° MSS. 2 स्तुचं C. 3 °ह्येकस्फयया° MSS. 4 यदेकस्फयया° MSS., नूदेत्य° B W. 5 भवति MSS. 6 कुर्यादेवै° B W C. 7 शोचंत्यचर° B. 8 यदहाब्र° B W; the singular अब्रवीत् must be corrupt. 9 भूत्वाददाना B W C. 10 तदेतस्मै B W. 11 Thus MSS. Read भूतानि ? 12 °स्त्वेति MSS. 13 Thus C ( orig. ), परिवृꣳहति or °वृꣳहति the other MSS.; cp. I. 1. 1. 7. 14 ह्यसौ तन्नवति C. 15 °दारुः B. 16 यद्गुग्गुलु B, यत् गुग्गुलु C, यद्गुग्गुलु W. 17 °लुः B W. 18 °द्याः MSS. 19 नेदीयसि C ( sec. m. ). 20 ता MSS. 21 ता MSS. except C. 22 अथाह MSS. 23 परिग्राहं MSS. 24 प्रोक्ष° B W. 25 Thus emended;

°मृशंत्यनाभिति° MSS. 26 Conjectural reading; सदोहविर्धानं त्वछम्यचं ( sec. m. न्वं ) त्यभि B, सदोहविर्धानं त्वछम्वंन्वंत्यभि C, सदोहविर्धानं त्वछम्यन्वंत्यभि W, सदोहविर्धानं त्वछंम्यंन्वंत्यभि My.

K. IV. 5. 3 M. III. 5. 3

पुरुषो ह यज्ञः पुरुषस्तेन यज्ञो यदेनं पुरुष एव तनुते स वै तायमानो यावानेव पुरुषस्तावान्विधीयते पुरुषस्यैव विधामनु तस्माद्ध पुरुष एव यज्ञः ॥१॥ 1

तस्य शिर एव हविर्धानं वैष्णवं देवतया सोमो वै देवानाᳬ हविः सो ऽस्मिन्भवति स यदस्मिन्त्सोमो भवति तस्माद्धविर्धानं नाम ॥२॥ 2

मुखमेवास्याहवनीयः स यदाहवनीये जुह्वति यथा मुख आसिञ्चेदेवं तदयमेवास्य[1] स्तुपो यूप आग्नीध्रीयश्च मार्जालीयश्च बाहू[2] ॥३॥ 3.4

उदरमेवास्य सदस्तस्मात्सदसि भक्षयन्ति तस्माद्यत्किं चेदमश्नन्ति तदुदरे प्रतितिष्ठत्यैन्द्रं देवतयाथ यदस्मिन्विश्वे देवा असीदᳬस्तस्मात्सदो नाम त उ एवास्मिन्नप्येत एतर्हि ब्राह्मणा विश्वगोत्राः सीदन्ति ॥४॥ 5

विज्ञामानो हैवास्य धिष्ण्या इमे वै समङ्क्ता विज्ञामान एते हैवास्यैत आत्मनः पादाविवास्यामू यावमू शालायामग्नी प्रतिष्ठे एवास्य ते एष उ वै यज्ञस्तायमानः पुरुषस्यैव विधामनु विधीयते तस्माद्ध पुरुष एव यज्ञः[3] ॥५॥ 6

तद्वा उभयतोद्वारᳬ हविर्धानं भवत्युभयतोद्वारᳬ सदस्तथा शाला तस्मादयमान्तमेव संतृण्णः पुरुषः ॥६॥ 7

ते वा एते हविर्धाने प्रणिक्ते उपतिष्ठेते दक्षिणत एव दक्षिणमुत्तरत उत्तरं तद्यद्वर्षीयस्तद्दक्षिणᳬ स्यात्तथा ह्युदक्प्रवणं भवति ते समववर्त्याधिनिदधत्युपरराट्यां परिश्रृण्वन्ति[4] परिवरिष्टाच्छदिर्वा छदिःसंमितां वा भित्तीमध्यूहन्ति रराट्यां परिश्रृण्वन्ति[4] परिवरणीभिः[5] ॥७॥ 8.9

अथ प्रतिपरेत्य सावित्रं जुहोति सविता वै देवानां प्रसविता सवितृप्रसूतो यज्ञं तनवा इति युञ्जते मन उत युञ्जते धिय इति मनश्च ह वै वाक् च युक्ते देवेभ्यो यज्ञं वहतः स यदाह युञ्जते मन इति तन्मनो युनक्त्युत युञ्जते धिय इति वाग्वै धीर्वाचा हि धिया मनुष्या जीवन्त्यनूक्तेन ब्रह्मणा प्रकामोद्येन तस्मादाहोत युञ्जते धिय इति विप्रा विप्रस्य बृहतो विपश्चित इत्यनूचाना[1] वै विप्रास्तस्मादाह विप्रा 10-12

विप्रस्य बृहतो विपश्चित इति वि होत्रा दधे वयुनाविदेक इदिति वि हि होत्रा दधे यज्ञं तन्वाना मही देवस्य सवितुः परिष्टुतिरिति सविता वै देवानां प्रसविता सवितृप्रसूतो यज्ञं तनवा इति[७] ॥८॥

13a अथापरं चतुर्गृहीतमाज्यं गृहीत्वाहेहि[८] यजमानेत्यनूदेति[८] पत्नी स दक्षिणस्य हविर्धानस्य दक्षिणे वर्त्मनि जुहोति हिरण्यमुपास्य ॥९॥

15 देवा ह वै यज्ञं तन्वाना असुररक्षसानां दक्षिणत आसङ्गाद्बिभयां चक्रुस्त एतं वज्रं दक्षिणतः प्रत्युदश्रयꣳस्तेन दक्षिणतो नाष्ट्रा रक्षाꣳस्यपाबाधन्त वज्रं उ वा आज्यं तथो वा एष एतं वज्रं दक्षिणतः प्रत्युच्छ्रयति[९] तेन दक्षिणतो नाष्ट्रा रक्षाꣳस्यपबाधते तथो हास्य रक्षाꣳसि नियानं नान्ववयन्त्यथ यद्धिरण्यमुपास्य न वा अनग्नावाहुतिर्हूयते ऽग्नेरु वा एतद्रेतो यद्धिरण्यं तथास्यैषाग्निमत्याहुतिर्हुता भवति ॥१०॥

13b स जुहोतीदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूल्हमस्य पाꣳसुरे स्वाहेति ॥११॥

16a अथ पत्न्याः पाणौ सꣳस्रवमवनयति योषा वै पत्नी रेत आज्यं योषायां वै रेतः सिक्तं प्रतितिष्ठति तत्ततः प्रजायते योषायामेवैतत्पत्न्याꣳ रेतः प्रतिष्ठापयति तत्ततः प्रजनयति तेन पत्नी संतापमक्षस्य प्रत्युपानक्ति संतापाद्वा इमाः प्रजाः प्रजायन्ते यदा हि स्त्रियाश्च पुꣳसश्च संतप्यते ऽथ रेतः सिच्यते मिथुनमेवैतत्प्रजननं क्रियते ॥१२॥

13c.16b सोपानक्ति देवश्रुतौ देवेष्वाघोषतमित्येतदेवैतद्रेतः सिक्तं तद्देवेभ्यो निवेदयति तद्देवाः प्रजनयन्ति सा वै परागेवोपानक्ति पराग्घ्येव[१०] रेतः सिच्यते प्रयच्छति प्रतिप्रस्थात्रे स्रुवं च स्रुचं च ॥१३॥

14a सो ऽपरं चतुर्गृहीतमाज्यं गृह्णीते जघनेन गार्हपत्यं पत्नीं पर्याणयन्ति स उत्तरस्य हविर्धानस्य दक्षिणे वर्त्मनि जुहोति तथो एव हिरण्यमुपास्येरावती धेनुमती हि भूतꣳ सूयवसिनी मनवे दशस्या । व्यस्कभ्ना रोदसी विष्ण एते दाधर्थ पृथिवीमभितो मयूखैः स्वाहेति[११] ॥१४॥

14b अथ पत्न्या एव पाणौ सꣳस्रवमवनयति तेन पत्नी संतापमेव[१२] प्रत्यक्षस्योपानक्ति[१२] देवश्रुतौ देवेष्वाघोषतमिति सो ऽसावेव बन्धुः प्रतिपरैति पत्नी ॥१५॥

17 अथायमाह हविर्धानाभ्यां प्रवर्त्यमानाभ्यामनुब्रूहीत्यन्वाह होता वाचयत्यध्वर्युः प्राची प्रेतमध्वरं कल्पयन्ती इति यज्ञो वा अध्वरः प्राची प्रेतं यज्ञं कल्पयन्ती

त्येवैतदाहोर्ध्वं यज्ञं नयतं मा जिह्वरतमित्यूर्ध्वमिमं यज्ञं नयतं मा ह्वलयत्तमित्येवैतदाह यदाहोर्ध्वं यज्ञं नयतं मा जिह्वरतमित्यथ यद्युत्सर्जेत् ॥१६॥

अथाभिमन्त्रयेत स्वं गोष्ठमावदतं देवी दुर्ये आयुर्मा निर्वादिष्टं प्रजां मा निर्वादिष्टमित्यसुर्या वा एषा वाग्यदक्षे[13] सैषा यज्ञे वदति तामेवैतेन शमयत्येवं न्वायद्युत्सर्जेद्यद्यु[14] नोत्सर्जेन्नैतदाद्रियेत[15] ॥१७॥ 18

अथोत्तरेण परीत्योत्तरवेदेः प्रत्यङ् प्रक्रामति त्रीन्विक्रमाꣳस्तद्रमयत्यथो यत्र वेलां मन्येतात्र रमेथां वर्ष्मन्पृथिव्या इति वर्ष्म वा एतत्पृथिव्या यदाहवनीयो दिवि ह्यस्याहवनीयो भवति तस्मादाहात्र रमेथां वर्ष्मन्पृथिव्या इति[16] ॥१८॥ 19.20

अथ दक्षिणꣳ हविर्धानमुपस्तभ्नाति विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजाꣳसि । यो अस्कभायदुत्तरꣳ सधस्थं विचक्रमाणस्त्रेधोरुगायेति विष्णवे त्वेति मेथीमुपनिहन्ति ॥१९॥ 21

अथोत्तरꣳ हविर्धानं प्रतिप्रस्थाता दिवो वा विष्ण उत वा पृथिव्या महो वा विष्ण उरोरन्तरिक्षात् । उभा हि हस्ता वसुना पृणस्वा प्रयच्छ दक्षिणादोत सव्यादिति विष्णवे त्वेत्येव मेथीमुपनिहन्ति ॥२०॥ 22

स यद्वैष्णवैर्यजुर्भिर्जुहोति त्वदुपस्तभ्नाति[17] वैष्णवꣳ हि हविर्धानमथेदमुपरिष्टादभिमृशति छदिर्वा छदिःसंमितां वा भित्तीं प्र तद्विष्णुः[18] स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वेतीदꣳ हैवास्यैतत्कपालं यदिदमुपरिष्टात्स यदाहाधिक्षियन्तीत्यधि[19] ह्येतदन्येषु कपालेषु क्षियन्त्यथ[20] ये इमे हविर्धानयोश्छदिषी इमे हैवास्यैते कपाले ये इमे अभितो ऽथ यददः पश्चादध्यूहति छदिर्वा छदिःसंमितां वा भित्तीमिदꣳ हैवास्यैतत्कपालं यदिदं पश्चात् ॥२१॥ 23

अथ विष्णो रराटमसीति रराट्यामभिमृशति रराटꣳ हैवास्यैषा [21]तस्मादेषीकीत्यलोमकेव[22] भवत्यलोमकमिव[23] हीदꣳ रराटमथ[24] विष्णोः श्नप्त्रे स्थ इति परिवरण्यावभिमृशति स्रक्के हैवास्यैते तस्मादेते तालमल्यौ[25] वा वैरण्यौ वा नालम्यौ[21] वा भवतो[26] लोमशे इव हीमे[27] स्रक्के[27] ॥२२॥ 24

अथ लस्पूजनीमादाय[28] निषीव्यति विष्णोः स्यूरसीति विष्णोर्ध्रुवो ऽसीति ग्रन्थिं करोति दृढमसन्नेद्व्यषद्याता इति तत्प्रकृते कर्मणि विस्रꣳसयति तथा यजमानं 25

वाध्वर्युं वा नाग्राह्यो[29] विन्दति तत्संमितमभिमृशति वैष्णवमसीति वैष्णवं हविर्धानम् ॥२३॥ तृतीयं ब्राह्मणम् ॥

1 °धास्य MSS. 2 बाहू C. 3 The first sentence of section 5 corresponds to Mādhy. III. 6. 2. 1; cp. Kāṇva IV. 6. 2. 1. 4 परिवृण्वंति MSS. 5 We expect a dual (cp. IV. 5. 3. 22). 6 इत्यनूचाना MSS. 7 इति MSS. 8 गृहीत्वाहेहि यजमानेति MSS. (cp. IV. 2. 4. 12) 9 प्रत्युछ्र्यति MSS. 10 परा° MSS. 11 °हेति MSS. 12 संतापमेव प्रत्यक्ष° MSS. 13 वाग्यदक्षे MSS. 14 °द्यद्यू C ( sec. m. ), °द्यदू B, °द्यदु C ( pr. m. ), °द्यदा My. 15 नोत्सर्जेन्नैतदा° C. 16 इति MSS. 17 त्वदुपस्तभ्नाति MSS. After °स्तभ्नाति probably त्वद् has fallen out. 18 °ष्णु C. 19 यदाहाधि° MSS. 20 क्षीयंत्यथ My. 21 तस्माद्देषी° B W My. 22 °लोमक इव B W My C (orig.). 23 भवत्य° MSS. 24 रारा° B W. 25 ? Thus MSS. 26 भवतो MSS. 27 हीमे स्वके B W, हीमे स्वके C. 28 लस्पूजनी° MSS., but cp. IV. 6. 1. 25. 29 Thus MSS.; cp. IV. 6. 1. 25.

M. III. 5. 4

## K. IV. 5. 4

1 द्वयमभ्युपरवाः खायन्ते शिरो वा एतद्यज्ञस्य यद्धविर्धानमथ य एवेमे शिरसः कूपा येष्विमे प्राणा एतानेवास्मिन्नेतत्करोत्येतानस्मिन्नेतद्दधाति ॥१॥

2 अथ देवाश्च ह वा असुराश्चोभये प्राजापत्या अस्पर्धन्त ततो हासुरा देवेभ्यः कृत्यां वलगान्निचख्नुरुतैनानित्थं चिदभिभवेमेति ॥२॥

3 तदु वै देवा अस्पृण्वत तामेतैरुपरवैरुदकिरन्यदा वै कृत्यामुत्किरन्त्यथ वै सालसा मोघा भवति तामलसां मोघामकुर्वंस्तथो वा एष एतद्यामस्मै द्विषन्भ्रातृव्यः कृत्यां वलगान्निखनति तामेतैरुपरवैरुत्किरति तामलसां मोघां करोत्ये

तद्वयं यस्मादुपरवाः खायन्ते ॥३॥

सो ऽभ्रिमादत्ते देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। आददे नार्यसीत्युक्तो यजुषो बन्धुरथ यदाह नार्यसीति योषा ह्यभ्रिर्योषा हि नारी तस्मादाह नार्यसीति ॥४॥ 4

स दक्षिणस्य हविर्धानस्याधो ऽधः प्रउगं तत्परिलिखतीदमहꣳ रक्षसो ग्रीवा अपिकृन्तामीति वज्रो वा अभ्रिर्वज्रेणैवैतन्नाष्ट्राणाꣳ रक्षसां ग्रीवा अपिकृन्तति तान्प्रादेशसंमितान्परिलिखति प्रादेशसंमिता हीमे प्राणाः स इममेवाग्रे परिलिखत्यथेममथेममथेमम्[१] ॥५॥ 5

तान्यथापरिलिखितं खनति बृहन्नसि बृहद्रवा इत्युपस्तौत्येवैनानेतन्महयत्येव यदाह बृहन्नसि बृहद्रवा इति बृहतीमिन्द्राय वाचं वदेतीन्द्रो यज्ञस्य देवता वैष्णवा वा एते यदुपरवास्तथास्यैते सेन्द्रा भवन्ति तस्मादाह बृहतीमिन्द्राय वाचं वदेति रक्षोहणं वलगहनं वैष्णवीमिति रक्षसाꣳ ह्येते वलगानां वधाय खायन्ते तस्मादाह रक्षोहणं वलगहनामिति वैष्णवीमिति वैष्णव्यु ह्येषा वाग्या हविर्धाने तस्मादाह वैष्णवीमिति ॥६॥ 8.9

इदमहं तं वलगमुद्वपामि यं नो निष्ट्यो यममात्यो निचखानेति निष्ट्यो वा वा अमात्यो वा कृत्यां वलगान्निखनति तामेवैतदलसां मोघां करोति ॥७॥ 10

इदमहं तं वलगमुद्वपामि यं नः समानो यमसमानो निचखानेति समानो वा वा असमानो वा कृत्यां वलगान्निखनति तामेवैतदलसां मोघां करोति ॥८॥ 11

इदमहं तं वलगमुद्वपामि यं नः सबन्धुर्यमसबन्धुर्निचखानेति सबन्धुर्वा वा असबन्धुर्वा कृत्यां वलगान्निखनति तामेवैतदलसां मोघां करोति ॥९॥ 12

इदमहं तं वलगमुद्वपामि यं नः सजातो यमसजातो निचखानेति सजातो वा वा असजातो वा कृत्यां वलगान्निखनति तामेवैतदलसां मोघां करोति ॥१०॥ 13.14

उत्कृत्यां किरामीत्यन्तत उत्किरति तत्सर्वामेवैतत्कृत्यामुत्किरति स यावद्बाहुनान्वाप्नुयात्तावत्खनेत्तावान्वन्तो[१] ऽन्तादेवैतत्कृत्यामुत्किरत्यन्तात्कृत्यां मोहयति तान्परोक्षणया[३] संतृणत्ति तस्माद्धिमे प्राणाः परोक्षणया[३] संतृण्णास्तस्मात्परः संविद्रते ॥११॥

तान्यथाखातमवमर्शयति स्वरालसि सपत्नहा सत्रराडस्यभिमातिहा जन- 15

रालसि रक्षोहा सर्वरालस्यमित्रहेत्युप चैवैनानेतत्स्तौत्याशिषश्चाशास्ते स्वरालसि तदुपस्तौति सपत्नहेति तदाशिषमाशास्त एवमेव सर्वेषु ॥१२॥

16.17a अथ संमृशेते स यः पूर्वयोर्दक्षिणस्तमध्वर्युर्यो ऽपरयोरुत्तरस्तं यजमानः सो ऽध्वर्युराह यजमान किमत्रेति भद्रमिति तन्नौ सहेत्युपाꣳशु जपत्यथ यो ऽपरयोर्दक्षिणस्तमध्वर्युर्यः पूर्वयोरुत्तरस्तं यजमानः स यजमान आहाध्वर्यो किमत्रेति भद्रमिति तन्म इत्याह ॥१३॥

17b तौ यदेवꣳ संमृशेते इमानेवैतत्प्राणान्व्यतिषजत इमान्प्राणान्त्सयुजः कुरुतस्तस्माद्धिमे प्राणा व्यतिषक्तास्तस्मात्सयुजो ऽथ यदाह भद्रमिति कल्याणी ह्येषा मानुषी वाग्यद्भद्रमिति तामेवैतद्यज्ञे वदतस्तां यज्ञे ऽवकल्पयतो ऽथ प्रोक्षति समान एव प्रोक्षणस्य बन्धुर्मध्यमेवैतत्करोति यत्किं च प्रोक्षति ॥१४॥

18 स प्रोक्षति रक्षोहणो वलगहनः प्रोक्षामि वैष्णवानिति रक्षसाꣳ ह्येते वलगानां वधाय खायन्ते तस्मादाह रक्षोहणो वलगहन इति प्रोक्षामि वैष्णवानिति वैष्णवा ह्येते यदुपरवाः ॥१५॥

19 अथ याः परिशिष्टा आपो भवन्ति ता अवनयति रक्षोहणो वलगहनो ऽवनयामि वैष्णवानित्येष्वेवैतच्छिद्रेष्वपो दधाति ता इमा एषु छिद्रेष्वापो हिता अन्नमु वा आपो ऽन्नमु वै प्राण एष्वेवैतच्छिद्रेषु प्राणान्दधाति त इम एषु छिद्रेषु प्राणा हिताः ॥१६॥

20.21 अथोदगग्राणि च प्रागग्राणि च बर्हीꣳष्यवस्तृणाति रक्षोहणो वलगहनो ऽवस्तृणामि वैष्णवानित्येष्वेवैतच्छिद्रेषु लोमानि दधाति तानीमान्येषु छिद्रेषु लोमानि हितानि तस्माद्धिमे प्राणा अनुच्छोषुका अथ प्रागग्राणि बर्हीꣳषि प्रस्तृणाति केशा हैवास्यैते ॥१७॥

22-24 अथाधिषवणे उपदधाति रक्षोहणौ वलगहना उपदधामि वैष्णवी इति हनू हैवास्यैते तस्मादेते संबद्धान्ते इव भवतः संबद्धान्ते इव हीमे हनू ॥१८॥

अथ पर्यूहति रक्षोहणौ वलगहनौ पर्यूहामि वैष्णवी इति दृल्हे असतो नेदपस्रꣳसैते इत्यथ वैष्णवमसीति रोहितं चर्म परिकृत्तं न्यस्यति जिह्वा हैवास्यैषा स यद्रोहितं भवति लोहिनीव हीयं जिह्वाथ संमुखान्ग्राव्णः करोति दन्ता हैवास्य ग्रावाणः स यद्ग्रावभिरभिषुणोति यथा दद्भिः प्सायादेवं तत्तदेतद्यज्ञस्य शिरः

समस्कारिषुः ॥१९॥ चतुर्थं ब्राह्मणम् ॥ पञ्चमो ऽध्यायः ॥

1 °थेमं । अथेमथेमं B C. 2 Thus emended, °त्तावान्वांतो B C W, °त्तावान्वातो My. 3 Thus MSS. Read परो ऽक्षणया ? 4 °श्वाशासते B W. 5 भद्रमेति B W. 6 कल्याणी C. 7 भवतः MSS. 8 परिकृत्तं B W.

K. IV. 6. 1 M. III. 6. 1

उदरꣳ ह वा अस्य सदस्तस्मात्सदसि भक्षयन्ति तस्माद्यत्किं चेदमश्नन्ति तदुदरे प्रतितिष्ठत्यैन्द्रं देवतयाथ यदस्मिन्विश्वे देवा असीदꣳस्तस्मात्सदो नाम त उ एवास्मिन्नप्येत एतर्हि ब्राह्मणा विश्वगोत्राः सीदन्ति ॥१॥ 1

तदौदुम्बर्या[1] मिनोत्यन्नं वा ऊर्गुदुम्बरो ऽन्नमेवैतदूर्जं मध्यतो यज्ञस्य दधाति तस्मादौदुम्बर्या[2] मिनोति तां यजमानसंमितां परिवासयति यजमानो हि यज्ञो यज्ञसंमितामेवैनामेतत्परिवासयति ॥२॥ 2

स यो ऽसौ जघनार्धे शङ्कुर्भवति ततः प्राङ् प्रक्रामति षड्विक्रमान्दक्षिणा सप्तमꣳ संपदः कामाय यत्र वै वाचः प्रजातानि छन्दाꣳसि सप्तपदा वै शक्वरी परार्ध्या छन्दसां तस्मादेतानि सप्त पदानि प्रक्रामति ॥३॥ 3

सो ऽभ्रिमादत्ते देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । आददे नार्यसीत्युक्तो यजुषो बन्धुरथ यदाह नार्यसीति योषा ह्यभ्रिर्योषा हि नारी तस्मादाह नार्यसीति ॥४॥ 4

तयावटं परिलिखतीदमहꣳ रक्षसो ग्रीवा अपिकृन्तामीति वज्रो वा अभ्रिर्वज्रेणैवैतन्नाष्ट्राणाꣳ रक्षसां ग्रीवा अपिकृन्तति ॥५॥ 5

अथ प्राञ्चमुत्करमुत्किरति तत्प्राचीमौदुम्बरीं निदधात्यथ बर्हीꣳषि यावन्मात्राणीवाथ यवमतीः प्रोक्षणीः कुरुते ॥६॥ 6

स यद्यवमत्यो भवन्त्यपां वा ओषधयो रसस्तस्मादाप आसक्तयः पीता न[1] धिन्वन्[1] धिन्वन्त्योषधीनामु वा आपो रसस्तस्मादोषधय आसक्तयः खादिता न धिन्वन्ति यदैवोभयैः सꣳसृजन्त्यथैव धिन्वन्ति तत्सरसाभिः प्रोक्षणीति स यद्यवैरेवैतत्करोति ॥७॥ 7

8.9 देवाश्च ह वा असुराश्चोभये प्राजापत्या अस्पर्धन्त ततो ह सर्वा अन्या ओषधयो यवेभ्यो ऽसुरानुपावव्रतुर्यवा हैव देवानामासुस्ते देवा यवैरेवासुराणां सपत्नानामोषधीरन्नाद्यमयुवत तान्त्सर्वस्मादयुवत तस्माद्यवा नाम यवैरेवा-युवत ॥८॥

10 ते ह देवा ऊचुर्हन्त यदन्यासामोषधीनां वीर्यमिति तद्यवेषु दधामेति तद्यदन्यासामोषधीनां वीर्यमासीत्तद्यवेष्वदधुस्तस्माद्यत्रान्या ओषधयो म्लायन्ति तदेते मोदमाना इव वर्धन्त एतेषु हि वीर्यमदधुस्तथो वा एष एतद्यवैरेव द्विषतः सपत्नस्यौषधीरन्नाद्यं युते तान्त्सर्वस्माद्युते तस्माद्यवमत्यो भवन्ति ॥९॥

11 स आवपति यवो ऽसि यवयास्मद्द्वेषो यवयारातीरित्येतस्यैषा यजुषो बन्धुतार्थ प्रोक्षति स समान एव प्रोक्षणस्य बन्धुर्मेध्यमेवैतत्करोति यत्किं च प्रोक्षति ॥१०॥

12 स प्रोक्षति दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेत्यन्नं वा ऊर्गुदुम्बर इमानेवैतल्लोकानूर्जा रसेन भाजयत्येष्वेव लोकेषूर्जꣳ रसं दधाति ॥११॥

13 अथ याः परिशिष्टाः प्रोक्षण्यो भवन्ति ता अवटे ऽवनयति शुन्धन्तां लोकाः पितृषदना इति पितृदेवत्य इव वा अवटो मेध्यमेवैनमेतत्करोत्यपितृदेवत्यम् ॥१२॥

14 अथोदगग्राणि च प्रागग्राणि च बर्हीꣳष्यवस्तृणाति पितृषदनमसीति पितृदेवत्यमिव वा अस्या एतद्भवति यन्निखातꣳ सा यथौषधिष्वेव मिता स्यादनिखातैवमेतदोषधिष्वेव मिता भवत्ययतो वै स्याद्यदनिखाता स्यात्तथाह यता भवति तथो अपितृदेवत्या भवति ॥१३॥

15 अथोच्छ्रयत्युद्दिवꣳ स्तभानान्तरिक्षं पृण दृꣳहस्व पृथिव्यामितीमानेवैतल्लोकानूर्जा रसेन भाजयत्येष्वेव लोकेषूर्जꣳ रसं दधाति ॥१४॥

16 अथाभ्यवहरति द्युतानस्त्वा मारुतो मिनोत्वित्ययं वाव द्युतानो मारुतो यो ऽयं पवते तदेनामेष मिनोति मित्रावरुणौ ध्रुवेण धर्मणेति प्राणोदानौ वै मित्रावरुणौ तदेनां प्राणोदानाभ्यामेव मिनोति ॥१५॥

17 अथ पर्यूहति ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्यूहामीति बह्वी वा आशीर्यजुःषु ते अस्मा एते आशिषावाशास्ते यद्ब्रह्म च क्षत्रं च रायस्पोषवनि

पर्यूहामीति भूमा[10] वै रायस्पोषो भूमानमेवास्मा एतदाशास्ते ॥१६॥

18 अथ पर्यूषति ब्रह्म दृꣳह क्षत्रं दृꣳहायुर्दृꣳह प्रजां दृꣳहेत्याशिषमेवैतदाशास्ते तत्समंभूमि पर्यूषणꣳ[11] स्यात्तथागर्तमिद्भवति[12] गर्तस्य वा उपरिभूमि[13] पर्यूषणं[14] भवत्यथैवं देवत्रा तस्मात्समंभूमि पर्यूषणꣳ स्यात् ॥१७॥

19 अथ तत्राप उपनिनयति यदेवास्याः खनन्तो वा पर्यूषन्तो वा वि वा लिशन्ति क्षिण्वन्ति वापो[15] वै भेषजꣳ शान्तिस्तदद्भिः शान्त्या शमयति तदद्भिः संदधाति ॥१८॥

20 अथाभिमृशति ध्रुवासीति ध्रुवा ह्येषा ध्रुवो ऽस्मिन्यजमान आयतने भूयादिति यस्मिन्वा[16] कामे[16] कामयेत स हास्मै कामः समृध्यते ॥१९॥

21 अथ विष्टपे ऽभिजुहोति घृतेन द्यावापृथिवी पूर्येथामितीमे एवैतद्द्यावापृथिव्या[17] ऊर्जा रसेन भाजयत्यनयोरेव द्यावापृथिव्योरूर्जꣳ रसं दधाति तत्संततमवनयेत्तथा संततवर्ष्यनुच्छोषुकः[18] पर्जन्यो भवति तस्मात्संततमवनयेत् ॥२०॥

22 अथ छदिराहरन्ति तदभिमृशतीन्द्रस्य छदिरसीत्यैन्द्रꣳ हि सदो विश्वजनस्य छायेति वैश्वदेवꣳ हि सदः[19] ॥२१॥

अथाभितश्छदिषी उपदधाति छदिःसंमिते वा भित्या उत्तराणि त्रीणि पराणि त्रीणि तन्नव तत्त्रिवृत्त्रिवृद्धि यज्ञः ॥२२॥

23 तद्वा एतदुदग्वꣳशं मिनोत्येतद्वै[20] निष्केवल्यं देवानां यद्धविर्धानं तस्मात्तत्प्राग्वꣳशꣳ सत्प्राग्द्वारं तस्मात्तत्र नाश्नन्ति न भक्षयन्ति यो ह तत्राश्नीयाद्वा भक्षयेद्वा शिरो हास्य विपतेदथैतन्मिश्रं[21] यदाग्नीध्रं च सदश्च तस्मात्तत्राश्नन्ति त्वद्भक्षयन्ति त्वन्मिश्रꣳ ह्येतत्स यदहोदग्वꣳशं तदस्य मानुषं यदुदग्वꣳशꣳ सत्प्राग्द्वारं तदस्य देवत्रा तस्मादेतदुदग्वꣳशं मिनोति ॥२३॥

24 अथ परिवृणोति परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः । वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टय इतीन्द्रो वै गिर्वा विशो गिर्वाणः[22] क्षत्रमेवैतद्विशा[23] परिवृणोति तदिदं क्षत्रं विशा परिवृतम् ॥२४॥

25 अथ लस्पूजनीमादाय निषीव्यतीन्द्रस्य स्यूरसीतीन्द्रस्य ध्रुवो ऽसीति तथा ग्रन्थिं करोति इल्हमसन्नेष्यवपद्याता इति तत्प्रकृते कर्मणि विस्रꣳसयति तथा यजमानं वाध्वर्युं वा नाम्राहो[24] विन्दति तत्संमितमभिमृशत्यैन्द्रमसीत्यैन्द्रꣳ हि सदः[25] ॥२५॥

26 अथ हविर्धानयोरपालम्बं[26] समन्वीक्ष्य तदाग्नीध्रं मिनोत्यर्धमन्तर्वे बहिर्वेद्यथो यावन्मात्रमिवैव बाहिर्वेद्यथ सर्वमेवान्तर्वेद्यथो सर्वमेवान्तर्वेदि तस्मि मभिमृशति वैश्वदेवमसीतीदं नु यदेतस्मिन्हविष्येतासु वसतीवरीष्वेतां रात्रिं उपवसन्ति यैषोपवसथ्या[27] तस्मान्न्वेव वैश्वदेवम् ॥२६॥

27-29 देवा उ ह वै यज्ञं तन्वाना असुररक्षसानां दक्षिणत आसङ्गाद्बिभ्य चक्रुस्तान्हासुररक्षसानि दक्षिणत आसेदुस्तान्ह सदसो जिग्युस्तान्त्सदसो जित्वै न्धिष्ण्यानुद्वापयां चक्रुस्तस्मादेते न ज्वलन्ति यथा ह वा आहवनीयो वा गार्हप वाग्नीध्रो वा ज्वलेदेवं ह स्म वा एते पुरा ज्वलन्ति त[28] आग्नीध्रं समनुपेदुस् हाप्याग्नीध्रस्यार्धं जिग्युस्ते ऽर्धादेतद्विश्वे[30] देवा अमृतत्वमपाजयंस्ते ऽपजित्यै न्धिष्ण्यान्पुनः प्रतिसमैन्धत स[31] यथा[32] पुनः प्रत्यवस्येदेवमेतत्तस्मादप्येतर्ह्येतान्त्स वनाय सवनाय समिन्धत एवं ह्येनान्देवाः समैन्धत तदेतदनार्तं यदाग्नीध्रं तस्मा दीक्षितानामबल्यं निगच्छेदाग्नीध्रमेनं नयतेति ब्रूयुस्तदनार्तं तन्नारिष्यतीति न है च्छंति[33] तस्माद्य एव समृद्धः स एतां होत्रां कुर्याद्यो वै ज्ञातो ऽनूचानः स समृद्धस्तस्मै प्रथमाय दक्षिणां नयामीति[34] स यदतो विश्वे देवा अमृतत्वमपाजयं स्तस्माद्वैश्वदेवं तस्माद्वेवैतत्संमितमभिमृशति वैश्वदेवमसीति ॥२७॥ प्रथमं ब्राह्मणम्।

1 उदर B W. 2 Thus MSS. Read तदौदुम्बरीं, तस्मादौदुम्बरीं ? 3 नि MSS. 4 सर्वान्या MSS. 5 यवया° MSS. 6 बंधुताथ MSS. 7 °वैतंलोका° MSS. 8 पृथि° B W. 9 ते अस्मा B W. 10 भूमो B W. 11 पर्यृषणं C. 12 °न्नवति MSS. 13 उपरि° MSS. 14 पर्यृषणं C. 15 वापो B W. 16 Thus MSS. ! 17 °पृथिवी MSS. 18 Thus emended, संततवर्ष्यन्क्षोषुकः B W, संततवर्षनूक्षोषुकः C, संततवर्ष्यनूक्षोषुकः My, cp. IV. 5. 4. 17. 19 सदः MSS. 20 मिनो° B W. 21 °थैतंमिश्रं B W C. 22 Thus MSS. Read गिरः ? 23 क्षत्रमेवैतद्विशा C, क्षत्रमेवैतद्विशा B W. 24 Thus MSS., cp. IV.

5. 3. 23. 25 सदः MSS. 26 °योरपालंबं॰ B W. 27 Thus accented MSS. Read °सध्या ? (cp. III. 2. 7. 4). 28 ता MSS. 29 समनपेदुस्ते B W, समनुपेदुस्ते C, समनयेदुस्ते My. 30 Thus emended, ह्वानेतद्विश्वे B W, ह्वानेतद्विश्वे C, धानेतद्विश्वे My. 31 सयथा B W. 32 Thus hesitatingly emended, हैवस्र्यति MSS. 33 Thus MSS.

K. IV. 6. 2 M. III. 6. 2

विज़ामानो ह वा अस्य धिष्ण्या इमे वै समक्का विज़ामान एते हैवास्यैत आत्मनो ऽथ दिवि ह वै सोम आसाथेह देवास्ते देवा ऐच्छन्ना नः सोमो गच्छेदिति तेनागतेनेह यजेमहीति तत एते माये असृजन्त सुपर्णीं च कद्रूं च वाग्वै सुपर्णीयं कद्रूस्ताभ्यां॰ ह समदं चक्रुस्ते ह समह्विते ऋतीयमाने[1] ऊचतुर्यतरा नौ दवीयः परापश्यादिति सा नावात्मानं जयादिति ॥१॥ 1-3

सा होवाच कद्रूः सुपर्णीं परापश्येति सा होवाच सुपर्ण्यस्य सलिलस्य परस्तादित्यश्वः श्वेतः स्थाणौ सेवते तमहं पश्यामीत्यथ होवाच कद्रूस्तस्याश्वस्य वालो न्यषञ्जीति[2] तममुं वात आधूनोति तमहं पश्यामीति सा यदुवाचास्य सलिलस्य परस्तादिति वेदिं॰ हैव तदुवाच यावती हि वेदिस्तावती पृथिव्यश्वः श्वेतः स्थाणौ सेवत इति यूप स्थाणुरग्निरश्वः श्वेतस्तद्ध तदुवाच तस्याश्वस्य वालो न्यषञ्जीति[2] तममुं वात आधूनोति तमहं पश्यामीति यत्कद्रूरुवाच रशनां॰ हैव तदुवाच ॥२॥ 4.5

सा होवाच सुपर्णी कद्रूं त्वं वै किल नावजैषीरिति[3] प्रेहि गमिष्यावः प्रेहि वेदिष्याव इति सा होवाच त्वमेव गच्छेति त्वमेव न आख्यास्यसीति तथेति सा ह जगामेद्यथैव कद्रूरुवाच तथा[4] सा ह पुनराजगाम ब्रां॰ ह्यभ्युवाद त्वमजैषी३-रहा३मिति[5] सा होवाच त्वमेवेति ते यत्तत्र ते समूदाते तदिदं॰ सौपर्णीकाद्रवमि-त्याख्यानमाख्यायते[6] ॥३॥ 6.7

सा होवाच कद्रूः सुपर्णीमात्मानं वै त्वाजैषमिति[7] सो ऽसौ दिवि सोम इति होवाच तं देवेभ्य आहर तेनात्मानं मृत्योर्निष्क्रीणीष्वेति तथेति सा ह छन्दां॰सि 8.9

ससृजे वाग्वै सुपर्णी वाचो वै छन्दाꣳसि प्रजातानि तत एभ्यो[८] गायत्री सोममच्छा पतत्स हैष सोमो हिरण्मय्योर्ह[९] कुश्योरवहित आस ते ह स्म क्षुरपवी निमेषꣳ ह स्माभिसंधत्तो दीक्षातपसी[१०] हैव ते आसतुः ॥४॥

10-12 तमु हैते गन्धर्वा गोपायां चक्रुर्य एते धिष्ण्या या एता होत्राः सो गायत्री तयोः कुश्योरन्यतरामाचिच्छेद तामाजहार[११] सा दीक्षा तया देवा अदीक्षन्ताथापरमुत्पपात सेतरां कुशीमाचिच्छेद तामाजहार तत्तपस्तेन देवास्तप उपायन्नुपसदो[१२] ऽथापरमुत्पपात सा राजानं खदिरेणाचखाद तस्मात्खदिरो नाम यदेनं खिदत्तस्मात्खादिरो[१३] यूपो भवति खादिरः[१४] स्फ्यो ऽच्छावाकस्य हैनं गोपा आददे सो ऽहीयत ॥५॥

13-16 तमिन्द्राग्नी अनुसमतनुतां प्रजानां प्रजातये तस्मादेष ऐन्द्राग्नो ऽच्छावाकस्तस्माद् दीक्षिता राजानꣳ सुगुप्तं गोपायेयुर्यस्य ह गोपनायामपहरन्ति हीयते ह स तस्मादाचार्यं ब्रह्मचारिणः सुगुप्तं गोपायेयुर्यद्वा अस्य गृहान्पशून्गोपायन्ति तदाचार्यं गोपायन्ति यस्य ह गोपनायामपहरन्ति हीयते ह स तमाजहार तं सुपर्णी देवेभ्यः प्रददौ तेनात्मानं मृत्योर्निश्चिक्रिये तस्मादाहुः पुण्यलोक ईजान इत्यृणꣳ ह वै जायमान एव मनुष्यो मृत्यवे जायते स यद्यजते तदात्मानं मृत्योर्निष्क्रीणीते तस्मादाहुः पुण्यलोक ईजान इति ॥६॥

17.18 तमु हैते गन्धर्वा अन्वाजग्मुर्य एते धिष्ण्या या एता होत्रास्ते होचुर्वे नो यज्ञ भजतेत्यप्येव नो यज्ञे[१६] ऽस्त्विति ते होचुः किमस्माकं ततः स्यादिति ते होचुर्गोप्तार एव वः स्यामेति यथैवैनममुत्राजूगुपामेत्येवमेवैनं[१७] युष्मभ्यमिह गोप्स्याम इति ॥७॥

19 तथेति होचुरेते वः सोमक्रयणा इति तस्मात्सोमक्रयणानेतेभ्यो ऽनुदिशति स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानो । एते वः सोमक्रयणास्तान्रक्षध्वं मा वो दभन्नित्येतेषाꣳ ह्येते भाजनेनैतानि ह्येतेषां नामानि ॥८॥

अथेति होचुरपहतो वै युष्मत्सोमपीथ इति ते[१८] न[१९] सोमाहुतिमर्हथ तृतीयसवन एव वो घृत्याहुतिरश्नवातै[२०] न सौम्यापहतो हि युष्मत्सोमपीथ इति स यदद:[२१] शालाकैर्धिष्ण्यान्व्याघारयति यदेनाꣳस्तृतीयसवने घृत्याहुतिरश्नुते[२२] न सौम्यापहतो ह्येतेभ्यः सोमपीथः ॥९॥

अथ यदाहवनीये होष्यन्तीति तद्वो ऽविष्यतीति[23] तद्वैनानवति यदाहव- 20
नीये जुह्वत्यथ यद्ध उपर्युपरि सोमं बिभ्रतः संचरिष्यन्तीति तद्वो ऽविष्यतीति
तद्वैनानवति यदेनानुपर्युपरि सोमं बिभ्रतः संचरन्ति तस्मादेतान्प्रत्यङ्ङध्वर्युर्नाति-
क्रामेदध्वर्युर्वै सोमं बिभर्ति त~ हैते ऽयात्तेन प्रत्यासते स यद्ध प्रत्यङ्ङतिक्रामेद्यात्तँ
हैवामापद्येत त~ ह्यग्निर्वाभिदहेदयं[24] वा देवो ऽभिमन्येत यो ऽयं पशूनामीष्टे तस्मा-
ध्रस्य शालायामर्थः[25] स्यादग्रेणैवाग्नीध्रमेतेन संचरेदेषा हि यज्ञस्य द्वाः ॥१०॥

ते वा एते[26] गुप्तये[26] परि निकीर्यन्त आहवनीयः पुरस्तान्मार्जालीयो दक्षि- 21
णत आग्नीध्रीय उत्तरतो ऽथ य इमे सदसि ते पश्चादथैतं मध्ये गोपायन्ति ॥११॥

त उ हैत एव दध्रिरे ऽर्धान्न उपकिरन्त्वर्धाननुदिशन्त्विति तथामुष्माल्लो- 22.23
कान्न जिह्मा एष्यामो यत आगता दिवः स्म[27] इति[27] तद्यानह न उपकरिष्यन्तीति
तैरिह प्रत्यक्षं भविष्यामो ऽथ यान्नो ऽनुदेक्ष्यन्तीति[28] तैर्वमुष्माल्लोकान्न जिह्मा एष्यामो
यत आगता दिवः स्म[27] इति[27] तद्यानहोपकिरन्ति तैरिह प्रत्यक्षमथ याननुदिशन्ति
तैर्वमुष्माल्लोकान्न जिह्मा यन्ति यत आगता दिवस्तस्मादर्धानुपकिरन्त्यर्धाननु-
दिशन्ति ॥१२॥

त उ हैत एव दध्रिरे न वा एभिर्नामभिररात्स्मेति येषां नः सोममुपाहार्षु- 24
र्द्वितीयानि नामानि करवामहा[29] इति ते द्वितीयानि नामान्यकुर्वत यथैतद्विभूरसि
प्रवाहण इति सर्वे द्विनामानस्ते[30] ऽराध्नुवन्यानपहतसोमपीथान्त्सत[31] एतद्देवा यज्ञ
आभजँस्तस्माद्ब्राह्मणेनानृध्यमाने द्वितीयं नाम कर्तव्यँ राध्नोति हैव स य एवं
विद्वान्द्वितीयं नाम कुरुते ॥१३॥

स यदाहवनीये जुह्वति तद्देवेषु जुह्वति तस्माद्देवाः सन्ति यत्सदसि भक्ष- 25.26
यन्ति तन्मनुष्येषु जुह्वति तस्मान्मनुष्याः सन्त्यथ यन्नाराशँसान्त्सादयन्ति हविर्धा-
नयोस्तत्पितृषु जुह्वति तस्मात्पितरः सन्ति मनुष्याननु पशवो देवाननु वयाँस्यो-
षधयो वनस्पतयो यदिदं किं चान्यदेवम्विमाः प्रजा यज्ञ आभजति या इमा अपरा-
भूताः सैषा संपाहवनीये देवाः सदसि मनुष्या हविर्धानयोः पितरस्तद्ध स्मैतत्पुरा
दृश्यमाना एव संपिबन्ति तद्धेतर्ह्यदृश्यमानाः सो एवैषा संपा या सा तर्ह्यास[32] ॥१४॥

द्वितीयं ब्राह्मणम् ॥

1 ऋतीयमाने C. 2 न्यषंजीति C. 3 °जैषीदिति

MSS. Are the words त्वं वै किल नावजैषीरिति an

interpolation ? 4 Thus MSS. Read तथास ? 5 Thus accented MSS.; त्वमजैषी° the Mādhy. 6 Thus C My, सौपर्णका° B W. 7 °षमिति MSS. 8 एभ्यो B W. 9 ह is superfluous ! 10 Thus emended, °तपसोः B, °तपसो C W My. 11 तामाजहार B W. 12 उपसदो B W. 13 °स्खदिरो B W. 14 °र B W. 15 होचुरैव MSS. 16 यज्ञो B W. 17 °भ्राजगूपा° B W, °भ्राजुगुपा° C My. 18 तेन MSS. 19 सोमाहुतिर्मथा C. 20 °श्नुवातै B C W. 21 Viz. V. 4. 4. 4. 22 °तिरश्नुते B W. 23 विहतीति B. 24 Thus accented MSS. Read °वांभिदहे° ? 25 °मर्थं B W My, °मर्थाः C. 26 एते गुप्तये B W. 27 Thus emended, स्मह्रीति MSS. 28 नोदेष्यंतीति MSS. 29 करवामहा MSS. ( as if, like the Mādhyandina rec., हन्त preceded ). 30 °नामानस्ते MSS. 31 °सत MSS. 32 तद्यांसः B W C My.

M. III. 6. 3

K. IV. 6. 3

1 स वै वैसर्जिनानि जुहोति स यद्वैसर्जिनानि जुहोति सर्वं ह वाव दीक्षमाणोऽभि दीक्षते यज्ञं ह्यभि दीक्षते यज्ञं हि संभरति यज्ञं ह्येवेदमनु सर्वं तं यज्ञं संभ्रियमाणमिदं सर्वमनुसमैति यदिदं किं च स वा अयं यज्ञः[1] संतिष्ठमानः[1] पराङेव संतिष्ठते स यद्वैतानि न जुहुयात्पराग्घैवेदं[2] सर्वं स्यात् ॥१॥

2.3 स यद्वैसर्जिनानि जुहोति यावानेव यज्ञो यावत्यस्य मात्रा तावन्तं[3] यज्ञं संभृत्याथेदं यथायतनं यथाप्रतिष्ठं विसृजति स यद्विसृजति तस्माद्वैसर्जिनानि नाम तदपिव्रता[4] अन्वारभन्त[4] इदं प्रत्यक्षं विसृजत इति वदन्तस्तदु यदि कामयेतान्वारभेत यद्यु कामयेतापि नैवाद्रियेत स्वयं ह्येव तद्विसृजते यदपि परोक्षाद्यज्ञ[5] उ वै विष्णुः स इमां देवेभ्यो विक्रान्तिं विचक्रम इमामेव प्रथमेन पदेन पस्पाराथेदमन्तरिक्षं दिवं तृतीयेन तामु वा एष एतस्मै यज्ञो विष्णुर्विक्रान्तिं विक्रमते ॥२॥

अथ खल्वभ्यादधातीध्मं चात्वालादुपयमनीरुपकल्पयत्युपस्थे यजमानो राजानमादत्ते ऽनूदैति पत्नी सꣳसादयन्ति वायव्यानि द्रोणकलशं[6] ग्राव्णो दशापवित्रं[7] यदेतमभितो भवति तदधिश्रयत्याज्यꣳ संमृजन्ति स्रुच उद्वास्याज्यमुत्पूय चतुर्जुह्वां गृह्णाति चतुरुपभृति पञ्चगृहीतं पृषदाज्यम् ॥३॥ 4a.6b

स गृह्णाति पृषदाज्यं ज्योतिरसि विश्वरूपं विश्वेषां देवानाꣳ समिदिति विश्वरूपा ह्हि पशवः पशवो हि पृषदाज्यं तस्मादाह विश्वरूपमित्यथ सोमक्रयण्याः पदं जघनेन गार्हपत्यं परि णिवपति पदा वै प्रतितिष्ठति प्रतिष्ठितय[8] एव ॥४॥ 6c.4b

तद्धैके चतुर्धा कुर्वन्ति यत्राद आहवनीयं प्रणयन्ति तासूपयमनीषु चतुर्भागमावपन्त्यक्षं चतुर्भागेणोपाञ्जते[9] तासूपयमनीषु चतुर्भागं जघनेन गार्हपत्यं चतुर्भागं चतुष्पदा[10] वै पशव इति तच्चतुर्धा प्रतितिष्ठतीति वदन्तस्तदु तथा न कुर्याज्जघनेनैव गार्हपत्यꣳ सार्धमेव परि णिवपेत्पदा वै प्रतितिष्ठति प्रतिष्ठितय[8] एव तस्मात्सार्धमेव परि णिवपेत् ॥५॥ 5.6a

अथ प्रदीप्त इध्मे जुहोत्यन्वारब्धेषु त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्यो ऽन्यकृतेभ्यः। उरु यन्तासि वरूथꣳ स्वाहेत्येतयास्मिल्लोके प्रतितिष्ठत्येतयेमं[11] लोकꣳ स्पृणुते ॥६॥ 6c.7

अथाप्तवे द्वितीयामाहुतिं जुहोत्येष उ हैवैतत्सोम उवाचाप्तुं मा कृत्वातिनयतानुपलभ्यमिति[12] कनीयाꣳसं वधात्कृत्वेति स्तोको[13] वा अप्तुस्तदेनमप्तुं करोत्यनुपलभ्यं कनीयाꣳसं बधात्तस्मादाप्तवे द्वितीयामाहुतिं जुहोति जुषाणो अप्तुराज्यस्य वेतु स्वाहेत्यथोद्यच्छन्तीध्ममुपयच्छन्त्युपयमनीः समाददते यदेतमभितो भवति ॥७॥ 8.9a

अथाह सोमाय प्रणीयमानायानुब्रूहीत्यग्नये प्रह्रियमाणायेति वा सोमायेति त्वेव ब्रूयात्स एष यज्ञ ऊर्ध्वं एत्येतत्स्वर्गं लोकं यजमानो वै यज्ञो यजमान एवैतदेत्यन्वाह होता वाचयत्यध्वर्युरग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेमेत्यग्निमेवास्यैतत्पुरस्तात्पुरोगां करोति तथो हास्याग्निरेव पुरस्तान्नाष्ट्रा रक्षाꣳस्यपघ्नन्प्रभिन्दन्नेत्यथैतमभये ऽनाष्ट्रे निवाते हरति ॥८॥ 9b.10c.11

अथाग्नीध्रे समाधाय जुहोत्ययं नो अग्निर्वरिवस्कृणोत्वयं मृधः पुर एतु प्रभिन्दन्। अयं वाजाञ्जयतु वाजसाता अयꣳ शत्रूञ्जयतु जर्हृषाणः स्वाहेत्येतयास्मिन्नन्त- 12.13

रिक्षलोके[१४] प्रतितिष्ठत्येतयैतं लोकं स्पृणुते तत्संसादयन्ति वायव्यानि प्रोक्ष कलशं ग्राव्णो दशापवित्रे[१५] ॥९॥

14.15 अथाहवनीयमित्वा प्रोक्षणीरादायेध्ममेवाग्रे प्रोक्षत्यथ वेदिमथास्मै बर्हिः प्रयच्छन्ति तत्प्रोक्ष्योपनिनीयैतमाश्ववालं प्रस्तरं गृह्णात्येकत्रेदेव बर्हिः[१६] स्तीर्त्वा परिधीन्परिधायैतान्कार्ष्मर्यमयान्त्समिधावभ्याधाय जुहोत्युरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्र प्र यज्ञपतिं तिर स्वाहेत्येतयामुष्मिन्स्वर्गे लोके प्रतितिष्ठत्येतयैतं स्वर्गं लोकं स्पृणुते ॥१०॥

16 स यद्वैष्णव्या जुहोत्यप्तुं वा एनमिदं कृत्वात्यनैषीदनुपलभ्यं कनीयांसं वधात्कृत्वा तदेनमेतदभये ऽनाष्ट्रे स्वर्गे लोके कृत्स्नं करोति यावान्यज्ञो यावत्यस्य मात्रा तावन्तमेवैनमेतत्करोति ॥११॥

17 अथ खरे प्रस्तरमासादयति तज्जुहूमासादयत्यथोपभृतमथ पृषदाज्यमासाद्य[१७] हवींषि संमृश्याप उपस्पृश्य राजानमादाय प्रपद्यते स दक्षिणस्य हविर्धानस्य कृष्णाजिनं नील आस्तृणाति तस्मिन्राजानमासादयति ॥१२॥

18 स आह देव सवितरेष ते सोमस्तं रक्षस्व मा त्वा दभन्निति सविता वै देवानां प्रसविता तस्मा एवैतद्गुप्तये परिददाति सुगुप्तो ऽसदिति[१८] ॥१३॥

19 अथानुसृज्य जपत्येतत्त्वं देव सोम देवो देवां३[१९] उपागाः । इदमहं मनुष्यान्त्सह रायस्पोषेणेत्याशिषमेवैतदाशास्ते यदाहेदमहं मनुष्यान्त्सह रायस्पोषेणेत्यग्नीषोमौ वा एतमंतर्जम्भमादधाते यो दीक्षत आग्नावैष्णवं ह्यदो दीक्षणीयं हविर्भवति य उ वै विष्णुः सोमो वै स हविर्ह्येनयोर्भवति तस्मादेनमग्नीषोमावन्तर्जम्भमादधाते स एतत्सोमान्निर्मुच्यते स एतस्मादनृणो भवति ॥१४॥

20 अथ निष्क्रामति स्वाहा निर्वरुणस्य पाशान्मुच्य इति वरुणपाश इव वा एषो ऽन्तर्भवति यो ऽन्यस्यास्ये तस्मादेवैतन्निर्मुच्यते[२०] तस्मादाह स्वाहा निर्वरुणस्य पाशान्मुच्य इति[२१] ॥१५॥

21a अथ समिधमभ्यादधात्यग्ने व्रतपास्त्वे व्रतपाः । या तव तनूर्मय्यभूदेषा सा त्वयि या मम तनूस्त्वय्यभूदियं सा मयि । यथायथं नौ व्रतपते व्रतान्यनु मे दीक्षां दीक्षापतिरमंस्तानु तपस्तपस्पतिरित्येतदग्नेर्निर्मुच्यत एतदेतस्मादनृणो भवति तदुभाभ्यामग्नीषोमाभ्यां निर्मुच्य स्वेन सतात्मना यजते ॥१६॥

21b अत्र ह खल्वस्याश्नीयान्मानुषो हि भवति न ह वै दीक्षितस्याश्नीयाद्धविर्वा

भवति यो दीक्षते स यथा हविर्गो ऽहुतस्याश्नीयादेवं॰ ह तत्तस्मादस्यात्राश्नी-यान्मानुषो[12] हि भवति तस्मादस्य नामग्राहं॰ सुब्रह्मण्यामाह्वयन्त्यसौ यजते ऽमुष्य पुत्रो यजत इति मानुषो हि भवत्यथाङ्गुलीर्विसृजते ॥१७॥ तृतीयं ब्राह्मणम् ॥

1 यज्ञः संति° MSS. 2 °पराग्घ्यैवेद॰ B W. 3 तावंतं MSS. 4 तदपिव्रतान्त्वारभंत MSS. 5 परोक्षा° B W. 6 °कलशं B. 7 दशपवित्रे B W, दशपविन्ने C. 8 °य MSS. 9 °पांजते B W C. 10 चतुष्पादा C. 11 °स्येतयैमं MSS. 12 कृत्वातिनयितानु° MSS. 13 स्तोको MSS. 14 °ऋंतरिक्षलोके B W. 15 दशा° MSS. 16 बर्हि B W. 17 पृषदाज्य° C. 18 सदिति MSS. 19 देवां २ B W. 20 °तनिर्सु-च्यते B W. 21 इति MSS. 22 तत्तस्मादस्या-श्नीया° C.

K. IV. 6. 4 M. III. 6. 4

स वै यूपं व्रक्ष्यन्नेतया वैष्णव्यचैतामाहुतिं॰ हुत्वाथ यूपमच्छैति स यद्वैष्णव्या जुहोति वैष्णवो हि यूपो यज्ञो वै विष्णुर्यज्ञेनो एवैतदच्छैति स यद्यह स्रुचा जुहोति चतुर्गृहीतमाज्यं गृहीत्वा जुहोति यद्यु स्रुवेण स्रुवेणो एव ॥१॥ 1-3a

स जुहोत्युरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि। घृतं घृतयोने पिब प्र प्र यज्ञपतिं तिर स्वाहेत्यथ यत्स्थाल्यां परिशिष्टं भवति तच्च स्रुवं चादत्ते ऽथ यत्तक्ष्णः शस्त्रं भवति तत्स आदत्ते ॥२॥ 3b.4

ते यां दिशं यूपं वेत्स्यन्तो भवन्ति तद्यन्ति स यत्र यूपं विन्दति तदेनं पश्चात्प्राङुपतिष्ठमानो जपत्यत्यन्यांऽ३ अगां नान्यांऽ३ उपागामित्यति[4] ह्येकानेति[4] येषु न विन्दति नो एकानुपैत्यर्वाक्त्वा परेभ्यः परो ऽवरेभ्य इत्यर्वाग्घ्येनं परेभ्यो याम्नाभ्या-प्नोति पर उ वा एनमवरेभ्यो येषु न विन्दति तस्मादाहार्वाक्त्वा परेभ्यः परो ऽवरेभ्य इति तं त्वा जुषामहे देव वनस्पते देवयज्याया इति यथा बहूनां॰ सार्धं तिष्ठतामेकं॰ साधुकृत्यायै जोषयेतैवमेनमेतज्जोषयते देवास्त्वा देवयज्यायै जुषन्तामिति तद्धि समृद्धं यदेनमपि देवा जोषयेरं॰स्तथा रातमना व्रश्चनाय भवति विष्णवे त्वेति वैष्णवो हि यूपः[6] ॥३॥ 5-9

10.11 अथ यत्र वृश्चन्भवति[६] तत्कुशतरुणकमभिनिदधात्योषधे त्रायस्वैनमिति वज्रो वा एष यत्परशुस्तदेनमेतदोषधिभिरेवान्तर्दधाति[७] तथैनमेष वज्रो न हिनस्ति स्वधिते मैनᳪ हिᳪसीरिति प्रहरति वज्रो वा एष यत्परशुस्तथैनमेष वज्रो न हिनस्ति स यत्प्रथममपच्छिनत्ति तदादत्ते तमनक्षस्तम्भे वृश्चेदुत[८] ह्येनमनसा वक्ष्यन्तो भवन्त्युतो स्वर्गᳪ हास्य लोकं यतो ऽक्षस्तम्भः स्यात्तस्मादनक्षस्तम्भे वृश्चेत्[९] ॥४॥

12 तं प्राञ्चं पिपातयिषेत्प्राची हि देवानां दिगथो उदञ्चमुदीची हि मनुष्याणां दिगथो प्रत्यञ्चमस्यास्त्वेवैनं दक्षिणाया दिशः[१०] परिबिबाधिषेत ॥५॥

13.14 तं प्रच्यवमानमभिमन्त्रयते दिवं मा लेखीरन्तरिक्षं मा हिᳪसीः पृथिव्या संभवेति वज्रो वा एष भवति यं यूपायेति वृश्चन्ति वज्रो हि यूपस्तस्मात्प्रच्यवमानादिमे लोकाः सᳪरेजन्त एभ्य एवैनमेतल्लोकेभ्यः शमयतीमानेवैतल्लोकाञ्छमयति दिवं मा लेखीरिति दिवं मा हिᳪसीरित्येवैतदाहान्तरिक्षं मा हिᳪसीरित्यन्तरिक्षं मा हिᳪसीरित्येवैतदाह पृथिव्या संभवेति पृथिव्या संजानीष्वेत्येवैतदाहायᳪ हि त्वा स्वधितिस्तेतिजानः प्रणिनाय महते सौभगायेत्येष ह्येनं महते सौभगाय प्रणयति यं यज्ञाय प्रणयति तस्मादाह प्रणिनाय महते सौभगायेति[११] ॥६॥

15 अथाव्रश्चनमभिजुहोति वज्रो वा आज्यं नेदितो नाष्ट्रा रक्षाᳪस्युपोत्तिष्ठानिति तद्वज्रेणाज्येनावबाधते ऽथो रेतो वा[१२] आज्यं वनस्पतिष्वेवैतद्रेतः सिञ्चति तेन रेतसा वनस्पतय आव्रश्चनात्प्रजायन्ते ॥७॥

16 सो ऽभिजुहोत्यतस्त्वं देव वनस्पते शतवल्शो विरोह सहस्रवल्शा वि वयᳪ रुहेमेत्याशिषमेवैतदाशास्ते यदाह सहस्रवल्शा वि वयᳪ रुहेमेति[१३] ॥८॥

17 अथैनं परिवासयति स यावन्तं वा एनमत्र परिवासयति तावानेव भवति ॥९॥

18 तं पञ्चारत्निं परिवासयेत्पाङ्क्तो वै यज्ञः पाङ्क्ताः पशवः पञ्चर्तवः संवत्सरस्य तस्मात्पञ्चारत्निं परिवासयेत् ॥१०॥

19 अथो षलरत्निᳪ षड्वा ऋतवः संवत्सरस्य तस्मात्षलरत्निम् ॥११॥

20 अथो[१४] अष्टारत्निमष्टाक्षरा[१५] वै गायत्री पूर्वार्धो वै यज्ञस्य गायत्री पूर्वार्धो वा एष वेदेस्तस्मादष्टारत्निम् ॥१२॥

22 अथो एकादशारत्निमेकादशाक्षरा वै त्रिष्टुब् वज्रो वै त्रिष्टुब् वज्रो वै यूपस्तस्मादेकादशारत्निम् ॥१३॥

अथो पञ्चदशारत्निं पञ्चदशो हि वज्रो वज्रो हि यूपस्तस्मात्पञ्चदशारत्निꣳ 25
सप्तदशारत्निर्वाजपेययूपो भवति ॥१४॥

तदु नाद्रियेतापरिमितेन वा एतेन देवा अपरिमितमजयꣳस्तथो वा एष 26.27
एतेनापरिमितेनैवापरिमितं जयति सो ऽष्टाश्रिर्भवत्यष्टाक्षरा वै गायत्री पूर्वार्धो वै
यज्ञस्य गायत्री पूवार्धो वा एष वेदेस्तस्मादष्टाश्रिर्भवति ॥१५॥ चतुर्थं ब्राह्मणम् ॥
षष्ठो ऽध्यायः ॥

1 स्रुवं C. 2 Thus accented MSS. 3 जपत्य° C. 4 °ति ह्येषानेति B W C ( orig. ) My, °ति ह्येकानेति C ( sec. m. ). 5 यूपः MSS. 6 वृश्च° MSS. Read व्रश्च° ? 7 °वांतर्दधाति C. 8 वृश्चेदुत C. 9 वृश्चेत् C. 10 दिशः MSS. 11 °येति MSS. 12 वा omitted in B W. 13 °मेति MSS. 14 अथोष्टार° B W C ( orig. ).

K. IV. 7. 1 M. III. 7. 1

स वा अभ्रिमेवादत्ते देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो 1
हस्ताभ्याम् । आददे नार्यसीत्युक्तो यजुषो बन्धुरथ यदाह नार्यसीति योषा ह्यभ्रिर्योषा हि नारी तस्मादाह नार्यसीति ॥१॥

तया यूपावटं परिलिखत्यर्धमन्तर्वेद्यर्धं बहिर्वेदीदमहꣳ रक्षसो ग्रीवा 2
अपिकृन्तामीति वज्रो वा अभ्रिर्वज्रेणैवैतन्नाष्ट्राणाꣳ रक्षसां ग्रीवा अपिकृन्तति
तमुपरसंमितं[1] यूपावटं[2] खनति ॥२॥

अथ प्राञ्चमुत्करमुत्किरति तत्प्राञ्चं यूपं निदधात्यथ बर्हीꣳषि यावन्मात्राणीवाथ यूपशकलं चषालमथ[3] यवमतीः प्रोक्षणीः कुरुते सो ऽसावेव बन्धुर्यवमतीनामथ प्रोक्षति स समान एव प्रोक्षणस्य बन्धुर्मध्यमेवैतत्करोति यत्किं च प्रोक्षति ॥३॥ 3.4

स प्रोक्षति दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेति वज्रो वा एष यद्यूप एषां 5
लोकानामभिजितय एषां त्वा लोकानामभिजितये प्रोक्षामीत्येवैतदाह ॥४॥

अथ याः परिशिष्टाः प्रोक्षण्यो भवन्ति ता यूपावटे ऽवनयति शुन्धन्तां 6.7
लोकाः पितृषदना इति सो ऽसावेव बन्धुरथोदगग्राणि च प्रागग्राणि च बर्हीꣳ-

ष्यवस्तृणाति पितृषदनमसीत्यसावेव बन्धुः ॥५॥

8 अथ यूपशकलं प्रास्यत्येतद्ध वै तेजो वनस्पतीनां यद्बाह्याः[4] शकलास्तद्यदेतेष्वपच्छिन्नेषु[5] म्लायन्ति[6] तत्तेज एवास्मिन्नेतद्दधाति सतेजसमेनमिति तेजस्वन्तमिनवानीति स यदेतदेवैतत्प्रास्यत्येताद्धि यजुष्कृतं मेध्यं भवति तस्मादेतदेव तत्प्रास्यति ॥६॥

9 स प्रास्यत्यग्रेणीरसि स्वावेश उन्नेतृणामित्येतद्धयस्मादग्रे ऽपच्छिन्नति तस्मादाहाग्रेणीरसीति स्वावेश उन्नेतृणामेतस्य वित्तादधि त्वा स्थास्यतीत्याशीर्ह्येनत्तिष्ठति ॥७॥

10a अथाज्याहुतिं जुहोति वज्रो वा आज्यं नेदितो नाष्ट्रा रक्षाꣳस्युपोत्तिष्ठानिति तद्वज्रेणाज्येनावबाधते ॥८॥

10b.11 अथ पुरस्तात्परीत्याह यूपायाज्यमानायानुब्रूहीति यूपमञ्ज्मो ऽनुब्रूहीति वान्वाह होतानक्त्यध्वर्युर्देवस्त्वा सविता मध्वानक्त्विति सविता वै देवानां प्रसविता सर्वमु वा इदं मधु यजमानो वै यूपो ऽनेनैवैतत्सर्वेण यजमानꣳ सꣳस्पर्शयति तदस्मै सविता प्रसविता प्रसौति तस्मादाह देवस्त्वा सविता मध्वानक्त्विति[7] ॥९॥

12 अथोभयतश्चषालमक्त्वा प्रतिगृह्णति सुपिप्पलाभ्यस्त्वौषधीभ्य इति पिप्पलमेवास्मिन्नेतद्दधाति स यदेतत्सोपेनितमिव भवति तस्मात्पिप्पलं च वृक्षं चान्तरेणोपेनितमिव ॥१०॥

13 अथाग्निष्ठामनक्ति यजमानो वा अग्निष्ठा रस आज्यं यजमानमेवैतद्रसेनानक्ति स परिव्ययणवेलायाꣳ[8] समन्तं परिमृशति समन्तमेवास्मिन्नेतद्रसं[9] दधाति तमोपरादनक्ति ॥११॥

14 अथाहोच्छ्रीयमाणायानुब्रूहीत्यन्वाह[10] होतोच्छ्रयत्यध्वर्युर्दिवमग्रेणास्पृक्ष आन्तरिक्षं मध्येनाप्राः पृथिवीमुपरेणादृꣳहीरिति वज्रो वा एष यद्यूपस्तदेनेनेमांल्लोकान्त्स्पृणुत एभ्यो लोकेभ्यो द्विषन्तं भ्रातृव्यं निर्भजति बहिर्धा करोति तस्मादेवमुच्छ्रयति ॥१२॥

15 अथाभ्यवहरति या ते धामान्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः। अत्राह[11] तदुरुगायस्य[11] विष्णोः परमं पदमवभाति भूरीत्येतया त्रिष्टुभा वज्रो वै त्रिष्टुब्वज्रो वै यूपस्तस्मात्त्रिष्टुभा मिनोति स यद्वैष्णव्या मिनोति वैष्णवो हि यूपः ॥१३॥

स संप्रत्यग्निमग्निष्ठां करोति तथा यजमान आयतनान्न ह्वलति यद्धाग्निष्ठा- 16
मग्नेर्ह्वलयेयुर्ह्वलेद्ध यजमान आयतनात्तस्मात्संप्रत्यग्निमग्निष्ठां करोति ॥१४॥

अथ पर्यूहति ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्यूहामीत्यथ पर्यृषति ब्रह्म दृꣳह क्षत्रं दृꣳहायुर्दृꣳह प्रजां दृꣳहेति समंभूमि पर्यृषणं भवत्युदपात्रमुपनिनयत्यसावेव बन्धुः ॥१५॥

अथ परिगृह्य जपति विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे। इन्द्रस्य 17
युज्यः सखेति वज्रं वा एतत्प्राहार्षीद्यद्यूपमुदशिश्रियदिमां विष्णोर्विजितिं पश्यतेमां[13] जितिमित्येवैतदाहेन्द्रस्य युज्यः सखेतीन्द्रो यज्ञस्य देवता वैष्णवो वै यूपस्तथास्यैष सेन्द्रो भवति तस्मादाहेन्द्रस्य युज्यः सखेति[13] ॥१६॥

अथ चषालमुदीक्षते तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः। दिवीव 18
चक्षुराततमिति वज्रं वा एतत्प्राहार्षीद्यद्यूपमुदशिश्रियदिमां विष्णोर्विजितिं पश्यतेमां[14] जितिमित्येवैतदाह ॥१७॥

अथ परिव्ययत्यनग्नतायै वा एनं परिव्ययति तस्मान्नीविदघ्ने[15] परिव्यय- 19.20
त्यत्रैव हीदं वासो ऽथो अन्नाद्यमेवास्मिन्नेतद्दधात्यत्रेव वा इदमन्नं प्रतितिष्ठति तस्मान्नीविदघ्ने[15] परिव्ययति त्रिवृता परिव्ययति त्रिवृद्ध्यन्नं पशवो ह्यन्नं पिता माता यज्जायते तत्तृतीयं तस्मात्त्रिवृता परिव्ययति ॥१८॥

स परिव्ययति परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमं यजमानꣳ 21
रायो मनुष्याणामित्याशिषमेवैतदाशास्ते यदाह परीमं यजमानꣳ रायो मनुष्याणामिति[16] ॥१९॥

अथ दिवः सूनुरसीति यूपशकलमवगूहति प्रजा हैवास्यैषा तस्माद्यूपैका- 22.24.23
दशिन्यां यथायथमवगूहेत्तथा हास्यानुव्रता[17] अमुग्धाः[17] प्रजाः प्रजायन्ते ऽथ यस्य यूपैकादशिन्यां मोहयन्त्यननुव्रता हास्य मुग्धाः प्रजाः प्रजायन्ते ऽथ यत्स्वरुर्नाम स्वꣳ ह्यस्यैतदरुरेतस्माद्ध्येतत्सर्वस्मादपतक्ष्णोति तस्मात्स्वरुर्नाम स्वर्गस्य वा एतल्लोकस्य[18] संक्रमणं यद्यूपशकलमिदꣳ हि रशना यूपशकलं चषालं तत ऊर्ध्वः स्वर्गं लोकꣳ समश्नुते ॥२०॥

तद्यन्निखातं तेन पितृलोकं जयत्यथ यदूर्ध्वं निखननाद्दा रशनायास्तेन 25
मनुष्यलोकमथ यदूर्ध्वꣳ रशनाया आ चषालात्तेन देवलोकमथ यदूर्ध्वं चषालाद् द्व्यङ्गुलं वा त्र्यङ्गुलं वातिरिक्तं तेन साध्या इति देवास्तेषाꣳ सलोकतां जयति सलोको

ह साध्यैर्देवैर्भवति य एवमेतद्वेद ॥२१॥

26 तं वा एतं पुरस्तान्मिनोति वज्रो वै यूपो वज्रो वै दण्डः पूर्वार्धं वै दण्ड भिपद्य[19] प्रहरति तस्मात्पुरस्तान्मिनोति पुरस्ताद्धि मनोजवः पुरस्तात्प्रजा प्र देवयज्या तस्मात्पुरस्तान्मिनोति ॥२२॥

27.28 देवा[20] उ वै[20] यज्ञेनेमां जितिं जित्वा येयमेषां जितिस्ते होचुर्हन्तेदं त करवामहा इति यथा न इदमनभ्यारुह्यं मनुष्यैरसदिति ते यज्ञस्य रसं निर्धीय य मधुकृतो निर्धयेयुरेवं विदुह्य यज्ञं यूपेन योपयित्वा तिरो बभूवुस्तद्यदेनेनायोपयंस्त स्माद्यूपो नाम सो ऽष्टाश्रिर्भवत्यष्टाक्षरा वै गायत्री पूर्वार्धो वै यज्ञस्य गायत्री पूर्वार्धो एष वेदेस्तस्मादष्टाश्रिर्भवति ॥२३॥

29 तꣳ ह स्मैतं देवा यत्रैवादः परिधीननुप्रहरन्ति तद्ध स्मैवानुप्रहरन्ति तस्मा दप्येतर्ह्येके तां वेलामनुप्रहरन्ति तथो वै रक्षाꣳस्यनूदपिपत ॥२४॥

30-32 ते होचुर्यूपशकलमेव जुहवामेति तदहैवैषो ऽनुप्रहृतो भविष्यति[21] तत्स्व गाकृत इति तथो रक्षाꣳसि नानूत्पास्यन्ते ऽयं वाव वज्र उद्यत इति ते यूपशकल मेवाजुहवुस्तदहैवैषो ऽनुप्रहृत आसीत्तत्स्वगाकृतस्तथो रक्षाꣳसि नानूदपिपतन् वाव वज्र उद्यत इति तस्माद्यूपशकलमेव जुहुयात्तदहैवैषो ऽनुप्रहृतो भवति[21] तत्स्व गाकृतस्तथो रक्षाꣳसि नानूतिपपते ऽयं वाव वज्र उद्यत इति सो ऽनुयाजानि जुहोति दिवं ते धूमो गच्छत्वन्तरिक्षं ज्योतिः पृथिवीं भस्मनापृण स्वाहेति ॥२५॥

प्रथमं ब्राह्मणम् ॥

1 तमुपर° MSS. 2 यूपावटं B C W. 3 चषाल-मथ B W C. 4 यद्वाह्य C (orig.). 5 शकला° MSS. 6 म्ला° MSS. 7 °क्त्विति MSS. 8 परि-व्ययणवेलायाꣳ B C W. 9 समंतमेवा° MSS. 10 अथाहोच्छ्रिय° C. 11 अत्राहैत° MSS. 12 पश्ये-तेमां MSS. 13 °खेति MSS. 14 पश्येतेमां MSS. except C sec. m. (पश्यतेमां). 15 नीविदन्ने MSS. 16 'मिति MSS. 17 °व्रता अमु° B W, व्रतामु° C My. 18 एतंलो° MSS. 19 °भिपद्य B. 20 देवा उ ह वै My. 21 We expect an accented

verb. The Mādhyandina recension also has the verb without accent.

K. IV. 7. 2 — M. III. 7. 2

1 स वा एतां यूपैकादशिनीं मिनोति स यदेतां यूपैकादशिनीं मिनोत्येतावती ह वै पृथिवी यावती वेदिर्वज्रा[1] वै यूपाः स एतैर्वज्रैरिमां पृथिवीꣳ स्पृणुते ऽस्याः सपत्नान्निर्भजति बहिर्धा करोति तस्माद्वा एतां यूपैकादशिनीं मिनोत्युपशयो द्वादशो वितष्टो भवति तं दक्षिणे[2] वेद्यन्ते[3] निदधाति ॥१॥

2 देवा ह वै यज्ञं तन्वाना असुररक्षसानां दक्षिणत आसङ्गाद्बिभयां चक्रुर्यथो वा इषुरायतावसृष्टा तया वै स्तृणुते वा न वा स्तृणुते यथोद्यतं[4] प्रहृतं[4] तेन वै स्तृणुते वा न वा स्तृणुत एवं वा एते यूपा य उच्छ्रिता अथैष वज्र एव दक्षिणत उद्यतो यथेषुरायतानवसृष्टा यथोद्यतमप्रहृतमेवमेष वज्रो दक्षिणत उद्यतो नाष्ट्राणाꣳ रक्षसामपहतये ॥२॥

3a तमभिमृशत्येष ते पृथिव्यां लोक आरण्यस्ते पशुरिति पशुश्च वै यूपश्च तमस्मा एतमारण्यं पशुमनुदिशति तेनैष पशुमान्भवति ॥३॥

3b.4 तान्हैक उपवसथ एव सर्वानुच्छ्रयन्ति तत्तत्कर्मण एव प्रकुद्रतायै[5] क्षिप्रं यज्ञꣳ सꣳस्थापयामेत्येवाथो उपवसथे वै यूपस्योच्छ्रयणमिति वदन्तस्तदु तथा न कुर्यान्न वै पुरा परिव्ययणाद्यूपमन्ववर्जन्त्यपरिवीता उ वा एत एताꣳ रात्रिं वसन्ति सा न्वेव परिचक्षाथो पशवे[6] वै यूपमुच्छ्रयन्ति न वा एतेषु तदहः पशुमालप्स्यमानो[7] भवति[8] ये ऽन्ये ऽग्निष्ठाद्भवन्ति तस्मादग्निष्ठमेव तदहरुच्छ्रयेत्तꣳ हि परिव्ययति[9] तस्मिन्पशुमालभते तस्मादग्निष्ठमेव तदहरुच्छ्रयेत् ॥४॥

5-7 तद्धैके य एवाग्निष्ठादुत्तरस्तमग्र उच्छ्रयन्त्यथ दक्षिणमथोत्तरं यथा दक्षिणार्ध्यमुत्तममुच्छ्रयेदेवं[10] तथा ह्युदीची भवतीति तदु तथा न कुर्याद्य एवाग्निष्ठाद्दक्षिणस्तमेवाग्र[11] उच्छ्रयेदथोत्तरमथ दक्षिणं यथोत्तरार्ध्यमुत्तममुच्छ्रयेदेवं[11] तथा ह्युदीची भवतीति स यो वर्षिष्ठः स दक्षिणार्ध्यः स्यादथ ह्रसीयानथ ह्रसीयान्यथोत्तरार्ध्यो ह्रसिष्ठ एवं तथा ह्युदीची भवतीति[12] ॥५॥

8a अथैतं पत्नीयूपं त्रयोदशं पत्नीभ्य उच्छ्रयति सर्वत्वाय वा एतमुच्छ्रयति कृत्स्नतायै त्रयोदश वै मासाः संवत्सरस्य तस्मादेतं त्रयोदशमुच्छ्रयति ॥६॥

8b तत्त्वाष्ट्रं पशुमालभते त्वष्टा वै रेतः सिक्तं विकरोति तदेतद्रेतः सिक्तं

तत्त्वष्टा विकरोति स मुष्करो भवति मुष्करो हि प्रजनयिता प्रजननꣳ हि तस्मान्मुष्करो भवति तं पर्यग्निकृतमेवोत्सृजति न सꣳस्थापयति यद्धैनꣳ संस्थापयेत्परिगृह्णीयात्प्रजननं तत्प्रजा एवैतदुत्सृजति ता इमा उत्सृष्टाः प्रजा अनुस्थिताः प्रजायन्ते तस्मात्पर्यग्निकृतमेवोत्सृजति न सꣳस्थापयति ॥७॥ द्वितीयं ब्राह्मणम् ॥

1 वेदिवꣳशो MSS. 2 No accent in the MSS. 3 वेधंते MSS. 4 Thus emended; यथोद्यद्यत्प्रहृतं C, यथोद्यद्यत्प्रहृतं B W My. 5 प्रकुद्रतायै C W, प्रकुद्रतायै B and My (without accent). 6 पशवे MSS. 7 Thus emended; °लिप्स्यमानो My, °लिप्समानो B W C. 8 भवति MSS. 9 परिव्यति B W. 10 °णार्धमु° and °रार्धमु° the MSS. 11 °द्दक्षिणतस्तमे° B. 12 °तीति MSS.

M. III. 7. 3 K. IV. 7. 3

1.2 पशुश्च वै यूपश्च तस्माद्यूप एव पशुमालभन्ते नर्ते यूपात्कदा चन स यद्यूप एव पशुमालभन्ते[1] नर्ते यूपान्न ह वा अग्रे पशवस्तस्मै चक्षमिरे[2] यदन्नमभविष्यन्यथेदमन्नं भूतास्ते होच्छ्रिता एव द्विपादश्चेरुर्यथायं पुरुष एवमुत न इत्थं चिन्नालभेरन्निति ततो ह देवा एतं वज्रं ददृशुर्यद्यूपं तमुच्छिश्रियुस्तस्माद्भीषा[3] प्राव्लीयन्त ततश्चतुष्पादो[4] ऽभवꣳस्ततो ऽन्नमभवन्यथेदमन्नं भूता एतस्मा उ ह्येते ऽतिष्ठन्त तस्माद्यूप एव पशुमालभन्ते नर्ते यूपात्कदा चन ॥१॥

3 अथ पशुमुपाकृत्याग्निं मन्थति स यत्पशुमुपाकृत्याग्निं[5] मन्थति[5] न ह वा अग्र पशवस्तस्मै चक्षमिरे[6] यद्धविरभविष्यन्यथेदꣳ हविर्भूतास्तान्हातिष्ठमानान्देवा उपन्यूदुस्तानुपनिरुरुधुस्त उपनिरुद्धा नोपावेयुः ॥२॥

4-6 ते होचुर्देवा न वा इम इमं यामं विदुर्यो हविषो यामो या प्रतिष्ठेति तस्मान्नोपावयन्तीति होचुस्ते हन्ताग्निं मथित्वाग्नौ जुहवामेति[7] तथा वेदिष्यन्ति पशव एष वै किल हविषो याम इत्यग्नौ वै किल हविर्जुह्वत्येषा प्रतिष्ठेति त उपावैष्यन्ति ते रातमनस आलम्भाय भविष्यन्तीति ते ऽग्निं मथित्वाग्नावजुहवुस्ततो ऽविदुः पशव एष वै किल हविषो याम इत्यग्नौ वै किल हविर्जुह्वत्येषा प्रतिष्ठेति त उपावायꣳ

शतमनस आलम्भायाभवꣳस्तथो वा एष एतदुपावैति स शतमना आलम्भाय भवति तस्मात्पशुमुपाकृत्याग्निं मन्थति ॥३॥

7 तद्धा आहुर्न पशुमुपाकुर्यान्नाग्निं मन्थेदिति परिह्वालमिव वा एतदिति शतामेवादायोपपरेत्यैनं[8] नियुञ्ज्यात्तदेवैनमञ्जसालभत इति वदन्तस्तदु तथा न कुर्याद्यथाधर्मेण[9] तिरश्चता कुर्यादेवꣳ ह तत्तस्मादेतदेवानुपरीयात् ॥४॥

8 अथ पशुमुपाकरिष्यꣳस्तृणमादत्ते द्वितीयवान्निरुणधा इति द्वितीयवान्हि वीर्यवान्यदा हि द्वितीयमुपयुते ऽथ वीर्यवत्तरो भवति ॥५॥

9.10 स आदत्त उपावीरसीत्युप हि द्वितीयो[10] ऽवति[10] तस्मादाहोपावीरसीत्युप देवान्दैवीर्विशः प्रागुरिति दैव्यो वा एता विशो[11] यत्पशवस्तानेवैतदाहाश्विषत देवेभ्य इति यदाहोप[12] देवान्दैवीर्विशः प्रागुरित्युशिजो वह्नितमानिति विद्वाꣳसो हि देवाः ॥६॥

11.12 देव त्वष्टर्वसु रमेति त्वष्टा वा एषामीष्टे पशवो वै वसु स यस्यैव पशवो भवन्ति स पशूनामीष्टे तमेवैतदाहोपनिवदैनानिति यदाह देव त्वष्टर्वसु रमेति हव्या ते स्वदन्तामिति यदा वा एते ऽकामयन्ताथैनान्हविरकुर्वत[13] तस्मादाह हव्या ते स्वदन्तामिति ॥७॥

13 रेवती रमध्वमिति पशवो वै रेवन्तस्तस्मादाह[14] रेवती रमध्वमिति बृहस्पते धारया वसूनीति ब्रह्म वै बृहस्पतिः पशवो वै वसु तानेवैतदतिष्ठमानान्देवाः परस्ताद्ब्रह्मणा पर्यगृह्णन्त तथा नात्यायꣳस्तथो वा एनानेष एतदतिष्ठमानान्परस्ताद्ब्रह्मणा परिगृह्णीते तथा नातियन्त्येवं पशुमुपाकृत्याग्निं मन्थत्यग्निं मथित्वा नियुनक्ति तस्यातः ॥८॥ तृतीयं ब्राह्मणम् ॥

1 पशुमालभंते MSS. 2 जक्षमिरे MSS., but C, as far as visible, corrected into चक्ष°. 3 Thus emended; तमशिश्रियु° MSS. 4 ततश्चतुष्पादो B, ततश्चतुष्पादो C. 5 °ग्निं मंथति MSS. 6 जक्षमिरे MSS. 7 जुहवामेति MSS. 8 °परैत्यैनं B W C, परीत्यैनं My. 9 Thus accented MSS. Read °द्यथाधर्मेण ? 10 द्वितीयो भवति B. 11 विशो

C. 12 यदाहोप B. 13 कामय° MSS. 14 रेवंतस्त° MSS.

M. III. 7. 4 K. IV. 7. 4

1.2 स वै रशनामेवादायोपोत्थाय प्रतिमुञ्चत्यृतस्य त्वा देवहविः पाशेन प्र मुञ्चामि धर्षान्मानुष इति वरुण्या वै रज्जुस्तदेनमृतस्यैव पाशेनैतद्देवहविः प्र मुञ्चति तथैनमेषा वरुण्या रज्जुर्न हिनस्ति धर्षान्मानुष इति न वा एतमग्रे मनुष्य धृष्णोति स यद्देवैनमृतस्य पाशेनैतद्देवहविः प्रतिमुञ्चत्यथैवैनं धृष्णोति तस्मा धर्षान्मानुष इति[1] ॥१॥

3 अथैनं नियुनक्ति देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ता भ्याम् । अग्नीषोमाभ्यां जुष्टं नियुनज्मीति[2] स यथैवादो देवतायै हविर्गृह्णाति त्येवमेवैतद्देवताया आदिशत्यथ प्रोक्षति स समान एव प्रोक्षणस्य बन्धुर्मेध्यमे तत्करोति यत्किं च प्रोक्षति ॥२॥

4.5 स प्रोक्षत्यद्भ्यस्त्वौषधीभ्यः प्रोक्षामीति स यतश्चैव पशुः संभवति यत जायते तत एवैनमेतन्मेध्यं करोतीदꣳ हि यदा वर्षत्यथौषधयो जायन्त ओष धीर्जग्ध्वापः पीत्वा ततो रेतः संभवति रेतसः पशुस्तस्मादाहाद्भ्यस्त्वौषधीभ्यः प्रोक्षामीत्यनु त्वा माता मन्यतामनु पितेति मातुश्च हि पितुश्च संभवत्यनु भ्राता सगर्भ्यो[3] ऽनु सखा सयूथ्य[4] इति यदस्य जन्म[5] तेनानुमतमालभा इत्यग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामीति[6] स यस्यै देवतायै हविर्भवत्येष पशुस्तस्या एवैनमेतन्मेध्यं करोति ॥३॥

6 अथ निपाययत्यपां पेरुरसीति तदेनमन्तरतो मेध्यं करोत्यथोपोक्षत्या देवीः सदन्तु स्वात्तं चित्सद्देवहविरिति तदेनꣳ सर्वतो[7] मेध्यं करोति ॥४॥

7 अथाहाग्नये समिध्यमानायानुब्रूहीति स उत्तरमाघारमाघार्यासꣳस्पर्श न्नत्याक्रमति तत्पशौ[8] समनक्ति शिरो वा एतद्यज्ञस्य यदुत्तर आघार एष उ वा अ यज्ञो भवति यत्पशुर्यज्ञ एवैतच्छिरः प्रतिदधाति ॥५॥

8.9 स समनक्ति सं ते प्राणो वातेन गच्छतामिति शिरसि समङ्गानि यजत्रै रित्यꣳसयोः सं यजमान आशिषेति श्रोणी यस्मै त्वा कामायालभ्सतेति[1] तत्प्राप्नुहि त्येवैतदाहेदꣳ हि यदा पशुꣳ संज्ञपयन्त्यथास्य वातं प्राणो ऽभिपद्यते तत्प्राप्नुहि यत्ते वातं प्राणो ऽभिपद्याता इत्येवैतदाह समङ्गानि यजत्रैरित्यङ्गैर्वा अस्य यजत्रै

प्राप्नुहि यत्ते ऽङ्गीर्यजान्ता इत्येवैतदाह सं यजमान आशिषेत्येतेन वै यजमानाया-शिष आशासते[10] तत्प्राप्नुहि यत्त्वया यजमानायाशिष आशासान्ता इत्येवैतदाहा-थ्य होतारं प्रवृणीते सो ऽसावेव बन्धुः ॥६॥

अथ द्वितीयमाश्रावयति मैत्रावरुणस्य प्रवराय स मैत्रावरुणस्याह प्रवरा- 10a श्रावयति यजमानं त्वेव प्रवृणीते ॥७॥

स वा आश्राव्याहाग्निर्दैवीनां[11] विशां पुरएतेत्यग्निर्वै देवतानां मुखं तस्मा- 10b.11 दाग्निर्दैवीनां विशां पुरएतेत्ययं यजमानो मनुष्याणामिति तं वा एषो ऽन्वर्धों भवति यस्मिन्नर्धे यजन्ते तस्मादाहायं यजमानो मनुष्याणामिति तयोरस्थूरि गार्ह-पत्यं दीदयच्छतꣳ हिमा द्वा यू इति तयोरनार्तानि गार्हपत्यानि सन्तु शतं वर्षाणी-त्येवैतदाह राधाꣳसीत्संपृञ्चानावसंपृञ्चानौ तन्व इति यदग्नौ जुहोति यजमानस्तद-ग्नेव राधः प्रयच्छत्यथ यामाशिषमाशास्ते तामस्मा अग्निराशिषꣳ संनमति तद्रा-धाꣳसि संपृञ्चाते असंपृञ्चानौ तनूरिति[12] यथा यजमानमग्निर्न प्रदहेदेवमेतदाह यद्धि यजमानो ऽग्निना त्वचꣳ संपृञ्चीत[13] प्रैनं[13] दहेत्तस्मादाहासंपृञ्चानौ[14] तन्व इति ॥८॥

चतुर्थं ब्राह्मणम् ॥ सप्तमो ऽध्यायः ॥

1 इति MSS. 2 Thus, not युनज्मि, as Weber's edition of the Samhitā. 3 सगर्भ्यो B. 4 सयूथ्य C. 5 जन्म C. 6 प्रोक्षामीति B, प्रोक्षामीति W. 7 सर्वतो C. 8 तस्मात्पशौ B W. 9 Thus emended, कामायालिप्सतेति B W C, कामायालिप्स्यतेति My. 10 आशासते MSS. 11 °व्याहाग्नि° C. 12 तनूरिति C. 13 संपृंचीतत्प्रैनं C ( but the त before प्रैनं hardly visible ), संपृंचीततत्प्रैनं B W, संपृंचीत्प्रेनं My. 14 दहे° MSS.

K. IV. 8. 1 M. III. 8. 1

स वै यदैतत्प्रवृतो होता होतृषदने सीदत्यथाप्रीभिश्चरन्ति स यदाप्रीभि- 1.2 श्चरन्ति सर्वेणेव वा एष मनसा सर्वेणेवात्मना यज्ञꣳ संभरति यो दीक्षते तꣳ सर्वेण मनसा सर्वेणात्मना यज्ञꣳ संभृत्य देवेभ्यः प्रयच्छति तं देवेभ्यः प्रदाय रिरिचान इव भवति स एताभिराप्रीभिः पुनराप्यायते स यदेताभिराप्रीभिः पुनराप्यायत

एताभिरेनमाप्रीणाति तस्मादाप्रियो नाम ॥१॥

3 ते वा एते प्रयाजा एकादश भवन्त्येकादशो[1] वा अयं पुरुषो दश प्राणा आत्मैकादशः कृत्स्नमेवैनं तत्सर्वतन्वमाप्याययति[2] तस्मादेते प्रयाजा एकादश भवन्ति ॥२॥

4.5 अथ खलु प्रसूतः स्रुचावादायातिक्रम्याध्वर्युराश्राव्याह समिधः प्रेष्य प्रेष्येति चतुर्थे चतुर्थे समानयमानो दश प्रयाजान्यजति[3] दश प्रयाजानिष्ट्वा क्रम्याह[3] शासमाहरेत्यसिं[4] वै शास इत्याचक्षते यूपशकलमाहरेति तावग्रे जुह्वामग्रे पशोर्ललाटे सꣳस्पर्शयति घृतेनाक्तौ पशुं त्रायेथामिति वज्रो वै यूपशकलो वज्रः शासो वज्र आज्यं कृत्स्नमेवैतद्वज्रं कृत्वा तमस्याभिगोप्तारं करोति नेदेनं नाष्ट्रा रक्षाꣳसि हिनसन्निति वज्रो हि नाष्ट्राणाꣳ रक्षसामपहन्ता पुनर्यूपशकलमवगूहति प्रयच्छति शमित्रे शासम् ॥३॥

6 तमाहैषा ते ऽग्निः[5] प्रज्ञातास्त्विति सादयित्वा स्रुचावाह पर्यग्नये ऽनुब्रूहीत्यच्छिद्रमेवैनमेतत्समन्तमग्निना[6] परिगृह्णाति नेदेनं नाष्ट्रा रक्षाꣳसि प्रमृशानित्यग्निर्हि नाष्ट्राणाꣳ रक्षसामपहन्ता ॥४॥

7.8 तदाहुर्यदेतेन पर्यग्नि कुर्यादित्यथान्यमेव निर्मथ्य तेन श्रपयेयुरित्याहवनीयो वा एष इति तस्मै वा एष यदेतास्मिञ्छृतं जुहुयुरिति न वा एष तस्मै यदेतस्मिञ्छृतं श्रपयेयुरिति तस्मादन्यमेव निर्मथ्य तेन श्रपयेयुरिति तदु तथा न कुर्याद्यथा ग्रस्तमेवमेतस्यैतद्भवति येन पर्यग्नि कुर्वन्ति स यथा ग्रस्तमाच्छिद्यान्यस्मै प्रयच्छेदेवं ह तत्समदꣳ[8] ह कुर्यात्तस्मादत एवोल्मुकꣳ हृत्वा तं निमृज्योप[9] समादध्युः पुनरुल्मुकमप्यर्जेयुस्तथासमद्भवति ॥५॥

9 अथ यत्रैनमुदञ्चो नेष्यन्तो भवन्ति तदुल्मुकमादायाग्नीत्पूर्वः प्रतिपद्यते ऽग्निमेवास्यैतत्पुरस्तात्पुरोगां करोति तथो हास्याग्निरेव पुरस्तान्नाष्ट्रा रक्षाꣳसि पघ्नन्प्रभिन्दन्नेत्यथैतमभये ऽनाष्ट्रे निवाते नयति ॥६॥

अथास्याः[10] स्तीर्णाया[10] वेदेर्द्वे तृणे आदत्ते तमुदञ्चं नीयमानं वपाश्रपणीभ्यां प्रतिप्रस्थातान्वारभते प्रतिप्रस्थातारमध्वर्युरध्वर्युं यजमानस्तेनोदञ्चो यन्ति ॥७॥

10a तदाहुर्नैनं यजमानो ऽन्वारभेतेति मृत्यवे ह्येनं नयन्तीत्यनवक्लृप्तं वै तद्यन्मृत्यवे नीयमानं यजमानो ऽन्वारभेतेति[11] तदन्वारभेतैव न वा एतं मृत्यवे नयन्ति

यज्ञाय नयन्ति यज्ञायो वा एतं नयन्ति तस्मादन्वारभेतैवात्मानमु[12] ह यज्ञादन्तरियदेतं[13] नान्वारभेत तस्मादन्वारभेतैव ॥८॥

तं वा अन्वारभमाणः परोक्षमन्वारभते वपाश्रपणीभ्यां प्रतिप्रस्थाता प्रतिप्रस्थातारमध्वर्युरध्वर्युं यजमानस्तदेनं परोक्षमन्वारभते ॥९॥ 10b

स वा आश्राव्याहोपप्रेष्य होतर्हव्या देवेभ्य इति तत्पशौ वैश्वदेवं करोत्याह होता वाचयत्यध्वर्यू[14] रेवति यजमान इति वाग्वै रेवती तस्मादाह रेवति यजमान इति प्रियं धा आविशेत्यनार्तिमाविशेत्येवैतदाह यदाह प्रियं धा आविशेत्युरन्तरिक्षात्सजूर्देवेन वातेनेत्यन्तरिक्षं वा अनु रक्षश्चरति यथायं पुरुषो ऽमूल उभतः परिच्छिन्नो ऽन्तरिक्षमन्वयं पवते यो ऽयं पवते तद्वाचमेवैतदाह वातेनैनं विद्वानान्तरिक्षाद्धोपायेति यदाहोरोरन्तरिक्षात्सजूर्देवेन वातेनेत्यस्य हविषस्तमना यजेत्यस्य हविषो ऽनार्तेन यजेत्येवैतदाह समस्य तन्वा भवेति वाचमेवैतदाह ॥१०॥ 11-13

अथ यत्रैनं निविध्यन्ति तदनयोस्तृणयोरन्यतरदुपास्यति वर्षो वर्षीयसि यज्ञपतिं धा इति बर्हिरेवास्मा एतत्स्तृणात्यस्कन्नं हविरसदिति यदस्य विशस्यमानस्य[15] किं चित्स्कन्दादिति तद्बर्हिषि प्रतितिष्ठादिति[16] ॥११॥ 14

अथ पुनरेत्योत्तरेणाहवनीयं दक्षिणावृत्यासते नेदस्य संज्ञप्यमानस्याध्यक्षा असामेति तस्य न कूटेन प्रघ्नन्ति मानुषं ह कुर्याद्यदस्य कूटेन प्रहण्युर्नो[17] एव पश्चात्कर्णं पितृदेवत्य उ ह[18] स्यान्मुखमेवापिगृह्य विपृक्णेण[19] संज्ञपयन्ति तद्धि देवत्रा नाहुर्जहीति न मारयेति मानुषं ह कुर्याद्यदेनं ब्रूयुर्जहीति[20] वा मारयेति वा संज्ञपयतानुगमयतेत्येवैतर्हि ह्येष देवाननुगच्छति तस्मादाहुरन्वगन्निति[21] ॥१२॥ 15

अथ पुरा संज्ञपनाज्जुहोति[22] स्वाहा देवेभ्य इत्यथ संज्ञप्ते देवेभ्यः स्वाहेति पुरस्तात्स्वाहाकृतयो वा अन्ये देवा उपरिष्टात्स्वाहाकृतयो ऽन्ये तानेवैतदुभयान्प्रीणाति त एनमुभये देवाः प्रीताः सुधायां दधति ते एते परिपशव्ये इत्याहुती ते जुहुयाद्यदि कामयेत यद्यु कामयेतापि नैवाद्रियेत ॥१३॥ प्रथमं ब्राह्मणम् ॥ 16

1 भवंत्येकादशो MSS. 2 तस्सर्वंतन्वमा° C W and without accent My, तत्सर्वंतत्सर्वंतन्वमा° B. 3 प्रयाजा° C. 4 शासमाहरेत्यसिं B, शासमाहरेत्यसिं C W. 5 श्रितः B W. 6 °त्समंतमग्निना C, °त्समंत-

तमग्निना B W. 7 प्रमृशा° MSS. 8 तस्समद्ं MSS. 9 Thus accented MSS. 10 °स्या स्तीर्णाया MSS. 11 न्वारभेतेति C My, न्वारभतेति B W. 12 °तैवात्मानमु MSS. 13 यज्ञादंतरिया° C, यज्ञादंतरीया° B W My. 14 °र्थु C. 15 विशस्यमा° MSS. 16 °दिति MSS. 17 प्रहण्युनौं C, प्रहण्युनौं B W. 18 हि MSS. except C. 19 ? Thus C, विपृङ्गेण My, वित्वृंगेण B W. 20 ब्रूयुर्जहीति MSS. 21 °ज्ञिति MSS. 22 संज्ञपमाना° B W.

M. III. 8. 2 K. IV. 8. 2

1-3 स वै यदैतदाहुः संज्ञप्तः पशुरित्यथाध्वर्युरुपोत्तिष्ठन्नाह नेष्टः पत्नीमुदानयेति स नेष्टा पत्नीमुदानयति तामुदानेष्यन्वाचयति नमस्त आतानेति यज्ञो वा आतानो यज्ञं हि तन्वते जघनार्धो वा एष यज्ञस्य यत्पत्नी सेदं प्राची यज्ञं प्रसत्स्यन्ती भवति तस्मा एवैतन्नमस्करोति तस्मै निह्नुते तथैनमेष यज्ञो न हिनस्ति तस्मादाह नमस्त आतानेत्यनर्वा प्रेहीत्यसपत्नेन प्रेहीत्येवैतदाह घृतस्य कुल्या उप ऋतस्य पथ्या उपेति साधूपेत्येवैतदाह देवीरापः शुद्धा वोढ्वं सुपरिविष्टा देवेषु । सुपरिविष्टा वयं परिवेष्टारो भूयास्मेत्यप एवैतत्पुनाति ॥१॥

4 अथाद्भिः पशोः प्राणान्त्संस्पर्शयति सा यदद्भिः पशोः प्राणान्त्संस्पर्शयति जीवं वै देवानां हविरमृतममृतानां घ्नन्त्यु वा एतत्पशुं यदेनं संज्ञपयन्त्यापो वै प्राणो ऽन्नं ह्यापो ऽन्नं हि प्राणस्तदस्मिन्नेतान्प्राणान्दधाति तदेनं समीरयति तथा हात उदेति तथा संजीवति तथैतज्जीवं देवानां हविर्भवत्यमृतममृतानाम् ॥२॥

5 सा यत्पत्नी योषा वै पत्नी योषाया वा इमाः प्रजाः प्रजायन्ते तदेनं योषायाः पत्न्या एतज्जनयति ॥३॥

6a सा वाचं ते शुन्धामीति मुखं प्राणं ते शुन्धामीति नासिके चक्षुस्ते शुन्धामीत्यक्षिणी श्रोत्रं ते शुन्धामीति कर्णौ मेढ्रं ते शुन्धामीति वा नाभिं ते शुन्धामीति वा यो ऽयं पुरस्तात्प्राणो ऽथ पायुं ते शुन्धामीति यो ऽयं पश्चात्प्राण एतदस्मिन्नेतान्प्राणान्दधात्येतदेनं समीरयति ॥४॥

अथ पदः[४] सꣳहृत्य चरित्राꣳस्ते शुन्धामीति पद्भिर्वै प्रतितिष्ठति सा[५] 6b
स्मिन्नेतान्प्राणान्दधाति[५] यदेनꣳ समीरयत्यथैनं पद्भिः प्रतिष्ठापयति तस्मादाह
त्राꣳस्ते शुन्धामीति[६] ॥५॥

अथ याः परिशिष्टा आपो भवन्ति ताभिरध्वर्युश्च यजमानश्चानुषिञ्चतः 7-8
ꣳश्चैवास्मिꣳस्तद्धत्तः समीरयतश्चैनं यदु चैवास्य संज्ञपयन्तः क्रूरीकुर्वन्ति
स्थापयन्ति तदु चैवास्यैतदाप्याययतस्तच्छमयतो मेध्यमु चैवैनमेतत्कुरुतस्त-
दनुषिञ्चतः ॥६॥

तावनुषिञ्चतो मनस्त आप्यायतां वाक्त आप्यायतां प्राणस्त आप्यायतां 9-11a
स्त आप्यायताꣳ श्रोत्रं त आप्यायतामित्येतदस्मिन्नेतान्प्राणान्धत्त एतदेनꣳ
रयतो यत्ते क्रूरं यदास्थितं तत्त आप्यायतां तत्ते निष्ट्यायतामिति तद्यदस्य
पयन्तः[७] क्रूरीकुर्वन्ति यदास्थापयन्ति तदेवास्यैतदाप्याययतस्तच्छमयतस्तत्ते
त्विति तदेनं मेध्यं कुरुतः ॥७॥

शमहोभ्य इति जघनार्धे निषिञ्चति क्रूरीव[८] वा इदं कुर्वन्ति यत्पशुꣳ 11b
पयन्ति नेदिदमन्वहोरात्राणि शोचानित्यापो[९] वै शान्तिस्तदद्भिः शान्त्या शमयति
स्मादाह शमहोभ्य इति[१०] ॥८॥

अथोत्तानं पर्यस्यन्ति स इदं तृणमधिनिदधात्योषधे[११] त्रायस्वेति वज्रो वा 12-14
यच्छासस्तदेनमेतदोषधिभिरेवान्तर्दधाति तथैनमेष वज्रो न हिनस्ति स्वधिते
ꣳहिꣳसीरित्याच्छेति वज्रो वा एष यच्छासस्तथैनमेष वज्रो न हिनस्ति स यदेतया
तयाश्रियाच्छेत्येषा हि यजुष्कृता मेध्या भवति स यदिदमग्रं तृणस्य तत्सव्ये
कुरुते यद्बुध्नं तद्दक्षिणे स यथो[१२] लोहितमुत्पतति तदुभयतो ऽनक्ति रक्षसां
ऽसीति रक्षसाꣳ ह्येष भागो यदसृक् स यदुभयतः परिच्छिन्नं भवत्युभयतः
च्छिन्नानि[१३] हि रक्षाꣳस्यमूलान्युभयतः परिच्छिन्नान्यन्तरिक्षमनुचरन्ति[१३] तस्मा-
यतः परिच्छिन्नं भवति[१४] ॥९॥

तदुपास्याभितिष्ठतीदमहꣳ रक्षो ऽभितिष्ठामीदमहꣳ रक्षो ऽववाधे । 15
महꣳ रक्षो ऽधमं तमो नयामीति यज्ञो वै यजमानो यज्ञेनैवैतन्नाष्ट्रा रक्षाꣳस्य-
यते[१५] ॥१०॥

अथ वपामुत्खिद्य वपाश्रपण्यौ प्रोर्णोति घृतेन द्यावापृथिवी प्रोर्ण्वाथामि- 16

तीमे एवैतद्द्यावापृथिव्या[16] ऊर्जा रसेन भाजयत्यनयोरेव द्यावापृथिव्योरूर्जं दधाति ॥११॥

17 स यत्कार्ष्मर्यमय्यौ वपाश्रपण्यौ भवतो यत्र ह वा अग्रे देवाः पशुमालें तस्य होदीचः कृष्यमाणस्यावाङ् मेधः पपात स एष वनस्पतिरजायत स यन् माणात्समभवत्तस्मात्कार्ष्मर्यो नाम तेनैवैनमेतन्मेधसा समर्धयति कृत्स्नं क तस्मात्कार्ष्मर्यमय्यौ वपाश्रपण्यौ भवतः[18] ॥१२॥

18 परिवास्य[19] वपां पशुश्रपणे प्रतपति श्रपयत्येवैनां तन्नेदश्रृतामाहवनीये याणीत्यथोल्मुकमादाय पूर्वः प्रतिपद्यते तत्पुनरप्यर्जत्यथ यदिदमग्रं तृणस्य तत्प्रास्यति वायो वेः स्तोकानामिति स्तोकानामेवैषा समित्स्तोकेभ्य एवैनम मिन्द्धे ॥१३॥

19 अथोत्तरतो वपां प्रतपति श्रपयत्येवैनां तदथो अत्येष्यन्वा एतदग्निं प न्भवत्यग्नय एवैतन्निह्नुते तथैनमेषो ऽग्निरतियन्तं न हिनस्ति[20] ॥१४॥

20 सो ऽन्तराहवनीयं च यूपं च हरति स यदेतामनेन जघनेन न हरन्ति न्यानि हवींषि श्रृतानि हरन्ति नेदनयाश्रृतया क्रूरीकृतया यज्ञं प्रसजानीति[21] धौं ह[22] यज्ञात्स्याद्यदग्रेण यूपꣳ हरेयुस्तथा न वहिर्धा यज्ञाद्भवति तस्मादन्तरा नीयं च यूपं च हरत्यथ दक्षिणार्धे श्रपयति ॥१५॥

21-23a अथाभिजुहोति जुषाणो अग्निराज्यस्य वेतु स्वाहेति तथा हैते शृताः स्वा कृता स्तोका अग्निं प्राप्नुवन्त्यथाह स्तोकेभ्यो ऽनुब्रूहीति स एता आग्नेयी स्तोके ऽन्वाह[23] स यदाग्नेयी स्तोकेभ्यो ऽन्वाहेतःप्रदाना वै वृष्टिरितो वा अग्निर्वृष्टिं स एतै स्तोकैरेतान्स्तोकान्वनुते त एते वर्षन्ति तस्मादाग्नेयी स्तोकेभ्यो ऽन्वा यदाह शृता प्रचरेति ॥१६॥

23b.24a अथ स्रुचावादायाश्राव्याह स्वाहाकृतिभ्यः प्रेष्येति वषट्कृते जुहोति वपामेवाग्रे ऽभिघारयत्यथ पृषदाज्यम् ॥१७॥

24b.25a तद्वा आहुः पृषदाज्यमेव पूर्वमभिघारयेदिति प्राणः पृषदाज्यमिति व हाभिघारयन्तं[24] याज्ञवल्क्यं ब्राह्मणो ऽनुव्याजहारान्तरगादयमध्वर्युः प्राणं प्राण हास्यतीति स ह स्माह स्थविरो जीर्णिः शयान इमौ पलितौ बाहू अभूतां क ब्राह्मणस्य वचो बभूवेत्युत्तममु वै प्रयाजमिष्ट्वा ध्रुवामेवाग्रे ऽभिघारयति तथा

प्रथमावाज्यभागौ यक्ष्यन्भवत्यथ यथापूर्वमन्यानि हवीꣳष्युत्तम उ वा एष प्रयाज[15] एताम्[16] वा अत्र प्रथमाꣳ होष्यन्भवति तस्माद्वपामेव पूर्वामभिघारयेदथ पृषदाज्यम् ॥१८॥

स यद्वपामभिघारयति तदेवास्यापि पशुरभिघारितो[17] भवत्यथ यत्प्रत्यक्षं पशुं नाभिघारयति नेदश्रृतमभिघारयाणीत्येतदेवाभिघारितो भवति[18] यद्वपामभिघारयति ॥१९॥ 25b

उपस्तृणीत आज्यमवदधाति हिरण्यशकलमवदधाति वपामवदधाति हिरण्यशकलमथ[19] द्विरभिघारयति स यदुभयतो हिरण्यशकलौ[20] करोति जीवं वै देवानाꣳ हविरमृतममृतानां घ्नन्त्यु वा एतत्पशुं यदेनमग्नौ जुह्वत्यायुर्वा अमृतꣳ हिरण्यमायुष्येवैनमेतदमृते ऽन्ततः प्रतिष्ठापयति तथा[21] ह्यात[21] उदेति तथा संजीवति तथैतज्जीवं देवानाꣳ हविर्भवत्यमृतममृतानाम् ॥२०॥ 26.27a

अथाहाग्नीषोमाभ्यां छागस्य वपायै मेदसो ऽनुब्रूहीत्याश्राव्याहाग्नीषोमाभ्यां छागस्य वपां मेदः प्रेष्येति न प्रस्थितमित्याह प्रसुते प्रस्थितमित्याह[22] वषट्कृते जुहोति स यद्वपां जुहोति यस्या एव देवतायै हविर्भवत्येष पशुस्तामेव देवतामेतेन मेधसा प्रीणाति मेधो ह्येतद्यन्मेदः[23] सँतेन मेधसा प्रीतोत्तरꣳ हविरुपरमते श्रप्यमाणमथ समीच्यौ वपाश्रपण्यौ कृत्वोत्तरतो ऽनुप्रास्यति स्वाहाकृते ऊर्ध्वनभसं मारुतं गच्छतमिति याभ्यां वपामशिश्रपाम[24] नेत्त्ये[25] अमुयेवासत[26] इत्यथ चात्वाले मार्जयन्ते क्रूरीव[27] वा इदं कुर्वन्ति यत्पशुꣳ संज्ञपयन्ति यद्विशासत्यापो वै शान्तिस्तदद्भिः शान्त्या शमयति तस्माच्चात्वाले मार्जयन्ते ॥२१॥ द्वितीयं ब्राह्मणम् ॥ 27b-30

1 Thus emended (cp. VI. 2. 2. 7), यज्ञं प्रशस्यंती भवति B W, यज्ञं प्रशस्यंती भवति C. 2 Thus MSS. Read तथैनामेष ? 3 वा B W. 4 पदः B W. 5 सा यदास्मिन्नेता° MSS., °प्राणान्दधाति MSS. 6 °मीति MSS. 7 °पयंतः C. 8 Without accent the MSS. 9 शोचा° MSS. 10 इति MSS. 11 तृणमभि° C (cp. IV. 1. 2. 5). 12 यथो or यथा MSS. Read यतो. 13 परिछिन्नानि MSS. 14 भवति C. 15 Thus C both times.

( orig. ), °स्यपबाधते B W C ( sec. m. ) My. 16 °पृथिव्या MSS. 17 पशुमाले° B W. 18 भवतः C. 19 परिवास्य MSS. 20 °स्ति MSS. 21 प्रसजानीति MSS. 22 ह om. C. 23 न्वाह MSS. 24 हाभिघारयंतं MSS. 25 प्रयाया B. 26 एतमु B W. 27 पशुमभि° B W. 28 भवति MSS. 29 °शल्क° instead of °शकल° B W My. 30 °शल्कौ MSS. ( cp. IV. 8. 3. 8. ). 31 तथाहात C. 32 प्रस्थि° MSS. 33 °न्मेदः MSS. 34 °श्रपामु B W C ( orig. ) My, °श्रपाम C ( sec. m. ). 35 Thus B, नेत्ये W C My. 36 असुयेवा° MSS. 37 Without accent the MSS.

M. III. 8. 3

## K. IV. 8. 3

1.2 स वै यद्देवत्य एवैष पशुर्भवति तद्देवत्यं पुरोलाशमनुनिर्वपति स यत्तद्देवत्यं पुरोलाशमनुनिर्वपति सर्वेषां वा एष पशूनां मेधो यद्व्रीहियवौ तेनैवैनमेतन्मेधसा समर्धयति कृत्स्नं करोति स यद्वपया प्रचर्याथैतेन प्रचरन्ति[1] मध्यतो[2] वै वपामुत्खिदन्ति मध्यत एवैनमेतेन मेधसा समर्धयति मध्यतो ऽस्मिन्नेतन्मेधो दधाति तस्माद्वपया प्रचर्याथैतेन प्रचरन्त्यथैतं पशुं विशास्ति ॥१॥

3 तमाह त्रिः प्रच्यावयतादित्युत्तमे प्रच्याव[3] उत्तमार्धे हृदयं कुरुतादिति त्रिवृद्धि यज्ञस्तस्मादाह त्रिः प्रच्यावयतादित्यथ यदाह श्रृतः प्रचरेति ॥२॥

4 अथ शमितारं विशासति यत्त्वा पृच्छाच्छृतꣳ हविः शमिता३ इति श्रृतमित्येव ब्रवसि मा श्रृतꣳ हीति मा श्रृतꣳ हि भगव इति श्रृतमित्येव ब्रवसीति[4] ॥३॥

5-7 अथ पृषदाज्यस्योपहत्योपनिष्क्रम्य पृच्छति श्रृतꣳ हविः शमिता३ इति श्रृतमिति शमिता प्रत्याह तद्देवानामित्याहोपांꣳशु स यदेवं पृच्छति श्रृतं वै देवानाꣳ हविर्नाश्रृतꣳ शमितो[5] वा एतद्वेद यदैतच्छ्रृतं भवति श्रृतेन प्रचराणीति तथा यद्यप्यश्रृतं भवति श्रृतमेव देवेभ्यो भवति श्रृतं यजमानायानेना अध्वर्युः शमितर्येव तदेनो ऽथ यदुपांꣳश्वाह तद्देवानामिति तद्धि देवानां यच्छ्रृतं नाश्रृतं तस्मादुपांꣳश्वाह तद्देवानामिति स वै त्रिः पृच्छति त्रिवृद्धि यज्ञः ॥४॥

अथ पृषदाज्येन हृदयमभिघारयत्यात्मा वै मनो हृदयं प्राणः पृषदाज्यमात्मन्येवैतन्मनसि प्राणं दधाति तथा ह्यात उदेति तथा संजीवति तथैतज्जीवं[१] देवानाꣳ हविर्भवत्यमृतममृतानाम्[२] ॥५॥ 8

सो ऽभिघारयति सं ते मनो मनसा सं प्राणः प्राणेन गच्छतामिति न स्वाहा करोति न ह्येषाहुतिः स येनैव पशुं नयन्ति तेन पुनराहरन्ति तमन्तराहवनीयं च यूपं च हरति स यदेतꣳ शृतꣳ सन्तमनेन जघनेन न हरन्ति[८] येनान्यानि हवीꣳषि शृतानि हरन्ति नेदनेनाङ्गशो विकृत्तेन क्रूरीकृतेन यज्ञं प्रसजानीति बहिर्धो ह यज्ञात्स्याद्यदग्रेण यूपꣳ हरेयुस्तथा न बहिर्धा यज्ञाद्भवति तस्मादन्तराहवनीयं च यूपं च हरति ॥६॥ 9.10

अथ दक्षिणार्धे ऽवद्यति तत्प्लक्षशाखोत्तरबर्हिर्भवति स यत्प्लक्षशाखोत्तरबर्हिर्भवति यत्र ह वा अग्रे देवाः पशुमालेभिरे[९] तद्धैनं त्वष्टा शिरस्तो ऽभिववामोतैनमित्थं चिन्नालभेरान्निति त्वष्टा हि पशवस्तदेतत्त्वष्टुरभिवान्तं[१०] यन्मस्तिष्को यदनूके मज्जा तस्मादेतद्वान्तमिव भवति[११] तस्मादेतस्य नाश्नीयात्त्वष्टुर्ह्येतदभिवान्तं तस्याभिवान्तस्य[१२] पशोरवाङ् मेधः पपात स एष वनस्पतिरजायत तं देवाः प्रापश्यꣳस्तस्मात्प्रक्षो नाम प्रक्षो ह वै नामैतद्यत्प्लक्ष इत्याहुस्तेनैवैनमेतन्मेधसा समर्धयति कृत्स्नं करोति तस्मात्प्लक्षशाखोत्तरबर्हिर्भवति ॥७॥ 11.12

उपस्तृणीत आज्यं जुह्वां चोपभृति चावदधाति हिरण्यशल्का उपस्तृणीत आज्यं वसाहोमहवन्यां[१३] च समवत्तधान्यां च ॥८॥ 13

अथाह मनोतायै हविषो ऽवदीयमानस्यानुब्रूहीति स यन्मनोताया अनुवाच[१४] आह सर्वा वै देवताः पशुमालभ्यमानमुपसंगच्छन्ते मम नाम ग्रहीष्यति मम नाम ग्रहीष्यतीति सर्वासाꣳ ह्येतद्देवतानाꣳ हविर्यत्पशुस्तासाꣳ सर्वासां देवतानां पशौ मनाꣳस्योतानि भवन्ति तान्येवैतत्प्रीणाति तथो तान्यमोघायोपसंगच्छन्ते तस्मान्मनोताया अनुवाच आह ॥९॥ 14

स वै हृदयस्याग्रे ऽवद्यति स यन्मध्ये सतो ऽथ हृदयस्याग्रे ऽवद्यति प्राणो वै हृदयमेतस्माद्ध्ययमूर्ध्वः प्राण उच्चरति प्राण उ वै पशुर्यावद्ध्येव प्राणेन प्राणिति तावदेव पशुरथ यदा प्राणो ऽपक्रामत्यनर्थ्य एव दारु भूतः शेते स एष पशुर्यद्धृदयं तत्प्रत्यक्षमेवैतत्पशोरवद्यति तथा यद्यप्यवदानं जहात्यहीनमेवास्य[१५] तद्भवति तस्माद्धृदयस्याग्रे ऽवद्यत्यथ यथापूर्वमवद्यति ॥१०॥ 15.16

17-19 अथ जिह्वाया अवद्यति सा हीयं पूर्वार्धे प्रतिष्ठत्यथ वक्षसस्ताद्धि ततो ऽन्गथ दोष्णो ऽथ पार्श्वयोरथ वृक्कयोरथ तनिम्नो ऽथैतं गुदं त्रेधा करोति तद्यत्स्थविष्ठं तदुपयड्भ्य उपनिदधत्यथ यन्मध्यं तज्जुह्वां द्वेधा कृत्वान्वदधात्यथ यदणिम त्र्यङ्गेष्वथाध्यूधसः श्रोणेरेतावज्जुह्वामवद्यत्यथोपभृति[16] त्र्यङ्गयस्य दोष्ण एतद्गुदस्य तृतीयं द्वेधा कृत्वा त्र्यङ्गयायाः श्रोणेरेतावदुपभृत्यथ हिरण्यशल्काववधायाभिघारयति[17] ॥११॥

20-23 अथ वसाहोमं गृह्णीते रेलसीति लेलयमिव[18] हि यूस्तस्मादाह रेलसीत्यग्निष्ट्वा श्रीणात्वित्यग्निर्ह्येतच्छ्रीणात्यापस्त्वा समरिणन्नित्यापो ह्येतꣳ सर्वेभ्यो ऽङ्गेभ्यो रसꣳ संभरन्ति तस्मादाहापस्त्वा समरिणन्निति वातस्य त्वा ध्राज्यै पूष्णो रꣳह्या इत्यन्तरिक्षाय वा एतद्गृह्णात्यन्तरिक्षमन्वयं पवते यो ऽयं पवत एतस्मा उ हि गृह्णाति तस्मादाह वातस्य त्वा ध्राज्या इति पूष्णो रꣳह्या इत्येष वाव पूषा यो ऽयं पवत एतस्मा उ हि गृह्णाति तस्मादाह पूष्णो रꣳह्या इत्यूष्मणो व्यथिषदित्येष वा ऊष्मा यो ऽयं पवत एतस्मा उ हि गृह्णाति तस्मादाहोष्मणो व्यथिषदिति[19] ॥१२॥

24 अथ द्विरभिघार्य शासेन वा पार्श्वेन वा प्रयौति प्रयुतं द्वेष इति नाष्ट्रा एवैतद्रक्षाꣳस्यपहन्ति ॥१३॥

25.26 अथ संमवत्तधान्यां यूरासिच्य तदवदधाति जिह्वाꣳ हृदयं वक्षस्तनिम मतस्ने वनिष्ठुमथ द्विरभिघारयति स यद्युभयतो हिरण्यशल्कौ करोति जीवं वै देवानाꣳ हविरमृतममृतानां घ्नन्त्यु वा एतत्पशुं यदेनमग्नौ जुह्वत्यायुर्वा अमृतꣳ हिरण्यमायुष्येवैनमेतदमृते ऽन्ततः प्रतिष्ठापयति तथा ह्यात उदेति तथा संजीवति तथैतज्जीवं देवानाꣳ हविर्भवत्यमृतममृतानाम् ॥१४॥

27 अथ यदक्ष्णयावद्यति सव्यस्य च दोष्णो दक्षिणायाश्च श्रोणेर्दक्षिणस्य च दोष्णः सव्यायाश्च श्रोणेस्तस्मादयमक्ष्णया पशुः पदः प्रहरति यद्ध सम्यगवद्येत्सम्यगेव पशुः पदः प्रहरेदथ यन्न शिरसो नाꣳसयोर्नानूकस्य नापरसक्थ्नोरवद्यति[20] ॥१५॥

28.29a असुरा ह वा अग्रे पशुमालेभिरे तद्देवा भीषा नोपावेयुः सो हेयमदितिरुवाचेयं वै पृथिव्यदितिर्मा यूयमेतदाद्द्वमित्यहमेवैतस्याध्यक्षा भविष्यामि यथा यथैतएतेन चरिष्यन्तीति तेन ह यदा चेरुरथ होवाचान्यतरामाहुतिमहौषुरित्यन्यतरां पर्यशिषन्निति तद्यां पर्यशिषꣳस्तानीमान्यवदानानि येषामेतदवद्यति तत एतद्देवा

स्विष्टकृते ऽयङ्गान्यपाभजꣳस्तस्मात्तेषामुपभृत्यवद्यति ॥१६॥

अथ हासुराः शिरसो ऽꣳसयोरनूकस्यापरसक्थ्नोरित्यवाद्यꣳस्तस्मात्तेषां नावद्यत्यवत्तꣳ हि तेषां यातयामानि हि तान्यथ यद्धेव त्वष्टानूकमभ्यवामीत्तस्मादनूकस्य नावद्यति ॥१७॥ 29b.c

अथाहाग्नीषोमाभ्यां छागस्य हविषो ऽनुब्रूहीत्याश्राव्याहाग्नीषोमाभ्यां छागस्य हविः प्रेष्येति न प्रस्थितमित्याह प्रसुते प्रस्थितमित्याह[21] ॥१८॥ 29d

सो ऽर्धर्चे वसाहोमं जुहोति स यदर्धर्चे वसाहोमं जुहोतीतो वा अयमूर्ध्व उच्छ्रितो रसो यमिदमिमाः प्रजा उपजीवन्त्यर्वाग्दिवो ऽस्मिन्नन्तरिक्षे रसो वै वसाहोमस्तमेतꣳ रसमेतेन रसेन तीव्रीकरोत्येतस्मिन्रस एतꣳ रसं दधाति तस्मादयꣳ रसो ऽद्यमानः पीयमानो न क्षीयते ॥१९॥ 30

अथ यद्धेवार्धर्चे[22] जुहोत्यर्धं वा इयं याज्याया अर्धमसौ द्यौरन्तरो वै द्यावापृथिव्यावन्तरिक्षमन्तरिक्षाय[23] वा एतज्जुहोति तस्मादुभावर्धर्चावन्तरेण जुहोति ॥२०॥ 31

स जुहोति घृतं घृतपावानः पिबत वसां वसापावानः पिबत । अन्तरिक्षस्य हविरसि स्वाहेत्येतेन वैश्वदेवेन यजुषा वैश्वदेवꣳ हीदमन्तरिक्षं यदेनमिमाः प्रजा या इमाः प्राणन्ति[24] चोदनन्ति[24] च ता[25] अनुसंचरन्ति[25] तेन वैश्वदेवं वषट्कृते यज्जुह्वां भवति तज्जुहोति ॥२१॥ 32

अथ पृषदाज्यस्योपहत्याह वनस्पतये ऽनुब्रूहीत्याश्राव्याह वनस्पतये प्रेष्येति वषट्कृते जुहोत्येतस्वेवैतद्वज्रं यूपं भागिनं करोत्येष हि वनस्पतिरेतस्वेवैतत्पशुꣳ सोमं करोति सोमो हि वनस्पतिः स यदुभे आहुती अन्तरेणैतद्यजति[26] तेन होभे व्याप्नोति तेनोभे सोमो भवति तस्मादुभे आहुती अन्तरेणैतद्यजति ॥२२॥ 33

पर्यस्यमान[27] आह यदुपभृति भवत्यग्नये स्विष्टकृते ऽनुब्रूहीत्याश्राव्याहाग्नये स्विष्टकृते प्रेष्येति वषट्कृते जुहोत्यथ यदिदं परिशिष्टं वसाहोमस्य भवति तेन दिशो व्याघारयति दिशः प्रदिश आदिशो विदिश उद्दिशो दिग्भ्यः[28] स्वाहेति पञ्च दिशो रसो वै वसाहोमः सर्वास्वेवैतद्दिक्षु रसं दधाति तस्मादयं दिशि दिश्येव[29] रसो ऽभिगम्यते ॥२३॥ 34.35

अथ पशुꣳ संमृशत्येषैव संमर्शनस्य वेला यदि तु मन्येतेमे[30] विमथिष्यन्ते य इमे ऽभितस्तिष्ठन्तीत्यपि पुरैव संमृशेदेषा त्वेव वेला ॥२४॥ 36

37 स संमृशत्यैन्द्रः प्राणो अङ्गे अङ्गे निधीत ऐन्द्र उदानो अङ्गे अङ्गे निधीत इति तद्यदङ्गशो विकृत्तः कूरीकृतो भवति तदेनमेतत्प्राणोदानाभ्यामेव संदधाति तदेनꣳ समीरयति देव त्वष्टर्भूरि ते सꣳसमेतु सलक्ष्मा यद्विषुरूपं भवातीति कृत्स्नवृतमेवैनमेतत्सꣳस्करोति देवत्रा यन्तमवसे सखायो ऽनु त्वा मातापितरो मदन्त्विति कृत्स्नवृतमेवैनमेतत्सꣳस्कृत्य यत्रैतदग्नावहौषीत्तत्सर्वमनुसमस्यति तथास्यैष कृत्स्न एव सर्वतनूरमुष्मिल्लोके पशुः संभवति ॥२५॥ तृतीयं ब्राह्मणम् ॥

1 प्रचरंति MSS. 2 मेध्यतो B W. 3 Without accent the MSS. 4 ब्रवसीति B W, ब्रवसीति C. 5 Read शमितो ? 6 तथैवैतज्जीवं C. 7 °नां MSS. 8 हरंति B W. 9 पशुमाले° B W. 10 °भिवातं B W. 11 भवति C. 12 तस्याभिवातस्य MSS. 13 वसा° B W. 14 आनु° B W. 15 जहात्य° MSS. 16 श्रोणेवरेताव° B. 17 °शल्कावदायाभि° MSS. 18 Cp. I. 2. 1. 10. 19 °दिति MSS. 20 °रवद्यति MSS. 21 °त्याह B W. 22 यद्वे-वार्धर्चे B. 23 °पृथिव्याव° MSS. 24 Thus accented MSS. ( some चोदनंति ), cp. V. 1. 2. 9. 25 ता अनुसंचरंति C and without accent My, ता अनुचरंति B W. Read ता अनुसंचरन्ति ? ( cp. IV. 8. 4. 2 ). 26 °रेणैतद्यजति MSS. 27 पर्यस्य° MSS. 28 दिग्भ्यः B W. 29 दिश्येव MSS. 30 मन्येतेमे MSS.

M. III. 8. 4

## K. IV. 8. 4

1 त्रीणि ह वै पशावेकादशान्येकादश प्रयाजा एकादशानुयाजा एकादशोपयजा एतावान्हि[1] पशुर्दशेमाः[1] पाण्या अङ्गुलयो दशामूः पाद्या दशेमे प्राणाः प्राण उदानो व्यान एतमु वा अनु सर्वे पशवस्तस्मादेतानि त्रीणि पशावेकादशानि ॥१॥

2-4 तदाहुः किं तद्यज्ञे क्रियत इति यस्मात्सर्वेभ्यो ऽङ्गेभ्यः शिवः प्राण इति गुदो वै प्राणः स ह्ययं प्राङाततस्तं प्राणो ऽनुसंचरति[1] स यदेतं त्रेधा करोति तृतीयं जुह्वां तृतीयमुपभृति तृतीयमुपयड्भ्यस्तस्मात्सर्वेभ्यो ऽङ्गेभ्यः शिवः प्राणः ॥२॥

तदाहुः स वै पशुमालभेतेति य एनं मेध उपनयेदिति स यदि कृशः स्याद्यत्रैवादो वपामुत्खिदन्ति तद्यदध्युदर्यं मेदः परिशिष्टꣳ स्यात्तदगुदे समृषेद्गुदो वै प्राणः स ह्ययं प्राङ्गततस्तं प्राणो ऽनुसंचरति प्राण उ वै पशुर्यावद्ध्येव प्राणेन प्राणिति तावदेव पशुरथ यदा प्राणो ऽपक्रामत्यनर्थ्य एव दारु भूतः शेते स एष पशुर्यद्गुदो मेद उ वै मेधस्तदेनं मेध उपनयत्येवं कुर्याद्यदि कृशः स्याद्यद्युवꣳसलः स्यान्नैतदाद्रियेत स्वयꣳ ह्येव स मेध उपेतो भवति ॥३॥ 5.6

अथ पृषदाज्यं गृह्णीते स यत्पृषदाज्यं गृह्णीते मिथुनमेवैतत्प्रजननं क्रियते यदाज्यं च भवति दधि च द्वे वै ते भवतो द्वन्द्वं वै मिथुनं प्रजननं मिथुनमेवैतत्प्रजननं क्रियते ॥४॥ 7

तेनानुयाजेषु प्रचरन्ति पशवो वा अनुयाजाः पयः पृषदाज्यं पशुष्वेवैतत्पयो दधाति तदिदं पशुषु पयो हितं प्राण उ वै पृषदाज्यमन्नꣳ हि पृषदाज्यमन्नꣳ हि प्राणस्तदिमं पुरस्तात्प्राणं दधात्यथ यत्पश्चाद्गुदेनोपयजति गुदो वै प्राणः स ह्ययं प्राङ्गततस्तं प्राणो ऽनुसंचरति तदिदं पश्चात्प्राणं दधाति ताविमा उभयतः प्राणौ हितौ यश्चायमुपरिष्टाद्यश्चाधस्तात्स वा एष एको होता द्वाभ्यां वषट्करोति यश्चायं प्रचरति यश्चोपयजति स यद्यजन्तमुपयजति तस्मादुपयजो नाम स यदुपयजति प्रैवैनं तज्जनयति तस्माज्जघनार्ध उपयजति जघनार्धाद्धि योषितः प्रजाः प्रजायन्ते ॥५॥ 8-10

स उपयजति समुद्रं गच्छ स्वाहेति रेतो वै समुद्र आपो हि समुद्र आपो हि रेतो रेत एवैतत्सिञ्चति ॥६॥ 11

देवꣳ सवितारं गच्छ स्वाहेति सविता वै देवानां प्रसविता सवितृप्रसूत एवैतत्प्रजनयति ॥७॥ 13

अन्तरिक्षं गच्छ स्वाहेत्यन्तरिक्षं वा अन्विमाः प्रजाः प्रजायन्ते ऽन्तरिक्षमेवैतदन्विमाः प्रजाः प्रजनयति ॥८॥ 12

मित्रावरुणौ गच्छ स्वाहेति प्राणोदानौ वै मित्रावरुणौ प्राणोदानावेवैतदासु प्रजासु दधाति ताविमौ प्राणोदानावासु प्रजासु हितौ ॥९॥ 14

अहोरात्रे गच्छ स्वाहेत्यहोरात्रे वा अन्विमाः प्रजाः प्रजायन्ते ऽहोरात्रे एवैतदन्विमाः प्रजाः प्रजनयति ॥१०॥ 15

16 छन्दाꣳसि गच्छ स्वाहेति सप्त वै छन्दाꣳसि सप्त वै ग्राम्याः पशवः सप्तारण्यास्तानेवैतदुभयान्प्रजनयति ॥११॥

17.18 द्यावापृथिवी गच्छ स्वाहेत्येता एवैतत्प्रजाः सृष्ट्वा ता द्यावापृथिवीभ्यां परिजग्राह ता इमाः प्रजा आभ्यां द्यावापृथिवीभ्यां परिगृहीतास्तद्यदेतावदेवाभविष्यद्यावत्यो हैवाग्रे प्रजाः सृष्टास्तावत्य एवाभविष्यन्न प्राजनिष्यत[12] प्रत्येव जनयति ॥१२॥

III. 8. 5. 2 सोमं गच्छ स्वाहेति रेतो वै सोमो रेत एवैतत्सिञ्चति ॥१३॥

1 यज्ञं गच्छ स्वाहेति रेतो वै यज्ञो रेत एवैतत्सिञ्चति ॥१४॥

3 नभो दिव्यं गच्छ स्वाहेति रेतो वै नभो दिव्यमापो हि नभो दिव्यमापो हि रेतो रेत एवैतत्सिञ्चति ॥१५॥

4.5 अग्निं वैश्वानरं गच्छ स्वाहेतीयं वै पृथिव्यग्निरिमामेवैतत्प्रतिष्ठामभीमाः प्रजाः प्रजनयति ता इमाः प्रजा इमां प्रतिष्ठामभि प्रजायन्ते स यदेतत्पुनः प्रजनयति तस्माद्धिमाः प्रजाः पुनरभ्याकारं[14] प्रजायन्ते ऽथ मुखं विमृष्टे मनो मे हार्दं यच्छेति तथो आत्मानं न प्रवृणक्ति ॥१६॥

6.7 अथ जाघन्या पत्नीः संयाजयन्ति योषा वै पत्नी जघनार्धाद्धि[15] योषितः प्रजाः प्रजायन्ते तस्माज्जाघन्या पत्नीः संयाजयन्ति सो ऽन्तरतो देवानां पत्नीभ्यो ऽवद्यत्यन्तरतो हि योषितः प्रजाः प्रजायन्त उपरिष्टादग्नये गृहपतये वृषा वा अग्निरुपरिष्टाद्धि योषां वृषाधिद्रवति तस्मादुपरिष्टादग्नये गृहपतये ॥१७॥

8-10 अथ हृदयशूलेनावभृथं यन्त्येतद्धि पशोरालभ्यमानस्य हृदयꣳ शुक्समवैति सा हृदयाच्छूलꣳ स येनैव श्रपयति[16] स हृदयशूलो ऽथालंजुषꣳ शृतमेव[17] परितृन्दन्ति[17] तस्माच्छ्रपयितव[18] एव ब्रूयात्स न परास्यो यद्धैनं परास्येदोषधीश्च ह वनस्पतीꣳश्च शुक्प्रविशेद्यद्यु[19] हैनमप्सु परास्येदपो[20] ह शुक्प्रविशेदवभृथमेवैनेनेयात्स यद्यहान्तिकमुदकꣳ स्यात्तदेवेयाद्यद्यु तस्मै ग्लायेद्बहिर्वेद्युदपात्रं निनीय तदार्द्रस्य च शुष्कस्य च संधा उपगूहति मापो मौषधीर्हिꣳसीरिति तथा नापो नौषधीर्हिनस्ति धाम्नो धाम्नो राजꣳस्ततो वरुण नो मुञ्च । यदाहुरघ्न्या इति वरुणेति शपामहे इति सर्वस्मान्नः किल्बिषादेनसो वरुण्यात्प्रमुञ्चेत्येवैतदाह तथा सर्वस्मात्किल्बिषादेनसो वरुण्यात्प्रमुच्यते ॥१८॥

11 अथाप उपस्पृशन्ति सुमित्रिया न आप ओषधयः सन्त्वित्येतस्माद्धि भीषा

...वद्रेतेन प्रचरन्ति तावदापश्चौषधयश्चापक्रामन्ति[21] ताभिरेवैतत्पुनर्मित्रधेयं कुरुते ...तं पुनः प्रविशन्ति ता आत्मनि कुरुते तस्मादाह सुमित्रिया न आप ओषधयः ...त्विति स वा एष नाग्नीषोमीयस्य पशोः क्रियते नाग्नेयस्य वशाया एव क्रियते सꣳ-...षो ऽनुक्रियते तद्धैवापीतरयोः कृतो भवति ॥ १९ ॥ चतुर्थं ब्राह्मणम् ॥ ...मो ऽध्यायः ॥

1 एतावान्हि पशुर्दं° B My, एतावान्हि पशुर्दं° C. Read °र्देशेमाः ? ( cp. IV. 1. 4. 15 ). 2 नुसंचरति MSS. 3 °दध्युदर्यङ्मेदः C My. 4 Thus emended, संमृशे° My, सम्मृशे° B W C. 5 मेध B W C (orig.). 6 उपेतो C. 7 द्वे B C W. 8 Without accent the MSS. 9 °याजो B. 10 °दासु MSS. 11 हितौ MSS. 12 Thus emended, प्राजनिष्यंतः MSS. 13 हि om. B W. 14 पुन B W. 15 Read जघनार्धाद्धि ( cp. IV. 8. 4. 5 ). 16 Without accent the MSS. 17 शृतमेव परितृंदंति MSS. 18 तस्माछ्रपयितव C (sec. m. ), तस्माछ्रपयित B W My, तस्माछ्रपयतिव C (orig.). Read तस्माच्छ्रपयितवा ? 19 °शेषदु B W C My. 20 °दपो B W. 21 °श्चापक्रामंति MSS.

## K. IV. 9. 1

M. III. 9. 1

प्रजापतिर्ह वै प्रजाः ससृजानः स ह रिरिचान इव मेने तस्मादु ह पराच्यः 1 प्रजा बभूवुर्नास्मा अतिष्ठन्त श्रिये ऽन्नाद्याय ॥१॥

स हेक्षां चक्रे ऽरिक्ष्यहेति[1] यस्मा उ कामाय प्रजा असृक्षि न मे तत्समार्धि 2.3 पराच्यस्ता अभूवन्न मे तिष्ठन्ते श्रिये ऽन्नाद्यायेति स कथं नु पुनश्चात्मानमाप्याययेयुप च मा प्रजाः समावर्तेरꣳस्तिष्ठेरन्मे श्रिये ऽन्नाद्यायेति ॥२॥

सो ऽर्चञ्छ्राम्यन्नेतामेकादशिनीं ददर्श तयेजे तयेष्ट्वा पुनर्हात्मानमाप्याययदु- 4.5 पैनं प्रजाः समावर्तन्तातिष्ठन्तास्मै श्रिये ऽन्नाद्याय स वशीयानेवेष्ट्वाभवत्तस्मै[2] कमेकादशिन्या यजेतैवꣳ हैव प्रजया पशुभिराप्यायत उपैनं प्रजाः समावर्तन्ते[3] तिष्ठन्ते[4]

ऽस्मै श्रिये ऽन्नाद्याय स वशीयानेवेष्ट्वा[1] भवति तस्मादेकादशिन्या यजेत ॥३॥

6 स एष आग्नेयः प्रथमः पशुर्भवत्यग्निर्वै देवतानां मुखꣳ स प्रजापति एष यजमानो निदानेन ॥४॥

7 अथ सारस्वतो वाग्वै सरस्वती वाचैवैतत्प्रजापतिराप्यायत[1] वागेनमुपसमा वर्तत वाचमनुकामात्मनो ऽकुरुत वाचो एवैष एतदाप्यायते[1] वागेनमुपसमावर्तते वाचमनुकामात्मनः कुरुते ॥५॥

8 अथ सौम्यो ऽन्नं वै सोमो ऽन्नेनैवैतत्प्रजापतिराप्यायतान्नमेनमुपसमावर्त तान्नमनुकमात्मनो ऽकुरुतान्नेनो एवैष एतदाप्यायते ऽन्नमेनमुपसमावर्तते ऽन्नमनु कमात्मनः कुरुते ॥६॥

9 स यदन्वङ् भवति सारस्वतꣳ सौम्यो वाग्वै सरस्वत्यन्नꣳ सोमस्तस्माद् वाचा प्रसाम्यन्नाद एव[8] भावुकः[8] ॥७॥

10 अथ पौष्णः पशवो वै पूषा पशुभिरेवैतत्प्रजापतिराप्यायत[1] पशव एनमुप समावर्तन्त पशूननुकानात्मनो ऽकुरुत पशुभिर्वेवैष[6] एतदाप्यायते पशव एनमुपस मावर्तन्ते पशूननुकानात्मनः कुरुते ॥८॥

11 अथ बार्हस्पत्यो ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैतत्प्रजापतिराप्यायत[1] ब्रह्मैनमुपस मावर्तत ब्रह्मानुकमात्मनो ऽकुरुत ब्रह्मणो एवैष एतदाप्यायते ब्रह्मैनमुपसमावर्तते ब्रह्मानुकमात्मनः कुरुते ॥९॥

12 स यदन्वङ् भवति पौष्णं बार्हस्पत्यो ब्रह्म वै बृहस्पतिः पशवः पूषा तस्माद्ब्राह्मण एव पशूनपिधृष्णुतमो[1] यदस्य पुरआहिता[10] मुखआहिताः[10] पशवो भवन्त्युत हि सर्वं दत्त्वा[11] चरति ॥१०॥

13 अथ वैश्वदेवः सर्वं वै विश्वे देवाः सर्वेणैवैतत्प्रजापतिराप्यायत[1] सर्वमेनमु पसमावर्तत सर्वमनुकमात्मनो ऽकुरुत सर्वेणो एवैष एतदाप्यायते सर्वमेनमुपसमा वर्तते सर्वमनुकमात्मनः कुरुते ॥११॥

14 स यदन्वङ् भवति बार्हस्पत्यं वैश्वदेवो ब्रह्म वै बृहस्पतिः सर्वं विश्वे देवा अस्यैवैतत्सर्वस्य ब्रह्म मुखं करोति तस्मादस्य सर्वस्य ब्राह्मण एव मुखम् ॥१२॥

15 अथैन्द्रः क्षत्रं वै वीर्यमिन्द्रः क्षत्रेणैवैतद्वीर्येण प्रजापतिराप्यायत[1] क्षत्रमेनं वीर्यमुपसमावर्तत क्षत्रं वीर्यमनुकमात्मनो ऽकुरुत क्षत्रेणो एवैष एतद्वीर्येणाप्यायते क्षत्रमेनं वीर्यमुपसमावर्तते क्षत्रं वीर्यमनुकमात्मनः कुरुते ॥१३॥

स यदन्वङ् भवति वैश्वदेवमैन्द्रः क्षत्रं वा इन्द्रो विशो विश्वे देवा अन्नमु विशः क्षत्रस्यैवैतत्पुरस्तादन्नं करोति तस्मात्क्षत्रियो ऽन्नादो यदस्य पुरआहितं आहितमन्नं भवति ॥१४॥ 16

अथ मारुतो विशो वै मरुतो देवविशं भूमो वै विड्भूम्नैवैतत्प्रजापतिरा-प्यायत[11] भूमैनमुपसमावर्तत भूमानमनुकमात्मनो ऽकुरुत भूम्नो एवैष एतदाप्यायते भूमैनमुपसमावर्तते भूमानमनुकमात्मनः कुरुते[14] ॥१५॥ 17

स यदन्वङ् भवत्यैन्द्रं मारुतः क्षत्रं वा इन्द्रो विशो विश्वे देवा विशो मरुत उभयत एवैतत्क्षत्रं विशा परिबृंहति तदिदं क्षत्रमुभयतो विशा परिबृल्हम् ॥१६॥ 18

अथैन्द्राग्नस्तेजो वा अग्निरिन्द्रियं वीर्यमिन्द्रस्तदुभाभ्यामेवैताभ्यां वीर्याभ्यां प्रजापतिराप्यायतोभे एनमेते वीर्ये उपसमावर्तेतामुभे एते वीर्ये अनुके आत्मनो ऽकुरुत उभाभ्यामेवैष एताभ्यां वीर्याभ्यामाप्यायत उभे एनमेते वीर्ये उपसमावर्तेते उभे एते वीर्ये अनुके आत्मनः कुरुते ॥१७॥ 19

अथ सावित्रः सविता वै देवानां प्रसविता तथो हास्मा एते सवितृप्रसूताः सर्वे कामाः समृध्यन्ते ॥१८॥ 20

अथ वरुणो वरुण्यादेवैतत्सर्वस्मात्किल्बिषादेनसो ऽन्ततो वरुणपाशात्प्रजाः प्रमुञ्चति ता अस्यानमीवा अकिल्बिषाः प्रजाः प्रजायन्ते तस्माद्वारुणः ॥१९॥ 21

स यदि यूपैकादशिन्यामेतां पश्वेकादशिनीमालभेताग्नेयमग्निष्ठ[15] आलभे-ताथेतरान्यथापूर्वं यद्युवेकयूप[16] आग्नेयं प्रथममालभेताथेतराननूचो[17] यथापूर्वं तान्य-त्रोदीचो नयेयुस्तदाग्नेयं प्रथमं नयेयुरथेतराननूचो यथापूर्वं तान्यत्र संज्ञपये-युस्तदाग्नेयमवरार्धे संज्ञपयेयुरथेतरान्यथापूर्वं[18] पराचस्तैरु शृतैर्यथान्तरं प्रच-रन्ति ॥२०॥ प्रथमं ब्राह्मणम् ॥ 22-27

1 °रिष्यहेति C My. 2 Thus MSS. Read वसी° ? 3 °वर्त्ततेतिष्ठंते B C W. 4 Read वसीयान् as before. 5 °शप्यायत B W. 6 एतदाप्यायते C. 7 Read एव भावुकः ? 8 I. e. पशुभिः । उ । एव । एषः. 9 Read perhaps पशूनभिध्°. 10 Thus MSS. 11 दत्वा MSS. 12 °राप्यायत B C W. 13 °राप्या-यत B W. 14 करोति C. 15 पश्चेकादशिनी° B W,

पश्चैकादशिनी° C, °मालभेता° B C W. 16 यद्युवेकयूप B, यद्युवेकयूप C W. 17 प्रथममालभेता° B C W. 18 संज्ञपये° C.

M. III. 9. 2

K. IV. 9. 2

1 स वै वसतीवरीराहरति स यद्वसतीवरीराहरति यत्र वै यज्ञस्य शि ऽच्छिद्यत तस्य रसो द्रुत्वापः प्राविशत्स एष रस एति या एता आपः स्यन्द तेनैवैना एतद्रसेन स्यन्दमाना मन्यन्ते यः स यज्ञस्य रसस्तमेवैतद्रसं[5] स्यन्दमा मन्यन्ते ॥१॥

2.3 स यद्वसतीवरीराहरति य एव स यज्ञस्य रसो ऽपः प्राविशत्तमेवैतद्र माहरति तं यज्ञे दधाति तस्मादेनाः सर्वेषु सवनेषु त्रेधानुविभजति सर्वेष्वेवैतत्सव रसं दधाति सर्वाण्येव सरसानि[3] करोति तस्माद्वाव वसतीवरीराहरति ॥२॥

4 ताः स्यन्दमानानां गृह्णीयादेद्धि[4] स यज्ञस्य रस एतमु वाव तं यज्ञस्य रस स्यन्दमानं मन्यन्ते या एता आपः स्यन्दन्ते तेनैवैना एतद्रसेन स्यन्दमाना मन्यन्ते यः स यज्ञस्य रसस्तत्प्रत्यक्षं यज्ञस्य रसं गृह्णानीति तस्मात्स्यन्दमानानां गृह्णीयात् ॥

5 गुप्तय उ वा एता गृह्णाति गोपीथाय सर्वमु वा इदमन्यदीलयत्यपि[5] ऽयं पवते स ईलयत्यथैता एव नेलयन्ति[6] तस्मात्स्यन्दमानानां गृह्णीयात् ॥४॥

6.7 स दिवा गृह्णीयात्पश्यन्यज्ञस्य रसं गृह्णानीत्येतस्मा उ वा एता गृह्णाति एष तपति विश्वेभ्यो हि देवेभ्यो गृह्णात्येते हि रश्मयो विश्वे देवा दिवो वा तस्माद्दिवैव गृह्णीयादेतदु वा एतस्मिन्हविष्येतासु वसतीवरीष्वेता[5] रात्रिं दे उपवसन्ति यैषोपवसथ्या[7] स यथा श्रेयसे ऽभ्यागमिष्यत आवसथमुपकल्पयेदेव तत्तस्माद्दिवैव गृह्णीयात् ॥५॥

8.9 अथ यद्यगृहीता अभ्यस्तमियाद्यदि पुरेजानः स्याद्य एवास्य निना कुम्भस्तस्माद्गृह्णीयात्पुरा वै तस्य दिवा गृहीता भवन्ति यः पुरेजानो[8] भवति यद्य त्मनानीजानः स्याद्यद्युपावसितो वा प्रतिवेशो वा पुरेजानः स्यात्तस्य निनाह्यात्कुम्भा द्गृह्णीयात्पुरा वै तस्य दिवा गृहीता भवन्ति यः पुरेजानो[8] भवति तस्मात्तस्य निना त्कुम्भाद्गृह्णीयादथो उपर्युपर्युल्कुषीं धारयेयुस्तदेतस्य[9] रूपं क्रियते य एष तपत्य हिरण्यं तद्वैवैतस्य रूपं क्रियते य एष तपत्येषो प्रायश्चित्तिः ॥६॥

10-12 अथ वा अतो गृह्णात्येव हविष्मतीरिमा आपो हविष्मां३[10] आविवासती

वा आसु रसः प्रविष्टस्तस्मादाह हविष्मतीरिमा आप इति हविष्मां३[10] आवि-
तीति यजमानो वै हविष्मान्त्स एना आविवासति हविष्मान्देवो अध्वर इति यज्ञो
ध्वरस्तदेतं यज्ञमाह यस्मा एतद्गृह्णाति हविष्मां३[10] अस्तु सूर्य इत्येतस्मै वा एता
ति य एष तपति विश्वेभ्यो हि देवेभ्यो गृह्णात्येते हि रश्मयो विश्वे देवास्तस्मा-
हविष्मां३[10] अस्तु सूर्य इति[11] ॥७॥

अथाग्रेण पत्नीं जघनेन गार्हपत्यं तत्सादयत्यग्नेर्वो ऽपन्नगृहस्य सदसि साद- 13
यामीत्यग्नेर्वो ऽनार्तगृहस्य सदसि सादयामीत्येवैतदाह यदाहाग्नेर्वो ऽपन्नगृहस्य
सदसि सादयामीत्यथ यदा पशुना संतिष्ठते ॥८॥

अथ परिहरति स जघनेन पत्नीं परीत्य दक्षिणेन परिहृत्योत्तरवेदेर्दक्षि- 14
णस्याᳬ श्रोणौ सादयतीन्द्राग्न्योर्भागधेयी स्थेति विश्वेभ्यो वा एतद्देवेभ्यो गृह्णात्येत-
द्वैरेता वसतीवरीरिन्द्राग्नी उ वै सर्वा देवतास्तस्मादाहेन्द्राग्न्योर्भागधेयी
स्थेति ॥९॥

स तेनैव पुनराहृत्याग्रेण पत्नीं निधाय जघनेन परीत्योत्तरेण परिहृत्योत्तर- 15
वेदेरुत्तरस्याᳬ श्रोणौ सादयति मित्रावरुणयोर्भागधेयी स्थेति हैके सादयन्ति तदु
तथा न सादयेदिति तथा संपद्रिच्यते न तथा संपत्संपद्यत इन्द्राग्न्योर्भागधेयी स्थे-
त्येतावतैव सादयेत्तथैव संपत्संपद्यते ॥१०॥

ता वा एता गुप्तये परिहरति गोपीथाय तदग्निरह[12] पुरस्ताद्गोपायत्यथैताः[13] 16a
समन्तं नाष्ट्रा रक्षाᳬस्यपघ्नत्यः परिप्लवन्ते[14] ॥११॥

ता आग्नीध्रे सादयति विश्वेषां देवानां भागधेयी स्थेति तदासु विश्वान्दे- 16b
वान्त्संवेशयति ते वै वसतां वरं यद्विश्वे देवास्तस्माद्वसतीवर्यो नाम वसताᳬ ह वरं
भवति य एवमेतद्वेद ॥१२॥

तानि वा एतानि सप्त यजूᳬषि ततश्चतुर्भिर्गृह्णात्येकेन गार्हपत्ये सादयति 17
समानेन परिहरत्येकेनाग्नीध्रे यत्र वै वाचः प्रजातानि छन्दाᳬसि सप्तपदा वै शक्वरी
परार्ध्या छन्दसां तस्मादेतैः सप्तभिर्यजुर्भिर्गृह्णात्येतामभिसंपदम्[15] ॥१३॥ द्वितीयं
ब्राह्मणम् ॥

1 शिरो C. 2 स्यंदते B W. 3 सरसानि B C W. 4 Thus emended, गृह्णीयादेध्य B W My, गृह्णीयात् । एध्य C. 5 मन्यते B. 6 With ळ B

W My, with ळ C. 7 °सथ्या MSS. 8 The passage between 8...8 in B is not marked with accents and is struck out. 9 धारये॰ B C W. 10 हविष्मां ऽ B W. 11 इति MSS. 12 तदग्निरह: MSS. 13 °द्गोपायंत्य° MSS. 14 °प्लवंते B (orig.), °प्लुवंते B (sec. m.) and W. 15 Thus also the Mādhy. rec. Read °त्येतामभि संपदम् ?

M. III. 9. 3 — K. IV. 9. 3

2 स वै सोममुपावहरति स यत्सोममुपावहरतीयं वै प्रतिष्ठेयं जनूरा प्रजानां तदेनमिमां प्रतिष्ठामिमां जनूमभ्युपावहरति तमस्यां प्रतिष्ठायां तनुते तस्मा त्सोममुपावहरति ॥१॥

3b संमुखेषु ग्रावसु क्षत्रं वै सोमो विशो ग्रावाणः क्षत्रमेवैतद्विश्यध्यूहत यत्संमुखेषु क्षत्रायैवैतद्विश॰ संमुखामविवादिनीं करोति तस्मात्संमुखेषु ग्रावसु ॥२॥

3a सो ऽन्तरेषे उपावहरति यज्ञो ऽनस्तथा न बहिर्धा यज्ञात्करोति तदना रब्धो यजमानो भवति ॥३॥

4.5 स उपावहरति हृदे त्वा मनसे त्वेति हृदयेन वै मनसा यजमानस्तं का कामयते यस्मै कामाय यजते तस्मादाह हृदे त्वा मनसे त्वेति दिवे त्वा सूर्या त्वेति देवलोकाय त्वेत्येवैतदाह यदाह दिवे त्वेति सूर्याय त्वेति देवेभ्यस्त्वेत्येवैतदा होर्ध्वो अध्वरं दिवि देवेषु होत्रा यच्छेति यज्ञो वा अध्वर ऊर्ध्वमिमं यज्ञं दिवि देवेषु धेहीत्येवैतदाह ॥४॥

6.7 सोम राजन्विश्वास्त्वं प्रजा उपावरोहेति तदेनमाभ्यः प्रजाभ्य उपावहरत्या धिपत्याय राज्यायानुसृज्य जपति विश्वास्त्वां प्रजा उपावरोहन्त्वित्ययथायथमिव वा इदं करोति यदाह विश्वास्त्वं प्रजा उपावरोहेत्यथ यदाह विश्वास्त्वां प्रजा उपा रोहन्त्विति तद्यथायथं करोति तस्मात्क्षत्रियमुपर्यासीनमधस्ताद्विश इमाः प्रजा उपासते ॥५॥

8 अथोपसन्नो होता भवति यत्रैतदासीनः प्रातरनुवाकमन्वाहाथ समिधम भ्याधायाह देवेभ्यः प्रातर्यावभ्यो ऽनुब्रूहीति छन्दोभ्यस्तदनुवाच आहाथ यदेता

…भ्यादधाति छन्दांस्येवैतया समिन्द्धे ॥६॥

तदु हैक आहुः प्रातर्यावभ्यो ऽनुब्रूहीत्येव न देवेभ्य इति तदु तथा न … 9
…च्छन्दांसि वै देवाः प्रातर्यावाणश्छन्दांस्यु वा अनुयाजा देवेभ्यः प्रेष्य
…जेत्यु वा अनुयाजानाह तस्माद्ब्रूयाद्देवेभ्यः प्रातर्यावभ्यो ऽनुब्रूहीत्येव ॥७॥

स यदतो होतान्वाह यातयामानि वै देवैश्छन्दांसि स्वर्गं ह्येभिर्लोकं 10
…वत नो वा अत्र स्तुवते न शंसन्ति छन्दांस्येवान्वाह छन्दांस्येवैतत्पुन-
…ययत्ययातयामानि करोति तैरयातयामभिर्यज्ञं तन्वते तस्माद्वा एतद्धोता
…नुवाकमन्वाह ॥८॥

तदाहुः कः प्रातरनुवाकस्य प्रतिगर इति तदाहुर्निमिषन्नेवोपासीत सो 11a
…प्रतिगर इति तदु नाद्रियेत यद्येनं निद्रास्यादपि काममेव स्वप्यात् ॥९॥

अथ परिधानीयायां परिहितायां प्रचरणीति स्रुग्भवति तस्यां चतुर्गृही- 11b.12
…ज्यं गृहीत्वा हुत्वा प्रस्तुते ऽपो ऽच्छैति स यद्धुत्वा प्रस्तुते ऽपो ऽच्छैति यत्र
…यज्ञस्य शिरो ऽच्छिद्यत तस्य रसो द्रुत्वापः प्राविशत्तं वा अदः पूर्वेद्युर्वसती-
…भिराहरत्यथ यः स रसस्तत्र परिशिष्टो भवति तमेवैतत्प्रस्तुते ऽच्छैति तमाहरति
…यज्ञे दधाति तस्मात्प्रस्तुते ऽपो ऽच्छैति ॥१०॥

अथ यदेतामाहुतिं जुहोति य एव स यज्ञस्य रसो ऽपः प्राविशत्तमेवैतदभि- 13
…स्तृणीते तमारुन्द्धे याभ्य उ च देवताभ्य एतामाहुतिं जुहोति ता उ चैवास्मै देवताः
…ता एतं यज्ञस्य रसं संनमन्ति तस्माद्वा एतामाहुतिं जुहोति ॥११॥

स जुहोति शृणोत्वग्निः समिधा हवं म इति शृणोतु मे ऽग्निरनु मे जाना- 14
…त्वित्येवैतदाह यदाह शृणोत्वग्निः समिधा हवं म इति शृण्वन्त्वापो धिषणाश्च
…देवीरिति शृण्वन्तु म आपो ऽनु मे जानन्त्वित्येवैतदाह श्रोता ग्रावाणो विदुषो न
…यज्ञमिति शृण्वन्तु मे ग्रावाणो ऽनु मे जानन्त्वित्येवैतदाह विदुषो न यज्ञमिति वि-
…द्वांसो हि ग्रावाणः शृणोतु देवः सविता हवं म इति सविता वै देवानां प्रसविता
…सवितृप्रसूत एवैतं यज्ञस्य रसमच्छैति ॥१२॥

अथापरं चतुर्गृहीतमाज्यं गृहीत्वाहाप इष्य होतरित्यप इच्छ होतरित्येवै- 15
…तदाह स यदतो होतान्वाह य एव स यज्ञस्य रसो ऽपः प्राविशत्तमेवैतदभिप्रस्तृणीते
…तमारुन्द्धे तमपो याचति यथो चैनानन्तरा नाष्ट्रा रक्षांसि न विन्देयुरपो ऽच्छयत

एवमु चैवैष एतदनुतिष्ठते ॥१३॥

16 अथ संप्रेष्यति मैत्रावरुणस्य चमसाध्वर्यवेहि नेष्टः पत्नीरुदानयैकधनिन
एताग्नीध्रात्वाले वसतीवरीभिः प्रत्युपतिष्ठास्वै होतृचमसेन चेति स एष संप्रैष एवं
तद्यतः करिष्यन्तो भवन्ति तत्संप्रैषीत्ते[१४] ऽग्रेणाग्नीध्रं जघनेन चात्वालमेतेनोदञ्चो
यन्त्येष हि यज्ञस्य द्वाः ॥१४॥

17-19 तद्यदपि पत्नीर्नयन्ति यो वै स यज्ञस्य रसो ऽपः प्राविशत्तꣳ ह गन्धर्वा
ररक्षुस्ते ह देवा ऊचुरियमु[१५] न्वा[१५] इह नाष्ट्रायनि[१६] यद्गन्धर्वा इति कथमभये ऽनाष्ट्रे
निवाते यज्ञस्य रसमाहरिष्याम इति ॥१५॥

20-22 ते होचुर्योषित्कामा वै गन्धर्वा इति पत्नीरपि नयामेति होचुस्ते पत्नीष्वेव
गन्धर्वा गर्धिष्यन्ति पत्नीषु सङ्क्ष्यन्त[१७] इत्यथ वयमभये ऽनाष्ट्रे निवाते यज्ञस्य
रसमाहरिष्याम इति ते[१८] पत्नीरनयꣳस्ते[१९] पत्नीष्वेव गन्धर्वा अगृध्यन्पत्नीष्वसज्य-
न्ताथ देवा अभये ऽनाष्ट्रे निवाते यज्ञस्य रसमाहरꣳस्तथो वा एते पत्नीभिः सह
यन्ति ते पत्नीष्वेव गन्धर्वा गृध्यन्ति पत्नीषु सज्यन्ते ऽथैते ऽभये ऽनाष्ट्रे निवाते
यज्ञस्य रसमाहरन्ति तस्मात्पत्नीभिः सह यन्ति ॥१६॥

23.24 ते यां दिशमापो भवन्ति तद्यन्ति स यत्रापो विन्दति तदपो ऽभिजुहोति
स यदपो ऽभिजुहोति यो वै स यज्ञस्य रसो ऽपः प्राविशत्स एतामाहुतिꣳ हुतामुप-
समैति तां प्रत्युत्तिष्ठति तमाविष्कृत्य गृह्णात्यप उ चैवैतं यज्ञस्य रसं याचति
तस्मादपो ऽभिजुहोति[२०] ॥१७॥

25 सो ऽभिजुहोति देवीरापो अपां नपादिति देव्यो ह्यापस्तस्मादाह देवीरापो
अपां नपादिति यो व ऊर्मिर्हविष्य इति यो व ऊर्मिर्यज्ञिय इत्येवैतदाहेन्द्रियावान्म-
दिन्तम इति वीर्यवानित्येवैतदाह यदाहेन्द्रियावानिति मदिन्तम इति स्वादिष्ठ इत्येवैत-
दाह तं देवेभ्यो देवत्रा दातेत्येतं[२१] यज्ञस्य रसमयाचीच्छुक्रपेभ्य इति सत्यꣳ हि
देवाः सत्यꣳ हि शुक्रं येषां भाग स्थ स्वाहेति तेषांꣳ हि भागो यो यज्ञस्य रसस्तस्मा-
दाह येषां भाग स्थ स्वाहेति[२२] ॥१८॥

26.27 अथ मैत्रावरुणचमसेनैतामाहुतिमपप्लावयति कार्षिरसीति यथा वा अग्नि-
नाङ्गारः प्सातः स्यादेवं वा एषाहुतिस्तया देवतया प्साता भवति यस्या एनां जुहोति
तस्मादाह कार्षिरसीत्येताभिर्वै राजानमुपस्नक्ष्यन्भवति[२३] या एता मैत्रावरुणचमस

आपो भवन्ति वज्रो वा आज्यꣳ रेतः सोमो नेद्वज्रेणाज्येन रेतः सोमꣳ हिनसानीति तस्माद्वा एतामाहुतिमपप्लावयति समुद्रस्य त्वाक्षित्या उन्नयामीति गृह्णात्यापो वै समुद्रो ऽक्षित्यैवैतदक्षितिं दधाति तस्मादापो न क्षीयन्ते यदाभिरिदं भुञ्जते[24] ॥१९॥

स यन्मैत्रावरुणचमसेन यज्ञो वै देवेभ्यो[25] ऽपचक्राम तं देवाः प्रैषैः[26] प्रैषमैच्छन्त[27] निविद्भिर्न्यवेदयन्त[27] पुरोरुग्भिः प्रारोचयन्त तमेवमन्वविन्दꣳस्तथो वा एष एतं यज्ञस्य रसमनुविन्दति तदन्वेकधनान्गृह्णते तदनु[28] पान्नेजनान् ॥२०॥ 28

अथायन्ति त उपर्युपरि चात्वालꣳ सꣳस्पर्शयन्ति समापो अद्भिरग्मत समोषधीभिरोषधीरिति यश्चायं पूर्वेद्युर्गृहीतो यज्ञस्य रसो यश्चायमिदानीमिति तमेतदुभयꣳ सꣳसृजाम इति ॥२१॥ 29

तद्धैके समवनयन्त्येवावैव[29] मैत्रावरुणचमसाद्वसतीवरीषु नयन्त्यव वसतीवरीभ्यो मैत्रावरुणचमस एतदेनाः प्रत्यक्षꣳ सꣳसृजाम इति वदन्तस्तदु तथा न कुर्याद्यद्वा एना उभयीराधवनीये समवनयति तदेवैनाः सꣳसृजति तस्माद्वेतद्यजुरेव जपेत् ॥२२॥ 30a

स यदुपर्युपरि चात्वालं यत्र वै देवा यज्ञेन स्वर्गं लोकꣳ समाश्नुवत त एतस्मादेव चात्वालादूर्ध्वा उच्चक्रमुस्तमेवैतत्पन्थाꣳ स्वर्ग्यं देवयानं यजमानमनुसंख्यापयति ॥२३॥ 30b

अथैति तꣳ होता पृच्छत्यवेरपो[30] ऽध्वर्या३वित्यविदो ऽपा३ इत्येवैतदाहोतेव नंनमुरिति प्रत्याहाविदमथो मे ऽनꣳसतेत्येवैतदाह ॥२४॥ 31

स यदि प्रचरण्याꣳ सꣳस्रवः परिशिष्टो भवत्यलमाहुतये तमेव जुहुयाद्यदु स नालमाहुतये भवत्यपरं चतुर्गृहीतमाज्यं गृहीत्वा जुहोति यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जनाः । स यन्ता शश्वतीरिषः स्वाहेत्याग्नेय्या जुहोत्यग्नावेवाग्निष्टोमं प्रतिष्ठापयति मर्त्यवत्या पुरुषसंमितो हि यज्ञ एवं जुहुयाद्यद्यग्निष्टोमः स्याद्यद्युक्थ्यः स्यान्मध्यममेव परिधिमुपस्पृशेत्त्रयः परिधयस्त्रीण्युक्थान्येतर्हि[31] तर्हि यज्ञः प्रतितिष्ठति यद्यु षोलशी वातिरात्रो वा वाजपेयो वा स्यान्न जुहुयान्नोपस्पृशेत्समुद्यैव[31] प्रपद्येतैवमु[32] यज्ञक्रतून्यथायथं व्याकरोति ॥२५॥ 32.33

अथैते ऽयुङ्क्षायुङ्क्षमेकधनाः स्युस्त्रयो वा पञ्च वा सप्त वा नव वा नवदश[33] वा यथायुङ्क्षायुङ्क्षमेवं द्वन्द्वं मिथुनं प्रजननमथ यो ऽयमेको ऽतिरिच्यते स यजमानस्य 34

श्रियमभ्यतिरिच्यते स वा एषा॑ स एको धनं[34] यो यजमानस्य श्रियमभ्यतिरिच्यते[35]
तस्मादेकधना नाम ॥२६॥ तृतीयं ब्राह्मणम् ॥

1 °सु B W. 2 सांतरे । ष B W. 3 कामयते MSS. 4 होत्रा B W. 5 °भ्यस्तदनुवाच MSS. 6 यदतो MSS. 7 तन्वते B C W. 8 Thus B W C, निंद्रास्या° My. Read निद्राया° ? 9 Thus conjecturally, यत्समस्तत्र MSS., but C sec. m. यसमस्तत्र. 10 ग्रावाणो B C W. 11 सविता B W. 12 धिष्य B C, इछ My W. 13 Without accent the MSS. 14 त° MSS. 15 Conjectural reading, ऊचुरियमन्वा MSS., cp. I. 4. 3. 2, VII. 5. 3. 3-5. 16 ? Obviously corrupt. °यनि C W My, °यनिं B. 17 संक्ष्यंत B C W. 18 तत् C. 19 पत्नीरनय॑स्ते C. 20 °ति B. 21 This difference from Mādhyandina S. VI. 27 is not noted by Weber; cp. Kāṭh. III. 9 : 27. 19. 22 °हेति MSS. 23 राजानमपन्न° B W My. 24 भुंजते MSS. 25 देवेभ्यो B W. 26 Thus emended, प्रैषीः MSS. 27 Thus accented MSS. Read प्रैषमैच्छन्त निविद्भिर्न्वेदयन्त ? 28 तन्नु B W. 29 °नयंति । एवावैव MSS. ( °नयन्ति । एव । अव । एव ). 30 °रपो B C W. 31 °ण्युक्थ्यान्येतैर्हि B W, °ण्युक्थान्येतैर्हि C; My as above (but without accent ). 32 °थैव प्रपद्येतैवमु B C W. 33 न° C. 34 धनं MSS. 35 °भ्यतिरिच्यते C.

M. III. 9. 4

K. IV. 9. 4

1 ते वा एते ऽधिषवणे पर्युपविशन्त्यथास्या॑ हिरण्यं बध्नीते स यदस्या॑ हिरण्यं बध्नीते द्वयं वा इदं न तृतीयमस्ति सत्यं चैवानृतं च ततः सत्यं देवा अनृतं मनुष्या अग्नेरु वा एतद्रेतो यद्धिरण्य॑ सत्येना॑शूनुपस्पृशानीति सत्येन सोमं परा·

नातीति तस्मादस्याᳪं हिरण्यं बध्नीते ॥१॥

अथ ग्रावाणमादत्ते स यं वाव प्रथममादत्ते स एवोपाᳪंशुसवनस्ते वा एते 2 ऽश्ममया भवन्ति स यदेते ऽश्ममया भवन्ति दिवि वै सोमो देवो हि सोमो वृत्रो वै सोमस्तस्यैतच्छरीरं यद्गिरयो यदश्मानो घ्नन्त्यु वा एनमेतद्यदभिषुण्वन्ति तदेते- नैवैतं घ्नन्ति स्वेनैवैनं तच्छरीरेण समर्धयति[1] कृत्स्नं करोति तथो अनेनस्यं भवति तस्माद्वा एते ऽश्ममया भवन्ति ॥२॥

तमादत्ते देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । 3 आददे रावासीति सविता वै देवानां प्रसविता तस्मादाह देवस्य त्वा सवितुः प्रसव इत्यश्विनोर्बाहुभ्यामित्यश्विना उ वै देवानामध्वर्यू तयोरेवैतद्बाहुभ्यामादत्ते न स्वाभ्यां पूष्णो हस्ताभ्यामिति पूषा वै देवानां भागदुघो ऽशनं पाणिभ्यामुपनिधाता तस्यैवै- तद्धस्ताभ्यामादत्ते न स्वाभ्यां तद्व[2] वा एतस्य मनुष्यो भर्ता वज्रो ह्येष तदेनं देवता- भिरेवोद्यच्छति देवताभिर्बिभर्ति तथैनमेष वज्रो न हिनस्ति ॥३॥

रावासीति यदा वा एतेनाभिषुण्वन्त्यथाहुतिर्भवति यदाहुतिरथ दक्षिणा 4.5 तद्ध्येष उभयᳪं रासते तस्मादाह रावासीति गभीरमिममध्वरं कृधीति यज्ञो वा अध्वरो महान्तमिमं यज्ञं कुर्वित्येवैतदाहेन्द्राय सुषूतममितीन्द्रो यज्ञस्य देवता तस्मा- दाहेन्द्रायेति सुषूतममिति सुसुततममित्येवैतदाहोत्तमेन पविनेत्येष वा उत्तमः पवि- र्यत्सोमस्तस्मादाहोत्तमेन पविनेत्यूर्जस्वन्तं मधुमन्तं पयस्वन्तमिति रसवन्तमित्येवै- तदाह नात्र तिरोहितमिवास्ति यदाहोर्जस्वन्तं मधुमन्तं पयस्वन्तमित्यथ वाचं यच्छति ॥४॥

देवा ह वै यज्ञं तन्वाना असुररक्षसानामासङ्गाद्विभयां चक्रुस्ते होचुरसुर- 6 रक्षसानामासङ्गाद्बिभ्यत उपाᳪंशु यजामहा इति ते वाचमयच्छन्वाग्वै यज्ञस्त उपाᳪं- श्वयजन्त तथो वा एष एतद्वाचं यच्छति वाग्वै यज्ञः स उपाᳪंशु यजते तस्माद्वाचं यच्छति ॥५॥

अथ निग्राभ्यासु यजमानं वाचयति निग्राभ्या स्थ देवश्रुतस्तर्पयत मा । 7 मनो मे तर्पयत वाचं मे तर्पयत प्राणं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयत । आत्मानं मे तर्पयत प्रजां मे तर्पयत पशून्मे तर्पयत गणान्मे तर्पयत गणा मे मा वितृष- न्निति रसो वा आपस्तमेवासामेतदाशास्ते सर्वं च म आत्मानं[3] तर्पयतेति पशूᳪंश्च मे तर्पयत गणाᳪंश्च मे तर्पयत गणाश्च मे मा वितृषन्निति[4] ॥६॥

8 अथोपाꣳशुसवनमभिमिमीते स यदेतं मिमीते तस्माद्धियं मनुष्येषु मात्रा यत्कौष्ठो यत्कुम्भी येयं का च मनुष्येषु मात्रा व्यान उ ह वा अस्योपाꣳशुसवनः स विवस्वानादित्यो निदानेन घ्नन्त्यु वा एनमेतद्यदभिषुण्वन्ति तथा ह्यात उदेति तथा संजीवति न हि स्वो व्यान आत्मानꣳ हिनस्ति तस्मादुपाꣳशुसवनमभिमिमीते[1] ॥७॥

9-11 सो ऽभिमिमीत इन्द्राय त्वा वसुमते रुद्रवत इतीन्द्रो यज्ञस्य देवता तस्मादाहेन्द्राय त्वेति वसुमते रुद्रवत इतीन्द्रमेवानु वसूꣳश्च रुद्राꣳश्चाभजतीन्द्राय त्वादित्यवत इतीन्द्रमेवान्वादित्यानाभजतीन्द्राय त्वाभिमातिघ्न इति सपत्नो वा अभिमातिरिन्द्राय त्वा सपत्नघ्न इत्येवैतदाहैष ह्यस्योद्धारो यथा श्रेष्ठिन[6] उद्धार एवꣳ ह्यस्यैष उद्धारः श्येनाय त्वा सोमभृत इति तद्गायत्र्यै मिमीते सा यच्छ्येनो भूत्वा दिवः सोममाभरत्तेन गायत्री श्येनः सोमभृदग्नये त्वा रायस्पोषद इति तद्द्वितीयं गायत्र्यै मिमीते ऽग्निर्हि गायत्री सा यच्छ्येनो भूत्वा दिवः सोममाभरत्तेन गायत्री श्येनः सोमभृत्तेनो वा एनामेतद्वीर्येण द्वितीयमन्वाभजति स वै पञ्च कृत्वो मिमीते संवत्सरसंमितो यज्ञः पञ्चर्तवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च कृत्वो मिमीते ॥८॥

12 अथाभिमृशति यत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां यदुरा अन्तरिक्षे। तेनास्मै यजमानायोरु राये कृध्यधि दात्रे वोच इति यत्र ह वा एषो ऽग्रे देवानाꣳ हविर्बभूव[7] तद्धेक्षां चक्रे मैव सर्वेणवात्मना देवानाꣳ हविर्भूवमिति स तिस्रस्तनूरपनिदधे ॥९॥

13 तदु वै देवा अस्पृण्वत ता अस्यैतेनावरुन्धत स कृत्स्नो देवानाꣳ हविरभवत्तथो वा अस्यैष एतेनैता अवरुन्द्धे स कृत्स्नो देवानाꣳ हविर्भवति तस्मादेवमभिमृशति ॥१०॥

14.15a अथ निग्राभ्याभिरुपसृजति स यन्निग्राभ्याभिरुपसृजत्यापो ह वै वृत्रं जघ्नुस्तेनैतद्वीर्येण स्यन्दन्ते तस्मादेनाः स्यन्दमाना न किं चन प्रतिधारयति ता ह स्वमेव वशं चेरुः[8] कस्मै नु वयं तिष्ठेमहीति याभिरस्माभिर्वृत्रो हत इति सर्वमु वा इदमिन्द्राय तस्थानमास[10] ता हेन्द्र उपमन्त्रयां चक्रे सर्वं वा इदं मह्यं तस्थानमिति तिष्ठध्वमेव[11] मह्यमिति[11] ता होचुः किमस्माकं ततः स्यादिति ॥११॥

15b स होवाच प्रथमभक्ष एव वः सोमस्य राज्ञ इति तथेति तस्मा अतिष्ठन्त तास्तस्थाना उपावृत्ता उरसि न्यगृह्णीतेन्द्रो वै यजमानस्तथो वा एतस्मा एतास्ति-

ह्वले तास्तस्थाना उपावृत्ता उरसि निगृह्णीते स यदेना उरसि निगृह्णीते[12] तस्मान्नि-
ग्राभ्या नाम स यदाभिरेतत्प्रथमतः सोमꣳ राजानमुपसृजत्येष[13] आसां प्रथमभक्षः
सोमस्य राज्ञः ॥१२॥

16 स उपसृजति श्वात्रा स्थ वृत्रतुर इति शिवा ह्यापस्तस्मादाह श्वात्रा स्थेति
वृत्रतुर इत्येताभिर्हि वृत्रो हतो राधोगूर्ता अमृतस्य पत्नीरित्यमृतꣳ ह्यापस्ता देवी-
र्देवत्रेमं यज्ञं नयतेति ता देव्यो देवत्रेमं यज्ञं धत्तेत्येवैतदाहोपहूताः सोमस्य पिबतेति
तदुपहूताः सोमस्य राज्ञः प्रथमभक्षं भक्षयन्त्येष आसां प्रथमभक्षः सोमस्य
राज्ञः[14] ॥१३॥

17 अथ प्रहरन्मनसा ध्यायेदिदमहममुष्मै[15] प्रहरामीति यं द्विष्याद्यो न्वा इमं
मानुषं ब्राह्मणꣳ हन्ति तं[16] न्वेव[16] परिचक्षते ऽथ किं य एतꣳ हनाद्देवो ह्येष तथाह
तस्य न जीवातुरस्ति यस्मै तथा करोति तथो अनेनस्यं भवत्युतो ब्राह्मणो न हिनस्ति
तृणाय वा प्रहरामि पाप्मने वेति ध्यायेत्तथो अनेनस्यं भवति ॥१४॥

18.19 स उद्यच्छति मा भेर्मा संविक्था इति मा भैषीर्मा संविक्था अमुष्मा अहं
प्रहरामि न तुभ्यमित्येवैतदाहोर्जं धत्स्वेति रसं धत्स्वेत्येवैतदाह धिषणे वीड्वी सती
वीलयेथामूर्जं दधाथामितीमे एवैतत्फलके आहुरिति[17] हैक आहुस्तदु किमाद्रियेत
यद्ध्येते भिद्येयातामेवेमे हैव द्यावापृथिव्यावेतस्माद्वज्रादुद्यतात्सꣳरेजेते[18] ताभ्यामे-
वैनमेतच्छमयत्यूर्जं दधाथामिति रसं दधाथामित्येवैतदाहाथ त्रिरभिषुणोति त्रिः
संभरति चतुर्निग्राभमुपैति तद्दश दशाक्षरा वै विराड्विराडु वै यज्ञो विराजमेवैत-
द्यज्ञमभिसंपादयति ॥१५॥

20 अथ निग्राभमुपैति स यन्निग्राभमुपैति यत्र ह वा एषो ऽग्रे देवानाꣳ हवि-
र्बभूव[19] तद्ध दिशो ऽभिदध्यावाभिर्दिग्भिर्मिथुनेन प्रियेण धाम्ना सꣳस्पृशेयेति तमे-
तद्देवा आभिर्दिग्भिर्मिथुनेन प्रियेण धाम्ना सꣳस्पर्शयन्यन्निग्राभमुपायꣳस्तथो वा एन-
मेष एतदाभिर्दिग्भिर्मिथुनेन प्रियेण धाम्ना सꣳस्पर्शयति यन्निग्राभमुपैति तस्मान्नि-
ग्राभमुपैति ॥१६॥

21 स उपैति प्रागपागुदगधराक् सर्वतस्त्वा दिश आधावन्तु । अम्ब निष्पर
समरीर्विदामिति योषा वा अम्बा योषा वै दिशस्तदेनमाभिर्दिग्भिर्मिथुनेन प्रियेण
धाम्ना सꣳस्पर्शयति समरीर्विदामिति[20] प्रजा वा अर्यस्तस्माद्विमाः प्रजा अपि विदू-
रमिव सत्यः समेव[21] विद्रते[21] ॥१७॥

22 अथ यत्सोमो नाम यत्र ह वा एषो ऽग्रे देवानां हविर्बभूव[19] सा यास्य जुष्टतमा तनूरास तामपनिदधे[20] तदु वै देवा अस्पृण्वत ते होचुरुपैवैतां प्रवृहस्वेति[21] सहैव न एतया हविरेधीति तां पश्चेवोपप्रावृहत[22] सो वै म एषेति स यदब्रवीत्सो वै म एषेति तस्मात्सोमो नाम[25] ॥१८॥

23 अथ यद्यज्ञो नाम घ्नन्त्यु वा एनमेतद्यदभिषुण्वन्ति तं वै तज्जनयति यदेनं तन्वते यन्वै[26] तज्जायते[27] यत्तायमानस्तस्माद्यज्ञो[28] नाम यज्ञो[28] ह वै नामैतद्यद्यज्ञ इत्याहुः ॥१९॥

24 स हन्यमान[29] एतां वाचमुवाद त्वमङ्ग प्रशंसिषो देवः शविष्ठ मर्त्यम् । न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वच इति ॥२०॥

25 हन्यमानो[30] हैतां वाचमुवाद मर्त्यो भवंस्त्वमेवेतो[31] जनयितासि[32] न त्वदन्य इतीन्द्रमथ निग्राभ्याभ्यो ग्रहान्विगृह्णते स यन्निग्राभ्याभ्यो ग्रहान्विगृह्णत आपो ह वै वृत्रं जघ्नुस्तेनैतद्वीर्येण स्यन्दन्ते तस्मादेनाः स्यन्दमाना न किं चन प्रतिधारयति स्यन्दमानानामु वै वसतीवरीर्गृह्णाति वसतीवरीभ्यो निग्राभ्या निग्राभ्याभ्यो ग्रहान्विगृह्णते वीर्याद्धोतृचमसाद्योषा वा ऋग्घोता योषाया वा इमाः प्रजाः प्रजायन्ते तदेना योषाया एवर्चो वीर्याद्धोतृचमसाद्विगृह्णते तत एनाः प्रजनयन्ति तस्मान्निग्राभ्याभ्यो ग्रहान्विगृह्णते ॥२१॥ चतुर्थं ब्राह्मणम् ॥ नवमो ऽध्यायः ॥

॥ अध्वरकाण्डं समाप्तम् ॥

1 °यंति B, °यति W C My. 2 तंत्र C (orig.). 3 B ins. च. 4 °न्निति MSS. 5 °ते B W. 6 श्रेष्ठिन MSS. 7 बभूव without accent the MSS. 8 चेरुः B. 9 सर्वइमु B W. 10 तत्स्थानमास B W. 11 °व मंह्यमिति B W, °व मह्यमिति C. 12 निगृह्णीते B C. The MSS. repeat the words यदेना उरसि निगृह्णीते ( thus accented the second time ). 13 °सृजंत्येष MSS. 14 राज्ञः MSS. 15 ध्यायेत् । इद° MSS. 16 तन्वेव MSS. 17 आहुरिति MSS. 18 द्यावापृथिव्या° MSS. 19 बभूव without accent the MSS. 20 रसमरी°

B. 21 स्वमेव विद्रते B W, स्वमेव विद्रते C, स्वमेव also My. 22 तामुपनि॰ MSS. 23 प्रवृ॰ B W. 24 पश्नेवो॰ C sec. m., पश्येवो॰ B W, पश्येवो॰ My C (orig.). 25 नाम MSS. 26 यंवै MSS. 27 तज्जायते MSS. 28 यज्ञो B, यज्ञो ( both times ) C. 29 हन्यमानः MSS. 30 हन्यमानो MSS. 31 भ॰ MSS. 32 ॰तासि MSS.

——:o:——

M. IV. 1.1 K. V. 1. 1

1.2 प्राणो ह वा अस्योपाꣳशुर्व्यान[1] उपाꣳशुसवन उदानो ऽन्तर्यामो ऽथ यदुपाꣳशुर्नामाꣳशुर्ह वै नाम ग्रहः स प्रजापतिस्तस्यैष प्राणः स यदꣳशोः प्राणस्तस्मादुपाꣳशुर्नाम ॥१॥

3 तं वै बहिष्पवित्राद्गृह्णाति पराञ्चमेवास्मिꣳस्तत्प्राणं दधाति तस्मादयं पराङ् प्राणो निरर्दति तं वा अꣳशुभिः पवयति पूतो ऽसदिति षड्भिः पवयति षड्वा ऋतव ऋतुभिरेवैनं तत्पवयति ॥२॥

4 तदाहुर्यदꣳशुभिरुपाꣳशुं पवयतीति सर्वे सोमाः पवित्रपूता अथ केनैतानꣳशून्पुनाति केनास्यैते पूता भवन्तीति ॥३॥

5 तान्पुनरप्यर्जति[2] यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहेत्येतेन हैतान्त्स्वाहाकारेण पुनात्येतेनास्यैते पूता भवन्ति तस्माद्वेवमेतान्पुनरप्यर्जति[3] स वा एष सर्वमेव ग्रहः सर्वेषाꣳ ह्येष सवनानाꣳ रूपं क्रियते[4] ॥४॥

6.7 देवा उ ह वै यज्ञं तन्वाना असुररक्षसानामासङ्गाद्बिभयां चक्रुस्ते होचुरसुररक्षसानामासङ्गाद्बिभ्यतो[5] हन्त प्रातःसवन एवेति सर्वं यज्ञꣳ सꣳस्थापयामेति तथा यदि[6] नो ऽसुररक्षसान्यासजेयुरिति सꣳस्थित एव नो यज्ञः स्यादिति तमेतस्मिन्नेव प्रथमे ग्रहे यजुष्टः सर्वं यज्ञꣳ समस्थापयन्प्रथमे स्तोत्रे सामतः[7] प्रथमे शस्त्र ऋक्तस्तेन सꣳस्थितेनात ऊर्ध्वेनाचरꣳस्तदप्येतर्हि तथैव क्रियते[8] ॥५॥

8 सो ऽष्टौ कृत्वो ऽभिषुणोत्यष्टाक्षरा गायत्री गायत्रं प्रातःसवनं तत्प्रातःसवनस्य रूपं क्रियते ॥६॥

9 स गृह्णाति वाचस्पतये पवस्व वृष्णो अꣳशुभ्यां गभस्तिपूत इति प्राणो वै वाचस्पतिः प्राणो वा एष ग्रहस्तस्मादाह वाचस्पतये पवस्वेति वृष्णो अꣳशुभ्यामिति सोमाꣳशुभ्याꣳ ह्येनं पवयति गभस्तिपूत इति पाणी वै गभस्ती पाणिभ्याꣳ ह्येनं पवयति ॥७॥

10 अथैकादश कृत्वो ऽभिषुणोत्येकादशाक्षरा वै त्रिष्टुप् त्रैष्टुभं माध्यंदिनꣳ सवनं तन्माध्यंदिनꣳ सवनं क्रियते ॥८॥

11 स गृह्णाति देवो देवेभ्यः पवस्व येषां भागो ऽसीति देवो ह्येष एतद्देवेभ्यः पवते येषां भागो ऽसीति तेषाꣳ हि[9] भागः[10] ॥९॥

12 अथ द्वादश कृत्वो ऽभिषुणोति द्वादशाक्षरा जगती जागतं तृतीयसवनं

तृतीयसवनस्य रूपं क्रियते ॥१०॥

स गृह्णाति मधुमतीर्न इषस्कृधीति रसमेवास्मिꣳस्तद्दधाति स्वदयत्येवैनं तस्मादेष हतो न पूयति यं वै कं[10] चान्यं घ्नन्ति सर्व एव स पूयत्यथ यदेनं जुहोति देवेꣳ सꣳस्थापयति ॥११॥ 13

तदाहुरष्टावष्टौ कृत्व इति ब्रह्मवर्चसकामस्याभिषुणुयादित्यष्टाक्षरा वै गायत्री ब्रह्म वै गायत्री ब्रह्मवर्चसी हैव भवति यस्याष्टावष्टौ कृत्वो ऽभिषुण्वन्तीति ॥१२॥ 14

तद्धेव चतुर्विंꣳशतिं कृत्वो ऽभिषुतं भवति चतुर्विंꣳशतिर्वा अर्धमासाः संवत्सरस्य संवत्सरो यज्ञः प्रजापतिस्तद्धेव यज्ञꣳ सꣳस्थापयति तद्यज्ञस्य सꣳस्थामश्नुते पञ्च पञ्च कृत्वः पशुकामस्याभिषुणुयादित्याहुः पाङ्क्ता वै पशवः पशुमान्हैव भवति यस्य पञ्च पञ्च कृत्वो ऽभिषुण्वन्तीति पाङ्क्तो वै यज्ञस्तद्धेव यज्ञꣳ सꣳस्थापयति तद्यज्ञस्य सꣳस्थामश्नुते सैषा मीमाꣳसैवेतरं त्वेव क्रियते ॥१३॥ 15.16

तं परिमार्ष्टि नेद्व्यवश्चोतादिति[12] तं न सादयति प्राणो ह्यस्यैष तस्मादयमनन्नः प्राणः संचरति यदि त्वभिचरेत्सादयेदेनमिदमहममुष्य[13] प्राणꣳ सादयामीति तथाह[14] तस्य न जीवातुरस्ति यस्मै तथा करोत्यथ यत्सादयित्वा नान्वर्जति[15] तेनो अध्वर्युश्च यजमानश्च जीवतो ऽथो अपिदध्यादिदमहममुष्य[16] प्राणमपिदधामीति तथाह न मोहयति यन्न सादयति तथो तस्य न[17] जीवनमस्ति यस्मै तथा करोत्येषो त्र मनिः ॥१४॥ 7.18

अथान्तरेवासीनः स्वाहाकरोति स यदन्तरासीनः स्वाहाकरोत्येतस्माद्ध वै देवा बिभयां चक्रुर्यन्न इमं[18] ग्रहमन्तरा[19] नाष्ट्रा रक्षाꣳसि न हन्युरिति तमेतदन्तरेवासीनाः स्वाहाकारेणाजुहवुस्तꣳ हुतमेव सन्तमग्नावजुहवुस्तथो वा एनमेष एतदन्तरेवासीनः स्वाहाकारेण जुहोति तꣳ हुतमेव सन्तमग्नौ जुहोति तस्मादन्तरेवासीनः स्वाहाकरोति ॥१५॥ 19

उर्वन्तरिक्षमन्वेमीति प्रैत्यन्तरिक्षं वा अनु रक्षश्चरति यथायं पुरुषो ऽमूल उभयतः परिच्छिन्नो ब्रह्मणैवैतदभयमनाष्ट्रमन्तरिक्षं कुरुत उपनिष्क्रम्य होष्यन्वरं वृणीत इदं मे ऽस्त्वथ होष्यामीति क्षिप्रꣳ ह वा एतस्य ग्रहस्य देवा होमं प्रेप्सन्ति तस्मै ह तं वरꣳ समर्धयन्ति यं वरं वृणीते क्षिप्रं नो जुहवदिति ॥१६॥ 20.21

स जुहोति स्वांकृतो ऽसि विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्य इति 22

प्राणो वा एष ग्रहो ऽयमु वै प्राणो यो ऽयं पवते स्वयं वा एष कृतः स्वयं जातो ह्येतस्यान्यः[19] कर्तास्ति न जनयिता तस्मादाह स्वांकृतो ऽसीति विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्य इति सर्वाभ्यो ह्येष आभ्यः प्रजाभ्यो जातो मनस्त्वाष्टिति प्रजापतिर्वै मनः प्रजापतिस्त्वाश्नुतामित्येवैतदाह स्वाहा त्वा स्वभवः[20] सूर्यायेत्यवरं स्वाहाकारं करोति परां देवताम् ॥१७॥

23 एतस्मिन्वा एतन्मण्डले ऽह्नौषीद्य एष तपति सर्वमु वा एष ग्रहस्तत्सर्वस्मादेवैतदस्मादेनमुत्तरं करोति य एषो ऽस्मात्सर्वस्मादुत्तरो यद्धावरां देवतां कुर्यात्परꣳ स्वाहाकारमन्यद्धैतस्मादुत्तरं कुर्यात्तस्मादवरꣳ स्वाहाकारं करोति[21] परां देवताम् ॥१८॥

24 अथोर्ध्वमुन्मार्ष्टि पराञ्चꣳ ह्येवास्मिꣳस्तत्प्राणं दधात्यथोत्तानेन पाणिना परिधिमुपस्पृशति पराञ्चꣳ ह्यस्मिꣳस्तत्प्राणं दधाति देवेभ्यस्त्वा मरीचिपेभ्य इति ॥१९॥

25 एतस्मिन्वा एतन्मण्डले ऽह्नौषीद्य एष तपत्येत उ वै देवा मरीचिपा यद्रश्मयस्तदेतान्प्रीणाति तथास्यैते प्रीता भवन्ति ॥२०॥

26 तं वा एतं मन्त्रेण जुहोति न वा एतस्यानुवाक्यामन्वाह न याज्यां तेनैषो ऽनुवाक्यवाꣳश्च याज्यवाꣳश्च यदेनं मन्त्रेण जुहोत्यथ यद्यभिचरेद्यद्यस्यात्मनि वा[1] वाससि[22] वाꣳशुराश्लिष्टः स्यात्तं जुहुयाद्देवाꣳशो यस्मै त्वेळे । तत्सत्यमुपरिप्लुता भङ्गेन हतो ऽसौ फलिति यथा वै हन्यमानानामुपश्रुत्य मुच्येतैवं वा एष एतन्मुच्यते यो ऽभिषूयमाणानाꣳ स्कन्दति तथा ह तेषां नापधावꣳश्चन मुच्यते येभ्यस्तथा करोत्येषो ऽत्र मेनिः ॥२१॥

27.28 अथोत्तरार्धे सादयति प्राणाय त्वेति प्राणो ह्यस्यैष तद्वा आहुर्दक्षिणार्ध एव सादयेदिति दक्षिणाꣳ ह्यसौ दिशमन्वावर्तते यो ऽसौ तपतीति तदुत्तरार्ध एव सादयेन्न ह्यन्यैतस्मादुत्तराहुतिरस्त्यथोपाꣳशुसवनमादाय[23] तं न दशाभिर्न पवित्रेणोपस्पृशति यथा प्रणिक्त एवꣳ हि तत्स्याद्यदेनं दशाभिर्वोपस्पृशेत्पवित्रेण वा पाणिनैव[2] प्रध्वꣳस्यानुनिपातयति[24] व्यानाय त्वेति व्यानो ह्यस्यैषः ॥२२॥ प्रथमं ब्राह्मणम् ॥

1 अस्योपाꣳशु MSS. 2 तान्पुनरप्यर्जयति B W, तान्पुनरप्यर्जति C O. 3 °रप्यर्जयति B W My.

4 क्रियते C O P. 5 °तो MSS. 6 यदि MSS. 7 सामतः MSS. 8 क्रियते B P W. 9 हि भागः B. 10 Thus emended, किं MSS. 11 वृह ins. in B. 12 °इच्योतदिति B, °इच्योतादिति W (cp. V. 1. 2. 10). 13 °त्सादयेदेन° MSS. 14 तथाह B. 15 नान्वर्जयति B W. 16 अपिदध्या° MSS. 17 Om. in B P. 18 इदमग्रहम° B, इहमग्रह° W pr. m., इदम° W sec. m. 19 °न्यः MSS. 20 स्वभवः B, स्वभवः the other MSS. (differently from Weber's ed. of the Saṃhitā). Cp. infra V. 1. 2. 12 and TS VI. 4. 5. 5 : प्राणा वै स्वभवसो देवाः. 21 करोति B. 22 वा वाससि MSS. 23 °दुत्तराहुति° MSS. 24 °नैव प्रध्वंस्या° MSS.

K. V. 1. 2 M. IV. 1. 2

प्राणो ह वा अस्योपांशुर्व्यान उपांशुसवन उदानो ऽन्तर्यामो ऽथ यदन्त- 1.2
र्यामो नाम यो वाव प्राणः स उदानः स उ एव व्यानस्तं वा अस्मिन्नदः पराञ्चं दधाति
यदुपांशुं गृह्णाति तस्वेवास्मिन्नेतत्प्रत्यञ्चं दधाति यदन्तर्यामं गृह्णाति तस्मादयमन्त-
रान्नुदानो यतः स यदयमन्तरात्मन्नुदानो यतो यद्धैनेनेमाः प्रजा यतास्तस्मादन्त-
र्याम इत्याख्यायते ॥१॥

तं वा अन्तःपवित्राद्गृह्णाति प्रत्यञ्चमेवास्मिंस्तदुदानं दधाति तद्धेवाप्यु- 3
पांशुरन्तःपवित्राद्गृहीतो भवति समानं हि तद्यदुपांश्वन्तर्यामौ तथो सो ऽन्येषु
ग्रहेष्वनाक्षिद्भवति ॥२॥

अथ यद्राजानं पवित्रेण पवयन्ति सोमो ह वै राजा बृहस्पतिं स्वं पुरो- 4.5
हितं जिज्यौ तस्मा उ ह पुनर्ददौ तां प्रायश्चित्तिं चक्रे तस्मिन्पुनर्ददु-
षि पर्येव शिशिषे यदीन्नूनं ब्रह्माभिदधर्ष ज्यानाय स यदेव तदेनो ऽकरोत्तदेवा-
स्मादेतत्पवित्रेण पवयन्ति स पूत एव मेध्यो देवानां हविर्भवति तस्माद्वाव पवित्रेण
राजानं पवयन्ति ॥३॥

अथ यदुपयामेन ग्रहान्गृह्णन्तीयं वा अदितिस्तस्या अदो हविः प्रायणीयं 6

भवत्यसावादित्यश्चरुस्तद्धैतत्पुरेव सुत्याया भवति[१३] सो[१३] सुत्यायां देवेष्वपि...
ऽपि मे प्रसुते ऽस्त्विति ॥४॥

7.8 ते होचुर्विभक्तो वा अयं यज्ञो देवानामिति त्वयैव ग्रहा गृह्यन्तां देवता...
हूयन्तामिति तथेति होवाच तदियं[१४] वा उपयाम इयꣳ हीदमाभ्यः प्रजाभ्यो ऽ...
मुपयच्छत्यनया[१५] हीदꣳ सर्वमुपयतमनया तद्ग्रहा गृह्यन्ते स उ अस्याः प्रसुते ...
भागः ॥५॥

9.10 अथ यद्योनौ साद्यन्त इयं वा अस्य सर्वस्य योनिरस्या हीदꣳ सर्वं प्रजा...
रेत उ वा एतद्भूतꣳ सोमꣳ राजानमृत्विजो बिभ्रति यदु वा अयोनौ रेतः सिच्य...
प्रैव तन्म्रियते[१६] तदेनमस्यां योनौ दधाति तस्माद्योनौ साद्यन्ते ॥६॥

11.12 स वा उदिते ऽन्यतरमेतयोर्ग्रहयोर्जुहोत्यनुदिते ऽन्यतरं प्राणोदानौ...
अस्यैतौ ग्रहौ स यदुदिते ऽन्यतरं जुहोत्यनुदिते ऽन्यतरं प्राणोदानयोर्व्याकृत्यै...
तस्मात्प्राणोदानौ समानमेव सन्नानेवाख्यायेते[१७] प्राण इति चोदान इति चाहोरा...
उ वा एतौ ग्रहौ स यदुदिते ऽन्यतरं जुहोत्यनुदिते ऽन्यतरमहोरात्रयोर्व्याकृत्यै...
यद्धोभावेवोदिते[१८] जुहुयादहरेव[१९] स्यान्न रात्रिर्यदुभावनुदिते रात्रिरेव[२०] स्यान्नाहस्त...
स्मादुदिते ऽन्यतरं जुहोत्यनुदिते ऽन्यतरम् ॥७॥

13.14 स वा अहः सन्तमुपाꣳशुमनुदिते जुहोति तदह्नो रूपꣳ रात्रौ दधाति
तस्माद्धिदꣳ रात्रौ तमसि सति निर्ज्ञायत इव किं चिदिव रात्रिꣳ सन्तमन्तर्याममु...
दिते[२१] जुहोति तद्रात्रे रूपमहनि दधाति तस्मादसा उद्यन्नेवेमाः प्रजा न प्रदह...
तेनेमाः प्रजा अमुष्मात्त्राताः ॥८॥

15.16 अथ वा अतो गृह्णात्येवोपयामगृहीतो ऽस्यन्तर्यच्छ मघवन्पाहि सोममि...
त्युक्त उपयामस्य बन्धुर्मघवन्नितीन्द्रो वै मघवानिन्द्रो यज्ञस्य देवता तस्मादाह मघ...
वन्निति पाहि सोममिति गोपाय सोममित्येवैतदाहोरुष्य राय इति पशवो वै...
रायो गोपाय[२२] पशूनित्येवैतदाह वेषो यजस्वेति प्रजा वा इषः प्रजा एवैतदाय...
जूकाः करोति ता इमाः प्रजा अर्चन्त्यो यजमाना आसते[२३] ऽन्तस्ते द्यावापृथिवी...
दधाम्यन्तर्दधाम्युर्वन्तरिक्षम् । सजूर्देवेभिरवरैः परैश्चेति तदस्य वैश्वदेवं वैश्वदेवो...
ह्ययमुदानो यदेनेनेमाः प्रजाः प्राणन्ति[२४] चोदनन्ति[२४] च तेन वैश्वदेवो ऽन्तर्यामे मघ...
वन्मादयस्वेतीन्द्रो वै मघवानिन्द्रो यज्ञस्य देवता तस्मादाह मघवन्मादयस्वेति स...
यदन्तरन्तरित्येतं गृह्णात्यन्तस्त्वात्मनि[२५] दधामीत्येवैतदाह ॥९॥

तं परिमार्ष्टि नेद्यवश्चोतादिति[26] तं न सादयत्युदानो ह्यस्यैष तस्माद्ययमु- 17.18
ऽसन्नः संचरति यदि तूपाꣳशुꣳ[27] सादयेत्सादयेदेतं[28] यदि तं न सादयेन्नैनꣳ[29]
यदि तमपिदध्याद्प्येनं दध्याद्यथा तं[30] कुर्यादेवमेनं कुर्यात्तं तेनैव मन्त्रेण
येनोपाꣳशुं जुहोति समानꣳ हि तद्यदुपाꣳश्वन्तर्यामौ ॥१०॥

तदु ह चरकाध्वर्यवो ऽन्येन ततो मन्त्रेण जुह्वति येनो चोपाꣳशुं जुह्वति 19.20
वीर्यौ प्राणोदानौ कुर्म इति वदन्तस्तदु तथा न कुर्यान्मोहयन्ति ह ते यजमानस्य
दानौ ये ऽन्येन ततो मन्त्रेण जुह्वत्यपीद्वा एनं तूष्णीमेव जुहुयाद्यद्ध्येवोपाꣳशुं
जुहोति तदेवाप्येष मन्त्रेण हुतो भवति तदु किं तूष्णीं जुहुयात्तेनैव[31] मन्त्रेण
येनोपाꣳशुं जुहोति ॥११॥

स जुहोति स्वांकृतो ऽसि विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यः । 21-23
स्वाहा त्वा स्वभवः[32] सूर्यायेत्युक्तो यजुषो बन्धुः परागुन्माष्ट्र्युपाꣳशुꣳ
पराञ्चꣳ ह्यस्मिꣳस्तत्प्राणं दधाति प्रत्यगत्रोपमृष्टे प्रत्यञ्चꣳ ह्यस्मिन्नत्रोदानं
उत्तानेन पाणिना तत्र परिधिमुपस्पृशति पराञ्चꣳ ह्यस्मिꣳस्तत्प्राणं दधाति नीचात्र
ञ्चꣳ ह्यस्मिन्नत्रोदानं दधाति देवेभ्यस्त्वा मरीचिपेभ्य इति तस्योक्तो बन्धुः ॥१२॥

तं दक्षिणार्धे सादयत्युदानाय त्वेत्युदानो ह्यस्यैष तान्सꣳस्पृष्टान्त्सादये- 24
प्राणोदानावेवास्यैतत्संदधाति ॥१३॥

ते वा एते सन्नाः शेरत आ तृतीयसवनात्तस्माद्धिमाः प्रजाः स्वपन्त्यथ 25
यदेनाꣳस्तृतीयसवने प्रयुञ्जते तस्माद्धिमाः प्रजाः[33] पुनः प्रबुध्यन्ते ता इमाश्चराचरा[34]
तस्य ह्येवेदं विधामनु सर्वं वयो ह वा एतद्भूतो यज्ञो विधीयते तस्य पक्षावेवोपाꣳ-
श्वन्तर्यामावात्मोपाꣳशुसवनः[35] ॥१४॥

ते वा एते सन्नाः शेरते ऽनेजन्त[36] आ तृतीयसवनात्तायते[37] यज्ञ एति वै 26.27
तायते तस्माद्धयाꣳस्यनायुवानानि पक्षाभ्यां पतन्त्यथ यदेनाꣳस्तृतीयसवने
युञ्जते तस्माद्वायुवानानि पतन्तीयꣳ ह वा उपाꣳशुः प्राणो ह्युपाꣳशुः प्राणो
ह्येमामिमाꣳ हि प्राणन्नुपावजिहीते[38] ऽसावेवान्तर्याम उदानो ह्यन्तर्याम उदानो
ह्यसावमूꣳ ह्युदनन्नुपोज्जिहीते[39] ऽन्तरिक्षमेवोपाꣳशुसवनो व्यानो ह्यन्तरिक्षं व्यान
उपाꣳशुसवनः ॥१५॥ द्वितीयं ब्राह्मणम् ॥

1 Thus P, यद्धैनेनेमाः the other MSS.
2 पुरोहितं B C W. 3 जिग्यौ P O My. 4 तान्प्रा°

MSS. 5 कृत्वा B M (orig.). 6 °दंदुष्येन: MSS. 7 यदीन्नूनं C O P My, यदिन्नूनं B W. 8 °दधर्ष MSS. 9 पवयंति C. Probably before पव° some words are fallen out. 10 एत B W C My. 11 हविर्भवति O P, हविर्भवति B W C. 12 पवयंते B W. 13 भवति सो MSS. 14 तदिदं B. 15 आद्यमुपयछन्य° MSS. 16 Thus MSS. Read तन्मीयते ? 17 Thus MSS. 18 °भावेवोदिते B W. 19 °दहरेव MSS. 20 रात्रिरेव MSS. 21 Thus emended, संतमंतर्याममनुदिते MSS. 22 गोपाय the Mādhyandina. 23 Thus accented MSS. 24 Thus accented MSS., cp. IV. 8. 3. 21. 25 गृह्णात्य° MSS. 26 °श्चोतादिति C, °श्च्योतादिति My. 27 नूपा° B W, रूपा° C. 28 सादयेत्सादयेदेतं MSS. 29 सादयेन्नेनं MSS. 30 तं MSS. 31 Thus emended, जुहुयाद्येनैव MSS. 32 See V. 1. 1. 17. 33 प्रजाः MSS. 34 °श्चराचरा B P. 35 °मावात्मोपाꣳशु° B C W, °मावात्मोपाꣳशु° O P. 36 यजंत B W My. 37 °सवनात्तायते MSS. 38 Thus emended, प्राणंनुपावजिहीते B O, प्राणंनुयावजिहीते C W, प्राणंनुपावज्जीहीते P, प्राणंनुपाजिहीते My. 39 Thus without accent My, ब्रुदनंन्नुपोज्जिहीते B W O, °पोजिते P, ब्रुदानस्रोपोजिहीते B.

M. IV. 1. 3

## K. V. 1. 3

1 वाग्घ वा अस्यैन्द्रवायव एतन्न[1] यदध्यात्ममिन्द्रो ह वै यत्र वृत्राय वज्रं प्रजहार स हाबलीयान्मन्यमानो नास्तृषीति भीषा निलयां चक्रे स ह पराः परावतो जगाम[2] तदु हापि देवाः सह निलयां चक्रिरे ॥१॥

2.3 त उ होचुर्देवाः शश्वद्धै[3] हतो वृत्र इत्यथेदं न्यलेष्महीति त ऊचुरिमं देवं

ऽयं पवते त्वमिदं विद्धीति यद्ययꣳ हतो वा जीवति वा सयदि जीविष्यति त्वमा-
त्मानं[4] पुनः पर्याहरिष्यसीति ॥२॥

स होवाच किं मम ततो भविष्यतीति ते होचुः प्रथमवषट्कार एव ते 4
सोमस्य राज्ञ इति तथेति स ह जगामेद्धतं वृत्रꣳ स ह पुनराजगाम ॥३॥

स होवाच हतो वृत्र इति यद्धते कुर्यात[5] तत्कुरुतेति[6] तं देवा अभ्यसृज्यन्त 5
विर्त्तिं वेत्स्यमाना[6] एवं[7] तं[8] व्यगृह्णत पात्रैस्तद्यमेको ऽगृह्णीत स एकदेवत्यो
यं द्वावगृह्णाता[9] स द्विदेवत्यो ऽभवद्यं बहवो ऽगृह्णत स बहुदेवत्यो ऽभवत्स
नमेतैः पात्रैर्व्यगृह्णत तस्माद्ग्रहा इत्याख्यायन्ते ॥४॥

स यो वाव वृत्रः स सोमः स हैनान्पूतिरभिचवौ स नालमाहुतय आस न[1] 6
भक्षाय ते देवा ऊचुरिमं देवं यो ऽयं पवत इमं विवाहि स्वदय न इममिति ॥५॥

स होवाच किं मम ततो भविष्यतीति ते होचुस्त्वयैव पात्राण्याख्यायान्ता[10] 7-9
ति तथेति होवाच ते वै मे यूयꣳ सच्युपवातेति तस्य ह देवा अर्धं वा यावद्वाप-
नुस्तत्पशुष्वदधुः स एष कुणपः पशुषु तस्मादेतस्माद्गन्धान्नापिगृह्णीत सोमस्य
राज्ञो न्यङ्गस्तस्माद्य आसक्त इव मन्येतैवैतस्य गन्धस्य जिघ्रासेच्छ्रीवैं[11] सोमः
मा स्नामः स यथा श्रेयाꣳसमायन्तं पापीयान्प्रत्यवरोहत्येवꣳ हैतं गन्धꣳ स्नामः
प्रत्यवरोहति तस्माद्धेवं विदुषैतस्माद्गन्धान्नापिग्रहीतव्यम् ॥६॥

अथेमꣳ सोमपीथमयं देवो व्यवाद् तमेभ्यो ऽस्वदयत्ततो ऽलमाहुतये[11] ऽभव- 10
लं भक्षाय तस्मादेतानि पात्राणि नानादेवत्यानि सन्ति वायव्यानीत्याख्यायन्ते स वा
स्यैष प्रथमवषट्कारो ग्रहः ॥७॥

स हेन्द्र ईक्षां चक्रे ऽयं वै नो भूयिष्ठमभक्तेति यस्येमानि च पात्राण्ययं 11.12
च प्रथमवषट्कारो हन्ताहमस्मिन्ग्रहे ऽपित्वमिच्छा इति तस्मिन्नपित्वमैच्छतानु
मास्मिन्ग्रह आभजस्वेति ॥८॥

स होवाच वायुः किं ततो मम भविष्यतीति स होवाचेन्द्रो निरुक्तैव
वाग्वदिष्यतीति तथेति होवाच वाग्वै[13] चेद्वदिष्यत्यनु[13] त्वाभजामीति तमेतदन्वा-
भजन्तत एष ऐन्द्रवायवो ग्रहो ऽभवद्वायव्यो हैव ततः पुरा ॥९॥

स होवाचेन्द्रो ऽर्धं ममेति नेति होवाच वायुस्तुरीयमेव त इत्यर्धमेव म 13.14
इति तुरीयमेव त इति तौ हासंपादयन्तौ प्रजापतिं प्रश्नमाजग्मतुरिदं[14] नौ विभजेदं

नौ कल्पयेति स ह प्रजापतिर्द्वेधा[15] विबभाज[16] सो[16] ऽर्धमुवाचेदं वायोरित्यथेदमर्धं पुनर्द्वेधा चकार सो ऽर्धमुवाचेदं वायोरित्यथेदमिन्द्रस्येति हैनं तुरीयं भाजयां चकार तत एष ऐन्द्रतुरीयो ग्रहो ऽभवद्वायव्यो हैव ततः पुरा स वा एष ऐन्द्रतुरीयो ग्रहः ॥१०॥

15.16 तस्य द्वे पुरोरुचौ वायव्यैव पूर्वैन्द्रवायव्युत्तरा तथानुवाक्ये तथा[17] प्रैषौ तथा याज्ये तथो एनं तुरीयमेवाभाजयंत्स[18] इन्द्रस्तुरीयं[19] चेन्माबीभजन्निति तुरीयमेव वाचो[20] निर्वादयां[20] चकार तदिदं तुरीयं वाचो निरुक्तं यन्मनुष्या वदन्त्यथ तुरीयमनिरुक्तं यत्पशवो वदन्त्यथ तुरीयमनिरुक्तं यद्वयांसि वदन्त्यथ तुरीयमनिरुक्त यदिदं क्षुद्रं सरीसृपं वदति ॥११॥

17 तस्मादप्येतदृषिणाभ्यनूक्तं चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्तीति ॥१२॥

18.19 स गृह्णात्या वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार । उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयं वायवे त्वा ॥ इन्द्रवायू इमे सुता उप प्रयोभिरागतम् । इन्दवो वामुशन्ति हि ॥ उपयामगृहीतो ऽसि वायव इन्द्रवायुभ्यां त्वैष ते योनिः सजोषोभ्यां त्वेति सादयति यो वाव वायुः स इन्द्रो य इन्द्रः स वायुस्तस्मात्सादयति[21] सजोषोभ्यां त्वेति ॥१३॥ तृतीयं ब्राह्मणम् ॥

1 एतंनु MSS. 2 जगाम MSS. 3 शश्वद्वै MSS. 4 त्वमाशि° MSS. 5 Emended, कुर्यात्तत्स्कुरुतेति MSS. 6 °मान B W. 7 एवं तं O P. 8 भवद्यद्वावगृ° B W O P, भवद्यद्वावगृ° C. 9 न MSS. 10 °ख्यायंता My, °ख्यायंत B W. 11 जिघ्रासेश्रीवैं MSS. 12 °तये MSS. 13 वाग्वेचेत्वदिष्यनु P, वाग्वै वदिष्यत्यनु O with चेत् in the margin, वाचत्वदिष्यत्यनु C, वाग्वैव वदिष्यत्यनु B W. 14 पृश्निमा° MSS., cp. II. 4. 2. 14. 15 °द्वैधा B. 16 °भाज सो B. 17 तथो B. 18 °यमेवाभाजयंत्स B W O P My, °भाजयंन्स C. 19 हेंद्रतुरीयं C. 20 वाचो निर्वादयां C O P, वाचो निवा° B W. 21 वायवस्त° C.

K. V. 1. 4 M. IV. 1. 4

क्रतू[1] ह वा अस्य दक्षौ मैत्रावरुणस्तन्नु यदध्यात्मꣳ स यदभिगच्छति 1-3
सादो मे स्याददः कुर्वीयेति स क्रतुर्यदस्मै तत्समृध्यते स दक्षो मित्र एव क्रतुर्व-
णो दक्षस्तदस्यैतावात्मनो ब्रह्मैव मित्रः क्षत्रं वरुणो ऽभिगन्तैव ब्रह्म कर्ता क्षत्रियस्तौ
तौ नानेवैवाग्र आसतुः स शशाकैव[3] ब्रह्म मित्र ऋते क्षत्राद्वरुणात्स्थातुं न क्षत्रं
ण ऋते ब्रह्मणो मित्राद्यद्ध स्म क्षत्रं कुरुते ऽप्रसूतं ब्रह्मणा न[4] ह स्मास्मै[4]
तत्समृध्यते ॥१॥

तद्धोपमन्त्रयां चक्रे क्षत्रं ब्रह्म सꣳसृजावहै पुरस्तान्म एधि त्वत्प्रसूतः कर्म 4-6
करवा इति तथेति तौ समसृजेतां तत एष मैत्रावरुणो ग्रहो ऽभवत्सो एव पुरोधा
तस्माद्ब्राह्मणेनैव सर्वेणेव राजन्यबन्धुना विपरिददीत[5] सꣳ ह्येतौ सृजेते सुकृतं च
दुष्कृतं च य उ वै भोग्यो राजन्यः स्यान्नो एव स सर्वेणेव ब्राह्मणेन विपरिददीत[5]
सꣳ ह्येतौ सृजेते सुकृतं च दुष्कृतं च तस्मादवकॢप्तमेव[6] ब्राह्मणस्य यदराजन्यः
स्यात्समृद्धमु तद्यो राजन्यं लभातै राजन्यस्य तु हैवानवकॢप्तं यदब्राह्मणः[7] स्यादस-
मृधुकꣳ हास्य कर्म भवति यो राजन्यो ऽब्राह्मणो भवति तस्माद्राजन्येन कर्म करि-
ष्यमाणेन ब्राह्मण उपसर्तव्यः सꣳ हास्मै तद्दध्यते यत्काम एनमुपधावति ॥२॥

स गृह्णात्ययं वां मित्रावरुणा सुतः सोम ऋतावृधा । ममेदिह श्रुतꣳ हवम् ॥ 7
उपयामगृहीतो ऽसि मित्रावरुणाभ्यां त्वेति ॥३॥

तं पयसा श्रीणाति वृत्रो[8] वै सोम आसीत्तं यत्र देवा अघ्नꣳस्तद्धोचुर्मि- 8
त्रमपि[9] त्वꣳ हꣳसी३[10] इति[11] नेति[11] होवाच मित्रः सर्वस्य वा अहं मित्रमस्मीति
न मित्रः सन्नमित्रो[12] भविष्यामीति ते होचुस्तं[13] वै त्वा सोमपीथादन्तरेष्याम इति
स होवाचाप्यहꣳ हन्मीति तस्मात्पशवो ऽपाक्रामन्मित्रः सन्नमित्रो[14] ऽभूदिति स
पशुभिर्व्यार्ध्यत तमेतद्देवाः पशुभिः समार्धयन्यत्पयसाश्रीणꣳस्तथो वा एनमेव एतत्प-
शुभिः समर्धयति यत्पयसा श्रीणाति ॥४॥

तदाहुर्नैव सो ऽकामयत हन्तुमिति यदेवात्र पयस्तन्मित्रस्य सोम एव 9
वरुणस्य तावेतत्सꣳसृजेते इति तस्मात्पयसा श्रीणाति ॥५॥

स श्रीणाति राया वयꣳ ससवाꣳसो मदेम हव्येन देवा यवसेन गावः । 10
तां धेनुं मित्रावरुणा युवं नो विश्वाहा धत्तमनपस्फुरन्तीम् ॥ एष ते योनिर्ऋतायुभ्यां
त्वेति सादयति मित्रो वा ऋतं ब्रह्म हि मित्रो ब्रह्म ह्यृतं वरुण आयुः संवत्सरो हि

वरुणः संवत्सरो ह्यायुस्तस्मात्सादयत्यृतायुभ्यां त्वेति ॥६॥ चतुर्थं ब्राह्मणम् ॥

1 क्रतू B W, क्रतौ C. 2 °स्तंनु MSS. 3 Read शशाकैव ? 4 Thus emended, न ह स्माहस्मै all the MSS. 5 Thus the accented MSS. On this passage see Introd. II sec. 3. f. 10. 6 तस्मादनवक्लृप्तमेव B W. 7 Thus emended, यद्ब्राह्मणः MSS. 8 वृत्रो MSS. 9 °र्मित्रमपि MSS. 10 हिंसीः MSS. 11 इति नेति B, इति तेति P. 12 सन्नमित्रो C O P W. 13 होचुस्त्वं MSS. 14 सन्नमित्रो all.

M. IV. 1. 5

K. V. 1. 5

1 श्रोत्रं ह वा अस्याश्विनस्तस्मादेनं सर्वतः परिहारं भक्षयति सर्वत इव हि श्रोत्रेण शृणोति यत्र ह वा अङ्गिरसो वा भृगवो वा स्वर्गं लोकमायंस्तद्ध च्यवनो भार्गवो वाङ्गिरसो वेहैवाहीयत जीर्णिः ॥१॥

2.3 शर्यात उ वा इदं मानवो ग्रामेण चचार स ह तत्प्रतिवेशः पार्श्वतो निविविशे[1] यत्र च्यवनः शिश्ये तमु[2] ह कुमाराः क्रीलन्तो दृष्ट्वा जीर्णिं शयानं कृत्यारूपमनर्थ्यं[3] मन्यमाना लोष्टैर्विपिपिषुः स क्रुद्धो ऽसंज्ञां शर्यातिभ्यश्चकार तांश्छार्यातानसंज्ञा विवेद पितैव पुत्रेण युयुधे भ्राता भ्रात्रा ॥२॥

4 स हेक्षां चक्रे शर्यातो यत्किमकरं तत ईदृगापदिति स हैतदेव प्रतिपपात[4] च्यवनो वै भार्गवो वाङ्गिरसो वेहैवाहीयत जीर्णिरिति तं पट्टु केन चिदहिंसिषं तत ईदृगापदिति स ह ग्रामं संजुहाव ॥३॥

5.6 स होवाच ग्रामं संहूय क एवेह गोपो वाविपो वा किं चिदभ्यगन्निति ते होचुः पुरुष एवायं जीर्णिः कृत्यारूपो ऽरण्ये शेत इति तमेवाद्य कुमारा लोष्टैर्विपिपिषुस्तदेवादरिष्मेति[5] स ह विदां चकार च्यवन इत्येव स तत एव रथं युक्त्वा सुकन्यां शार्यातीमुपादाय प्रसिष्यन्द स आजगाम यत्र च्यवनः शिश्ये[6] ॥४॥

7-9a स होवाच नमस्ते ऽस्त्वृष इति यन्नावेदिष्म तेन[7] त्वाहिंसिष्मानया[8] ते ऽपह्नुमहे व्येतु ते क्रोध इति ततो हास्य[9] वीयाय क्रोधस्ततः शार्याताः समजानत सो ऽपयुयुजे ग्रामो नेदेनं पुनर्हिनसाम केन चिदित्यश्विना उ वा इदं मनुष्येषु भिषज्यन्तौ चेरतुस्तौ ह तन्न्याजग्मतुर्यत्र[10] च्यवनः शिश्ये[6] तौ हेमामुपमन्त्रयां चक्राते

तुकन्यामावयोरेधि कमिमं जीर्णिमनर्थ्यमुपशेष इति ॥५॥

सा होवाच नैवाहं तं जीवन्तꣳ हास्यामि यस्मै मां पितादादिति तदु हायमृषिराजज्ञौ ताꣳ ह तयोः प्रेतयोरुवाच[11] किं त्वैतावबोचतामितीत्थमित्थमिति तौ त्वं किं प्रत्यवोच इति नैवाहं तं जीवन्तꣳ हास्यामि यस्मै मां पितादादिति ॥६॥ 9b.10

स होवाच तौ वै त्वा यद्येतत्पुनर्ब्रवात[12] इति तौ त्वं ब्रवसीति होवाच न वाव युवꣳ सुसर्वाविव स्थो न सुसमृद्धाविवाथ मे पतिं निन्दथ इति तौ त्वा यदि ब्रवातः[13] केनासर्वौ स्व इति ब्रवात[13] इतीमं नु मे पतिं पुनर्युवाणं[14] कुरुतमथ वां वक्ष्यामीति तौ ह पुनरेव न्याजग्मतुस्ताꣳ हैतदेवोचतुः ॥७॥

सा होवाच न वाव युवꣳ सुसर्वाविव स्थो न सुसमृद्धाविवाथ मे पतिं निन्दथ इति तौ होचतुः केनासर्वौ स्व इतीमं नु मे पतिं पुनर्युवाणं कुरुतमथ वां वक्ष्यामीति तथेति होचतुस्तं वै परिगृह्यापो[15] ऽभ्यवहरेति[16] स येन वयसा कामयते तेन पुनरुदैत्विति तं परिगृह्यापो[15] ऽभ्यवजहार स येन वयसा चकमे तेन पुनरुदेयाय तौ होचतुः केनासर्वौ स्व इति ॥८॥ 11.12

स होवाच च्यवन एव देवा वा अमी कुरुक्षेत्रे यज्ञं तन्वत इति ते वां यज्ञादन्तर्यन्ति तेनासर्वौ स्थ इति तौ ह तदभिप्रेयतुस्तौ हाजग्मतुर्देवान्यज्ञं तन्वानान्त्स्तुते बहिष्पवमाने ॥९॥ 13

तौ होचतुरुप नौ ह्वयध्वमिति ते होचुर्न वामुपह्वयिष्यामह इति बहु सꣳसृष्टं मनुष्येषु भिषज्यन्तावचारिष्टं तस्माद्वां नोपह्वयिष्यामह[17] इति ॥१०॥ 14

तौ होचतुरपशिरसा[18] वै यज्ञेन यजध्व इति कथमपशिरसेत्यावाभ्यां[18] नु ग्रहं गृह्णीताथ वो वक्ष्याव इति तथेति ताभ्यां ग्रहमगृह्णꣳस्तावध्वर्यू अभवतां तौ शिरः प्रत्यधत्तां तदु तद्दिवाकीर्तेषु व्याख्यायते यथा यथा तदश्विनौ शिरः प्रत्यधत्तां तस्मादाभ्यामेतꣳ स्तुते बहिष्पवमाने ग्रहं गृह्णन्ति स्तुते हि बहिष्पवमान आगच्छताम् ॥११॥ 15

तौ होचतुर्मुख्यौ वा आवꣳ[19] स्वो यावध्वर्यू इति पुरस्तान्नाविमं ग्रहं पर्याहरन्त्विति[20] तमाभ्यां पुरस्तात्पर्याहरन्नेतद्द्विदेवत्यानभि तस्मादेतं दशमं ग्रहं गृह्णाति तृतीयस्य वषट्क्रियते तौ यौ प्रत्यक्षमश्विनाविमे एव तद्द्यावापृथिव्यावथ[21] यत्पुष्करस्रजावित्यग्निरेवास्याः पुष्करमादित्यो[22] ऽमुष्याः ॥१२॥ 16

17.18 स गृह्णाति या वां कशा[23] मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् ॥ उपयामगृहीतो ऽस्याश्विभ्यां त्वैष ते योनिर्माध्वीभ्यां त्वेति सादयति तं वै मधुमत्यर्चा गृह्णाति माध्वीभ्यां त्वेति सादयति दध्यङ् ह वा आथर्वणो मधु नामाश्विभ्यां ब्राह्मणमुवाच तदेनयोः प्रियं धाम तेनैनावेतत्प्रियेण धाम्नोपगच्छति तस्मान्मधुमत्यर्चा गृह्णाति माध्वीभ्यां त्वेति सादयति ॥१३॥

19 तच्छ्लक्ष्णान्यन्यानि पात्राणि भवन्ति रास्नावमैन्द्रवायवपात्रं तत्तस्य द्वितीयꣳ रूपं तेन तद्द्विदेवत्यमजकावं मैत्रावरुणं तद्धेव तस्य द्वितीयꣳ रूपं तेन तद्द्विदेवत्यमवौष्ठमाश्विनं तद्हैव तस्य द्वितीयꣳ रूपं तेन तद्द्विदेवत्यं मुख्या उ वा आश्विनावबौष्ठमिव[24] वा इदं[25] मुखं[25] तस्मादवौष्ठमाश्विनं[26] भवति ॥१४॥ पञ्चमं ब्राह्मणम् ॥ प्रथमो ऽध्यायः ॥

1 निविवेश B, निविवेशे W. 2 तमू B P O My. 3 °रूपमनर्थ्यं MSS., but cp. section 5. 4 Thus MSS. Read probably °पपाद. 5 लोष्टेर्विपि° MSS. Read °स्तदेवादरि° or rather °स्तदेवादश्मेति. 6 शिष्ये MSS. 7 तेन MSS. 8 °ष्मानया MSS. 9 हास्य MSS. 10 तंन्या° MSS. 11 प्रेतयो° MSS. 12 Thus C originally, °ब्रुंवात the other MSS. 13 ब्रुवातः all. 14 °र्युवानं C. 15 परिगृह्यापो MSS. 16 °हरेति MSS. 17 °ष्याम B C. 18 °रपशिरसा and °मपशिरसा MSS. 19 अवाꣳ B. 20 पर्याहर° MSS. 21 °पृथिव्यावथ MSS. 22 °मादित्यो MSS. except O. 23 कशा MSS. 24 °वौष्टमिव B My. 25 इदं मुखं O P My, इदं मुख्यं B, इद मुखं C, इदं मुखं W. 26 तस्मादवौष्ठमा C W O, तस्मादवौष्टमा P, तस्मादौष्टमा B.

M. IV. 2. 1 K. V. 2. 1

1.2 चक्षुषी ह वा अस्यैतौ यच्छुक्रामन्थिनौ स एष एव शुक्रो य एष तपति तद्यदेष एतत्तपति तेनैष शुक्रश्चन्द्रमा एव मन्थ्यथ यत्तꣳ सक्तुभिः श्रीणाति तद्धा

तं मन्थं करोति तेनो स मन्थी तौ वा एतावेवासाꣳ सर्वासां प्रजानां चक्षुषी
स्वर्येतौ[1] नोदियातां[1] नेह[2] स्वौ चन पाणी पश्येयुः ॥१॥

तयोरत्त्वैवान्यतर[3] आद्यो ऽन्यतरो ऽत्त्वेव शुक्र आद्यो मन्थ्यत्त्वैवान्यतरम- 3.4
वाद्यो[4] ऽन्यतरमत्त्वैव[5] शुक्रमन्वाद्यो मन्थिनं तावन्यस्मै गृह्येते अन्यस्मै[6] हूयेते शण्डा-
मर्कावित्यसुररक्षसे ताभ्यां गृह्येते देवताभ्यो हूयेते ॥२॥

तद्यत्तथा यत्र वै देवा असुररक्षसान्यपाघ्नत तच्छण्डामर्कावित्यसुररक्षसे 5
ते एव न शेकुरपहन्तुं यद्ध स्म कर्म कुर्वते[7] तद्ध स्मालोभ्य मोहयित्वा
क्षिप्रमपद्रवतः ॥३॥

त ऊचुरुपजानीतेति कथं न्विमावपहनीमहीति ग्रहावेवाभ्यां गृह्णामेति 6
होचुस्तावभ्यवैष्यतस्तौ स्वीकृत्यापहानिष्यामह इति तथेति ताभ्यां ग्रहा-
वगृह्णꣳस्तावभ्यवैतां तौ स्वीकृत्यापाघ्नत तस्माच्छण्डामर्काभ्यां गृह्येते देवताभ्यो
हूयेते ॥४॥

उत ह स्माह याज्ञवल्क्यो नो स्वित्खलु देवताभ्य एव गृह्णीयामेति विदितꣳ 7
हीदमिति तदु[8] तन्मीमाꣳसामेव चक्रे नेत्यु[9] तच्चकार[9] ॥५॥

तदु[10] तच्छुक्रस्य[10] पुरोरुचं कुर्वन्त्ययं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्ज- 8
रायू[11] रजसो विमान इत्येतदेतस्य रूपं क्रियते य एष तपति यज्ज्योतिर्जरायुरिति ॥६॥

इमां त्वेव शुक्रस्य पुरोरुचं कुर्यात्तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं 9
बर्हिषदꣳ स्वर्विदमित्यत्ता ह्येतमनु ज्येष्ठतातिर्ह्यत्ता तस्माज्ज्येष्ठतातिं बर्हिषदꣳ
स्वर्विदमिति प्रतीचीनं वृजनं दोहसे धुनिमाशुं जयन्तमनु यासु वर्धसे ॥ उपया-
मगृहीतो ऽसि शण्डाय त्वेति ॥७॥

तं दक्षिणार्धे सादयत्येष ते योनिर्वीरतां पाहीत्यत्ता ह्येतमनु वीरो ह्यत्ता
तस्मात्सादयति वीरतां पाहीत्यथ यदेनं दक्षिणार्धे सादयति दक्षिणाꣳ ह्यसौ दिश-
मन्वावर्तते यो ऽसौ तपति ॥८॥

अथ मन्थिनं गृह्णात्ययं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने। 10
इममपाꣳ संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति ॥ उपयामगृहीतो ऽसि
मर्काय त्वेति ॥९॥

तꣳ सक्तुभिः श्रीणाति वरुणो ह वै सोमस्याभीवाक्षि प्रतिजघान तदश्व- 11
यत्ततो ऽश्वः समभवत्तस्मादश्वो नाम तस्याश्रु प्रास्कन्दत्स यवो ऽभवत्तस्मादाहु-

र्वरुण्या यवा इति स यदेवास्य तच्चक्षुषः प्रास्कन्दत्तेनैवैनमेतत्समर्धयति कृत्स्नं करोति तस्मात्सक्तुभिः श्रीणाति ॥१०॥

12 स श्रीणाति मनो न येषु हवनेषु तिग्मं विपः शच्या वनुथो द्रवन्ता। आ यः शर्याभिस्तुविनृम्णो अस्याश्रीणीतादिशं गभस्तौ ॥ एष ते योनिः प्रजाः पाहीत्युत्तरार्धे सादयत्याद्यो ह्येतमनु प्रजा[१२] हीमा विश आद्यास्तस्मात्सादयति[१२] प्रजाः पाहीति[१३] ॥११॥

13.14 अथ प्रोक्षितौ द्वौ यूपशकलौ भवतो ऽप्रोक्षितौ द्वौ प्रोक्षितयोरन्यतरमध्वर्युरादत्ते ऽप्रोक्षितयोरन्यतरं तथा प्रतिप्रस्थाता शुक्रमध्वर्युरादत्ते मन्थिनं प्रतिप्रस्थाता तावाददानावपमृष्टो ऽपमृष्टः शण्ड इत्यध्वर्युरपमृष्टो मर्क इति प्रतिप्रस्थाता तावाददानावेवैते असुररक्षसे अपहतो देवास्त्वा शुक्रपाः प्रणयन्त्वित्यध्वर्युः प्रणयति देवास्त्वा मन्थिपाः प्रणयन्त्विति प्रतिप्रस्थाता तदेनौ देवताभ्य एव[१४] प्रणयतः[१५] ॥१२॥

15 तौ जघनेनाग्निमरत्नी संधत्तः संधाय प्राञ्चौ परीतस्तौ परियन्ता[१५] उत्तरवेदौ सादयतो दक्षिणस्यां श्रोणावध्वर्युर्धारयन्नेव सादयत्युत्तरस्यां[१६] प्रतिप्रस्थातानाधृष्टासीति रक्षोभिर्न्वैवैतदुत्तरवेदिमनाधृष्टां कुरुतो ऽथो अत्येष्यन्ता[१७] उ वा एतदग्निं पर्येष्यन्तौ भवतो[१८] ऽग्नय एवैतन्निह्नुवाते[१९] तथैनावेषो ऽग्निरतियन्तौ न हिनस्ति ॥१३॥

16 स जपति सुवीरो वीरान्प्रजनयन्परीह्यभि रायस्पोषेण यजमानमित्यध्वर्युरत्ता ह्येतमनु वीरो ह्यत्ता तस्मात्सुवीरो वीरान्प्रजनयन्परीहीत्यभि रायस्पोषेण यजमानमिति यजमानायैतामाशिषमाशास्ते ॥१४॥

17 अथ सुप्रजाः प्रजाः प्रजनयन्परीह्यभि रायस्पोषेण यजमानमिति प्रतिप्रस्थाताद्यो ह्येतमनु प्रजा हीमा विश आद्यास्तस्मात्सुप्रजाः प्रजाः प्रजनयन्परीहीत्यभि रायस्पोषेण यजमानमिति यजमानायैतामाशिषमाशास्ते ॥१५॥

18 तौ वा अपिधाय प्राञ्चौ परीतस्तिर इव वा एतत्कुरुतो यदपिधत्तस्तिर[२०] इव[२१] वै तद्यदपिहितं[२१] तस्मादिमौ सूर्याचन्द्रमसौ प्राञ्चौ यन्तौ न कश्चन पश्यत्यथ यत्पुरस्तात्परीत्यापोर्णुतः पुरस्तात्परीत्य जुहुत[२२] आविर्वा एनौ तत्कुरुतस्तस्मादेनौ प्रत्यञ्चौ यन्तौ सर्वा इमाः प्रजाः पश्यन्ति तस्माद्धैव पराग्रेतः सिक्तं नाविर्भवति प्रत्यक्प्रजायमानमाविर्भवति ॥१६॥

19 अथ पुरस्तात्परीत्य जघनेन यूपमरत्नी संधत्तो यदि ततो ऽग्निर्नोद्बाधेत यद्यु ततो ऽग्निरुद्बाधेताप्यग्रेण यूपं संदध्यातां तौ संधत्तः संजग्मानो दिवा

…ल्या शुक्रः शुक्रशोचिषेत्यध्वर्युः संजग्मानो दिवा पृथिव्या मन्थी मन्थिशोचिषेति
…प्रस्थाता चक्षुषोरेवैतदारमणं[23] कुरुतस्तस्माद्धिमे चक्षुषी अभितो ऽस्थिनी सꣳ-
…ते स्थाचेत्याञ्च[24] ॥१७॥

अथ याविमावप्रोक्षितौ यूपशकलौ भवतस्तौ निरस्यतो निरस्तः शण्ड 20.21
…ध्वर्युर्निरस्तो मर्क इति प्रतिप्रस्थाता तौ पुरैवाहुतेरेते असुररक्षसे अपहतो ऽथ
…प्रोक्षितौ भवतस्तावग्नौ प्रास्यतः शुक्रस्याधिष्ठानमसीत्यध्वर्युर्मन्थिनो ऽधिष्ठानम-
…ति प्रतिप्रस्थाता चक्षुषोरेवैते समिधौ चक्षुषी एवैताभ्याꣳ समिन्द्धे तस्माद्धिमे
…क्षुषी समिद्धे ॥१८॥

अथ जपत्यच्छिन्नस्य ते देव सोम सुवीर्यस्य रायस्पोषस्य ददितारः स्या- 22
…माशीरेवैषैतस्य कर्मण आशिषमेवैतदाशास्ते ॥१९॥

अथाह प्रातः प्रातःसावस्य[25] शुक्रवतो मधुश्चुत[26] इन्द्राय सोमान्प्रस्थि- 23-26
…तव्येति वषट्कृते ऽध्वर्युरग्रे जुहोत्यथ प्रतिप्रस्थाताथेतरे जुह्वति तौ यत्पुरस्ता-
…त्प्रत्य जुहुतश्चक्षुषी[27] ह्यस्यैतौ पुरस्तादेवैतच्चक्षुषी धत्तस्तस्माद्धिमे पुरस्ताच्चक्षुषी
…यदभितो यूपं तिष्ठन्तौ जुहुतो[27] यथा वै नासिकैवं यूपस्तस्माद्धिमे नासिका-
…मभितश्चक्षुषी अथ यदेतौ वषट्कृतौ मन्त्रेण हूयेते तेन हैतदुदश्नुवाते यदेनावनु
…सर्वꣳ सवनꣳ हूयते[28] ऽथ यदेतावनु सर्वꣳ सवनꣳ हूयते[29] चक्षुषी ह्यस्यैतौ सत्यं
…चक्षुः सत्यं वै प्रत्यक्षतमां प्रजापतेस्तस्मादेतावनु सर्वꣳ सवनꣳ हूयते ॥२०॥

स जुहोति सा प्रथमा सꣳस्कृतिर्विश्ववारा स प्रथमो वरुणो मित्रो अग्निः। 27.28
…स प्रथमो बृहस्पतिश्चिकित्वाꣳस्तस्मा इन्द्राय सुतमाजुहोत स्वाहेति स यत्सा
…प्रथमा स प्रथम इति जुहोति शश्वद्ध वै रेतसः सिक्तस्य संभवतश्चक्षुषी एव
…प्रथमे संभवतस्तस्माद्धैवं जपति ॥२१॥

अथाह प्रैतु होतुश्चमसः प्र ब्रह्मणः[30] प्रोद्गातॄणामृत्विजां चमसाध्वर्यव 29.30
…मवर्तध्वꣳ शुक्रस्याभ्युन्नयध्वमिति पर्येत्य प्रतिप्रस्थाताध्वर्योः पात्रे सꣳस्रवमव-
…नयत्य एवैतदाद्यं बलिꣳ हारयन्ति तमध्वर्युर्होतृचमसे भक्षाय वषट्कर्तुर्हि भक्षः
…प्राणो वै वषट्कारः सो ऽस्मादेतत्पराङ् भवति यद्वषट्करोति प्राण उ वै भक्षस्तमेवैत-
…दात्मनि धत्ते यद्भक्षयति तस्माद्वषट्कर्त्रे भक्षमवनयत्यथ यदेतौ प्रत्यञ्चौ भक्षाय
…हरन्ति[31] हरन्तो ऽन्यान्ग्रहाꣳश्चक्षुषी ह्यस्यैतौ तस्मादु सꣳस्रवमेवावनयति ॥२२॥

अथ होत्राणां चमसानुपोन्नयन्ति हुतोच्छिष्टा[32] वा एते सꣳस्रवास्ते 31

नालमाहुतये भवन्ति तानेवैतत्पुनराप्याययन्ति तथो अलमाहुतये भवन्ति ॥२३॥

32.33 अथ होत्राः संयाजयन्ति होत्रा वै युक्ता देवेभ्यो यज्ञं वहन्ति ता एवैतत्सं तर्पयति तृप्ताः प्रीता देवेभ्यो यज्ञं वहानिति स प्रथमस्यां वा हुतायां सर्वासु वा जपति तृम्पन्तु होत्रा मधोर्यत्स्विष्टं[33] यत्सुभृतं यत्स्वाहेति ॥२४॥ प्रथमं ब्राह्मणम् ॥

1 यद्येतौ B. 2 °यातां नेह MSS. 3 तयोरेतौ-वान्यतर B. 4 मंथ्यत्तैवा° MSS. ( but : मन्थी । अत्ता । एव ). 5 न्यतरमत्तैव B. 6 न्यस्मै MSS. 7 कुरुते B W. 8 तदु MSS. 9 Thus MSS. ( B only नेत्यु ). 10 तदुत शुक्रस्य O P My. 11 °जंरायु B C. 12 प्रजाः पाहीति मा विश आयास्त-स्मा° B W. 13 पाहीति MSS. 14 एवं प्रणयतः B, एव प्रणयत: C O P. 15 पर्यंता MSS. 16 साद-य° MSS. 17 अत्येष्यंता B, अत्येष्यंता C O W P. 18 भवतो MSS. 19 एवैतंनि° B W C My. 20 °धत्तस्तिर MSS. 21 इवैतद्य° C O P ( cp. I. 6. 2. 5 ); °द्यदपिहितं W B C O ( orig. ). 22 जुहु-त MSS. 23 °दामरणं B W. 24 इत्थाचेत्थाच्च C O P, इत्थाचेत्थाच B W My. 25 प्रातः सावनस्य B, प्रातः सवस्य W. 26 मधुश्च्युत C O P My W. 27 जुहु° MSS. 28 हूयते B. 29 हूयेते B. 30 ब्रह्मणः MSS. 31 हरति B (sec. m.), C omits. 32 हुतो° B. 33 मध्वोय° the Saṃhitā in Weber's edition.

M. IV. 2. 2

## K. V. 2. 2

1 आत्मा ह वा अस्याग्रयणः स वा एष सर्वमेव ग्रहः सर्वं ह्यात्मा तस्मादनया गृह्णात्यस्या हि स्थाली भवति स्थाल्या ह्येनं गृह्णाति सर्वं ह्येष ग्रहः सर्वमु हीयं तस्मादनया गृह्णाति ॥१॥

2-4 तं[1] पूर्णं गृह्णाति सर्वं हि पूर्णं सर्वं ह्येष ग्रहस्तस्मात्पूर्णं गृह्णाति तं

श्वेभ्यो देवेभ्यो गृह्णाति सर्वं हि विश्वे देवाः सर्वं ह्येष ग्रहस्तस्माद्विश्वेभ्यो
भ्यो गृह्णाति सर्वेषु सवनेषु गृह्णाति सर्वं ह्येष ग्रहस्तस्मात्सर्वेषु सवनेषु
णाति ॥२॥

अथ यदि राजोपदस्येदेतस्मादेवैनं[3] प्रभवेयुरेतस्मात्तन्वीरन्नात्मा[4] ह्यस्यैष 5
त्मनो हि सर्वाण्यङ्गानि प्रभवन्ति तस्मादेनमेतस्मादेव प्रभवेयुरेतस्मात्तन्वीरन्ने-
स्मादेवोत्तमं[5] ग्रहꣳ हारियोजनं[6] गृह्णात्यात्मन्येवैतद्यज्ञो ऽस्यां प्रतिष्ठायामन्ततः
तितिष्ठति तस्मादेतस्मादुत्तमं ग्रहꣳ हारियोजनं[7] गृह्णाति ॥३॥

अथ यदाग्रयणो नाम यां वा अमूं वाचं यच्छति ग्रावाणमादायात्र वा अग्रे 6
वागवदति स यदत्राग्रे सा वागवदति तस्मादाग्रयणो नामाथ यदत्राग्रे तां वाचं वाद-
ति रक्षोभ्यो वै भीषा तां वाचमयच्छन् ॥४॥

अथातः षट् पूर्वान्ग्रहान्गृह्णात्यथैष सप्तमः षड्वा ऋतवः संवत्सरस्य 7.8
र्वमु[8] वै[9] संवत्सरो ऽस्मिन्नेवैतत्सर्वस्मिन्विजिते ऽभये ऽनाष्ट्रे ऽत्राग्रे देवा वाचम-
हꣳस्तथो वा एनमेष एतदस्मिन्त्सर्वस्मिन्विजिते ऽभये ऽनाष्ट्रे ऽत्राग्रे वाचं वाद-
ति तस्माद्वा अत्राग्रे वाचं वादयति ॥५॥

अथ वा अतो गृह्णात्येव ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश 9
थ। अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् ॥ उपयामगृहीतो
स्याग्रयणो ऽसि स्वाग्रयण इति वाचमेवैतदयातयामानं करोति तस्मादुतेदं वाचा
यमानमेव पुनः पुनर्वदति जामि हि कुर्याद्यदाग्रयणो ऽस्याग्रयण इति वैव[10] गृह्णीया-
स्वाग्रयणो[10] ऽसि स्वाग्रयण इति वा ॥६॥

पाहि यज्ञं पाहि यज्ञपतिमिति वाचमेवैतदुत्सृष्टामाह गोपाय[11] यज्ञमिति 10
त्याह पाहि यज्ञमिति पाहि यज्ञपतिमिति वाचमेवैतदुत्सृष्टामाह गोपाय यजमान-
मिति यजमानो हि यज्ञपतिः ॥७॥

विष्णुस्त्वामिन्द्रियेण पात्विति वाचमेवैतदुत्सृष्टामाह यज्ञो वै विष्णुर्य-
स्त्वां वीर्येण पात्विति विष्णुं त्वं पाहीति वाचमेवैतदुत्सृष्टामाह यज्ञो वै विष्णुर्यज्ञं
त्वं पाहीत्यभि[12] सवनानि[12] पाहीति तदेतं ग्रहमाह सर्वाणि ह्येष सवनानि प्रति ॥८॥

अथ दशामुपनिगृह्य हिंकरोति सा वा एषा वागनुद्यमाना तताम सा 11
तान्ता[13] न[13] शशाक सꣳहातुं तस्यां तान्तायां देवा एतं[14] प्राणमदधुः प्राणो हि
हिंकारः प्राणो हि वै हिंकारस्तस्मान्नैव कश्चन नासिके अपिगृह्य हिंकर्तुꣳ शक्नु-

यात्सैतेन प्राणेन समजिहीत तथो वा अस्यामेष एतत्तान्तायां प्राणं दधाति सैतेन[15] प्राणेन संजिहीते यदा हि तान्तः प्राणं लभते ऽथ हि स संजिहीते तस्मा द्दशामुपनिगृह्य हिंकरोति स वै त्रिर्हिंकरोति त्रिवृद्धि यज्ञः ॥९॥

12.13 हिंकृत्याह सोमः पवते सोमः पवते सोमः पवत इति यं भीषा रक्षोभ्यो ऽग्रे न प्राह तमेवैतद्विजिते ऽभये ऽनाष्ट्रे प्राह तमाविः करोत्यस्मै ब्रह्मणे पवत इति तद्ब्रह्मण आहास्मै क्षत्राय पवत इति तत्क्षत्रायाहास्मै सुन्वते यजमानाय पवत इति तद्यजमानायाह ॥१०॥

14.15 तदाहुरेतावदेवोक्त्वा सादयेदिति ब्रह्माग्निः क्षत्रमिन्द्र इन्द्राग्नी उ वा इद सर्वमिति तस्मादेतावदेवोक्त्वा सादयेदिति सैषा मीमाꣳसैवाह[16] त्वेव भूय इष ऊर्जे पवत इति वृष्ट्यै तदाह यदिष इत्यूर्ज इति यद्वृष्टादूर्ग्रसो जायते ऽद्भ्य ओषधीभ्यो पवत इति तदद्भ्यश्चौषधिभ्यश्चाह[17] द्यावापृथिवीभ्यां पवत इति तदाभ्यां द्यावापृथिवीभ्यामाह ययोरिदꣳ सर्वमधि सुभूताय पवत इति साधवे पवत इत्येवैतदाह ॥११॥

16 तदु हैक आहुर्ब्रह्मवर्चसाय पवत इति तदु[18] तथा न ब्रूयाद्यद्वा आहास्मै[...] ब्रह्मण इति तदेव ब्रह्मवर्चसायाह तस्मात्सुभूताय पवत इत्येतावदेवोक्त्वा सादयेत्त सादयत्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति विश्वेभ्यो ह्येनं देवेभ्यो गृह्णाति तं मध्ये सादयेदात्मा ह्यस्यैष दक्षिणोकथ्यस्थाली[19] भवत्युत्तरादित्यस्थाली ॥१२॥

द्वितीयं ब्राह्मणम् ॥

1 स most of the MSS., but cp. V. 2. 4. 2.
2 Om. B. 3 °वैतं B. 4 प्रभवेयुरेतस्मात्तन्वीरन्नात्मा B, प्रभवेयुरेतस्मात्तन्वीरन्नात्मा COP. 5 °तस्मात्तन्वीर° MSS.
6 हर्योजनं MSS. 7 हर्योजनं MSS. except B and C (sec. m.). 8 सर्वं वै B. 9 वै B. 10 °ब्रयणो MSS. 11 गोपाय C. 12 पाहीत्यभि सव° B.
13 तांता न MSS. 14 एतं MSS. 15 दधाति सैतेन MSS.
16 मीमाꣳसैवाह C O P W, मीमाꣳसैवाह B ( मीमाꣳसा । एव । आह । तु । एव ). 17 °षधीभ्य° B My; °श्चाह MSS. 18 तदु B. 19 °क्थ्यस्थाली C O W, °क्थ्यस्थाली B, °त्थस्थाली P.

K. V. 2. 3 M. IV. 2. 3

अयं[१] ह वा अस्यैषो[१] ऽनिरुक्तः प्राणो यदुक्थ्यः स वा अस्यैष आत्मैवात्मा 1
निरुक्तः प्राणः सो ऽस्यायुरेव तस्मादनया गृह्णात्यस्या हि स्थाली भवति स्थाल्या
अमृतजरा हीयममृताजरमु ह्यमृतमायुस्तस्मादनया गृह्णाति ॥१॥

असावेवायुर्यद्ध्रुव आत्मैवास्यैतेन सꣳहितः पर्वाण्येव संततानीदमगृहीत 3-5
उत्तमो ग्रहो ऽच्छावाकाय भवत्यथ माध्यंदिनाय सवनाय राजानमुपावहरति
वसतीवरीणामवनयति तत्पर्व समैति प्रथममहोत्तरस्य सवनस्योत्तमं पूर्वस्य
उत्तरस्य तत्पूर्वं करोति यत्पूर्वस्य तदुत्तरं तद्व्यतिषजति तस्मादिमानि पर्वाणि
व्यतिषक्तानीदमित्थमतिहानमिदमित्थं[२] तथो एव माध्यंदिने सवने ऽगृहीत एवैतस्मा-
ग्रहो ऽच्छावाकाय भवत्यथ तृतीयं वसतीवरीणामवनयति तत्पर्व समैति
महोत्तरस्य सवनस्योत्तमं पूर्वस्य स यदुत्तरस्य तत्पूर्वं करोति यत्पूर्वस्य तदुत्तरं
व्यतिषजति तस्मादिमानि पर्वाणि व्यतिषक्तानीदमित्थमतिहानमिदमित्थꣳ[२] स
अस्यैतेनात्मा सꣳहितः संततस्तेनास्यैष आयुः ॥२॥

सा वा एषा कामदुघैवेन्द्रस्योद्धारस्त्रिभ्यः प्रातःसवन[३] उक्थेभ्यो[४] 6
त्रिभ्यो[५] माध्यंदिने सवने तत्षट् षड्वा ऋतव ऋतवो वा इदꣳ सर्वमन्नं
तेनैषा कामदुघेन्द्रस्योद्धारः ॥३॥

तं वा अपुरोरुक्कं गृह्णात्युक्थं वै पुरोरुग्गृग्घि पुरोरुग्गृग्घ्युक्थꣳ[६] साम ग्रहो 7
यदन्यद्यजुर्जपति तद्यजुस्ते हैते ऽभ्यर्धं[७] एवर्भ्यं[८] आसुरभ्यर्धे यजुर्भ्यो ऽभ्यर्धे
...भ्यः ॥४॥

ते ह देवा ऊचुर्हन्तेमान्यजुःषु[९] दधामेति तेनेयं विद्या बहुलतरेव भविष्य- 8.9
ति तथेति तान्यजुःष्वदधुस्तेनैषा[९] विद्या बहुलतरेवाभवत्तदुक्थं वै पुरोरुग्गृग्घि[१०]
पुरोरुग्गृग्घ्युक्थꣳ[६] स यदेवैतमुक्थेभ्यो विगृह्णाति तेनैवैष पुरोरुङ्माꣳस्तस्मादेतम-
पुरोरुक्कं[११] गृह्णाति ॥५॥

स गृह्णात्युपयामगृहीतो ऽसीन्द्राय त्वा बृहद्वते वयस्वत इति वीर्यवत इत्ये- 10
वाह यदाह बृहद्वते वयस्वत इत्युक्थायुवं गृह्णामीत्युक्थेभ्यो ह्येनं गृह्णाति यत्त
इन्द्र बृहद्वय इति यत्ते वीर्यमित्येवैतदाह यदाह यत्त इन्द्र बृहद्वय इति तस्मै त्वा
विष्णवे त्वेति यज्ञो वै विष्णुर्यज्ञस्य वा एतमायुषे गृह्णाति तस्मादाह तस्मै त्वा विष्णवे
त्वैष ते योनिरुक्थेभ्यस्त्वेति सादयत्युक्थेभ्यो ह्येनं गृह्णाति ॥६॥

11 तं विगृह्णाति देवेभ्यस्त्वा देवायुवं गृह्णामि यज्ञस्यायुष इति तद्वै विगृह्णीयात्प्रशासनꣳ स कुर्याद्य एवं विगृह्णीयाद्यज्ञस्य ह्येतमायुषे गृह्णाति तस्मादेवं विगृह्णीयात् ॥७॥

12 मित्रावरुणाभ्यां त्वा देवायुवं गृह्णामि यज्ञस्यायुष इत्येव[11] मैत्रावरु मैत्रावरुणीषु हि तस्मै स्तुवते मैत्रावरुणमनुशस्यते[13] मैत्रावरुण्या यजति ॥८॥

13 इन्द्राय त्वा देवायुवं गृह्णामि यज्ञस्यायुष इत्येव ब्राह्मणाच्छꣳसिन ऐन्द्र हि तस्मै स्तुवत ऐन्द्रमनुशस्यत[14] ऐन्द्र्या यजति ॥९॥

14 इन्द्राग्निभ्यां त्वा देवायुवं गृह्णामि यज्ञस्यायुष इत्येवाच्छावाकायैन्द्रा हि तस्मै स्तुवत ऐन्द्राग्नमनुशस्यत[14] ऐन्द्राग्न्या यजति ॥१०॥

इन्द्राय त्वा देवायुवं गृह्णामि यज्ञस्यायुष इत्येव माध्यंदिने सवने सर्व ऐन्द्रꣳ हि[15] माध्यंदिनꣳ सवनमेषैव स्थितिस्तदु ह चरकाध्वर्यवो विगृह्णन्ति ॥११॥

15 उपयामगृहीतो ऽसि देवेभ्यस्त्वा देवायुवमुक्थेभ्य उक्थायुवं मित्रा रुणाभ्यां त्वा जुष्टं गृह्णाम्येष ते योनिर्मित्रावरुणाभ्यां त्वेति सादयति पुनर्हवि सीति[16] स्थालीमभिमृशति ॥१२॥

16 उपयामगृहीतो ऽसि देवेभ्यस्त्वा देवायुवमुक्थेभ्य उक्थायुवमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वेति सादयति पुनर्हविरसीति[17] स्थाली भिमृशति ॥१३॥

17.18 उपयामगृहीतो ऽसि देवेभ्यस्त्वा देवायुवमुक्थेभ्य उक्थायुवमिन्द्राग्नि त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राग्निभ्यां त्वेति सादयति तूष्णीꣳ स्था निदधाति ॥१४॥

उपयामगृहीतो ऽसि देवेभ्यस्त्वा देवायुवमुक्थेभ्य उक्थायुवमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वेति सादयति पुनर्हविरसीति[18] द्विः स्थालीमभि मृशति तूष्णीं तृतीयं निदधाति नोपयामेन गृह्णात्यग्रे ह्येव तथा गृहीतो भवति ते योनिरिति सादयत्यग्रे ह्येव तथा सन्नो भवति जामि हि कुर्याद्यदत्रापि त कुर्यादथ यत्पुनर्हविरसीत्यभिमृशति[19] पुनर्ह्यस्या ग्रहीष्यन्भवति तद्ु नाद्रि तूष्णीमेव निदध्यात् ॥१५॥ तृतीयं ब्राह्मणम् ॥

1 अस्यैषो B. 2 °दमित्थमितिहान° MSS.
3 प्रातः° B. 4 उक्थ्येभ्यो B W. 5 त्रिभ्यो MSS.

6 °गृभ्युक्थ॰ B C W O P (°गृभ्युक्थ॰ O the second time, °गृभ्यु° P the second time). 7 °यर्धं एवगभ्यं B. 8 Thus MSS. Read °ईन्तेमा यजुःषु ? 9 Thus MSS. Read ता यजु°. 10 परोरुगृग्वि B W, पुरोरुगृग्घि O P. C omits the accent. 11 पुरोरुग्मा° MSS. except O (sec. m.). 12 इत्येव B W. 13 °मनुशस्यते B W O P, °मनुशस्यतेवै C. 14 °मनुशस्यत MSS. 15 Omitted in B W. 16 पुनर्हविरसीति O P, पुनर्हविरसीति B W, पुनर्हवीरसीति C. 17 Thus C O P, पुनर्हविरसीति B. 18 पुनर्हविरसीति W C O P, पुनर्हविरसीति B. 19 यत्पुनर्हविरसी° O P W, यत्पुनर्हविरसी° B, यत्पुनर्हविरसी° C.

K. V. 2. 4 M. IV. 2. 4

अयं॰ ह वा अस्यैष प्राणो यो ऽयं पुरस्तात्स वैश्वानरो ऽथ यो ऽयं पश्चात्स ... तौ ह स्मैतौ नानैव पुरा गृह्णन्ति[1] ध्रुववैश्वानराविति तमु वा एतर्ह्येकमेव ... यदि तं चरकेभ्यो वानुब्रुवीत[3] यतो वा यजमानस्य तं चमसे ऽवनये- ... चमस एवैतं॰ स वा[4] अस्यैष[4] यदेवावाङ्[5] नाभेस्तदस्यैष[5] आत्मनः सो ऽस्या- ... तस्मादनया गृह्णात्यस्या हि स्थाली भवति स्थाल्या ह्येनं गृह्णात्यजरा ह्रीयम- ... मु ह्यमृतमायुस्तस्मादनया गृह्णाति ॥१॥ (1.2)

तं पूर्णं गृह्णाति सर्वं॰ हि पूर्णं॰ सर्वं॰ ह्यायुस्तस्मात्पूर्णं गृह्णाति वैश्वानराय ... ति संवत्सरो वै वैश्वानरः संवत्सरो वा आयुस्तस्माद्वैश्वानराय गृह्णाति ॥२॥ (3.4)

स प्रातःसवने गृहीत एतस्मात्कालादुपशेते[6] तत्सर्वमायुः समश्नुते तं[7] ... स्तूयमाने ऽवनयेन्न ह संवत्सरं यजमानो ऽतिजीवेद्यत्स्तूयमाने[8] ऽवनयेच्छस्यमाने ... तदेनं द्वादशं॰ स्तोत्रमतिनयति तथा परं परमायुः समश्नुते यजमानस्तथा ... जीवति ॥३॥ (5-7a)

तस्मादु ह ब्राह्मणो ऽग्निष्टोमसत्स्यादेतस्माद्धोतोर्नें[9] निःसर्पेन्न[9] प्रस्नावयेता- ... अस्यैष स ह सर्वमेवायुरेति य एवं विद्वानग्निष्टोमसद्भवति नेद्ध्रुवमवमेहानीति[10] ... वा अग्निष्टोमसद्भवति यद्वा[11] अवाङ्[11] नाभेस्तद्वा अस्यैष आत्मनः स यदेत- (7b.8)

स्मिन्नहुते निःसर्पेद्यत्प्रस्नावयेत ध्रुवꣳ ह्यावमेहेन्नेद्ध्रुवमवमेहानीति तस्माद्वा अग्नि-
मसद्भवति तदु तद्यजमानस्यैव[१२] यजमानस्य ह्येष तदात्मनो भवति[१३] ॥४॥

9 अथ यद्वेवाग्निष्टोमसद्भवति यशो वै सोमो यशो हि वै सोमस्तस्मा-
च सोमे लभन्ते ये च न लभन्त उभय एवैनदागच्छन्ति यश एवैतद्द्रष्टुमागच्छन्ति
तदेतद्यशः संप्रसृप्यात्मनि ब्राह्मणा दधते यद्भक्षयति[१४] स यशस्वी हैव[१५] भव-
य एवं विद्वान्भक्षयति तस्माद्वा अग्निष्टोमसद्भवति ॥५॥

10 सो ऽग्निष्टोमसद्भवति[१६] तद्यदेतन्निःसर्पन्त्यग्निष्टोमसद्येतद्यशः[१७] संनिध-
त एतस्मात्पराञ्चो यशसो[१८] भवन्ति तदविक्षोभयन्नेवैतत्पुनरात्मनि[१९] यशो ध-
य एवं विद्वानग्निष्टोमसद्भवति स यशस्वितमो हैवैषां भूत्वा प्रैति तस्मा-
अग्निष्टोमसद्भवति ॥६॥

11.12 अथ यद्वेवाग्निष्टोमसद्भवति देवाश्च ह वा असुराश्चोभये प्राजापत्या अस्प-
र्धन्त त एतस्मिन्नेव यज्ञे प्रजापतावस्पर्धन्तास्माकमयꣳ स्यादस्माकमयꣳ स्यादि-
ततो देवा एतदग्निष्टोमसद्यं ददृशुस्तेन सर्वं यज्ञꣳ समवृञ्जत निरभजन्नसुरान्सप-
त्नान्यज्ञादेवꣳ ह वाव द्विषतः सपत्नस्य सर्वं यज्ञꣳ संवृङ्क्त एवं द्विषन्तꣳ सपत्नꣳ
सर्वस्माद्यज्ञान्निर्भजति बहिर्धा करोति य एवं विद्वानग्निष्टोमसद्भवति तस्माद्वा
अग्निष्टोमसद्भवति ॥७॥

13-15 तं गृहीत्वोत्तरे हविर्धाने सादयति प्राणा वै ग्रहा नेत्प्राणान्त्संलोभयानीति
तस्माद्धीमे[२०] ऽसंलुब्धाः[२०] प्राणा उपकीर्ण इतरान्त्सादयति[२१] व्युह्यैतं[२२] न तृणं चनान्त-
र्धाय यद्वा ऊर्ध्वं नाभेस्तद्वा अस्यैत आत्मनः उपरीव वा एतदात्मनो यदूर्ध्वं नाभेरुपरीव
वै तद्यदुपकीर्णं तस्मात्तानुपकीर्णे सादयत्यथ[२१] यदवाङ् नाभेस्तद्वा अस्यैष आत्मनो
ऽध इव वा एतदात्मनो यदवाङ् नाभेरध इवैतद्यद्व्युह्य न तृणं चनान्तर्धाय तस्मादेतं
व्युह्य न तृणं चनान्तर्धाय सादयति ॥८॥

16 एष उ वै प्रजापतिर्यज्ञो[१४] य[१४] एष तायत एतस्मादेवेमाः प्रजाः प्रजाता
एतमेवानु प्रजायन्ते ऽप्येतर्हि तद्यानुपकीर्णे सादयति तानन्विमाः प्रजाः प्रजायन्ते
या अन्येनात्मनो ऽस्यां प्रतितिष्ठन्ति या वै शफैः प्रतितिष्ठन्ति ता अन्येनात्मनो ऽस्यां
प्रतितिष्ठन्ति पशवो ऽथ या एतमनु प्रजाः प्रजायन्ते ता आत्मनैवास्यां प्रतितिष्ठन्ति
मनुष्याश्च श्वापदाश्च ॥९॥

17 तद्वा एतदन्यदस्या[२५] उत्तरं करोति यदुपकिरति तस्माद्या एतानु प्रजाः

न्ते ता अन्येनात्मनो ऽस्यां प्रतितिष्ठन्ति शफैरथ यदेतं व्युह्य न तृणं चनान्तर्धाय
यति[26] तस्माद्या एतमनु प्रजाः प्रजायन्ते ता आत्मनैवास्यां प्रतितिष्ठन्ति मनुष्याश्च
राश्च ॥१०॥

तद्वा एतज्जुहृत्याहवनीये पुरोलाशं धानाः करम्भं दधीति स यथा मुख 18
सिञ्चेदेवमेतद्यदाहवनीये जुहृत्यथैष एकरूप एव[27] शेत आप इवैव तस्माद्यदनेन[28]
नानारूपमशनमश्नात्यथैतेन प्राणेनैकरूपमव[29] प्रस्रावयते[30] ऽप इवैवाथ यद्ध्रुवो
॥११॥

देवा ह वै यज्ञं तन्वाना असुररक्षसानां दक्षिणत आसङ्गाद्बिभयां चक्रुस्तान्हा- 19
रक्षसानि दक्षिणत आसेदुस्त एतान्त्सर्वान्ग्रहानुज्जघ्नुरपि दक्षिणं हविर्धान-
घ्नुरथैतमेव नोद्धन्तुं शेकुस्तदुत्तरादेव हविर्धानाद्दक्षिणं हविर्धानमदृंहं-
यदेतं[31] नोद्धन्तुमशक्नुवंस्तस्माद्ध्रुवो नाम ॥१२॥

तं वै गोपायन्ति शिरो वा एष एतस्या गायत्र्या यज्ञो वै गायत्री द्वादश 20
स्तोत्राणि द्वादश शस्त्राणि तच्चतुर्विंशतिश्चतुर्विंशत्यक्षरा वै गायत्री तस्या एष[32]
ः श्रीरु वै शिरः श्रीर्हि वै शिरो ऽथ यो ऽर्धस्य श्रेष्ठो भवत्यसौ तस्यार्धस्य शिर
चक्षते श्रेष्ठो ह व्यथेत यदेष व्यथेत यजमानो वै श्रेष्ठो नेद्यजमानो व्यथाता इति
द्वा एनं गोपायन्ति ॥१३॥

वत्सो वा एष एतस्या गायत्र्या यज्ञो वै गायत्री द्वादश स्तोत्राणि द्वादश 21.22
शस्त्राणि तच्चतुर्विंशतिश्चतुर्विंशत्यक्षरा वै गायत्री तस्या एष वत्सस्तान्वा
न्वत्सान्गोपायन्त्यस्मै दोहाय यदिदं पयो दुहत[32] एवमियं गायत्रीति यजमानाय
न्कामान्दोहाता इति स यदध्वर्युश्च प्रतिप्रस्थाता च निश्च क्रामतः प्र च पद्येते
वद्वत्स्युपाचरेदेवं[33] तत् ॥१४॥

तमवनयति प्रस्नुता[34] वा एता एतत्पयो दुहत एवमियं[35] प्रस्नुता गाय-
त्री यजमानाय सर्वान्कामान्दोहाता इति ॥१५॥

सो ऽवनयति ध्रुवं ध्रुवेण मनसा वाचा सोममवनयामीति वा[36] गृह्णा- 23
ति याथा न इन्द्र इद्विशो ऽसपत्नाः समनसस्करदित्याशिषमेवैतदाशास्ते यथा
श्रिये ऽन्नाद्यायेतीमाः प्रजा असपत्नाः समनसस्करदित्येतदाशिषमाशास्ते ॥१६॥

स गृह्णाति मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्। 24
कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥ उपयामगृहीतो ऽसि

ध्रुवो ऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमो ऽच्युतानामच्युतक्षित्तमः ॥ एष ते योनिर्वैश्वानराय त्वेति सादयति वैश्वानराय ह्येनं गृह्णाति व्युह्य न तृणं चनान्तर्धाय ॥१७॥ चतुर्थं ब्राह्मणम् ॥ द्वितीयो ऽध्यायः ॥

1 गृह्णाति P. 2 गृह्णात्यथ B W. 3 °ब्रवीत B W C. 4 वास्यैष B W My. 5 यदेवावाङ् ना° B, यदेवावाम्ना° C O (orig.), यदेवावाङ् ना° W P O (sec. m.), °वांम्ना° My. 6 एतस्मा° B W My. 7 तंस्त्र C P, तन्त्र B W My. 8 °वेद्यस्तूयमाने B. 9 °नं निःसर्पे° MSS. 10 °मेद्यानीति B. 11 यद्वा अवाङ् MSS. 12 °मानस्यैव B, °मानस्यैव C O P W. 13 Read भवति ? 14 Read plural ? 15 सैव B. 16 °सद्भवति MSS. 17 Thus emended, तथदेतंनिःसर्पत्यग्निष्टोमसदेतद्यशः MSS. 18 यशसो C O P, यशसो B W. 19 तदविक्षो° MSS. 20 °द्विमे संलुब्धाः MSS. 21 °सादयति C O P. 22 व्युह्यैनं C O P, व्यूह्यैतं B, व्युह्यैतं My W. 23 सादयत्यथ B. 24 °यंशो य B C. 25 एतदन्यस्या B W My. 26 सादयति MSS. 27 एक B. 28 °नेन B W C. 29 °मेव प्रस्तावयते B. 30 °देनं C. 31 एव B. 32 दुहत MSS. 33 Thus MSS. except My (बद्धवत्सुप°). 34 प्रस्तुता B W. 35 एवमयं B. 36 Omitted in B W My.

M. IV. 2. 5

## K. V. 3. 1

1 स वै यदेतान्ग्रहान्गृह्णात्यथ[1] निःसृप्य[2] विप्रुषां होमं जुहोति स यद्विप्रुषां होमं जुहोति या एवास्याभिषूयमाणस्य विप्रुषः स्कन्दन्त्यंशुर्वा कश्चित्ता एवैतदाहवनीये स्वगाकरोत्याहवनीयो ह्याहुतीनां प्रतिष्ठा तस्माद्वाव विप्रुषां होमं जुहोति ॥१॥

2 स जुहोति यस्ते द्रप्सः[3] स्कन्दति यस्ते अंशुरिति स्तोको वै द्रप्सः स

...चित्स्तोकः स्कन्दति तमेवैतदाहवनीये स्वगाकरोति यस्ते अꣳशुरिति तद्यो ...ग्रावच्युतो धिषणयोरुपस्थादिति ग्राव्णा हि च्युतो ऽधिषवणाभ्यामधिस्कन्द- ...र्योर्वा परि वा यः पवित्रादित्यध्वर्योर्वा हि पाणिभ्याꣳ स्कन्दति पवित्राद्वा तं ...जुहोमि मनसा वषट्कृतꣳ स्वाहेति तद्यथा वषट्कृतꣳ स्वाहाकृतꣳ हुतमेवं ...ति ॥२॥

अथास्याः स्तीर्णाया वेदेर्द्वे तृणे आदत्ते तावध्वर्यू प्रथमावभीतः प्राणो- ...यज्ञस्याथ प्रस्तोता वाग्यज्ञस्याथोद्गातात्मैव प्रजापतिर्यज्ञस्याथ प्रतिहर्ता भिषग्वा ...वा तान्पञ्चर्त्विजो ऽन्वारभ्यैति यजमान एतावान्हि यज्ञो यावदेते पञ्चर्त्विजः ...हि यज्ञस्तद्यज्ञमन्वारभ्यैति यजमानः ॥३॥ 3.4

अथानयोस्तृणयोरन्यतरच्चात्वालमभि प्रास्यति देवानामुत्क्रमणमसीति यत्र ...देवा यज्ञेन स्वर्गं लोकꣳ समाश्नुवत त एतस्मादेव चात्वालादूर्ध्वा उच्चक्रमुस्तमेवै- ...तत्याꣳ स्वर्ग्यं देवयानं यजमानमनुसंख्यापयति ॥४॥ 5

अथ यदा सꣳसीदन्त्युद्गातारस्तेषां पुरस्तादन्यतरदुपास्यति स्तोमो वा ...प्रजापतिर्यदुद्गातारः स इदꣳ सर्वं युते स इदꣳ सर्वꣳ संभवति तस्मा ...तैतत्तृणमपिदधाति तथैनमेष न युते तथा न संभवत्यथ यदा मन्यते ऽजापिपु- ...रिति जपन्ति वा अत्रोद्गातारः ॥५॥ 6

अथ स्तोत्रमुपाकरोति सोमः पवत इति स वै पराक् स्तोत्रमुपाकरोति ...पराञ्चः स्तुवते देवान्वा एतान्यभ्यावृत्तानि स्तोत्राणि यत्पवमानाः पराञ्चो ह्येतैर्देवाः ...स्वर्गं लोकꣳ समाश्नुवत तस्मात्पराङुपाकरोति पराञ्चः स्तुवत उपावर्तध्वमित्य- ...वृत्तानि स्तोत्राण्युपाकरोत्यभ्यावर्तं धुर्यैं स्तुवत इमा वै प्रजास्तानि स्तोत्राण्यभ्यावृ- ...त्तानि तस्माद्धीमाः प्रजाः पुनरभ्याकारं प्रजायन्ते ॥६॥ 7.8

अथ यदत्र बहिष्पवमानेन स्तुवते ऽत्र ह वा एषो ऽग्रे सूर्य आस तेनर्तवः परिगृह्योर्ध्वा उच्चक्रमुः स एष ऋतुषु प्रतिष्ठितस्तपति तथो वा एतेनर्त्विजः परिगृ- ...ह्योर्ध्वा उत्क्रामन्ति तस्मादत्र बहिष्पवमानेन स्तुवते ॥७॥ 9

स बहिष्पवमानान्निन्द्यं पर्येव बिबाधिषेतैषा वै नौः स्वर्ग्या यद्बहिष्पव- ...मानं तस्या एतस्या नावः स्वर्ग्याया अरित्राश्च स्फ्याश्चर्त्विजः स्वर्गस्य लोकस्य संपारणास्तस्या एतस्या नावः स्वर्ग्याया य एव निन्द्यः स मज्जयिता स यथा ...पूर्णां नावमभ्यारुह्य तां मज्जयेदेवꣳ ह यजमानं मज्जयति तद्यत्रापि निन्द्यो भवति तस्मान्निन्द्यं बहिष्पवमानात्पर्येव बिबाधिषेत तदु सर्व एव यज्ञो नौः स्वर्ग्या सर्व- 10

स्मादेव यज्ञान्निन्द्यं परिबिबाधिषेताथ[13] यदा स्तुवते ॥८॥

11 अथ संप्रेष्यत्यग्नीदग्नीन्विहर बर्हि स्तृणीहि पुरोलाशां३ अलंकुरु पशुने-हीति सो ऽग्नीदग्नीन्विहरति[14] समिन्द्ध एवैनाꣳस्तद्बर्हि स्तृणाति स्तीर्णे बर्हिषि समिद्धे देवेभ्यो जुहवामेति पुरोलाशां३ अलंकुर्विति पुरोलाशैर्हि प्रचरिष्यन्तो भवन्ति पशुनेहीति पशुꣳ ह्यालप्स्यमानो[15] भवति ॥९॥

12.13 अथैतमाश्विनं ग्रहं गृहीत्वा परिवीय पशुमालभते रसमेवास्मिꣳस्तद्दधाति स्वदयत्येवैनं तत्तस्मादेष प्रातःसवन आलब्ध आ तृतीयसवनाच्छ्रप्यमाण उपशेते सर्वस्मिन्नेवैतद्यज्ञे रसं दधाति सर्वमेव यज्ञꣳ रसेन प्रसजति ॥१०॥

14 तदाग्नेयमेवाग्निष्टोम आलभेत तद्धि सलोम यदाग्नेयमग्निष्टोम आल-भेत यद्युक्थ्यः स्यादैन्द्राग्नं द्वितीयमालभेतैन्द्राग्नानि ह्युक्थानि यद्यु षोलशी स्यादैन्द्रं तृतीयमालभेतेन्द्रो हि षोलशी यद्युवतिरात्रः स्यात्सारस्वतं चतुर्थमालभेत वाग्वै सरस्वती योषा वै वाग्योषा वै रात्रिस्तस्मात्सारस्वतं चतुर्थमालभेतैवमु यज्ञक्रतू-न्यथायथं व्याकरोति ॥११॥

15.16 अथैतैः सवनीयैः पुरोलाशैः प्रचरति स यदेतैः सवनीयैः पुरोलाशैः प्रचरति दिवि वै सोमो देवो हि सोमो वृत्रो वै सोमस्तस्यैतच्छरीरं यद्गिरयो यदश्मानस्तदेषौशान्या[16] नामौषधिर्जायत[17] इति होवाच श्वेतकेतुरौद्दालकिस्तामे-तदाहृत्याभिषुण्वन्तीति स यत्पशुमालभते रसमेवास्मिꣳस्तद्दधात्यथास्मिन्नेतन्मेधो दधाति यदेतैः सवनीयैः पुरोलाशैः प्रचरति तथो खलु सोमो भवति ॥१२॥

17-19 ते वै सर्व ऐन्द्रा भवन्तीन्द्रो हि यज्ञस्य देवता तस्मात्सर्व ऐन्द्रा भवन्त्यथ यत्पुरोलाशो धानाः करम्भो दधीति भवति सुप्रीता देवता असन्निति या यज्ञस्य देवता इत्येतर्ह्यपूपं खादित्वा कामयते धाना नु खादेयं[18] करम्भमद्यां[19] दधि पिबे-यमिति तद्या यज्ञस्य देवतास्ताः सुप्रीता असन्नित्यथ यदेषा प्रातःसवन एव मैत्रा-वरुणी पयस्यावक्लृप्ता नेतरयोः सवनयोः ॥१३॥

20-22 गायत्री वै प्रातःसवनं वहति त्रिष्टुम्माध्यंदिनꣳ[30] सवनं जगती तृतीय-सवनꣳ सानेकाकिन्येव त्रिष्टुम्माध्यंदिनꣳ[31] सवनं वहति गायत्र्या च बृहत्या चाने-काकिन्येव जगती तृतीयसवनं वहति गायत्र्योष्णिक्ककुब्भ्यामनुष्टुभेत्यथ[32] गायत्र्ये-वैकाकिनी प्रातःसवनं वहति सो एताभ्यां पङ्क्तिभ्यामनेकाकिनी[33] वहति स्तोत्र-पङ्क्त्या च हविष्पङ्क्त्या च बहिष्पवमानमह[34] चत्वार्याज्यानि[35] तानि पञ्च स्तोत्राणि

पञ्चपदा वै पङ्क्तिस्तया नु[35] स्तोत्रपङ्क्त्यानेकाकिनी वहतीन्द्रस्य पुरोलाशो हर्योर्धानाः पूषणः करम्भः सरस्वत्या दधि मित्रावरुणयोः पयस्या तानि पञ्च हवीꣳषि पञ्चपदा वै पङ्क्तिस्तया[36] हविष्पङ्क्त्यानेकाकिनी[36] वहत्येतस्याः सपदः कामाय तस्मादेषा प्रातः-सवन एव मैत्रावरुणी पयस्यावकॢप्ता नेतरयोः सवनयोः ॥१४॥ प्रथमं ब्राह्मणम् ॥

1 यदेता° B W. 2 निसृप्य MSS. 3 द्रप्स B W. 4 धिषणाभ्या° B W. 5 °ध्वर्योर्हि वा B. 6 °स्या स्तीर्णाया MSS. 7 Thus emended; प्रथमा-वभितः MSS. 8 °थोद्गातात्मैव MSS. 9 सोमो B W. 10 यदा मन्यते जापिषु° B W, यदा मन्यते जापिषु° C O, यदा मन्यते जापिपु° P. 11 °तारः MSS. 12 °मुपा-करोति B W O P. 13 परांच C O P (once). 14 Thus the accented MSS. Read स्तोत्राण्युपाक-रोत्य° ? 15 बहिःप° some of the MSS. 16 प्रतिष्ठि° MSS. 17 उपक्रा° B. 18 विबा° B C. 19 नौ MSS. 20 नावः MSS. 21 स मज्जयिता स C O P, स मजयता सा B W My. 22 यद्यत्रापि C O P. 23 विबा° B W. 24 म्रिदम्नी° B. 25 Thus emended, °लिप्स्यमानो MSS. 26 Thus emended (cp. IV. 4. 3. 11), °स्तदेषौसंज्ञा B W, °स्तदेषौसंज्ञा C O P, °स्तदेषासंज्ञा My. 27 नामोषधि° MSS. 28 खादेय B W. 29 करंभसद्यां B W. 30 त्रिष्टुप्मा° MSS. 31 त्रिष्टुप्मा° B W. 32 °ष्णिक्ककुभ्या° B, °ष्णिककुभ्या° C O, °ष्णिक्ककुप्म्या° P W. 33 पंक्तिभ्यामेकाकिनी B My. 34 Thus emended; °वमानमहच्चत्वा° MSS. 35 नु MSS. 36 Thus emended; °स्तयोर्हविःप° MSS.

M. IV. 3 .1

K. V. 3. 2

स वै यदैतदाहुः[1] समुपहूता स्म इत्यथ पुरोलाशवृकलमादायाध्वर्युरुपोत्तिष्ठ- 1

त्यथ यत्रैतदासीनो ऽच्छावाको ऽन्वाह तदुपसन्नो भवति तस्मै पुरोलाशवृकलमाधायाहाच्छावाक[2] वदस्व यत्ते वाद्यमिति स यदस्मै पुरोलाशवृकलमादधात्यहीयतो[3] वा अच्छावाकः ॥१॥

2 तमिन्द्राग्नी अनुसमतनुतां प्रजानां प्रजातये[4] तस्मादेष ऐन्द्राग्नो ऽच्छावाकः स एतेन चार्षेयेण यदेतदन्वाहैतेन च हविषा समश्नुते यदस्मा एतत्पुरोलाशवृकलमादधाति तस्माद्वा अस्मै पुरोलाशवृकलमादधाति[5] ॥२॥

3 अथाच्छावाके सन्न ऋतुग्रहैश्चरन्ति[6] स यदच्छावाके सन्न ऋतुग्रहैश्चरन्ति मिथुनं वा अच्छावाक ऐन्द्राग्नो ह्यच्छावाको द्वौ हीन्द्राग्नी द्वन्द्वꣳ हि मिथुनं प्रजननं तन्मिथुनादेवैतत्प्रजननादृतून्त्संवत्सरं प्रजनयति तस्मादच्छावाके सन्न ऋतुग्रहैश्चरन्ति ॥३॥

4 अथ यद्द्वेवर्तुग्रहैश्चरन्त्यृतूनेवैतत्संवत्सरं प्रजनयति सर्वं वा ऋतवः संवत्सरः सर्वमेवैतत्प्रजनयति ॥४॥

5 तान्द्वादश गृह्णीयाद्द्वादश वै मासाः संवत्सरस्य तस्माद्द्वादश गृह्णीयादथो त्रयोदश गृह्णीयादित्याहुरस्ति त्रयोदशो मास इति द्वादश त्वेव गृह्णात्येषैव स्थितिरेषा संपत्[7] ॥५॥

6 द्रोणकलशाद्गृह्णाति प्रजापतिर्वा एष पात्राणां यद्द्रोणकलशस्तत्प्रजापतेरेवैतदृतून्त्संवत्सरं प्रजनयति तस्माद्द्रोणकलशाद्गृह्णाति ॥६॥

7 उभयतोमुखाभ्यां पात्राभ्यां गृह्णाति कुतस्तयोरन्तो ये उभयतोमुखे तस्मादयमनन्तः संवत्सरः परिप्लवते तान्न[8] सादयति तस्माद्वयमसन्नः संवत्सरः परिप्लवते[9] ॥७॥

8.9 नानुवाक्यामन्वाह[10] ह्वयति वा अनुवाक्ययागतो ह्येवायमृतुर्यदि दिवा यदि नक्तं नानुयजति नेदृतूनपवृणजा इति सह प्रथमौ सहोत्तमौ गृह्णीतः सर्वमेवैतत्संवत्सरेण परिगृह्णीतस्तादिदꣳ सर्वꣳ संवत्सरेण परिगृहीतं निष्क्रामत्येवान्यतरः[11] प्रान्यतरः[12] पद्यते[13] तस्मादिमे ऽन्वञ्चो मासा यन्ति[14] यद्धोभौ[15] सह निष्क्रामेतां[11] पृथग्घ[16] मासा ईयुस्तस्मान्निष्क्रामत्येवान्यतरः[11] प्रान्यतरः पद्यते[13] ॥८॥

10.11 स वा ऋतुना षट् प्रचरति तद्देवा अहरसृजन्ताथर्तुभिश्चतुस्तद्रात्रिमसृजन्त तद्यदेतावदेवाभविष्यद्रात्रिरेवाभविष्यन्न व्यवत्स्यदथ पुनर्ऋतुना द्विस्तत्पुरस्तादहः[17] पर्यदधुस्तस्माद्द्येदमहरथ[18] रात्रिर्भविष्यत्यथ श्वो ऽहर्भविता[19] ॥९॥

अथ यद्वेवर्तुना तेन मनुष्यानसृजन्त[10] यदृतुभिस्तेन पशून्त्स यत्तदुभयतो तेन मनुष्यानसृजन्त तस्माद्धिम उभयतः परिगृहीताः पशवो मनुष्याणां वशमुपेताः ॥१०॥ 12

स वा ऋतुना चरित्वेतरथा विपर्यस्यत्यृतुभिश्चरित्वेतरथा विपर्यस्यत्यन्यतरत एवैतद्दहः सृजते ऽन्यतरतो रात्रिमन्यतरतो[11] मनुष्यानन्यतरतः पशूꣳस्तस्माद्विपर्यासं गृह्णाति ॥११॥ 13

अथ वा अतो गृह्णात्येवोपयामगृहीतो ऽसि मधवे त्वेत्यध्वर्युरुपयामगृहीतो ऽसि माधवाय त्वेति प्रतिप्रस्थाता तौ वासन्तिकावृतू वसन्ते ह्योषधयो जायन्ते वनस्पतयः पच्यन्ते तेन तौ मधुश्च माधवश्च ॥१२॥ 14

उपयामगृहीतो ऽसि शुक्राय त्वेत्यध्वर्युरुपयामगृहीतो ऽसि शुचये त्वेति प्रतिप्रस्थाता तौ ग्रैष्मावृतू[12] यत्तयोर्बलवत्तपति तेन तौ शुक्रश्च[13] शुचिश्च ॥१३॥ 15

उपयामगृहीतो ऽसि नभसे त्वेत्येवाध्वर्युरुपयामगृहीतो ऽसि नभस्याय त्वेति प्रतिप्रस्थाता तावेव वार्षिकावमुतो[14] हि दिवो ऽधि वर्षति तेन तौ[15] नभश्च[15] नभस्यश्च ॥१४॥ 16

उपयामगृहीतो ऽसीषे त्वेत्यध्वर्युरुपयामगृहीतो ऽस्यूर्जे त्वेति प्रतिप्रस्थाता तौ शारदावृतू शरदि ह्यूर्ग्रस ओषधयः पच्यन्ते तेन ताविषश्चोर्जश्च ॥१५॥ 17

उपयामगृहीतो ऽसि सहसे त्वेत्यध्वर्युरुपयामगृहीतो ऽसि सहस्याय त्वेति प्रतिप्रस्थाता तौ हैमन्तिकावृतू हेमन्तो[16] हीमाः प्रजाः सहसेव स्वं वशमुपनयते तेन तौ सहश्च सहस्यश्च ॥१६॥ 18

उपयामगृहीतो ऽसि तपसे त्वेत्यध्वर्युरुपयामगृहीतो ऽसि तपस्याय त्वेति प्रतिप्रस्थाता तौ शैशिरावृतू[17] यत्तयोर्बलवच्छ्यायति[18] तेन तौ तपश्च तपस्यश्च ॥१७॥ 19

उपयामगृहीतो ऽस्यꣳहसस्पतये त्वेति यदि त्रयोदशं गृह्णात्यथ प्रतिप्रस्थाता वाध्वर्योः पात्रे सꣳस्रवमवनयति[19] प्रतिप्रस्थातुर्वाध्वर्युर्भक्षमध्वर्युर्हरत्यथ[20] तथैवाभक्षितेन प्रतिप्रस्थातैतमैन्द्राग्नं ग्रहं गृह्णाति स यदभक्षितेनैतमैन्द्राग्नं ग्रहं गृह्णाति न वा ऋतुग्रहाणामनुवषट्करोति स[21] एतेनैन्द्राग्नेनानुवषट्कृतो[21] भवन्ति[21] तस्मादभक्षितेन गृह्णाति ॥१८॥ 20.21

अथ यद्वेवाभक्षितेन गृह्णाति सर्वं वा एतत्प्राजीजनद्यदृतुग्रहानग्रहीत्तत्सर्वं 22

प्रजनय्य प्राणोदानयोः प्रतिष्ठापयतीमे[31] हि[31] द्यावापृथिव्यौ[33] प्राणोदानावनयोर्हीदꣳ सर्वं प्रतिष्ठितं तस्मादभक्षितेन गृह्णाति ॥१९॥

23 अथ यद्वेवाभक्षितेन गृह्णाति सर्वं वा एतत्प्राजीजनद्यदृतुग्रहानग्रहीत्तत्सर्वं प्रजनय्य तस्मिन्त्सर्वस्मिन्प्राणोदानौ दधाति ताविमावस्मिन्त्सर्वस्मिन्प्राणोदानौ हितौ तस्मादभक्षितेन गृह्णाति ॥२०॥

24 स गृह्णातीन्द्राग्नी आगतꣳ सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता ॥ उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वैष ते योनिरिन्द्राग्निभ्यां त्वेति सादयति ॥२१॥

25.26a अथैतं वैश्वदेवं ग्रहं गृह्णाति स यदेतं वैश्वदेवं ग्रहं गृह्णाति सर्वं वा एतत्प्राजीजनद्यदृतुग्रहानग्रहीत्तद्यदेतावदेवाभविष्यद्यावत्यो हैवाग्रे प्रजाः सृष्टास्तावत्य एवाभविष्यन्न प्राजनिष्यन्त[34] सर्वमु वै विश्वे देवास्तत्सर्वमनुव्यर्जति[35] तस्माद्विमाः प्रजाः पुनरभ्याकारं प्रजायन्ते ॥२२॥

26b शुक्रपात्रेण गृह्णात्येष वाव शुक्रो य एष तपत्यथ ये रश्मयस्ते विश्वे देवास्तस्माच्छुक्रपात्रेण गृह्णाति ॥२३॥

27 स गृह्णात्योमासश्चर्षणीधृतो विश्वे देवास आगत । दाश्वाꣳसो दाशुषः सुतम् ॥ उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादयति ॥२४॥ द्वितीयं ब्राह्मणम् ॥

1 °दाहुः MSS. 2 Emended; °मादाया° MSS. 3 पुरोलाशोवृकल° MSS. 4 प्रजायै B, प्रजाये W My. 5 °लमादधाति B, °लमादधाति C W, °लमादध्यति P. 6 °श्वरति B. 7 संपत् B W. 8 तांस्न B C W, तास्न O P My (तंन the Mādhy.). 9 °वते B W. 10 °क्यामन्वाह MSS. 11 निःक्रा° MSS. 12 प्रा° MSS. (but O the second time with correct accent). 13 संपद्यते B W My. 14 यंति MSS. 15 यद्धोभौ B O P W. 16 पृथग्घि MSS. except C. 17 °स्तादहः C. 18 पर्यदधु° MSS. 19 हर्भविता MSS. 20 °ब्यानसृजंत B W

O P, °ध्यानसृजंत C. 21 C adds in margin रात्रिमन्यतरतो. 22 ग्रैष्मा ऋतू B. 23 शुकश्च MSS. 24 वार्षिकावमुतो MSS. 25 तौ नभश्च MSS. 26 हैमंतो B W My. 27 Emended; शिशि° MSS. 28 °बंलवच्छायति C, °बंलवत्तपति O P, °बंलवत्तपति B W My. 29 सꣳस्रवमवनयति B W C O. 30 °भंक्षमध्वर्युर्हरत्यथ C O (P is incomplete), °भंक्षमध्वर्युरित्यथ B W. 31 Thus MSS. Read probably त एतेनैन्द्राग्नेनानुवषट्कृता भवन्ति. 32 इमे हि omitted in B W O My. 33 °पृथिव्यौ MSS. 34 प्राजनिष्यंत: B W P O (sec. m.), प्रजनिष्यंतः C O (pr. m.) My; cp. IV. 8. 4. 12. 35 °मनुष्यर्जति MSS.

K. V. 3. 3 M. IV. 3. 2

गृणाति ह वा एतद्धोता यच्छꣳसति तस्मा एष एतद्गृणते प्रतिगृणाति तस्मात्प्रतिगरो नाम तं वै प्राञ्चमासीनमभ्याह्वयते प्राञ्चो वा अन्य ऋत्विज आर्त्विज्यं कुर्वन्त्यन्य[1] उद्गातृभ्यस्तथास्यैतत्प्रागार्त्विज्यं[2] कृतं भवति ॥१॥ 1.2

उपपर्यावृत्य प्रतिगृणाति प्रजापतिर्वा उद्गाता योषर्ग्घोता[1] तदेतत्प्रजापति-रुद्गाता योषायामृचि होतरि रेतः सिञ्चति यदुद्गायति तदेतद्धोता रेतः सिक्तं प्रजनयति यच्छꣳसति तच्छयति[2] यथा सꣳशितः[3] पुरुषस्तथा तत्तस्माच्छस्त्रं नाम तदेतद्रेतः सिक्तमुपपर्यावृत्याध्वर्युरुपानिवदति यद्ध पराङेव तिष्ठन्प्रतिगृणीयात्पराग्घैवैतद्यजमानाद्रेतः[4] सिक्तं प्रणश्येत्सम्यञ्चावेवैतद्भूत्वैतद्रेतः सिक्तं प्रजनयतः ॥२॥ 3.4

अथ यद्द्वेव प्रतिगृणाति यातयामानि वै देवैश्छन्दाꣳसि स्वर्गꣳ ह्येभिर्लोकꣳ समाश्नुवत य उ वै मद ऋचि वा सामनि वा रसो वै स[5] मदो[6] वै प्रतिगरश्छन्दःस्वेवैतद्रसं दधाति तानि पुनराप्याययत्ययातयामानि करोति तैरयातयामभिर्यज्ञं तन्वते तस्माद्द्वाव प्रतिगृणाति ॥३॥ 5

स यत्रार्धर्चशः शꣳसत्यर्धर्चे ऽर्धर्चे तत्र प्रतिगृणाति यत्र पच्छः पदे पदे तद्यत्र ह वै होतावानिति[7] तद्ध यज्ञं[8] नाष्ट्रा रक्षाꣳस्यन्ववचरन्ति[9] तदध्वर्युः प्रतिगरेण 6

संदधाति तथो रक्षाꣳसि यज्ञं नान्ववचरन्ति भ्रातृव्यलोकमु[11] चैवैतद्यजमानस्य छिनत्ति ॥४॥

7 चतुरक्षराण्यु ह वा अग्रे छन्दाꣳसि ततो जगती सोममच्छापतत्सा[12] त्रीण्यक्षराणि[13] हित्वैकेनाक्षरेण पुनरागच्छदथ त्रिष्टुबुदपतत्सैकमक्षरꣳ हित्वा त्रिभिरक्षरैः पुनरागच्छदथ गायत्र्युदपतत्सा सर्वाणि च तान्यक्षराण्यादायागच्छत्सोमं[14] च ततोऽष्टाक्षरा गायत्र्यभवत्तयैव यज्ञियं[15] तन्तुमाभ्रियन्त तस्माद्गायत्रं प्रातःसवनं तयैव माध्यंदिनꣳ सवनं तन्तुमभ्रियन्त ॥५॥

8 सा त्रिष्टुबुवाचोप त्वा यानीत्येभिस्त्रिभिरक्षरैर्मा मान्तर्गा उप मा सृजस्वेति तथेति तामुपासृजत सैकादशाक्षरा त्रिष्टुबभवत्तदु त्रैष्टुभं माध्यंदिनꣳ सवनमभवत्तयैव तृतीयसवनं तन्तुमभ्रियन्त ॥६॥

9 सा जगत्युवाचोप त्वा यानीत्यनेनैकेनाक्षरेण मा मान्तर्गा उप मा सृजस्वेति तथेति तामुपासृजत सा द्वादशाक्षरा जगत्यभवत्तदु जागतं तृतीयसवनमभवत्तस्माद्वा आहुर्गायत्र्येवैतानि सर्वाणि सवनानीति सा ह्येतदुपसृजमानैदिति[16] ॥७॥

10-14 स सꣳसिद्धं प्रातःसवने प्रतिगरं प्रतिगृणाति सꣳसिद्धा हि गायत्र्यागच्छत्सकृन्मद्वन्माध्यंदिने[17] सवने प्रतिगृणाति यत्र त्रिष्टुभः शꣳसत्येकं वै साक्षरꣳ हित्वागच्छत्तेनैवैनामेतत्समर्धयति कृत्स्नां करोति त्रिमद्वत्तृतीयसवने त्रीणि वै साक्षराणि हित्वागच्छत्तैरेवैनामेतत्समर्धयति कृत्स्नां करोति द्यावापृथिव्ये[18] मद्वत्प्रतिगृणाति यत्र द्यावापृथिव्यꣳ शꣳसतीमे वै द्यावापृथिव्याविमाः[19] प्रजा उपजीवन्ति तयोरेवैतद्रसं दधाति ते रसवत्या उपजीवनीये इमाः प्रजा उपजीवन्ति स[20] ओ३मिति प्रतिगृणाति[21] तद्धि सत्यं तद्देवा विदुस्तदु हैके[22] वौथामोदैवेतीव[23] प्रतिगृणन्ति वागित्युपेप्सन्तस्तदु तथा न प्रतिगृणीयादनपराद्धा वै वाग्यथा ह्येव कथा च प्रतिगृणाति वाचैव प्रतिगृणाति तस्मादो३मित्येव प्रतिगृणीयात्तदु ह्येव सत्यं तद्देवा विदुः ॥८॥ तृतीयं ब्राह्मणम् ॥

1 कुर्वत्यन्य MSS. 2 °प्रागार्त्वि° B C (orig.) corrected into प्राङ्गार्त्वि°, and thus also O (orig.) corrected into प्रागार्त्वि°, and My; °प्रागार्वि° W. 3 योषर्घोता C O P W My, योषद्धोता B. 4 तछयति C. 5 सꣳसितः B W, यꣳसितः C

O P My. 6 तिष्ठन्प्रति° MSS. 7 Thus P, स मदो B C O, स मदो W. 8 °वानिति B O W. 9 Emended; यज्ञस्य MSS. 10 °न्वेवचरंति B. 11 भ्रातृव्यलोकमुवैवैतद्य° B. 12 °मछापपतस्सा C; °तस्सापि B, °तस्सात्रि My. 13 °क्षराणि MSS. 14 °व्यादायागछ° MSS. 15 Read यज्ञं ? 16 °दुप-सृजमानैदिति C, °दुपसृजमानैरिति the other MSS. 17 °स्सकृन्मर्द्धन्मा° C O (orig.). 18 द्यावापृथिव्ये C O W, द्यावापृथिव्ये B. 19 °पृथिव्या° MSS. 20 स C O. 21 प्रति° B W. 22 वौथामोदेवेतीव B W, वोथामो° My. Read probably हैक ओथा°.

K. V. 3. 4 M. IV. 3. 3

इहा३ इहा३ इत्यभिषुणोतीन्द्रमेव तद्राव्यावयति वृहद्वृहदितीन्द्रमेव तद्रा-वयति स शुक्रामन्थिनौ प्रथमौ गृह्णाति शुक्रवद्ध्येतत्सवनम्[1] ॥१॥ 1

अथाग्रयणं गृह्णाति सर्वेषु ह्येष सवनेषु गृह्यते तस्मादाग्रयणं गृह्णात्यथ मरु-त्वतीयं गृह्णात्यथोक्थ्यं गृह्णात्युक्थानि[2] ह्यत्रापि भवन्ति तद्वा आहुरुक्थ्यमेव पूर्वं गृह्णीयादित्यथ मरुत्वतीयमिति मरुत्वतीयं[3] त्वेव पूर्वं गृह्णात्यथोक्थ्यम् ॥२॥ 2.3

तान्वा एतान्पञ्च ग्रहान्गृह्णाति स यदेतान्पञ्च ग्रहान्गृह्णात्येष वै वज्रो यदेष माध्यंदिनः पवमानस्तस्मात्पञ्चदशः[4] पञ्चसामा भवति पञ्चदशो हि वज्रस्तमेतैः पञ्चभिर्ग्रहैः पञ्च हीमा अङ्गुलयो ऽङ्गुलिभिर्हि[5] प्रहरतीन्द्रो वृत्राय वज्रं प्राहरत्तेन प्रहृत्य[6]स्तेन व्यजयन्त ते विजिते ऽभये ऽनाष्ट्रे दक्षिणा अनयन्त[7] तस्मादप्येतर्हि यदैतेन[8] माध्यंदिनेन पवमानेन स्तुवते ऽथ दक्षिणा नयन्ते[9] विजित[7] एवैतदभये ऽनाष्ट्रे दक्षिणा नयन्ते[9] तथो[10] वा एष एतैः पञ्चभिर्ग्रहैरेतं वज्रं द्विषते भ्रातृव्याय प्रहरति तेन द्विषन्तं भ्रातृव्य१ हन्ति तेन विजयते तस्माद्वा एतान्पञ्च ग्रहा-न्गृह्णाति ॥३॥ 4.5

अथ यन्मरुत्वतीयान्गृह्णात्येतद्वा इन्द्रस्य निष्केवल्य१ सवनं यन्माध्यंदिन१ सवनं तेन वृत्रमजिघा१सत्तेन व्यजिगीषत क्षत्रमु वा इन्द्रो विशो मरुतो विशा[11] वै क्षत्रियो बलीयान्भवति ॥४॥ 6

7 सा[11] हाश्वत्थे तिष्ठत इन्द्रो[12] मरुत उपमन्त्रयां चक्रे तस्मादाश्वत्थे ऋतुपात्रे स्यातामित्याहुः कार्ष्मर्यमये त्वेव भवत उप मावर्तध्वं युष्माभिर्बलेन वृत्रं हनानीति ॥५॥

ते होचुः किमस्माकं ततः स्यादिति तेभ्य एतौ ग्रहावगृह्णाद्यन्मरुत्वतीयौ ॥६॥

8 ते होचुरपनिधायैनमोज[14] उपावर्तामहा इति तथेति तमपनिधायौज[15] उपावव्रतुस्तदु वा इन्द्रो ऽस्पृणुत तत्प्रत्यबुध्यतापनिधाय[16] वै मौज[17] उपावर्त्स्यथेति[18] ॥७॥

9 स होवाच[19] मैतदपनिधिध्वमिति सहैव मौजसोपावर्तध्वमिति[20] ते होचुस्तस्मै[21] वै नो ऽन्यं भागं कल्पयेति तस्मा[22] एतमन्यं भागमकल्पयदुपयामगृहीतो ऽसि मरुतामोजसे त्वेति तꣳ सहौजसोपावर्तन्त तेन बलेन वृत्रमहꣳस्तेन व्यजिगीषत क्षत्रमु वा इन्द्रो विशो मरुतो विशा वै क्षत्रियो बलीयान्भवति क्षत्र एवैतद्बलं दधाति ॥८॥

10.11 तान्वा इन्द्रायैव मरुत्वते गृह्णाति न मरुद्भ्यो यद्ध मरुद्भ्य इति गृह्णीयात्प्रत्युद्यामिनीꣳ ह क्षत्रियाय विशं कुर्यात्तदिन्द्रमेवैतदनु मरुत आभजति[23] प्रत्युद्यामिनीमेवैतत्क्षत्रियाय[24] विशं करोत्यनुवर्त्मानमपक्रमादु हैवैषां बिभयां चकार यदिमे मन्नापक्रामेयुरिति तानेतदनपक्रमिण एवाकुरुत तस्मादिन्द्रायैव मरुत्वते गृह्णाति[25] न मरुद्भ्यः ॥९॥

12 ऋतुपात्राभ्यां गृह्णात्यृतवो वै संवत्सरो यज्ञस्तानदः प्रत्यक्षं प्रातःसवने ऽवकल्पयति यदृतुग्रहान्गृह्णात्यथैनानेतत्परोक्षं माध्यंदिने सवने ऽवकल्प्यन्ते यदृतुपात्राभ्यां मरुत्वतीयान्गृह्णाति[26] विशो वै मरुतो ऽन्नमु वै विश ऋतवो वा इदꣳ सर्वमन्नं पचन्ति तस्मादृतुपात्राभ्यां गृह्णाति ॥१०॥

13.14 स गृह्णातीन्द्र मरुत्व इह पाहि सोमं मरुत्वन्तं वृषभं वावृधानं मरुतामोजसे त्वेति[27] ॥११॥

15-17 अथैतं माहेन्द्रं ग्रहं गृह्णाति स यदेतं माहेन्द्रं ग्रहं गृह्णाति पाप्मना वा इदमिन्द्रः सꣳसृष्टो ऽभूत्संयतो[28] यद्विशा मरुद्भिर्यथा समाने पात्रे ऽश्नीयाद्विजयस्य कामाय क्षत्रियो वैश्येनैवमेतद्यदस्मै समानमेभिर्ग्रहमग्रहीषुस्तमेतद्देवा[29] विजिते ऽभये ऽनाष्ट्रे यथेषीकां विमुञ्जां[30] कुर्यादेवं पाप्मनो व्यवृहन्यन्माहेन्द्रं ग्रहमगृह्णꣳस्तथो वा एनमेष एतद्विजिते ऽभये ऽनाष्ट्रे यथेषीकां विमुञ्जां[30] कुर्यादेवं

विवृहति[29] यन्माहेन्द्रं ग्रहं गृह्णातीन्द्रो वा एष पुरा वृत्रस्य वधादि-
वृत्रं जघ्निवान्यथा महाराजो विजिग्यान एवं महेन्द्र[30] इति तस्मान्माहेन्द्रं
ति ॥१२॥

शुक्रपात्रेण गृह्णात्येष वाव शुक्रो य एष तपत्येष उ वा इन्द्रस्तस्माच्छुक्र-
गृह्णाति ॥१३॥

स गृह्णाति महां३[31] इन्द्रो नृवदा[32] चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः। 18.19
मघवावृधे वीर्यायोरुः[33] पृथुः सुकृतः कर्तृभिर्भूत् ॥ उपयामगृहीतो ऽसि महे-
त्वैष ते योनिर्महेन्द्राय त्वेति सादयति सादयित्वा स्तोत्रमुपाकरोति स्तोत्र-
संप्रेष्यत्यभिषोतारो[34] ऽभिषुणुतौलूखलानुद्वादयताग्नीदाशिरं[35] विनय
विचादिति ते यथासंप्रेषितं कुर्वन्ति स यदत्रैतत्संप्रेष्यत्यत्रैतत्कर्म क्रियत
रसवती सवने शुक्रवती यत्प्रातःसवनं च माध्यंदिनं च सवनमथैतन्निर्धी-
यत्तृतीयसवनं तन्माध्यंदिनादेवैतत्सवनात्तृतीयसवनं निर्मिमीत एतेनो
सवने शुक्रवद्रसवद्भवति तस्मादत्रैतत्संप्रेष्यत्यत्रैतत्कर्म क्रियते ॥१४॥ चतुर्थं
णम् ॥ तृतीयो ऽध्यायः ॥

1 शुक्रवद्ध्येतत्सवनं MSS. 2 °क्थानि B W.
3 °स्वतीयं MSS. 4 °स्पंचदशः B, °स्पंचदशः C.
5 °लीभिर्हि B, अंगुलिभिर्हि C O W. 6 आनयंत B W.
7 यदेवैतेन B W. 8 Read नीयन्ते ? 9 विजित
MSS. 10 तथा C. 11 Cp. VI. 1. 3. 4.
12 Read either स हाश्वत्थे or साहाश्वत्थे ( = स । अह ।
अश्वत्थे ), or °भवति ॥४॥ सो हाश्वत्थे. 13 इंद्रो MSS.
14 Emended; °यैनामोज MSS. 15 तमुपनिधायौज
and तमुपानिधायौज MSS. 16 तत्प्रत्यबुध्यता° MSS.
17 मोज MSS. 18 उपावर्त्स्यथेति MSS. Instead
of the 2nd plural future we expect a 3rd
plural aorist : उपावृत्सतेति. 19 होवाच MSS.
20 मोज° MSS. 21 We expect तेभ्यो and तेभ्य.
22 आभजति प्रत्युद्यामिनी° B, आभजतिप्रत्युद्यामिनी° W,

आभजत्यप्रत्युद्यामिनी° C O P. 23 गृह्णाति MSS. 24 °गृह्णाति B C O P W. 25 स्वेति MSS. 26 भूत्संवतो B W. 27 °ग्रहमग्रहीषु° B W O; स्तमेतद्देवा MSS. 28 विसुंजां MSS. ( also VI. 1. 2. 16 ). 29 °हंति C. 30 माहेंद्र MSS. 31 महांs B W, महां२ My. 32 नृषदा B. 33 °योरुं B W, °योरु C O. 34 °त्यभिषोतारो MSS. 35 भिषुणुतौल्° B, भिषुणुतौल्° C W O P.

M. IV. 3. 4 K. V. 4. 1

1.2 घ्नन्ति ह वा एतद्यज्ञं यदेनं तन्वते यद्राजानमभिषुण्वन्ति तत्तं घ्नन्ति यत्पशु॑ संज्ञपयन्ति यद्विशासति तत्तं घ्नन्त्युलूखलमुसलेन[1] दृषदुपलेन हविर्यज्ञं घ्नन्ति स एव॑ हतो यज्ञो न ददक्षे तं देवा दक्षिणाभिर्दक्षयां चक्रुस्तस्माद्दक्षिणा नाम यदाभिरदक्षय॑स्तस्मादु दक्षिणा दद्यात्स यद्दक्षिणा ददाति यदेव[2] हतस्य यज्ञस्य व्यथते तदेवास्यैतद्दक्षिणाभिर्दक्षयत्यथ[3] समृद्ध एव यज्ञः ॥१॥

3 ताः षड्वा[4] द्वादशेति[4] हविर्यज्ञे दीयन्ते न ह त्वा अशतदक्षिणः सौम्यो ऽध्वरः स्यादेष वै प्रत्यक्षं प्रजापतिर्यत्सोमः पुरुषो वा[5] अयं[5] नेदिष्ठं[5] प्रजापतेः स ऽयं पुरुषः शतायुः[6] शतदायस्त॑[6] शतेनैव दक्षयति नाशतेन तस्मान्नाशतदक्षिणः सौम्यो ऽध्वरः स्यात्तस्मान्नाशतदक्षिणस्यर्त्विक् चन स्यान्नेदस्याध्यक्षो ऽसानीति यमिम॑ हनिष्यन्त्येत्र न दक्षयिष्यन्तीति ॥२॥

4 द्वया उ वाव देवा देवा अहैवान्यद्देवा अथेमे मनुष्यदेवा य इमे ब्राह्मणाः शुश्रुवा॑सो ऽनूचानास्तेषां द्वेधाविभक्तो यज्ञ आहुतय एव देवानां दक्षिणा मनुष्यदेवानां ब्राह्मणाना॑ शुश्रूषामनूचानाना॑ स आहुतिभिरेव देवान्प्रीणाति दक्षिणाभिर्मनुष्यदेवान्ब्राह्मणाञ्छुश्रुषो ऽनूचाना॑स्त एनमुभये देवाः प्रीताः सुधायां दधति ॥३॥

5 तद्वा ऋत्विजामेव दक्षिणा नानृत्विजामेतन्न्वा[8] अन्यमेवात्मान॑ स॑स्कुर्वन्त्यृत्विजो[9] यजमानस्य[10] यमेतद्यज्ञ॑ स॑स्कुर्वन्त्यृङ्मयं[11] यजुर्मयमाहुतिमयं साममय॑ सो ऽस्यामुष्मिल्लोक आत्मा भवति तद्ये माजीजनन्तेत्यृत्विज एवैतद्दक्षिणाभिः प्रीणाति नानृत्विजस्तस्माद्वृत्विजामेव[12] दक्षिणा नानृत्विजाम्[13] ॥४॥

अथ प्रतिपरेत्य गार्हपत्यं दाक्षिणानि जुहोति चतुर्गृहीतमाज्यं गृहीत्वा 6
होमीये वाससि हिरण्यं प्रबध्य तत्स्रुच्यवधाय स यद्दाक्षिणानि जुहोत्यतद्वै
ग्रे देवानभिप्रैति[१४] यज्ञमन्वारभ्य दक्षिणा यां दक्षिणां ददाति दक्षिणामन्वारभ्य
नतः ॥५॥

तद्वै चतस्र एव दक्षिणा हिरण्यं गौर्वासो ऽश्वः स नाह तदवकल्पते 7
पादꣳ स्रुच्यवदध्यातिक्रमत्रश्वस्य तस्माद्दशाहोमीय एव वाससि हिरण्यं
तदेव स्रुच्यवधाय जुहोति ॥६॥

सौरीभ्यामृग्भ्यां तमसा वा असौ लोको[१५] ऽन्तर्हितः[१५] सूर्यो वै तमसो 8.9
ना तदेतेनैव तमो ऽपहत्य स्वर्गं लोकमुपसंक्रामति तस्मात्सौरीभ्यामृग्भ्यामुदु
जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यꣳ स्वाहेत्येतया गायत्र्या
त्री वा इयं पृथिवी तदस्यां प्रतिष्ठायामेतया प्रतितिष्ठति ॥७॥

अथापरं चतुर्गृहीतमाज्यं गृहीत्वा जुहोति चित्रं देवानामुदगादनीकं 10
मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्त-
स्थ स्वाहेत्येतया त्रिष्टुभा स्वर्गं लोकमुपप्रैति[१६] ॥८॥

अथाग्नय आग्नीध्रे जुहोति द्वे आहुती एकां वा स यदग्नय आग्नीध्रे जुहो- 11.12
ग्निं पशूनामीष्टे तमिमे पशवो ऽभितः परिनिविष्टास्तमेवैतत्प्रीणाति सो ऽस्मै
पशूननुमन्यते दानाय तेनानुमतां[१७] ददाति[१७] तस्मादग्नय आग्नीध्रे जुहोत्यग्ने
सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो
यिष्ठां ते नमउक्तिं विधेम स्वाहेत्यथ यद्यश्वो युक्तो वायुक्तो वा स्यात् ॥९॥

अथ द्वितीयां जुहुयादयं नो अग्निर्वरिवस्कृणोत्वयं मृधः पुर एतु प्रभिन्दन्। 13
वाजाञ्जयतु[१८] वाजसाता[१९] अयꣳ शत्रूञ्जयतु जर्हृषाणः स्वाहेति वाजसा ह्यश्व-
स्तदाहायं वाजाञ्जयतु[१८] वाजसाताविति[१९] ॥१०॥

अथ दक्षिणतो दक्षिणा उपरुद्धा उपतिष्ठन्ते ता अभ्यैति ता अभिमन्त्र- 14.15
रूपेण वो रूपमभ्यागामिति न ह वा अग्रे पशवस्तस्मै चक्षमिरे[२१] यदेनानदा-
यथैनानुतेदं[२१] ददति[२२] ते ऽपनिधाय स्वानि रूपाणि शरीरैरेव[२३] दक्षिणतो
यज्ञस्यार्धादुपातिष्ठन्त ॥११॥

तदु वै देवा अस्पृण्वत ताꣳस्तैरेव रूपैर्दक्षिणतो यज्ञस्यार्धादुपायꣳस्ते

स्वानि रूपाणि जानाना अभ्यवाय९स्ते रातमनसो दानायाभव९स्तथो वा एनान्
एतत्स्वैरेव[24] रूपैर्दक्षिणतो यज्ञस्यार्धादुपैति ते स्वानि रूपाणि जानाना अभ्यवयन्ति
ते रातमनसो दानाय भवन्ति तस्मादाह[25] रूपेण[25] वो रूपमभ्यागामिति तुथो वै
विश्ववेदा विभजात्विति ब्रह्म वै तुथो विश्ववेदा ब्रह्म वै[26] वेद यश्च[26] दक्षिणीयो यश्चा
दक्षिणीयस्तथो हास्य नादक्षिणीयाय का चन दक्षिणा दत्ता भवति ॥१२॥

16 ऋतस्य पथा प्रेतेति यो वै देवानां पथैति स ऋतस्य पथैति[27] तस्मादाह
र्तस्य पथा प्रेतेति चन्द्रदक्षिणा इत्येतेन हि चन्द्रेण ज्योतिषा हिरण्येन यन्ति ॥१३॥

17-18 अथ सदः प्रेक्षते वि स्वः पश्य व्यन्तरिक्षमिति लोकं त्वया विख्येषमि-
त्येवैतदाह यदाह वि स्वः पश्य व्यन्तरिक्षमिति यतस्व सदस्यैरिति मा त्वा सदस्याना
कश्चनातिरेचीत्येवैतदाह तथास्यैते सर्वे प्रीता भवन्ति ॥१४॥

19.20 अथाग्नीधमभ्यैति[28] ब्राह्मणमद्य विदेय पितृमन्तं पैतृमत्यमिति या वै
ज्ञातायापि[29] कतिपयीरेव दक्षिणा ददाति ताभिरेव महज्जयति तस्मादाह ब्राह्मणमद्य
विदेय पितृमन्तं पैतृमत्यमित्यृषिमार्षेयमिति यो वै ज्ञातो ऽनूचानः स ऋषिरार्षेयः
सुधातुदक्षिणमिति स[30] उ एव[30] सुधातुदक्षिणस्तस्मा उपसद्य हिरण्यं ददात्यस्मद्राता
देवत्रा गच्छ प्रदातारमाविशेति यां[31] वै रातमना अविचिकित्सन्दक्षिणां[31] ददाति
तया[32] वै महज्जयति तस्मादाहास्मद्रातेति देवत्रा गच्छेति देवलोके मे ऽपि स्यादिति
वै यजते यो यजते तदेनं देवलोके ऽपित्विनं करोति प्रदातारमाविशेति मामाविशे-
त्येवैतदाह तथास्मादेषा[34] न पराची भवति तत्र यच्छक्नोति तदुपदधाति स यदग्नीधे
प्रथमाय ददात्यतो[35] हि देवाः पाप्मानमपाघ्नत ॥१५॥

21 अथात्रेयमभ्यैति[36] क आत्रेयं क आत्रेयं क आत्रेयमिति तस्मा उपसद्य
हिरण्यं ददात्यस्मद्राता देवत्रा गच्छ प्रदातारमाविशेत्युक्तो यजुषो बन्धुः स यदात्रे-
याय हिरण्यं ददात्यत्रिर्हि वा[37] ऋषीणा९ होतास यत्रो ह वा अद आसीनः
प्रातरनुवाकमन्वाह तद्ध स्मैतत्पुरासीनो होता श९सत्यथ पश्चात्तमः सदो
ऽभिपुप्लुवे ॥१६॥

ते होचुस्तमो वा इद९ सदो[38] ऽभ्यप्रोष्टेति[38] प्रत्यङ्[39] प्रेहीति स प्रत्यङ्
प्रैत्स[39] तत्तमो ऽपाहन्त्स ज्योतिर्वा अयं य इदं तमो ऽपावधीदिति तस्मा एतज्ज्यो-
तिर्हिरण्यं दक्षिणामनय९स्तद्वीर्येण तेजसा तदृषिस्तमो[40] ऽपाहन्नथैष[41] आत्रेय

हिरण्येन ज्योतिषैतत्तमो ऽपहन्ति तस्मादात्रेयाय हिरण्यं ददाति ॥१७॥

अथ ब्रह्मणे ददाति ब्रह्मा हि दक्षिणतो यज्ञस्याभिगोप्ताथोद्गात्रे[42] ऽथ[43] 22 ऽध्वर्युभ्यां हविर्धान आसीनाभ्यामथ प्रस्तोत्रे ऽथ मैत्रावरुणायाथ ब्राह्मणाच्छंसिने ऽथ पोत्रे ऽथ नेष्ट्रे ऽथाच्छावाकायोन्नेत्र[44] आवस्तुते सुब्रह्मण्याया अपि ग्रावस्तुतेभ्यो दत्त्वा प्रतिहर्त्र एवोत्तमाय ददाति प्रतिहर्ता वा एष सो ऽस्मिन्नेतत्प्रतिहरति तथास्मादेतन्न पराङ् भवति ॥१८॥

अथाहेन्द्राय मरुत्वते ऽनुब्रूहीति ततो न दद्यात्स यदतो न ददाति यत्र ह 23 अग्रे प्रजापतिरयजत यत्राग्रे प्रजापतिरददात्तद्धेन्द्र ईक्षां चक्रे ऽयमु हेदं सर्वमेव दद्यादिति तस्मा एतं वज्रमुदयच्छन्न दास्यतीति ततो नाददात्स एष वज्र एवोद्यच्छन्यदिन्द्राय मरुत्वते ऽनुवाच[46] आह तस्मादतो न दद्यात् ॥१९॥

तद्वै चतस्र एव दक्षिणा हिरण्यमायुर्ह तेनात्मनस्त्रायत आयुर्हिरण्यं 24 तदग्नय आग्नीध्रं कुर्वते ऽददात् ॥२०॥

अथ गौः प्राणं ह तेनात्मनस्त्रायते ऽन्नं हि गौरन्नं हि प्राणस्तां रुद्राय 25 ऽददात् ॥२१॥

अथ वासस्त्वचं ह तेनात्मनस्त्रायते त्वग्घि वासस्तद्बृहस्पतय उद्गायते 26 ऽददात् ॥२२॥

अथाश्वो वज्र एव स पुरोगास्तं यमाय ब्रह्मणे ऽददाद्यमलोकमु वा अभि 27 जयों[47] भवति[48] यम[49] उ वै ब्रह्मा तस्माद्ब्रह्मणे ऽश्वं ददात्यथ यदन्यद्ददाति कामेनैव दीयत इदं मे ऽप्यमुत्रासदिति तेनैव कामेन ॥२३॥

स यद्यस्मै हिरण्यं दद्यात्तत्प्रतीयादग्नये त्वा मह्यं वरुणो ददात्वित्यग्नये 28 हि तददात्सो ऽमृतत्वमश्यात् । आयुर्दात्र एधि मयो मह्यं प्रतिग्रहीत्र इति[50] ॥२४॥

अथ यद्यस्मै गां दद्यात्तां प्रतीयाद्रुद्राय त्वा मह्यं वरुणो ददात्विति रुद्राय 29 हि तामददात्सो ऽमृतत्वमश्यात् । प्राणो दात्र एधि मयो मह्यं प्रतिग्रहीत्र इति[50] ॥२५॥

अथ यद्यस्मै वासो दद्यात्तत्प्रतीयाद्बृहस्पतये त्वा मह्यं वरुणो ददात्विति 30 बृहस्पतये हि तददात्सो ऽमृतत्वमश्यात् । त्वग्दात्र एधि मयो मह्यं प्रतिग्रहीत्र इति[50] ॥२६॥

अथ यद्यस्मा अश्वं दद्यात्तं प्रतीयाद्यमाय त्वा मह्यं वरुणो ददात्विति 31 यमाय हि तमददात्सो ऽमृतत्वमश्यात् । वयो दात्र एधि मयो मह्यं प्रतिग्रहीत्र इति[50] ॥२७॥

32.33 अथ यद्यस्मा अन्यद्दद्यात्तत्प्रतीयात्को ऽदात्कस्मा अदात्कामो ऽदात्कामायादात्कामो दाता कामः प्रतिग्रहीता कामैतत्त इति कामेन वै तदददात्तु कामेनैव प्रत्येति तद्देवताभ्यो ऽतिदिशति यद्वै किं च देवतायामभ्यादधति[५१] भूयो वै सा तेनोद्दीप्यति यद्धि किं चाग्नावभ्यादधति भूयो भूय एव स तेनोद्दीप्यति स ह श्वः श्व एव श्रेयान्भवति[५२] य एवं विद्वान्प्रत्येति तदु होवाचासुरिरप्येतदधीयन्नाद्रियेतेति[५३] होवाच यथा वै समिद्धे ऽभ्यादध्यात्समिद्धे जुहुयादित्येवं[५४] तद्यदधीयते[५५] ददातीति ॥२८॥ प्रथमं ब्राह्मणम् ॥

1 मंस्युल्लूख° MSS. 2 यदेब MSS. 3 °दंक्ष-यस्यथ B W C ( orig. ) O. 4 षड्वा स्वाद्वादशेवेति My, but ड्वा and वे blotted out. Read perhaps षड्वा द्वादशेति वा. 5 वायं B W C ( orig. ) O My. 6 नेदिष्ठ or नेदिष्टं MSS. 7 Thus conjecturally; शतायुःस्तदायुस्त॰ B W, शतायुः शतदायुस्त॰ C O My. 8 नानृत्विजामेतंवा MSS. 9 Emended; समस्कुर्वंन्यृत्विजो or समस्कुर्वंनृत्विजो MSS. except My, which has समस्कुर्वन्त्यृत्विजो. 10 यजमानः स MSS. 11 सं॰स्कुर्वंत्यृग्म( sec. m. ग्म )यं C B, सं॰स्कुर्वंन्यृग्मयं O ( corrected into न्नृग्मयं ) P. 12 नानृत्विज° C O, नानृत्विज° B. 13 नानृत्विजां C. 14 देवानवभिः प्रैति B W. 15 लोकोंतर्हितः B W C (orig.). 16 °प्रैति B W. 17 Thus also the Mādhy. Read probably °नुमतान्ददाति (sc. पशून्). 18 वाजांजयतु MSS. 19 A difference in the Saṃhitā not noted by Weber ( p. 255 ). 20 °विति MSS. 21 MSS. except C ( sec. m. ) जक्षमिरे. 22 °दं · ददति ( ददंति ) MSS. 23 MSS. except C ( sec. m. ) शरीरैव. 24 MSS. except C (sec. m.) एतत्तैरेव. 25 तस्मा-

द्रूपेण B W My. 26 Without accent the MSS. 27 पर्यैति B. 28 अथाग्नीध्र° B W. 29 ज्ञातायापि MSS. In C the accent beneath ज्ञा is blotted out. 30 स एव B W, स उ एवैव C (orig.). 31 या B W My. 32 °किरसंदक्षिणां C My, °किरमदक्षिणां B, °किरसदक्षिणां W. 33 या B. 34 तथास्मादेषा B. 35 ददात्युतो B My, ददात्युतो O W C (orig.). 36 अथात्रेयम° MSS. 37 Omitted in B. 38 सदोभ्यप्रोष्टेति B W, सदोभ्यः प्रोष्ठेति C O My. 39 प्रत्यङ् प्रेहीति प्रत्यङ् प्रै० B W. 40 सद्दषि° B. 41 °तमो पाहस्त्रथैष O P W, °तमो पाहस्त्रथैष B. 42 अभि omitted in B. 43 थ होत्रे wanting in B. 44 °क्षेत्रे B. 45 एवोद्यमानो MSS. except C (sec. m.). 46 नुवाच C (sec. m.), नूवाच the other MSS. 47 ? प्रोर्थो B W O P My C (pr. m.), प्राप्तो C (sec. m.). 48 भवति B. 49 यम B. 50 इति MSS. 51 देवतायामभ्यादधति C (sec. m.). 52 According to Bhāṣ. sūtra II. 17 भवति ought to be accented. 53 °रप्येतदधीय° MSS. 54 °यादित्येव दद्यादधीयते B W.

## K. V. 4. 2

M. IV. 3. 5

त्रया वै देवा वसवो रुद्रा आदित्या एते वै त्रया देवास्तेषाᳮ सवनानि ...कानि वसूनां प्रातःसवनᳮ रुद्राणां माध्यंदिनᳮ सवनमादित्यानां तृतीयसवनं ...दमिश्रमेव वसूनां प्रातःसवनममिश्रᳮ रुद्राणां माध्यंदिनᳮ सवनमथ मिश्र... ...दित्यानां तृतीयसवनम् ॥१॥ 1

ते हेम आदित्या ऊचुर्यथेदममिश्रं वसूनां प्रातःसवनमित्यमिश्रᳮ रुद्राणां ...ध्यंदिनᳮ सवनमेवं न इमं पुरा मिश्राद्गृहं जुहुथेति तथेति ह देवा ऊचुस्तमेभ्यः ...स्थिते माध्यंदिने सवने पुरा तृतीयसवनादजुहवुस्तस्मादप्येष एतर्हि प्रहस्त- 2

थैव हूयते यथैनं[1] देवा अजुहवुः ॥२॥

3-8a ते हेम आदित्या ईक्षां चक्रिरे[3] नेव वा इतरस्मिन्त्सवने स्मो नेवेतरस्मिन्निति यद्धै नो नाष्ट्रा रक्षाꣳसि न हन्युरिति ते होचुर्द्विदेवत्यान्रक्षोभ्यो वै बिभीम इति युष्मान्प्रविशामेति त उ होचुर्द्विदेवत्याः किमस्माकं ततः स्यादिति ते होचुरस्माभिरेवानुवषट्कृता[4] असथेति[5] तथेति तान्प्राविशन्त्स यत्रादो द्विदेवत्यैः प्रातः प्रचरत्यध्वर्युस्तत्प्रतिप्रस्थातादित्यपात्रेण प्रतिनिगृह्णीत उपयामगृहीतो ऽसीत्येतावतैव स इतरस्यैवानु होमं[6] जुहोत्यादित्येभ्यस्त्वेति सꣳस्रवमवनयत्येवमेव सर्वेषु स यदत्र प्रतिप्रस्थातादित्यपात्रेण प्रतिनिगृह्णीते द्विदेवत्यान्वै प्राविशन्न वै द्विदेवत्यानामनुवषट्करोत्यस्माभिरनुवषट्कृता असथेत्यु[7] वा एनानादित्या अन्वयन्त्स्विष्टकृत उ वा अनुवषट्करोति तद्यामेतां द्वितीयामाहुतिं जुहोति ताꣳ स्विष्टकृते[8] जुहोत्येतेनो हैते ऽनुवषट्कृता इष्टस्विष्टकृतो[9] भवन्ति तस्मादेतामाहुतिमुत्तरतो जुहोत्येषा हि तस्य देवस्य दिगथ यद्धेवात्र प्रतिनिगृह्णीते द्विदेवत्यान्वै प्राविशन्त्स यानेव प्राविशꣳस्तेभ्य एवैनानेतन्निर्मिमीते[10] ऽथापिदधाति रक्षोभ्यो ह्यबिभयुः ॥३॥

8b.9 सो ऽपिदधाति विष्ण उरुगायैष ते सोमपीथस्तꣳ रक्षस्व मा त्वा दभन्निति यज्ञो वै विष्णुस्तस्मा एवैतद्गुप्तये[11] परिददाति सुगुप्तमसदिति[12] ॥४॥

अथ खलु सꣳस्थिते माध्यंदिने सवने पुरा तृतीयसवनादाहाध्वर्युरेहि यजमानेति ते संप्रपद्यन्ते[13] ऽध्वर्युर्यजमानः प्रतिप्रस्थातोन्नेताथ यो ऽन्यः परिचरो भवति स संप्रपद्योभे द्वारावपिधायादित्यग्रहं गृह्णाति रक्षोभ्यो ह्यबिभयुस्तस्मादुभे द्वारावपिधायादित्यग्रहं गृह्णात्युपर्युपरि पूतभृतं नेद्व्यवश्चोतादिति[14] ॥५॥

10-12 स गृह्णाति कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यत आदित्येभ्यस्त्वेति तं नोपयामेन गृह्णात्यग्रे ह्येव तथा सन्नो भवति जामि हि कुर्याद्यदत्राप्युपयामेन[15] गृह्णीयात्कदा चन प्रयुच्छस्युभे निपासि जन्मनी । तुरीयादित्य सवनं त इन्द्रियमातस्था अमृतं दिव्यादित्येभ्यस्त्वेति[16] ॥६॥

13.14 अथ दधि गृह्णात्यादित्यान्वा अनु पशवः पय[17] उ वा एतद्यद्दधि पशुष्वेवैतत्पयो दधाति तदिदं पशुषु पयो हितं तन्मध्ये[18] गृह्णीयान्मध्यमिव हीदं पशूनां पयो[19] ऽथो[20] पश्चादिवैव[21] गृह्णीयात्पश्चादिव हीदं पशूनां पयो हुतोच्छिष्टा वा एते सꣳस्रवास्ते[22] नालमाहुतये भवन्ति तानेवैतत्पुनराप्याययति तथो अलमाहुतये

...तस्माद्दधि[23] गृह्णाति ॥७॥

स गृह्णाति यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृलयन्तः । आ ...र्वाची सुमतिर्ववृत्याद१ँहोश्चिद्या वरिवोवित्तरासदादित्येभ्यस्त्वेति[24] ॥८॥ 15

अथोपा१ँशुसवनेन मेक्षयत्यादित्यग्रहो वा एष विवस्वान्वा एष आदित्यो ...नेन यदुपा१ँशुसवनः स्व एवैनं तद्भागे प्रीणात्येत उ वै रसवती सवने शुक्रवती ...तःसवनं च माध्यंदिनं च सवनमथैतन्निर्धीतशुक्रं यत्तृतीयसवनं नो वा एतं ...भिरुपस्पृशति न पवित्रेण यथा प्रणिक्त एव१ँ हि तत्स्याद्यदेनं दशाभिर्वोपस्पृशे- ...त्रेण वैतेनो हैतत्सवन१ँ[25] शुक्रवद्रसवद्भवति तस्मादुपा१ँशुसवनेन मेक्षयति ॥९॥ 16.17

स मेक्षयति विवस्वां३[26] आदित्यैष ते सोमपीथस्तस्मिन्मत्स्वेत्यथ ग्राव्ण ...सृजत्याधवनीये वा संभरण्यां[27] वैवोद्धृत्यादित्या वै ग्रावाण एतद्वा आदित्याना१ँ ...वनं यत्तृतीयसवन१ँ स्व एवैना१ँस्तद्भागे प्रीणाति ॥१०॥ 18.19

अथ पाणिना ग्रहमपिदधाति रक्षोभ्यो ह्याबिभयुरपोर्णवन्त्युभे[28] द्वारा ...निष्क्रम्याहादित्येभ्यो ऽनुब्रूहीति प्रियेभ्यः प्रियधामभ्य इति संपश्येद्यदि[29] कामये- ...प्राग्य[30] त्वेवाहादित्येभ्यः[30] प्रेष्येति प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वस- ...पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्य[31] इति वषट्कृते जुहोति नानुयजति ॥११॥ 20

आदित्यान्वा अनु पशवो नेत्पशूनग्नौ प्रवृणजानीति प्रयच्छति प्रतिप्रस्थात्र ...दित्यपात्रमथ पुनः संप्रपद्यन्त आग्रयणमध्वर्युरादत्त उपर्युपरि पूतभृतं पवित्रं ...न्वन्ति प्रस्कन्दयत्येवाध्वर्युराग्रयणात्संप्रस्कन्दयति प्रतिप्रस्थातादित्यपात्रयोः ...संस्रवमानयत्याधवनीयादुन्नेतोदञ्चनेन[32] ताभ्यश्चतसृभ्यो धाराभ्य आग्रयणं ...ह्णाति ॥१२॥ 21

आदित्यान्वा अनु गावस्तस्माद्धीदं गवां चतुर्धाविहितं पयो यच्चतसृभ्यो ...धाराभ्य आग्रयणं गृह्णात्यथ यदप्यत्रादित्यग्रहस्य स१ँस्रवं गृह्णाति न वा आदित्यग्रह- ...मनुवषट्करोत्येतस्माद्वा आग्रयणात्सावित्रं गृह्णाति स एतेन सावित्रेणानुवषट्कृतो ...ति पुरो वै मिश्रादेभ्य इमं ग्रहमहौषुरेतद्वा आदित्याना१ँ सवनं यत्तृतीयसवनं[33] ...तृतीयसवनायो[33] वा एतं ग्रहं गृह्णात्येतेनो हैतत्सवनं पुनः प्रविशन्ति[34] तथैतस्मात्स- ...ग्राह्य बहिर्धा भवन्ति तस्मादप्यत्रादित्यग्रहस्य स१ँस्रवं गृह्णाति ॥१३॥ द्वितीयं ब्राह्मणम् ॥ 22-24

1 जुहुतेति B. 2 यथेव B, यथैव W. 3 चक्रिरे

MSS. 4 °भिरेवानुवषट्कृता B, °भिरेवानुवषट्कृता W. 5 अवसथेति B W. 6 होमं B C W. 7 °ष्टकृते B C. 8 स्विष्टकृते B, स्विष्टकृते C O W. 9 इष्ट° B W C O. 10 °तंनिर्मिमीते MSS. 11 एवैतद्गुप्तये C W O, एवैतद्गुप्तये B. 12 °दिति MSS. 13 Without accent C. 14 °इच्योतादिति B W O P My, °श्चोतादिति C. 15 कुर्याद्यदत्राप्यु° B W C O. 16 दिव्यादि° B, दिव्यादि° C O W; °स्वेति MSS. 17 पय MSS. 18 तन्मध्ये B. 19 पयोथो C O W. 20 पश्चादिवैव MSS. 21 सꣳस्रवास्ते MSS. 22 भवंति C. 23 तस्मादधि B. 24 °स्त्वेति B O W. 25 हतत्सवनꣳ B. 26 °स्वांऽ B W. 27 संभरिण्यां B W O. 28 Emended; °युरुपोर्णत्युभे MSS. 29 संपश्ये° MSS. 30 °श्राव्य त्वेवाहा° MSS. without accent. 31 उरोरंतरि° MSS. 32 सꣳस्रवमवनयत्य° C O (sec. m.).; °श्चेतोदंचनेन B W, °श्चेतोदवनेन C O. 33 °सवनं तत्तृतीय° B W. 34 प्र° MSS.

M. IV. 4. 1

K. V. 4. 3

1 मनो ह वा अस्य सविता तस्माद्धाव सावित्रं गृह्णाति प्राणो ह वा अस्य सविता स यदुपाꣳशुं[1] गृह्णाति[2] तत्पुरस्तात्प्राणं दधाति प्राणो ह्युपाꣳशुरथ पश्चात्प्राणं दधाति यदेतं गृह्णाति ताविमा उभयतः प्राणौ हितौ यश्चायमुपरिष्टाद्यश्चाधस्तात्तस्माद्वा एतꣳ सावित्रं ग्रहं गृह्णाति ॥१॥

2 अथ यद्वेवैतꣳ सावित्रं ग्रहं गृह्णात्यृतवो वै संवत्सरो यज्ञस्तानदः प्रत्यक्षं प्रातःसवने ऽवकल्पयाति[3] यदृतुग्रहान्गृह्णात्यथ परोक्षं माध्यंदिने सवने ऽवकल्पयन्ते यदृतुपात्राभ्यां मरुत्वतीयान्गृह्णात्यथात्र[4] नर्तुग्रहान्गृह्णाति नर्तुपात्राभ्यां कं चन ग्रहं गृह्णाति ॥२॥

एष वै सविता य एष तपत्येष उ वै सर्व ऋतव एतेनो ह तृतीयसवन 3.4
ऋतवः संवत्सरो ऽवक्लृप्यन्ते[1] तस्माद्वा एतꣳ[2] सावित्रं ग्रहं गृह्णाति ॥३॥

तमुपांशुपात्रेण गृह्णीयात्प्राणो हि सविता प्राणो ह्युपांशुरथो अन्तर्याम-
पात्रेण समानꣳ हि तद्यदुपांश्वन्तर्यामौ तस्मादुपांशुपात्रेण वैनं गृह्णात्यन्त-
र्यामपात्रेण वा ॥४॥

आग्रयणाद्गृह्णाति मनो वै सवितात्माग्रयण आत्मन्येवैतन्मनो दधाति 5
प्राणो वै सवितात्माग्रयण आत्मन्येवैतत्प्राणं दधाति ॥५॥

स गृह्णाति वाममद्य सवितर्वाममु श्वो दिवे दिवे वाममस्मभ्यꣳ सावीः । 6
वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम ॥ उपयामगृहीतो ऽसि सावित्रो[6]
ऽसि[7] चनोधाश्चनो[8] मयि धेहि जिन्व यज्ञं[9] जिन्व[9] यज्ञपतिमिति ॥६॥

तं न सादयति मनो वै सविता तस्माद्धीदमसन्नं मनः संचरति[10] प्राणो 7.8
वै सविता तस्माद्ध्ययमसन्नः प्राणः संचरत्याश्राव्याह देवाय सवित्रे प्रेष्येति वषट्कृते
जुहोति ॥७॥

नानुयजति मनो वै सविता नेदग्नौ मनः प्रवृणजानीति प्राणो वै सविता
नेदग्नौ प्राणं प्रवृणजानीति तेन तथैवाभक्षितेनैतं वैश्वदेवं ग्रहं गृह्णाति स यदभक्षितेन
वैश्वदेवं ग्रहं गृह्णाति न वै सावित्रस्यानुवषट्करोति स एतेन वैश्वदेवेनानुवषट्कृतो
भवति तस्मादभक्षितेन गृह्णाति[11] ॥८॥

अथ यद्वेवाभक्षितेन गृह्णाति मनो वै सविता सर्वे विश्वे देवाः सर्वमेवैत- 9.10
न्मनसो[12] ऽनुवर्त्म[12] करोति तदिदꣳ सर्वं मनसो[13] ऽनुवर्त्म प्राणो वै सविता सर्वे
विश्वे देवाः सर्वस्मिन्नेवैतदस्मिन्प्राणं दधाति सो ऽयमस्मिन्त्सर्वस्मिन्प्राणो हितस्त-
स्मादभक्षितेन गृह्णाति ॥९॥

अथ यद्वेवैतं वैश्वदेवं ग्रहं गृह्णाति वैश्वदेवं वा एतत्सवनं यत्तृतीयसवनं 11
तदुच्यते सामतो यथा वैश्वदेवं[14] तथर्क्तो[14] ऽथैतेनैव ग्रहेण यजुष्टः पुरश्चरणतस्त-
स्माद्वा एतं महावैश्वदेवं ग्रहं गृह्णाति ॥१०॥

पूतभृतो गृह्णाति वैश्वदेवो हि पूतभृदतो हि देवेभ्य उन्नयन्त्यतः पितृभ्यो 12
ऽतो मनुष्येभ्यस्तस्मात्पूतभृतो गृह्णाति ॥११॥

तं वा अपुरोरुक्कं गृह्णाति सर्वं वा एतद्विश्वे देवा यदृचो यद्यजूꣳषि यत्सा- 13

मानि स एतेन सर्वेण पुरोरुग्भान्भवति[15] तस्मादपुरोरुक्कं गृह्णाति ॥१२॥

14.15 स गृह्णात्युपयामगृहीतो ऽसि सुशर्मासि सुप्रतिष्ठान इति प्राणो वा एष ग्रहस्तस्मादाह सुशर्मासि सुप्रतिष्ठान इति बृहदुक्षाय नम इति प्रजापतिर्वै बृहदुक्षः प्रजापतय एवैतन्नमस्करोति विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादयति सादयित्वा प्राङुपविशत्यभ्याह्वयति शꣳसति स यत्र शꣳसत्येकया च दशभिश्च स्वभूते द्वाभ्यामिष्टये विꣳशती च । तिसृभिश्च वहसे त्रिꣳशता च नियुद्भिर्वाय इह ता विमुञ्चेत्येतस्यां वायव्यायामृचि पात्राणि विमुञ्चति स यदेतस्यां वायव्यायामृचि पात्राणि विमुञ्चति वायुर्वै पशूनामीष्टे वायुप्रणेत्रा हि पशवः प्राणो हि वायुः प्राणेन हीमे पशवश्चरन्ति स ह पशुभिर्देवेभ्यो[16] ऽध्यपचक्राम ॥१३॥

16 तं देवाः प्रातःसवन उपमन्त्रयां चक्रिरे स ह नोपाववर्त तं माध्यंदिने सवन उपमन्त्रयां चक्रिरे स[17] ह नैवोपाववर्त[17] तं तृतीयसवन उपमन्त्रयां चक्रिरे ॥१४॥

17 स होवाचोपावर्त्स्यन्किं ततो मम भविष्यतीति यद्युष्मानुपावर्त्स्यामीति ते होचुस्त्वयैव पात्राणि युज्यान्तै त्वया विमुच्यान्ता इति स यदैन्द्रवायवं ग्रहं गृह्णाति[18] तदेनेन पात्राणि युज्यन्ते ऽथ यदेतस्यां वायव्यायामृचि पात्राणि विमुच्यन्ते तदेनेन विमुच्यन्ते स यत्राह नियुद्भिर्वाय[19] इह[19] ता विमुञ्चेति पशवो वै नियुतः पशुभिरित्येवैतदाह ॥१५॥

18 स यद्ध प्रातःसवन उपावर्त्स्यद्गायत्रं वै प्रातःसवनं गायत्रमग्नेश्छन्दो ब्रह्म वा अग्निर्ब्राह्मणेषु हैव पशवो ऽभविष्यन्नथ यद्ध माध्यंदिने सवन उपावर्त्स्यदैन्द्रं वै माध्यंदिनꣳ सवनं क्षत्रमु वा इन्द्रः क्षत्रियेषु हैव पशवो ऽभविष्यन्नथ यत्तृतीयसवन उपावर्तत[20] वैश्वदेवं वै तृतीयसवनꣳ सर्वमु[21] वै विश्वे देवास्तस्माद्धिमे सर्वत्रैव पशव उपतिष्ठन्ते ॥१६॥ तृतीयं ब्राह्मणम् ॥

1 °श्रु C. 2 गृह्णाति B W C. 3 यत्पश्वा° B W. 4 °कल्पयति B. 5 Thus conjecturally, °गृह्णात्यथार्त्ता MSS. 6 ववल्प्स्यंते MSS. 7 सावित्रोसि B W O, without accent C. 8 चनोधाश्चनो B W C O. 9 यज्ञं जिन्व B C, यज्ञं जिन्व O W. 10 सं° MSS. 11 गृह्णाति O. 12 °तन्मनो नुवस्मं

B. 13 मनसो C. 14 वैश्वदेवं त° B, वैश्वदेवं त° C
O W. 15 पुरोरुग्मा° MSS. 16 °दैवेभ्यो MSS.
17 स ह नैवोपां° C. 18 गृह्णाति MSS. 19 Thus
O (sec. m.) and My, °वांयविह W C P O
(orig.), °वांयविह B. 20 उपाववर्तत B W.
21 सर्वं B W My.

K. V. 4. 4 M. IV. 4. 2

स वा एतेन सौम्येन चरुणा प्रचरति स यदेतेन सौम्येन चरुणा प्रचरति 1
...मो वै देवानाᳵ हविरथैतत्सोमाय हविष्करोति[1] तथातो ऽनिर्भक्तः सोमो भवति
...यश्चरुर्भवत्यन्नं[2] वै सोम एतद्ध प्रत्यक्षमन्नं यच्चरुरोदनो ह्येष ओदनो हि प्रत्यक्षमन्नं
...यच्चरुर्भवति ॥१॥

तेन तृतीयसवने प्रचरन्ति पितृदेवत्यो वै सोम एते वै निष्केवल्ये देवानाᳵ 2.3
...वने यत्प्रातःसवनं च माध्यंदिनं च सवनᳵ स यद्धैनेन[3] प्रातःसवने वा प्रचरेयुर्मा-
...दिने वा सवने समदᳵ ह कुर्याद्देवेभ्यश्च पितृभ्यश्चाथैतन्मिश्रं यत्तृतीयसवनं
...थासमद्भवति तस्मादेनेन तृतीयसवने प्रचरन्ति ॥२॥

तस्य नानुवाक्यामन्वाह सकृद्ध्येव पराञ्चः पितरः स चतुर्गृहीतमाज्यं 4-6
...हीत्वाश्राव्याह घृतस्य यजेति वषट्कृते जुहोति तद्या अतः प्राचीराहुतीर्जुहोति
...ताभ्यो ऽन्तर्दधाति तथासमद्भवत्यथैतेन सौम्येन चरुणा प्रचरत्यथापरं चतुर्गृहीतमाज्यं
...हीत्वाश्राव्याह घृतस्य यजेति वषट्कृते जुहोति तद्या अत ऊर्ध्वा आहुतीर्होष्यन्भवति
...ताभ्यो ऽन्तर्दधाति तथासमद्भवत्येवमुभयतो घृतस्य परियजति ॥३॥

तद्वा आहुरन्यतरत एव परियजेत्पुरस्तादेवेत्यथ प्रचरणीति स्रुग्भवति 7
...स्यां चतुर्गृहीतमाज्यं गृहीत्वा शालाकैर्धिष्ण्यान्व्याघारयति स यच्छालाकैर्धिष्ण्या-
...न्व्याघारयति यदेवैनानदो[4] देवा अब्रुवᳵस्तृतीयसवन एव वो घृत्याहुतिः प्राप्स्यति
...सौम्यापहृतो हि युष्मत्सोमपीथ इति सैनानेषा तृतीयसवने घृत्याहुतिः प्राप्नोति
...सौम्यापहृतो ह्येतेभ्यः सोमपीथस्तान्यैरेव यजुर्भिरुपकिरति तैरेव व्याघारयति
...यथापूर्वᳵ स्वाहाकारम् ॥४॥

तदाहुस्तूष्णीमुत्तममाग्नीध्र आघारयेदित्युदञ्चः कर्मानुसंतिष्ठाता इति तदु 8.9
...राङ्व्याघारयेन्मार्जालीयमेवान्तमᳵ[5] स यावदेष एतच्छालाकैर्धिष्ण्यान्व्याघारयति

तावत्प्रतिप्रस्थातैतं पात्नीवतं ग्रहं गृह्णाति स यदेतं पात्नीवतं ग्रहं गृह्णाति यज्ञाद्वै प्रजाः प्रजायन्ते यज्ञात्प्रजायमाना[६] मिथुनात्प्रजायन्ते मिथुनात्प्रजायमाना अन्ततो यज्ञस्य मिथुनात्प्रजायन्ते तदेतदन्ततो यज्ञस्य मिथुनं प्रजननं क्रियते तस्मान्मिथुनात्प्रजननादन्ततो यज्ञस्येमाः प्रजाः प्रजायन्ते ॥५॥

10 स यदि सावित्रमुपाꣳशुपात्रेण गृह्णीयादन्तर्यामपात्रेणैतं[७] यदि तमन्तर्यामपात्रेणोपाꣳशुपात्रेणैतꣳ समानꣳ हि तद्यदुपाꣳश्वन्तर्यामौ प्राणोदानौ ह्येतौ प्राण उ ह्येवैष योषा वै पत्नी वृषा प्राणो मिथुनमेवैतत्प्रजननं क्रियते तस्मादुपाꣳशुपात्रेण वैनं[८] गृह्णात्यन्तर्यामपात्रेण वा ॥६॥

11 तं वा अपुरोरुक्कं गृह्णाति वीर्यं वै पुरोरुङ्[९] नेत्स्त्रीषु[९] वीर्यं दधानीति तस्मादपुरोरुक्कं गृह्णाति ॥७॥

12 स गृह्णात्युपयामगृहीतो ऽसि बृहस्पतिसुतस्य ते देव सोमेति ब्रह्मप्रसूतस्येत्येवैतदाह यदाह बृहस्पतिसुतस्य ते देव सोमेतीन्द्र इन्द्रियावत इति वीर्यवत इत्येवैतदाह यदाहेन्द्र इन्द्रियावत इति पत्नीवतो ग्रहां३[१०] ऋध्यासमिति न प्रत्यक्षं पत्नीभ्यो गृह्णाति नेत्स्त्रीषु वीर्यं दधानीति तस्मान्न प्रत्यक्षं पत्नीभ्यो गृह्णाति ॥८॥

13 अथ यः प्रचरण्याꣳ सꣳस्रवः परिशिष्टो भवति तेनैनꣳ श्रीणाति यान्वा अन्यान्ग्रहाञ्छ्रीणाति समर्धयति वै तानथैतं व्यर्धयति वज्र आज्यं तद्वज्रेणाज्येनैतद्देवा अघ्नन्नेव[११] स्त्रीर्निराक्ष्णुवꣳस्ता हता निरष्टा न दायस्य चनैशत नात्मनश्चनैशत तथो वा एष एतेन वज्रेणाज्येन हन्त्येव स्त्रीर्निरक्ष्णोति ता हता निरष्टा न दायस्य चनेशते नात्मनश्चनेशते तस्मादेतेन सꣳस्रवेण श्रीणाति ॥९॥

14.15a स श्रीणात्यहं परस्तादहमवस्ताद्यदन्तरिक्षं तदु मे पितास[१२] । अहꣳ सूर्यमुभयतो ददर्शाहं देवानां परमं गुहा यदिति स यदहमहमिति श्रीणाति पुꣳस्वेवैतद्वीर्यं[१३] दधाति तादिदं पुꣳसु[१४] वीर्यꣳ हितमाश्राव्याहाग्नीत्पात्नीवतस्य[१५] यजेत्यग्निर्वा एष निदानेन यदग्नीद्योषा वै पत्नी वृषाग्निर्मिथुनमेवैतत्प्रजननं क्रियते तस्मादग्नीत्पात्नीवतस्य यजेति ॥१०॥

15b.16a स जुहोत्यग्ने वाक्पत्नीति[१६] योषा वै पत्नी वृषाग्निर्मिथुनमेवैतत्प्रजननं क्रियते सजूर्देवेन त्वष्ट्रेति त्वष्टा वै रेतः सिक्तं विकरोति तदेतद्रेतः सिक्तं तत्त्वष्टा विकरोति सोमं पिब स्वाहेति वषट्कृत उत्तरार्धे जुहोति या वा अन्या आहुतीर्जुहोति ते देवा अथैताः पत्न्य एवꣳ[१७] हि मिथुनं[१८] क्लृप्तमुत्तरतो हि स्त्री पुमाꣳसं

...ते तस्मादुत्तरार्धे जुहोति ॥११॥

अथाग्नीधे भक्षमाहरति वषट्कर्तुर्हि भक्षः स[18] आहाध्वर्य[18] उपह्वयस्वेति 16b
...प्रत्युपह्वयेत नेदस्य हतस्य निरष्टस्य प्रत्युपह्वया इति तदु प्रत्येवोपह्वयेत किं
...न प्रत्युपह्वयेत[19] यस्याग्नौ जुह्वति यस्य वषट्कुर्वन्ति तस्मात्प्रत्येवोपह्वयेत
...भक्षयति ॥१२॥

अथाहाग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नीमुदानयोद्गात्रा[20] संख्यापयोन्नेत- 17.18
...मसमनून्नय सोमं[21] मातिरीरिच इति ब्रूयाद्यद्यग्निष्टोमः स्याद्यद्युक्थ्यो वा
...वातिरात्रो वा वाजपेयो वा स्यात्सोमं प्रभावयेत्येव ब्रूयात्सो ऽग्नीद्धिभ्रदेव
... नेष्टुरुपस्थमासीदत्यग्निर्वा एष निदानेन यदग्नीन्नेष्टो[22] सै पत्नी निदानेन
...वै पत्नी वृषाग्निर्मिथुनमेवैतत्प्रजननं क्रियते ऽथ नेष्टा पत्नीमुदानयति तामुद्गात्रा
...पयति प्रजापतिर्वा उद्गाता योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते स संख्या-
...ते प्रजापतिर्वृषासि रेतोधा[23] रेतो मयि धेहीति ॥१३॥ चतुर्थं ब्राह्मणम् ॥
...र्थो ऽध्यायः ॥

1 हविःक° C O My. 2 °भैवत्यत्रं B W, °भैव-त्यत्रं C. 3 यद्वैनेन B, यद्वैनेन C O W. 4 See IV. 6. 2. 9. 5 °लीयमेवातमः B W. 6 यज्ञात्प्रजाय° C, पत्न्याज्ञात्प्रजाय° B. 7 गृह्णीया° MSS. 8 °पात्रेणैवैनं B W. 9 °रोरुक्के° C, °रोरुक् ने° P O (orig.). 10 ग्रहांs B W. 11 अन्नस्येव B W O. 12 पितास B C O W. 13 पुंसुवैतद्वीर्य B. 14 पुंसो or पुंसौ MSS. (cp. IV. 3. 4. 4). 15 हितमा° MSS. 16 वाक्पत्नीति C O. 17 एवैनं मिथुनं B. 18 स आहाध्व° B W O, स आहाध्व° C. 19 Thus, obviously corrupt, the MSS. 20 पत्नी° B C W. 21 सोमं MSS. 22 °न्नेष्टा B. 23 रेतोधा B W.

M. IV. 4. 3

K. V. 5. 1

स वै हारियोजनं[1] गृह्णाति स यद्धारियोजनं[1] गृह्णाति पशवो वै देवानां 1.2

छन्दांसि तद्यथा हेदं पशवो युक्ता मनुष्येभ्यो वहन्त्येवं ह छन्दांसि युक्तानि देवेभ्यो यज्ञं वहन्ति स यदैतच्छन्दांसि देवान्त्समतर्पयन्नथैतच्छन्दांसि देवाः समतर्पयन्नेतस्मिन्ग्रहे तदतः प्राक्दभूद्यच्छन्दांसि देवेभ्यो यज्ञमवाक्षुर्यदेनान्यत्यतीतृपन्नथैतच्छन्दांस्येव संतर्पयति यदेतं ग्रहं गृह्णाति तस्माद्वाव हारियोजनं गृह्णाति ॥१॥

3 तं वा एतमतिरिक्तं ग्रहं गृह्णाति यदा हि शंयोराहाथैतं गृह्णाति स यदेतमतिरिक्तं ग्रहं गृह्णातीदं वै देवा अथ छन्दांस्यतिरिक्तानि मनुष्या अथ पशवो ऽतिरिक्तास्तस्मादेभ्य एतमतिरिक्तं ग्रहं गृह्णाति ॥२॥

4 द्रोणकलशे वृत्रो वै सोम आसीत्तं यत्र देवाः पात्रेषु व्यगृह्णत तस्य मूर्धोद्वर्वर्त स द्रोणकलशो ऽभवत्तत्र यावान्वा यावान्वा रसः संसुस्रावातिरिक्तो वै स आसीदतिरिक्त एवैतदतिरिक्तं दधाति ॥३॥

5 तं वा अपुरोरुक्कं गृह्णाति छन्दोभ्यो वा एतं गृह्णाति तेनैवैष पुरोरुङ्मान्यदेनं छन्दोभ्यो गृह्णाति तस्मादपुरोरुक्कं गृह्णाति ॥४॥

6 स गृह्णात्युपयामगृहीतो ऽसि हरिरसि हारियोजनो हरिभ्यां त्वेत्यृक्सामनी वै हरी तदेनमृक्सामभ्यामेव गृह्णाति ॥५॥

7 अथ धाना आवपति हर्योर्धाना स्थ सहसोमा इन्द्रायेति यदेवेदं मितं चामितं च छन्दस्तदेवैतद्भक्षयति ॥६॥

8.9 अथोन्नेताश्रावयत्यतिरिक्तो वा एष ग्रहो ऽतिरिक्त उ वा उन्नेता न ह्येषो ऽन्यत्र क्व चनाश्रावयत्यतिरिक्त एवैतदतिरिक्तं दधाति मूर्धन्यधिनिधत्ते मूर्धा ह्यस्यैषः ॥७॥

अथाह धानासोमेभ्यो ऽनुब्रूहीत्याश्राव्याह धानासोमान्प्रस्थितान्प्रेष्येति वषट्कृते जुहोत्यनुवषट्कृते जुहोति ॥८॥

10 अथ धाना विलिप्सन्ते भक्षाय यथाचमसं वा अन्यान्भक्षान्भक्षयत्यथैषो ऽतिरिक्तो ग्रहस्तत्र सर्वेषां भक्षस्तस्माद्धाना विलिप्सन्ते ॥९॥

11.12 तदुत होता द्रोणकलशं याचति तमवाजिघ्रति वषट्कर्तुर्हि भक्ष इति तदु नाद्रियेत धानानामेव लिप्सेत ताः प्राणैरेव भक्षयन्ति न दद्भिः खादन्ति पशवो वा एते नेत्पशून्प्रम्रदी करवामहा इति तस्मात्प्राणैरेव भक्षयन्ति न दद्भिः खादन्ति ॥१०॥

सो ऽवजिघ्रति यस्ते देव सोमाश्वसनिर्भक्षो यो गोसनिरिति पशवो वा तस्मादाह यस्ते देव सोमाश्वसनिर्भक्षो यो गोसनिरिति तस्य त इष्टयजुष स्तुतस्तोमस्योक्थस्येतीष्टानि हि यजूꣳषि भवन्ति स्तुता स्तोमाः शस्तोक्थस्येति शस्तानि भवन्त्युपहूत उपहूतस्य भक्षयामीति तदुपहूत एवैतं भक्षं भक्षयति ता नाग्नौ दध्नौ हैके प्रास्यन्ति यथा वा उच्छिष्टा एवं वा एता भवन्ति या भक्षिताः[11] स उच्छिष्टमग्नौ प्रास्येदेवꣳ ह[12] तत्तस्मादुत्तरवेदावेव निवपेत् ॥११॥

अथ पूर्णपात्रान्त्समवमृशन्ति यानप्सुषोमा इत्यन्य आचक्षते यथा वै 13
वहेयुरेवं वा एते वहन्ति य आर्त्विज्यं कुर्वन्त्युतो[13] वै युक्तो विलिशत आपो वाऽꣳ शान्तिस्तदद्भिः शान्त्या शमयति तदद्भिः संदधाति ॥१२॥

ते समवमृशन्ति सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सꣳ शिवेन। 14.15
सुदत्रो विदधातु रायो ऽनुमार्ष्टु तन्वो यद्विलिष्टमिति तद्यद्विलिष्टं तत्संदधात्यथ मुखमुपस्पृशति ॥१३॥ प्रथमं ब्राह्मणम् ॥

1 MSS. except C ( sec. m. ) हार्योजनं. 2 हेदं MSS. 3 समतर्पयं° B, समतर्पय° C. 4 Read °धैनं ? 5 Emended, मूर्ध्नोऽभ्यवर्त MSS. 6 सꣳ-सुश्रावा° MSS. 7 पुरोरुग्मा° MSS. 8 Without accent the MSS. 9 ह्वेषो B. 10 °जिघ्रंति B. 11 भक्षिताः MSS. 12 हि B My. 13 कुर्वंत्युत B.

M. IV. 4. 4

## K. V. 5. 2

तानि वा एतानि नव समिष्टयजूꣳषि जुहोति स यदेतानि नव 1
समिष्टयजूꣳषि जुहोति नव वा अमूर्बहिष्पवमाने स्तोत्रिया भवन्ति[1] नवैतानि तदुभयत एवैतद्विराजं न्यूनां करोति प्रजननाय न्यूनाद्धीमाः प्रजाः प्रजायन्त उभयतो वै न्यूनात्प्रजापतिः प्रजाः ससृज इतश्चोर्ध्वा इतश्चावाचीस्तथो वा एष एतदुभयतो न्यूनात्प्रजाः सृजत इतश्चोर्ध्वा इतश्चावाचीस्तस्मादेतानि नव समिष्टयजूꣳषि जुहोति ॥१॥

तद्धिंकारो दशमः[2] स्तोत्रियाणाꣳ स्वाहाकार एतेषां दशमस्तदन्यूना विराड् 2.3
दशिनी[3] भवति या उ वा एतेन यज्ञेन देवता ह्वयति याभ्य एष यज्ञस्तायते सर्वा

वै ता एतत्समिष्टा भवन्ति स यत्तासु सर्वासु समिष्टास्वथ जुहोति तस्मात्समिष्टयजू षीत्याख्यायन्ते ॥२॥

4-6 अथ यद्धेव समिष्टयजूꣳषि जुहोति रिरिचान इव वा एष एतद्भव यदीजानो यद्ध्यस्य स्वं भवति ततो हि ददाति[४] स यानि त्रीणि प्रथमानि जुहो यजमानमेवैतै रिरिचानं पुनराप्याययत्यथ यान्युत्तराणि त्रीणि जुहोति या वा एते यज्ञेन देवता ह्वयति याऽभ्य एष यज्ञस्तायत उपासते ह न्वै ता इमानि नै समिष्टयजूꣳषि न[५] जुह्वतीमानि[५] नो होष्यन्तीति ता एवैतैर्व्यवर्जति यत्रासां चर तदन्वथ यान्युत्तराणि त्रीणि जुहोति यमेवैतद्यज्ञमतत[६] यमजीजनत[८] तमेवैतैः[७] प्रतिष्ठा पयति यत्रास्य प्रतिष्ठा तत्तस्माद्वाव समिष्टयजूꣳषि जुहोति ॥३॥

7 स जुहोति समिन्द्र णो मनसा नेषि गोभिरिति तन्मनसा रिरिचानम प्याययति यदाह समिन्द्र णो मनसा नेषीति गोभिरिति तद्गोभी रिरिचानम प्याययति सꣳ सूरिभिर्मघवन्त्सꣳ स्वस्त्या । सं ब्रह्मणा देवकृतं यदस्तीति तद्ब्रह्मणा रिरिचानमाप्याययति सं देवानाꣳ सुमतौ यज्ञियानाम् ॥४॥

8 सं वर्चसा पयसा सं तनूभिरिति तद्वर्चसा रिरिचानमाप्याययति पय सेति रसो वै पयस्तद्रसेन रिरिचानमाप्याययत्यगन्महि मनसा सꣳ शिवेन । त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम् ॥५॥

9 धाता रातिः सवितेदं जुषन्तां प्रजापतिर्निधिपा देवो अग्निः । त्वष्टा विष्णुः प्रजया सꣳरराणो यजमानाय द्रविणं दधात्वित्येतदाप्याययति यदाह यजमानाय द्रविणं दधात्विति ॥६॥

10 सुगा वो देवाः सदना अकर्म य आजग्मेदꣳ सवनं जुषाणा इति सुगानि वः सदनान्यकर्म य आगन्तेदꣳ सवनं जुषाणा इत्येवैतदाह यदाह य आजग्मेदꣳ सवनं जुषाणा इति भरमाणा वहमाना हवीꣳषीति भरमाणा अह ते यन्ति[८] ये ऽवाहना[९] वहमानास्ते ये वाहनवन्त इत्येवैतदाह यदाह भरमाणा वहमाना हवीꣳषीत्यस्मे धत्त वसवो[१] वसूनीति तदेना[१०] व्यवर्जति यत्रासां चरणं तदनु ॥७॥

11 याꣳ२[११] आवह उशतो देव देवाꣳस्तान्प्रेरय स्वे अग्ने सधस्थ इत्यग्नि वा आहामूं देवतामावहामूमावहेति ता व्यवर्ज स्वां प्रतिष्ठामन्वित्येवैतदाह यदाह तान्प्रेरय स्वे अग्ने सधस्थ इति जक्षिवाꣳसः पपिवाꣳसश्च विश्व इति जक्षिवाꣳसो हि पशुं त्वत्पुरोलाशं त्वद्भवन्ति[१२] पपिवाꣳसः सोमं तस्मादाह जक्षिवाꣳसः

सध्ब विश्व इत्यसुं घर्मं स्वरातिष्ठतान्विति तदेना व्यवर्जति यत्रासां तदनु ॥८॥

वय हि त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह । ऋधगया ऋधगामिष्ठाः प्रजानन्यज्ञमुपयाहि विद्वानित्यग्निमेवैतेन व्यवर्जति[13] यत्रास्य[14] चरणं ॥९॥ 12

देवा गातुविदो[15] गातुमित्वा गातुमितेति व्यवर्जत्येवैतेनार्तेन[16] मनसस्पत इमं यज्ञं स्वाहा वाते धा इत्यवरं स्वाहाकारं करोति परां देवतामयं वाव यो ऽयं पवते तदेतं यज्ञं संभृत्यैतस्मिन्यज्ञे प्रतिष्ठापयति तस्माद्वरं स्वाहाकारं करोति परां देवताम् ॥१०॥ 13

अथ यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छेति यजमानो वै यज्ञपतिस्तदेनं यजमाने प्रतिष्ठापयति स्वां योनिं गच्छ स्वाहेति तदेनं स्वायां योनौ प्रतिष्ठापयत्येष ते यज्ञो यज्ञपते सहसूक्तवाकः[17] सर्ववीरस्तं जुषस्व स्वाहेति तदेनं प्रतिष्ठितमेव सन्तं सर्ववीर्यमन्ततो[18] यजमाने प्रतिष्ठापयति ॥११॥ द्वितीयं ब्राह्मणम् ॥ 14

1 Read भवन्ति ? 2 दशम C O. 3 दशद्शिनी C O. 4 ददति B. 5 न जुह्वतीमानि B, न जुहृतिमानि C. 6 °यज्ञमतन्वत B W. 7 यमजीजनत्तमेवैतैः C W O My, यमजीजनतमेवैतैः B. 8 यंतीयेवाहना MSS. 9 वसवो B W. 10 तदेनां C. 11 याऽ B W, याइ C O, योइ My. 12 °ऋवति MSS. 13 विवर्जति B. 14 यत्रास्य B W O C (orig.), यत्रासां C (sec. m.). 15 गातु° MSS. 16 व्यवर्जत्येवैतेनार्त्तेन (sic) C W, व्यवर्ज्जत्येवैतेनार्त्तेन O, व्यर्जत्येवैतेनार्त्तेन P, ववर्जत्येवैतेनार्त्तेन B. 17 सह° B. 18 Thus O My, सर्ववीर्यमंततो C W, सर्ववीर्यमंततो B.

## K. V. 5. 3

M. IV. 4. 5

स वा अवभृथमभ्यवैति स यदवभृथमभ्यवैति यो वा अस्य रसो ऽभूदापो वा अस्य तमजीजनदथैतच्छरीरमेवास्य तत्र न रसो ऽस्ति तदनु[1] परास्यंत्यो ऽभ्यवहरत्यापो वा अस्य रसस्तदेनमेतेन रसेन संगमयति तदेनमतो जनयति

स उ जात[3] एनं[3] जनयति तस्माद्वा अवभृथमभ्यवैति स यदपो ऽभ्यवैति तस्मादव-
थो नाम ॥१॥

2.3 तद्यदा समिष्टयजूꣳषि जुह्वति समिष्टयजूꣳषि वा अन्तो यज्ञस्याथ यदन्तः
श्रितो भवति तत्सꣳसादयन्ति तत्समादाय चात्वालमुपसमायन्ति स मेखलां
कृष्णविषाणे च चात्वाले प्रास्यति माहिर्भूर्मा पृदाकुरित्यसावहर्जीपस्य स्वगाकारो
यदेनदपो ऽभ्यवहरत्यथैष एतासाꣳ स्वगाकारो यदेनाश्चात्वाले प्रास्यति रज्जुरिव
हि सर्पः कूपो हि सर्पाणां गृहा[4] अथ यदाह माहिर्भूर्मा पृदाकुरित्यास्ति वै विभ्रातृव्यं
मनुष्याणां च सर्पाणां च नेदितस्तत्संभवादिति[5] ॥२॥

4.5 अथ वाचयत्युरुꣳ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ इति
यथासा उरुरभयो ऽनाष्ट्रः सूर्याय पन्था एवमयमस्मा उरुरभयो ऽनाष्ट्रः पन्था असि-
त्येवैतदाहापदे पादा प्रतिधातवे ऽकरिति तथा यद्यप्यपाद्भवति प्रति हैव दधाति
तदेनꣳ सर्वस्मादेनसो वरुण्यात्प्रमुञ्चत्युतापवक्ता हृदयाविधश्चिदिति तद्यदस्य न
हृदयस्थमेनस्तस्मादेनꣳ[6] सर्वस्मात्प्रमुञ्चति ॥३॥

6-9 अथाह साम गायेति साम ब्रूहीति वा गायेति त्वेव ब्रूयाद्गायन्ति
साम स यत्साम गायति नेदस्येदꣳ शरीरं बहिर्धा यज्ञान्नाष्ट्रा रक्षाꣳसि हिनसन्निति
तत्साम्ना नाष्ट्रा रक्षाꣳस्यपसेधति तस्मादाग्नेय्यां गायत्यग्निर्हि[9] रक्षसामपहन्तातिच्छ-
न्दसि गायत्येषा वै सर्वमति यदतिच्छन्दास्तस्मादतिच्छन्दसि गायत्यहावो हाव इति
गायति[10] नाष्ट्रा एवैतद्रक्षाꣳस्यपसेधति ते ऽग्रेणाग्नीध्रं[11] जघनेन चात्वालमेतेनोदञ्चो
यन्त्येषा हि यज्ञस्य द्वाः ॥४॥

10.11 ते यां दिशमापो भवन्ति तद्यन्ति स यः स्यन्दमानानाꣳ स्थावरो ह्रदस्त-
स्तमभ्यवेयादेता वै वरुणगृहीता आपो याः स्यन्दमानानां[12] न स्यन्दन्ते वरुण्यो
अवभृथस्तस्मात्ता अभ्यवेयाद्यदु[13] ता न विन्देदपि या[14] एव काश्चापो[15] ऽभ्य-
यात्तमपो ऽभ्यवक्रमयति नमो वरुणायाभिष्ठितो वरुणस्य पाश इति तथैनं वरुणस्य
पाशो न गृह्णाति ॥५॥

12.13 अथ खलु समिधं प्रास्य चतुर्गृहीतमाज्यं गृहीत्वा जुहोत्यग्नेरनीकम्
आविवेशापां नपात्प्रतिरक्षन्नसुर्यम्[16] । दमे दमे समिधं यक्ष्यग्ने प्रति ते जिह्वा
घृतमुच्चरण्यत्स्वाहेत्यग्नेर्ह वै यावद्वा[18] यावद्वा[18] देवा अप्सु प्रवेशयां चक्रुर्नेदिह
नाष्ट्रा रक्षाꣳस्युपोत्तिष्ठानिति तदेवैतया च समिधा यामेतां प्रास्यत्येतया चाहुत्या

समिद्धे देवेभ्यो जुहवामेति[8] ॥६॥

14 अथापरं चतुर्गृहीतमाज्यं गृहीत्वाश्राव्याह समिधो यजेति सो ऽपबर्हिः प्रयाजान्यजति प्रजा वै बर्हिर्वरुण्यो ऽवभृथो नेत्प्रजा वरुणो गृह्णादिति अपबर्हिषश्चतुरः प्रयाजान्यजति ॥७॥

15 अथाह वरुणायानुब्रूहीति स एष वारुण एककपालः पुरोलाशो भवति स एष वारुण एककपालः पुरोलाशो भवति यो वा अस्य रसो ऽभूदाहुतिभ्यो तस्य तमजीजनदथैतच्छरीरमेवास्य तत्र न रसो ऽस्ति रस उ वा एष यत्पुरोलाशस्तदस्मिन्नेतꣳ रसं दधाति तदेनमतो जनयति स उ जात[10] एनं[10] जनयति तस्मादेष वारुण एककपालः पुरोलाशो भवति ॥८॥

16 उपस्तृणीत आज्यमथास्य पुरोलाशस्य द्विरवद्यति तत्र हाप्येक ऋजीषस्य अवद्यन्ति तदु तथा न कुर्यान्न वा एतदलमाहुतये न ह्यत्र रसो ऽस्ति तस्मादृजीषस्य नावद्येदभिघार्य प्रत्यनक्त्यवदाने आश्राव्याह वरुणं यजेति वषट्कृते जुहोति ॥९॥

17 अथाहाग्नीवरुणाभ्यामनुब्रूहीति तत्स्विष्टकृद्भाजनꣳ स यदग्नय इत्येव नाह नेद्यो वा अवभृथो नेदग्निं वरुणो गृह्णादिति तस्मादग्नय इत्येव[11] नाह[11] ॥१०॥

उपस्तृणीत आज्यमथेमꣳ सकृदेव सर्वमवदधाति स यदीतरत्रर्जीषस्य[12] अवद्येत्सकृदत्रावद्येद्यद्यु न किम्वाद्रियेत द्विरभिघार्याश्राव्याहाग्नीवरुणौ यजेति वषट्कृते जुहोति ॥११॥

18.19 ता वा एताः षलाहुतीर्जुहोति षड्वा ऋतवः संवत्सरस्य संवत्सरो वै वरुणस्तस्मादेताः षलाहुतीर्जुहोति तदेकमेव जुहुयाद्यावदस्य वशः स्यादादित्यानाꣳ अयनमादित्यानीमानि यजूꣳषीति ह्याहुर्यदि त्वेनं यजमानो ब्रूयादथेतरथा जुहुयादेनेवापबर्हिषश्चतुरः प्रयाजानथाज्यभागावथ वरुणायाथाग्नीवरुणाभ्यामथापबर्हिषौ अनुयाजौ तदु दश दशाक्षरा वै विराड्विरालु वै यज्ञो विराजमेवैतद्यज्ञमभिसंपादयत्येतदङ्गिरसामयनम् ॥१२॥

20 अतो[13] ऽन्यतरथा हुत्वा यस्मिन्कलश[14] ऋजीषं भवति तदादाय तदभ्यवेत्योपमारयति समुद्रे ते हृदयमप्स्वन्तरित्यापो वै समुद्र आपो वा अस्य रसस्तस्मादाह समुद्रे ते हृदयमप्स्वन्तरिति सं त्वा विशन्त्वोषधीरुताप इति तदेनमद्भ्यश्चौषधिभ्यश्च[15] सꣳसृजत्येतेनोभयेन रसेन यज्ञस्य त्वा यज्ञपते सूक्तोक्तौ नमोवाके

विधेम यत्स्वाहेति तद्यदेव यज्ञस्य साधु तेनैनꣳ संगमयति ॥१३॥

21 अथानुसृज्योपतिष्ठते देवीराप एष वो गर्भस्तꣳ सुप्रीतꣳ सुभृतं बिभृ त्यक्र्य एवैनमेतत्परिददाति देव सोमैष ते लोक इत्यापो वा अस्य रसस्तस्मा देव सोमैष ते लोक इति परि च वक्षि शं च वक्षीति परि च नो गोपाय शं च एधीत्येवैतदाह ॥१४॥

22.23 अथ पुनरभिमृश्य जपत्यवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः[26]। अ देवैर्देवकृतमेनो ऽयासिषमित्यव[27] ह्येतद्देवैर्देवकृतमेनो याति सोमेन राज्ञाव मर्त्यै र्त्यंकृतमित्यव[28] ह्येतन्मर्त्यैर्मर्त्यकृतमेनो[29] याति पशुना त्वत्पुरोलाशेन त्वत्पुरुराव्णो देव रिषस्पाहीति सर्वाभ्यो मार्तिभ्यो गोपायेत्येवैतदाह स्नात्वान्ये वाससी परिधाय देतः स यथाहिस्त्वचो निर्मुच्येतैवं वरुण्यात्सर्वस्मात्पाप्मनो निर्मुच्योदैति[31] तस्मि नैनः परिशिष्यते यावच्चन कुमारे[32] ऽहति तस्मिन्वै न[33] किं चनैनो यः कुमारो ऽदन्न गृहानेत्य समिधमभ्यादधाति देवानाꣳ समिदसीति[34] यजमानमेवैतया समिन्द्धे स यजमानो देवानामनु समिद्धिꣳ समिध्यते ॥१५॥ तृतीयं ब्राह्मणम् ॥

1 Thus MSS. Read either तदनुपरास्यं or rather तदु न परास्यं. 2 तदपो B, तदपो W. 3 जात एनं B W. 4 अहा MSS. 5 °दिति MSS. 6 Emended; ददाति MSS. 7 तद्यदपि MSS. 8 हृदय° MSS. 9 गायंत्य° B. 10 गायति MSS. 11 °अं B. 12 °माना B W. 13 °यायसु C O W, °यायणु B, °यायदु My. 14 या MSS. 15 काश्चापो B. 16 °सूर्य B C. 17 जुह्वा B W My. 18 यावद्वा यावद्वा B W O, यावद्वा यावद्वा C. 19 °मेति MSS. 20 जात एनं B O, जात एनं C, जात एनं W. 21 इत्येव नाह B, इत्येव नाह W. 22 यदीतर ऋजीषस्य B W, यदीतरत्रर्जीषस्य My. 23 अथो W B My. 24 °कलश MSS. 25 °धीभ्यश्च B W. 26 °ण C O My W. 27 याशिषमि° C O; °स्येव B W. 28 °स्येव B W. 29 ह्येतंतन्मर्त्यै° B W My. 30 त्व-

पुरुराण्णो B, त्वष्टु॰ W. 31 Thus accented MSS. Read निर्मुच्योदैति ? 32 कुमारो MSS. 33 नः MSS. 34 समिदसीति MSS.

K. V. 5. 4 M. IV. 5. 1

स वा एतेनोदयनीयेनादित्येन चरुणा प्रचरति स यदेतेनोदयनीयेनादित्येन चरुणा प्रचरति यद्वैनामदो[1] देवा अब्रुवꣳस्तवैव प्रायणीयं तवोदयनीयमिति अमावास्या एतद्भागं कल्पयति स यत्तत्रोपप्रैष्यन्राजानं[2] क्रेष्यन्नेनेन[3] यजते तस्मात्तत्र[4] प्रायणीयो नामाथ यदत्रावभृथादुदेत्यैनेन यजते तस्मादत्रोदयनीयो नाम तदेतसमानमेव ॥१॥ 1.2

स पथ्याꣳ स्वस्तिं तत्र प्रथमां यजति वाग्वै पथ्या स्वस्तिस्तदप्रज्ञायमाने[5] वाचा प्रत्यपद्यन्ताथात्र[6] प्रज्ञाते[7] यथापूर्वं करोत्यग्निमेव प्रथमं यजत्यग्निर्हि देवतानां मुखमथ सोममथ सवितारमथ पथ्याꣳ स्वस्तिमथादितिं वाग्वै पथ्या स्वस्तिरियमदितिरस्यामेवैनमेतत्प्रतिष्ठायां वाचं प्रतिष्ठापयति सेयमस्यां प्रतिष्ठिता वाग्वदति ॥२॥ 3.4

अथैतामनुबन्ध्यां मैत्रावरुणीं वशामालभते स एषो ऽन्य एव यज्ञस्तायते पशुबन्धः समिष्टयजूꣳषि ह्यवान्तो यज्ञस्य स यदेतां मैत्रावरुणीं वशामालभते यद्ध वै स्विष्टमीजानस्य मित्रो ऽह्यास्य[8] तद्गृह्णात्यथ यद्दुरिष्टं तद्वरुणो ऽथ केजानो ऽभूदित्याहुः स यदस्य स्विष्टं मित्रो गृह्णाति तदस्मा एतेन प्रीतः पुनः प्रत्यवर्जत्यथ[9] यद्दुरिष्टं वरुणस्तदेतेन च स्विष्टं कुरुते प्रीतश्चास्मै प्रत्यवर्जति तथास्यैष स्व एव यज्ञः समृद्धो भवति स्वꣳ सुकृतम् ॥३॥ 5-7

स यदत्र वशैवावक्लृप्ततमा[10] यत्र वा अदो[11] देवा रेतः सिक्तं प्राजनयꣳस्तद्यदङ्गारा[12] अभवꣳस्ततो ऽङ्गिरसः समभवꣳस्तदनु पशवः प्राजायन्त तद्यदासाः पाꣳसवो ऽभवꣳस्ततो गर्दभः समभवत्तस्माद्यत्रासाः पाꣳसवो गर्दभस्थानमिति[13] तदाचक्षते[13] ऽथ यदा नैव कश्चन रसः पर्यशिष्यत[14] ततो वशा समभवत्तस्माद्वशा[15] न प्रजायते[15] रसाद्धि रेतः संभवति[16] रेतसो हीमाः प्रजाः प्रजायन्ते सा यदन्ततः समभवत्तस्मादन्तं यज्ञस्यानुवर्तते तस्मादत्र वशैवावक्लृप्ततमा[16] यदि वशां न विन्देदप्युक्षवशामालभेत तदु विश्वे देवा मरीमृशां चक्रिरे ततो द्वितीया वैश्वदेवी समभवदथ बार्हस्पत्या सो[18] ऽन्तो[18] ऽन्तो[18] हि बृहस्पतिः ॥४॥ 8-10

स यः सहस्रं वा दद्याद्भूयो वा स एताः सर्वा आलभेत सर्वं वै तस्यात्तं 11

भवति यो बहु ददाति सहस्रं वा भूयो वा तस्मादेताः सर्वाः[19] स आलभेत[19] ॥५॥

12 अथो ये दीर्घसत्त्रमासीरन्त्संवत्सरं वा भूयो वा त एताः सर्वा आलभेरन्त्सर्वं वै तेषामाप्तं भवति ये दीर्घसत्त्रमासते संवत्सरं वा भूयो वा तस्मादेताः सर्वास्त आलभेरन् ॥६॥

13-16 अथैतयोदवसानीययाग्नेय्येष्ट्या यजते तत्पञ्चकपालं पुरोलाशं निर्वपति तस्य पञ्चपदाः पङ्क्तयो याज्यानुवाक्या भवन्ति ॥७॥

स यदेतयोदवसानीययाग्नेय्येष्ट्या यजते यातयामेव वा एतस्य यज्ञो भवति यदीजानस्य सो ऽस्मात्पराङिव भवत्यग्निरु[20] वै यज्ञो ऽग्नौ हि सर्वान्यज्ञाꣳस्तन्वते तत्पुनर्यज्ञमारभते[21] तथास्यायातयामा यज्ञो भवति तथास्मान्न[22] पराङ्[22] भवत्यथ यत्पञ्चकपालः पुरोलाशः पञ्चपदाः पङ्क्तयो याज्यानुवाक्याः पाङ्क्तो हि यज्ञस्तद्धेव[23] यज्ञमारभते तथास्यायातयामा यज्ञो भवति तथास्मान्न[24] पराङ् भवति तस्य हिरण्यं दक्षिणाग्नेयो ह्येष यज्ञो ऽग्नेर्हि रेतो हिरण्यमनड्वान्वानड्वान्हि वहसाग्नेयो[25] ऽग्न्यवदग्धमिव[25] ह्यनलुहो वहो भवत्यथो अप्याहुतिमेव जुहुयाच्चतुर्गृहीतमाज्यं गृहीत्वा वैष्णव्यर्चोरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्र प्र यज्ञपतिं तिर स्वाहेति यज्ञो वै विष्णुस्तत्पुनर्यज्ञमारभते[26] तथास्यायातयामा यज्ञो भवति तथास्मान्न पराङ् भवति तत्र यच्छक्नुयात्तद्दद्यादथ यावद्रात्र एव कियद्रात्रे[27] चोदवस्येत्तर्ह्येवाग्निहोत्रं जुहुयात्स सायꣳहोमः काल उ एव प्रातर्होमः ॥८॥ चतुर्थं ब्राह्मणम् ॥ पञ्चमो ऽध्यायः ॥

1 See IV. 2. 3. 3. 2 °प्रेष्य° B W. 3 प्रैष्यन्नैनेन B W, क्रेष्यन्नैनेन C O My. 4 तस्मादत्र B W. 5 स्वस्तिस्तदयप्रजायमाने B. 6 Thus O C (sec. m.) My; प्रत्यपदंताथात B, प्रत्यपत्यंताथात्र C (pr. m.). 7 प्रज्ञायते B My W. 8 हास्य B. 9 प्रत्यवर्जयत्यथ B. 10 वशैवाव° MSS. 11 See II. 7. 2. 2. 12 °द्यदांगारा MSS. 13 °नमित्याचक्षते B. 14 °शिष्येत MSS. 15 °द्वशानुप्रजायंते MSS. 16 संभवति MSS. 17 वशैवाव° MSS. 18 सोंततो C. 19 सर्वा स आलभते B. 20 भवत्य° MSS. 21 तत्पुन-

र्यज्ञमा° B W. 22 तथास्मान्न पराङ् C O My, तथोस्मान्न पराङ् B. 23 यज्ञस्तेष्वेव B. 24 तथोस्मान्न B W. 25 °ग्नेयोग्न्यवदग्ध° MSS. Cp. I. 2. 3. 23, II. 1. 2. 9. 26 Thus accented MSS. 27 कियद्रात्रे B, कियद्रात्रे C O W.

K. V. 6. 1 M. IV. 5. 3

इन्द्रो ह वाव षोळशी तं नु सकृदिन्द्रं भूतान्यत्यरिच्यन्तेत्याहुः[1] प्रजा वै भूतानि तानि हैनेन सदृग्भावमिवासुः ॥१॥ 1

स हेन्द्र ईक्षां चक्रे कथं न्वहमिदꣳ सर्वमतितिष्ठेयमित्यर्वागेव मदन्यत्सर्वꣳ स्यादिति[2] स एतं ग्रहमपश्यत्तमगृह्णीत[3] तत इदꣳ सर्वमत्यतिष्ठदर्वागेवास्मादन्यत्सर्वमभवन्न हास्मा अन्यत्स्फिगं द्यौः परिबभूव तथेन्नूनं तदास ॥२॥ 2

अथाप्येतदृषिणाभ्यनूक्तं न ते महित्वमनुभूदध[4] द्यौर्यदन्यया स्फिग्या क्षामवस्था इत्येवꣳ ह वा इदꣳ सर्वमतितिष्ठत्यर्वागेवास्मादन्यत्सर्वं भवति यस्यैवं विदुष एतं गृह्णन्ति[5] ॥३॥ 3

तं वै हरिवत्या गृह्णाति हरिवतीषु स्तुवते हरिवत्यो ऽनुशस्यन्ते[6] वीर्यं वै हर एतेनेन्द्रः सपत्नानाꣳ समवृङ्क्तथो[7] वा एष एतद्वीर्यꣳ हर एतेनेष्ट्वा सपत्नानाꣳ संवृङ्क्ते तस्मादेनꣳ हरिवत्या गृह्णाति हरिवतीषु स्तुवते हरिवत्यो ऽनुशस्यन्ते ॥४॥ 4

अनुष्टुभा गृह्णाति गायत्रं वै प्रातःसवनं त्रैष्टुभं माध्यंदिनꣳ सवनं जागतं तृतीयसवनमथातिरिक्तानुष्टुबतिरेचयत्येवैनं तया ॥५॥ 5

चतुःस्रक्तिना पात्रेण गृह्णाति त्रयो वा इमे लोकास्ताꣳस्तिसृभिः स्रक्तिभिराप्नोत्यथ या चतुर्थ्यतिरेचयत्येवैनं[8] तया ॥६॥ 6

स प्रातःसवने गृहीत[9] एतस्मात्कालादुपशेते[9] तत्सर्वाणि सवनान्यतिरिच्यते अतिरेचयत्येवैनं तेनाथो अप्याहुस्तृतीयसवन एवैनं गृह्णीयादित्याग्रयणमेव गृहीत्वाथैतमथोक्थ्यमित्युक्थान्यु[10] तर्ह्यभ्यतिरिच्यत इत्युपाकरिष्यन्नेव पूतभृतो गृह्णीयादित्यप्याहुः[11] सैषा मीमाꣳसैव प्रातःसवने त्वेवैनं गृह्णाति ॥७॥ 7.8

स गृह्णाति युक्ष्वा हि केशिना हरी[12] इति वातिष्ठ वृत्रहन्रथमिति वोपयामगृहीतो ऽसीन्द्राय त्वा षोळशिन एष ते योनिरिन्द्राय त्वा षोळशिन इति सादयति 9-11

सादयित्वा स्तोत्रमुपाकरोत्युपावर्तध्वꣳ सोमो ऽत्यरेचीत्यतिरेचयत्येवैनं तेन ॥८॥
प्रथमं ब्राह्मणम् ॥

1 भूतान्य° MSS. 2 Emended; स्यामिति MSS. 3 MSS. except Or °मगृह्णत. 4 महित्वमनुभूदथ B W C My, महित्वमनुभूदध O (in the margin ध is changed into थ), °भूदध्व P; Or reads° दध. 5 गृह्णाति C (orig.), गृह्णाति B My W. 6 नुशस्यते B, नुशुष्यते C O. 7 Thus B W O (pr. m.) Or, समवृंजततथो C O (sec. m.) My. 8 चतुर्थ्यति° MSS. 9 गृहीत एत° B W My. 10 गृहीत्वाथैत° C (sec. m.) Or, °थैन° the other MSS.; °त्युक्थान्यु My, °त्युत्कान्यु B W, °त्युक्थ्यान्यु C O Or. 11 Thus O Or, °दित्यय्याहुः C, °त्यथाहुः W, °त्यथाहुः B My. 12 Thus MSS.

M. IV. 5. 4

K. V. 6. 2

1.2 सर्वे ह वा अग्रे सदृशा एव देवा आसुस्तेषाꣳ सर्वेषाꣳ सदृशानाꣳ सतामिमे[1] ऽकामयन्ताग्निरिन्द्रो यो ऽसौ तपत्यतिष्ठावान इव स्यामेति त एतान्ग्रहानपश्यꣳस्तानत्यगृह्णत[2] तद्यदेनानत्यगृह्णत[3] तस्माद्तिग्राह्या नाम ते सर्वेषाꣳ सदृशानां पुण्यानाꣳ सतां देवानामतिष्ठावान इवाभवन्नतिष्ठावेव ह वै भवति यस्यैवं विदुष एतान्गृह्णन्ति[4] ॥१॥

3 नो ह वा इदमग्नावासाग्रे वर्चो यदस्मिन्निदं वर्चः[5] सो[5] ऽकामयतेदं[5] मयि[5] वर्चः स्यादिति स एतं ग्रहमपश्यत्तमत्यगृह्णीत[6] ततो ऽस्मिन्नेतद्वर्चो ऽभवत्[7] ॥२॥

4 नो हैवैतदिन्द्र ओज आस यदस्मिन्नेतदोजः सो ऽकामयतेदं मय्योजः स्यादिति स एतं ग्रहमपश्यत्तमत्यगृह्णीत[6] ततो ऽस्मिन्नेतदोजो ऽभवत्[7] ॥३॥

5 नो हैवैतत्सूर्ये भ्राज आस यदस्मिन्नेतद्भ्राजो येनैतत्तपति सो ऽकामयतेदं[8] मयि[8] भ्राजः स्यादिति स एतं ग्रहमपश्यत्तमत्यगृह्णीत[6] ततो ऽस्मिन्नेतद्भ्राजो ऽभवदेतानि हैव वीर्याण्यात्मनि धत्ते यस्यैवं विदुष एतान्गृह्णन्ति ॥४॥

6.7 तान्वा आग्रयणमेव गृहीत्वाथैतान्गृह्णात्यात्मा वा आग्रयण आत्मनि वा

वह्नतिरिक्तं क्लोमह्वदयं त्वद्यत्त्वत्तस्मादाग्रयणमेव गृहीत्वाथैतान्गृह्णात्यथो अप्युक्थ्यमेव[13] गृहीत्वाथैतान्गृह्णीयादित्याहुरय॑ ह्यनिरुक्तः प्राण उक्थ्य इत्यात्मा ग्रयणमनिरुक्तः प्राण इति तस्मादुक्थ्यमेव गृहीत्वाथैतान्गृह्णीयादित्याग्रयणं[11] त्वेव[11] गृहीत्वाथैतान्गृह्णाति ॥५॥

ते माहेन्द्रस्यैवानु होम॑ ह्रूयन्त एष वा इन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रो यस्यैतन्निष्केवल्यमेव स्तोत्रं निष्केवल्य॑ शस्त्रमिन्द्रो वै यजमानो यजमानस्य वा कामाय गृह्यन्ते तस्मान्माहेन्द्रस्यैवानु होम॑ ह्रूयन्ते ॥६॥ 8

स गृह्णात्यग्न आयू॑षि पवस आसुवोर्जमिषं च नः। आरे बाधस्व[12] दुच्छुनाम् ॥ उपयामगृहीतो ऽस्यग्नये त्वा वर्चस एष ते योनिरग्नये त्वा वर्चस इति सादयति[13] ॥७॥ 9

उत्तिष्ठन्नोजसा[14] सह पीत्वी शिप्रे अवेपयः। सोममिन्द्र चमू सुतम् ॥ उपयामगृहीतो ऽसीन्द्राय त्वौजस एष ते योनिरिन्द्राय त्वौजस इति सादयति ॥८॥ 10

अदृश्रमस्य केतवो वि रश्मयो जनां३[15] अनु। भ्राजन्तो अग्नयो यथा ॥ उपयामगृहीतो ऽसि सूर्याय त्वा भ्राज एष ते योनिः सूर्याय त्वा भ्राज इति सादयति ॥९॥ 11

तान्भक्षयत्यग्ने वर्चस्वन्निति वर्चस्वा॑स्त्वं देवेष्वसि[16]। वर्चस्वानहं मनुष्येषु भूयासमिति[17] ॥१०॥ 12

अथैन्द्रमिन्द्रौजस्वन्नित्योजस्वा॑स्त्वं देवेष्वसि[16] । ओजस्वानहं मनुष्येषु भूयासमिति[17] ॥११॥

अथ सौर्य॑ सूर्य भ्राजस्वन्निति[18] भ्राजस्वा॑स्त्वं देवेष्वसि । भ्राजस्वानहं मनुष्येषु भूयासमिति ॥१२॥

ते वा एते पृष्ठ्ये षलहे गृह्यन्ते तान्पूर्वस्मि॑स्त्र्यहे गृह्णीयादाग्नेयमेव[19] प्रथमे ऽहन्यैन्द्रं द्वितीये ऽहनि सौर्यं तृतीये ऽहन्येवं त्र्यहमन्वहं तानु ह चरका उत्तरे त्र्यहे गृह्णन्ति पूर्वस्मि॑स्त्वेव[20] त्र्यहे[20] गृह्णीयाद्यद्यु कामयेताप्युत्तरे त्र्यहे गृह्णीयाद्विश्वजित्यु सर्वपृष्ठे सर्व एकाहं गृह्यन्ते ॥१३॥ द्वितीयं ब्राह्मणम् ॥ 13.14

1 सतामिमे B W Or, समानिमे C O My.
2 °ग्रहानपश्य° B. 3 तद्यदेता° MSS. except Or.
4 एतान्गृह्णंति C (sec. m.) O, एतान्गृह्णाति W,

एतान्गृह्णाति C (orig.), एतान्गृह्णाति B, एतान् गृह्णन्ति Or. 5 वर्च: सो कामयतेदं मयि MSS. 6 ग्रहमपश्य° B. 7 भवत् MSS. 8 कामयतेदं मयि B, कामयतेदं मयि C O. 9 ग्रहमपश्य° B C. 10 अप्युक्थ्य° MSS. 11 °ग्रयणमेव B W. 12 वा° B. 13 °यति C. 14 उत्तिष्ठ° B C. 15 जनांऽ B W. 16 °ष्वसि B C. 17 °समिति MSS. 18 भ्राज° MSS. 19 गृह्णीया° C O B. 20 पूर्वस्मिꣳस्त्र्यहे B W, पूर्वस्मिꣳस्त्वेव त्र्यहे C O My Or.

M. IV. 5. 6 K. V. 6. 3

1 स[1] वै[1] यदैतमाश्विनं[1] ग्रहं गृह्णात्यथावकाशान्वाचयति प्राणा वा अवकाशाः प्राणानेवास्मिन्नेतद्दधात्येष वात्र प्रजापतिर्यज्ञो य एष तायत एतस्मादेवेमाः प्रजाः प्रजाता एतमेवानु प्रजायन्ते ऽप्येतर्हि तदेतं प्रजापतिं यज्ञं कृत्स्नꣳ सꣳस्कृत्य तं परिगृह्य तमात्मनि कुरुते तमात्मनि धत्ते तस्माद्वा अवकाशान्वाचयति ॥१॥

2.3 स वाचयति प्राणाय मे वर्चोदा[1] वर्चसे[1] पवस्वेत्युपाꣳशुं[1] व्यानाय मे वर्चोदा[2] वर्चसे[2] पवस्वेत्युपाꣳशुसवनमुदानाय मे वर्चोदा[2] वर्चसे[2] पवस्वेत्यन्तर्यामं वाचे मे वर्चोदा[2] वर्चसे[2] पवस्वेत्यैन्द्रवायवं क्रतूदक्षाभ्यां मे वर्चोदा[3] वर्चसे[3] पवस्वेति मैत्रावरुणꣳ श्रोत्राय मे वर्चोदा[3] वर्चसे[3] पवस्वेत्याश्विनं चक्षुर्भ्यां मे वर्चोदसौ[4] वर्चसे पवेथामिति शुक्रामन्थिनावात्मने मे वर्चोदा[2] वर्चसे[2] पवस्वेत्याग्रयणमोजसे मे वर्चोदा[5] वर्चसे[5] पवस्वेत्युक्थ्यमायुषे मे वर्चोदा वर्चसे पवस्वेति ध्रुवं विश्वाभ्यो मे प्रजाभ्यो वर्चोदसौ[6] वर्चसे पवेथामित्याधवनीयं च पूतभृतं च ॥२॥

4.5 अथ द्रोणकलशमुपतिष्ठते को ऽसि कतमो ऽसीति प्रजापतिर्वै कः प्रजापतिर्वै द्रोणकलशस्तस्मादाह को ऽसि कतमो ऽसीति कस्यासि को नामासीति प्रजापतिर्वै कः प्रजापतिर्वै द्रोणकलशस्तस्मादाह कस्यासि को नामासीति यस्य ते नामामन्महि यं त्वा सोमेनातीतृपामेति नाम ह्यस्य मनुते[7] सोमेन ह्येनं तर्पयति सुप्रजाः प्रजया भूयासमिति तत्प्रजामाशास्ते सुवीरो[8] वीरैरिति[8] तद्वीरानाशास्ते

पोषैरिति[9] तत्पुष्टिमाशास्ते एवमेतं प्रजापतिं यज्ञं कृत्स्नꣳ सꣳस्कृत्य तं गृह्य तमात्मनि कुरुते तमात्मनि धत्ते तान्वा एतान्न सर्वमिव वाचयेत्सर्वꣳ ह्येत शिषो नेत्सर्वस्येव सर्वं करवाणीति यो न्वेव ज्ञातस्तं वाचयेदथ यो ऽनूचानः थो यो ऽस्य प्रियः स्यान्न[10] त्वेव सर्वमिव ॥३॥ तृतीयं ब्राह्मणम् ॥

1 स वै यदेत° B W C. 2 वर्चोदा वर्चसे B, वर्चोदा वर्चसे C. 3 °शु C. 4 वर्चोदसौ B. 5 वर्चोदा वर्चसे B. 6 वर्चोदसौ B. 7 Thus accented MSS. 8 सुवीरो वीरैरिति C, सुवीरो वीरैरिति B. 9 पोषैरिति C. 10 स्यान्ने MSS.

K. V. 6. 4 M. IV. 5. 2[1]

स वै यदेतां वपामुत्खिदन्त्यथ[1] शमितारमाह योनिं प्रतिमृश्येक्षस्वेति यद्यष्टापदी भवत्यथैतत्कर्म क्रियत एषा प्रायश्चित्तिः स परिवृत्य[2] सक्थिनी च्छाय जनयत्येजतु दशमास्यो गर्भो जरायुणा सहेत्यनाप्तमास्यो वा एष भवति ऽविज्ञातो गर्भो दशमास्यो वै गर्भो जायते[4] तदेनमेतद्दशमास्यमेव कृत्वा जनयति हैजतु दशमास्य इति गर्भो जरायुणा सहेति गर्भो हि जरायुणा सहैति[5] यथायं रेजति यथा समुद्र एजत्येवायं दशमास्यो अस्रज्जरायुणा सहेति तदेनमेतद्दशमा- स्यमेव कृत्वा जनयति ॥१॥

तस्य शिरश्छित्त्वा[6] रसं प्रस्राव्य[7] प्रतिवेशमवदानानाꣳ श्रपयति स यत्र षा प्रचरन्ति तदुपस्तीर्याज्यं द्विरस्य रसस्यावदायाभिघार्य प्रत्यनक्त्यवदाने ॥२॥

स हविषो ऽनु होमं[8] जुहोति यस्यास्ते यज्ञियो गर्भो यस्या योनिर्हिरण्य- य्ययज्ञियो वै गर्भो न हि गर्भेण कश्चन यजते तदस्या एतं यज्ञियं करोति यस्या निर्हिरण्ययीति तदस्या अप्येतमाशयꣳ समर्धयत्यङ्गान्यहुता यस्येति हुताङ्ग इव एष भवति यो ऽनाप्तमास्यो ऽविज्ञातो गर्भस्तदेनमेतदहुताङ्गमेव करोति तं मा समजीगमꣳ स्वाहेति यावद्वै माता च वत्सश्च नाना भवतो नानेवैवाख्यायेते यदा संपद्येते एकेवैवाख्यायते धेनुरिति वैव तथास्यैषो ऽतिरिक्तः नतिरिक्तो भवति ॥३॥

अथ यत्र वनस्पतिं यजति तदुपस्तीर्याज्यꣳ सकृदस्य रसस्यावदाय द्विर- घार्य[9] प्रत्यनक्त्यवदानम् ॥४॥

स स्विष्टकृतो ऽनु होमं जुहोति पुरुदस्मो विषुरूप इन्दुरन्तर्महिमानमानञ्ज धीरः । एकपदीं द्विपदीं त्रिपदीं चतुष्पदीमष्टापदीं भुवनानु प्रथन्ताꣳ स्वाहेति ॥५॥

स यदेवमेतेन प्रचरन्त्येकां वा इदं मन्यमाना आप्रीणन्ति ते द्वे भवतः स नाह तदवकल्पते यदाप्रीतमपास्येदेष उ वै सर्वेषामङ्गानाꣳ रसः संप्रसृतो भवति तथास्याप्येतैरवदानैः प्रचरितं भवत्येतावानु वै यज्ञो यावद्धविश्च स्विष्टकृच्च तत्सर्वमेवैनमेतद्यज्ञमन्वायातयति तथास्यैषो ऽतिरिक्तः सन्ननतिरिक्तो भवति ॥६॥

अष्टापदीं भुवनानु प्रथन्ताꣳ स्वाहेति व्यथते वा एतद्यज्ञो यदतिरिच्यते यज्ञस्य व्यथामनु यजमानो यजमानमनु प्रजा तद्यजमानायैवैतामाशिषमाशास्ते तथा न व्यथते यदाहाष्टापदीं भुवनानु प्रथन्ताꣳ स्वाहेत्यथास्योष्णीषेण वा वल्कलेन[10] वा शिरः प्रतिनह्य व्युह्य पशुश्रपणं तदेनमुपसमादधाति मरुतो[11] यस्य हि क्षये पाथा दिवो विमहसः । स सुगोपातमो जन इत्यामादो वै विशो विशो वै मरुतस्तदेनं मरुत्स्वेव प्रतिष्ठापयत्युतो द्यावापृथिव्यया मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिरित्यतिरिक्तो वा एष न वा इमे द्यावापृथिव्यौ[12] किं चनातिरिच्यते तदेनमनयोर्द्यावापृथिव्योः प्रतिष्ठापयति तथास्यैषो ऽतिरिक्तः सन्ननतिरिक्तो भवति ॥७॥ चतुर्थं ब्राह्मणम् ॥

1 It is impossible to indicate accurately the correspondence of the Kaṇḍikās of the Mādhy. rec. to this Brāhmaṇa. 2 वपामुत्खिदत्यथ MSS. except Or. 3 °वृत्य MSS. B could be read also °वृह्य or °वृज्य; Or probably has °वृह्य. 4 जायते MSS. 5 सहेति B O My W. 6 शिरः छि° B C W O. 7 Thus accented MSS. 8 होमं C O. 9 C O P W My Or insert न. 10 वकलेन C O My, वकळेन Or, वल्कलेन W. 11 मरुतः MSS. 12 °पृथिव्यौ MSS.

M. IV. 5. 8 K. V. 6. 5

1 स वै यत्र त्रिरात्रे सहस्रेण यजते तदप्येताꣳ साहस्रीं कुर्वन्ति[1] तत्प्रथमे ऽहनि त्रीणि च शतानि दक्षिणानां नयन्ति त्रयस्त्रिꣳशतं च तथा द्वितीये ऽहनि

…तृतीये ऽहन्यथैकातिशिष्यते[1] सा या सैकातिशिष्यते ताꣳ[2] साहस्रीं कुर्व-
…॥१॥

2.3 सा त्रिरूपा स्यात्त्रिरात्रो हि भवति तदु[3] यैव रोहिण्युपध्वस्ता[4] सा
…त्साप्रवीता स्याद्वाग्घ्या एषा निदानेन यत्साहस्र्ययातयामा वै वागयातयामो वा
…भवति याप्रवीतानुपाष्टकर्णाकाणाकूटावण्डाश्रोणासप्तशफा[5] सा ह्ययातयामा
…ति ॥२॥

4 तां प्रथमे ऽहनि नयेदेतस्या वा एतद्वाचः प्रजातꣳ सहस्रं यैषा साहस्री
…र्वाहैषेत्यन्वगस्याः प्रजातमथोत्तमे ऽहनि तत्पूर्वमहास्याः प्रजातमेत्यनूच्येषा[6]
…तेनामपि प्रथमे ऽहनि नयेदथास्या[7] उत्तम एवाहनि कर्म ॥३॥

5 तां द्रोणकलशमवघ्रापयत्यग्रेणाग्नीध्रं जघनेन चात्वालमुत्तरेण हविर्धानं
…ो वै द्रोणकलशो यज्ञमेवैनां तद्दर्शयत्यथो रिरिचान इव वा एष एतद्भवति
…सहस्रं ददिवान्यजमानमेवैतद्रिरिचानं[8] पुनराप्याययति ॥४॥

6-9 तां नाभिदधाति वरुण्या हि रज्जुर्वरुणो हैनां गृह्णीयाद्यदभिहिता[9] स्यात्पा-
…त्रैवाभिपद्यानीयावघ्रापयत्याजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः। पुनरूर्जा
…निवर्तस्वेत्येतदाप्याययति यदाह पुनरूर्जा निवर्तस्वेति सा नः सहस्रं धुक्ष्वेत्येतदाप्या-
…यति यदाह सा नः सहस्रं धुक्ष्वेत्युरुधारा पयस्वती पुनर्माविशताद्रयिरित्येतदा-
…प्याययति यदाह पुनर्माविशताद्रयिरिति[10] ॥५॥

10 अथास्या दक्षिणं कर्णमाजपति हव्ये काम्य इळे रन्ते चन्द्रे ज्योते ऽदिते
…रस्वति महि विश्रुति। एता ते अघ्न्ये नामानि देवेषु मा सुकृतं ब्रूतादित्येतानि
…अस्या देवत्रा नामानि तैरेवैनामेतदाहैतानि ते नामानीति देवेषु मा सुकृतं
…ब्रूतादिति[11] ॥६॥

11 अथैनां प्रार्जन्ति[12] सा यदि स्वयं प्राची म्रियेत तद्विद्यात्कल्याणं देवलोकं
…यजमानो ऽजैषीदिति यद्युदीची भोग्यो हैवास्मिन्मानुषे लोके[13] भवति[13] यदि
…प्रतीची भ्यातिल्विलो ह भवति यदि दक्षिणा क्षिप्रꣳ हामुं लोकमेति[14] यजमान
…तदु विज्ञानम् ॥७॥

12 तद्या इमास्तिस्रस्तिस्रो[15] ऽतिशिष्यन्ते तास्त्वेनामुपसंपाद्य मध्ये दशतं[16]
…दशाक्षरा वै विराड्वाग्वै विराट् तामेतद्विवृहति[17] विलिशति यदेनां त्रेधा व्यूहति
…वाचमेवैतत्संदधाति ॥८॥

13 ता[17] होत्रे दद्याद्धोता हि[18] साहस्रो ऽथो द्वा उन्नेतारौ कुर्वीत स यतरो नाश्रावयेत्तस्मा एनां दद्याद् व्यृद्धा वा एषा विराड् या विच्छिन्नापुनःसंहिता[19] व्यृद्ध[20] उ वा एष ऋत्विग्य ऋत्विक्सन्नार्त्विज्यं न करोति व्यृद्ध[20] एवैतद्व्यृद्धं[21] दधाति ॥९॥

16.14 तदु होत्र एव दद्याद्धोता हि साहस्रो ऽथेतरासां न दशतं[22] विच्छिनत्ति ददद्भ्य[23] एकैकां दास्यन्त्स्याद्दशभ्यस्तेभ्यो दश दद्याद्येभ्यो द्वे द्वे पञ्चभ्यस्तेभ्यो दशैवमनुसमीक्षं दशाक्षरा वै विराड्वाग्वै विराट् साहस्रयेषा विराट् समृद्धा कामदुघामुष्मिँल्लोके[24] भवति स न दशां चनाधि सहस्रे दद्यात्साहस्री हि भवति तदु काममेव दद्यात्सहस्रेणाह तं काममाप्नोति[25] यस्तत्र कामो यद्वधि ददाति तद्वस्य भवति ॥१०॥ पञ्चमं ब्राह्मणम् ॥

1 कुर्वति B W O. 2 °शिष्यते MSS. 3 तदू MSS. except B W Or ( तदु ). 4 °ण्युपध्वस्ता MSS. 5 See IV. 3. 1. 14. 6 °नूच्यैषा MSS. except Or. 7 नये° MSS. 8 ददिवान्य° C O W My Or, ददिवाद्य° B. 9 °दभिहिता MSS. 10 °रिति B W C. 11 °दिति B W. 12 प्रावर्जति B W, प्रावर्जन्ति My, 13 °के भवति C O W. 14 लोकमेति MSS. 15 °स्तिस्रस्तिस्रो MSS. 16 दशशतं B, दशशतं W, थशतं Or. 17 °बृहति C. 18 हि B W O. 19 ? विछिन्नापुनःसंहिता MSS. 20 व्यृद्ध MSS. 21 °तद्व्यृद्धं C ( sec. m. ), °तद्व्यृद्धिं the other MSS. 22 दशशतं B W. 23 दद° MSS. 24 कामदुषा° B W O. 25 Read काममाप्नोति ?

M. IV. 5. 9

## K. V. 6. 6

1 स वै यत्रैतेन व्यूळ्हच्छन्दसा द्वादशाहेन याजयन्ति तदप्येतान्ग्रहान्व्यूहति तत्प्रथमे ऽयह ऐन्द्रवायवाग्रानेव[1] ग्रहान्गृह्णाति प्रज्ञातानेव ॥१॥

2.3 अथ चतुर्थे ऽहन्याग्रयणाग्रान्गृह्णाति प्राजापत्यं वा एतदहर्यच्चतुर्थमात्मा वा

…ण आत्मो वै प्रजापतिस्तस्मादाग्रयणाग्रान्गृह्णाति तं न सादयत्यन्यस्मा एव …थेतरान्ग्रहान्गृहीत्वा यैवास्य वेला भवति तदेनꣳ हिंकृत्य सादयति ॥२॥

अथ पञ्चमे ऽहन्यैन्द्रवायवाग्रानेव[1] ग्रहान्गृह्णाति प्रज्ञातानेव ॥३॥ 4.5

अथ षष्ठे ऽहनि शुक्राग्रान्गृह्णात्यैन्द्रं वा एतदहर्यत्षष्ठमेष वाव शुक्रो …ष तपत्येष उ वा इन्द्रस्तस्माच्छुक्राग्रान्गृह्णाति तं न सादयत्यन्यस्मा एव …थेतरान्ग्रहान्गृहीत्वा यैवास्य वेला भवति तदेनꣳ सादयति ॥४॥

अथ सप्तमे ऽहनि शुक्राग्रानेव गृह्णाति बार्हतं[3] वा एतदहर्यत्सप्तममेष 6.7 शुक्रो य एष तपत्येतदु वाव बृहत्तस्माच्छुक्राग्रान्गृह्णाति तं न सादयत्यन्यस्मा …दायाथेतरान्ग्रहान्गृहीत्वा यैवास्य वेला भवति तदेनꣳ सादयति ॥५॥

अथाष्टमे ऽहन्यैन्द्रवायवाग्रानेव[4] ग्रहान्गृह्णाति प्रज्ञातानेव ॥६॥

अथ नवमे ऽहन्याग्रयणाग्रान्गृह्णाति वैश्वदेवं वा एतदहर्यन्नवममात्मा 8.9 …ग्रयण आत्मो वै प्रजापतिः सर्वमु वा आत्मा सर्वमु वै विश्वे देवास्तस्मा- …यणाग्रान्गृह्णाति तं न सादयत्यन्यस्मा एव प्रदायाथेतरान्ग्रहान्गृहीत्वा यैवास्य …भवति तदेनꣳ हिंकृत्य सादयति ॥७॥

अथोत्तमे त्र्यह ऐन्द्रवायवाग्रानेव[2] ग्रहान्गृह्णाति प्रज्ञातानेवैवमेतान्ग्रहा- …ति ॥८॥

तदाहुर्न व्यूहेद्ग्रहानिति प्राणा वै ग्रहा नेत्प्राणान्त्संलोभयानीति तदु 10-13 …वाङ्गानि वा अस्यैते यद्ग्रहा व्यत्यासं वा अयं पुरुषो ऽङ्गानि शेते तस्माद्व्यू- …तदु[5] नैव[5] व्यूहेत्प्राणा वै ग्रहा नेत्प्राणान्त्संलोभयानीत्यत्र वा एते व्यूल्हा …ऐन्द्रवायवाग्रान्प्रातःसवने गृह्णाति शुक्राग्रान्माध्यंदिने सवन आग्रयणाग्राꣳस्- …तीयसवने तदेवैते व्यूल्हा भवन्ति[6] तस्मान्नैव व्यूहेत् ॥९॥ षष्ठं ब्राह्मणम् ॥

1 ऐंद्रवा॰ B. 2 ॰वायवाग्रा॰ B C. 3 बार्हतं MSS. 4 ॰वायवाग्रा॰ C. 5 तदू नैव B My, तदू नैव C O W. 6 भवंति MSS.

M. IV. 5. 5

## K. V. 6. 7

एष वाव प्रजापतिर्यज्ञो य एष तायत एतस्मादेवेमाः प्रजाः प्रजाता एत- 1.2 …तु प्रजायन्ते ऽप्येतर्हि तदुपाꣳशुपात्रमेवान्वजाः प्रजायन्ते तद्वा एतत्पुनर्यज्ञे …यते तस्माद्विमाः प्रजाः पुनरभ्याकारं प्रजायन्ते ता वा एता नेदिष्ठं प्रजापतेः प्रजा

13 ताꣳ होत्रे दद्याद्धोता हि[18] साहस्रो ऽथो द्वा उन्नेतारौ कुर्वीत[1] स यतरो नाश्रावयेत्तस्मा एनां दद्याद् व्यृद्धा वा एषा विराड् या विच्छिन्नापुनःसꣳहिता[19] व्यृद्ध[20] उ वा एष ऋत्विग्य ऋत्विक्सन्नार्त्विज्यं न करोति व्यृद्ध[20] एवैतद्व्यृद्धं[21] दधाति ॥९॥

16.14 तदु होत्र एव दद्याद्धोता हि साहस्रो ऽथेतरासां न दशतं[22] विच्छिनत्ति ददद्येभ्य[23] एकैकां दास्यन्त्स्याद्दशभ्यस्तेभ्यो दश दद्याद्येभ्यो द्वे द्वे पञ्चभ्यस्तेभ्यो दशैवमनुसमीक्षं दशाक्षरा वै विराड्वाग्वै विराट् साहस्रयैषा विराट् समृद्धा कामदुघामुष्मिंल्लोके[24] भवति स न दशां चनाधि सहस्रे दद्यात्साहस्री हि भवति तदु काममेव दद्यात्सहस्रेणाह तं काममाप्नोति[25] यस्तत्र कामो यद्धि ददाति तद्धस्य भवति ॥१०॥ पञ्चमं ब्राह्मणम् ॥

1 कुर्वति B W O. 2 °शिष्यते MSS. 3 तदू MSS. except B W Or (तदु). 4 °ण्युपध्वस्ता MSS. 5 See IV. 3. 1. 14. 6 °नूच्यैषा MSS. except Or. 7 नये° MSS. 8 ददिवान्य° C O W My Or, ददिवाद्य° B. 9 °दभिहिता MSS. 10 °रिति B W C. 11 °दिति B W. 12 प्रावर्जति B W, प्रावर्जन्ति My, 13 °के भवति C O W. 14 लोकमेति MSS. 15 °स्तिस्रस्तिस्रो MSS. 16 दशशतं B, दशशतं W, थशतं Or. 17 बृहति C. 18 हि B W O. 19 ? विछिन्नापुनःसꣳहिता MSS. 20 व्यृद्ध MSS. 21 °तद्व्यृद्धं C (sec. m.), °तद्व्यृद्धिं the other MSS. 22 दशशतं B W. 23 दद° MSS. 24 कामदुघा° B W O. 25 Read काममाप्नोति ?

M. IV. 5. 9

## K. V. 6. 6

1 स वै यत्रैतेन व्यूल्हच्छन्दसा द्वादशाहेन याजयन्ति तदप्येतान्ग्रहान्व्यूहति तत्प्रथमे ऽह्न ऐन्द्रवायवाग्रानेव[1] ग्रहान्गृह्णाति प्रज्ञातानेव ॥१॥

2.3 अथ चतुर्थे ऽहन्याग्रयणाग्रान्गृह्णाति प्राजापत्यं वा एतदहर्यच्चतुर्थमात्मा वा

…ण आत्मो वै प्रजापतिस्तस्मादाग्रयणाग्रान्गृह्णाति तं न सादयत्यन्यस्मा एव …थेतरान्ग्रहान्गृहीत्वा यैवास्य वेला भवति तदेनꣳ हिंकृत्य सादयति ॥२॥

अथ पञ्चमे ऽहन्यैन्द्रवायवाग्रानेव[1] ग्रहान्गृह्णाति प्रज्ञातानेव ॥३॥ 4.5

अथ षष्ठे ऽहनि शुक्राग्रान्गृह्णात्यैन्द्रं वा एतदहर्यत्षष्ठमेष वाव शुक्रो …ष तपत्येष उ वा इन्द्रस्तस्माच्छुक्राग्रान्गृह्णाति तं न सादयत्यन्यस्मा एव …थेतरान्ग्रहान्गृहीत्वा यैवास्य वेला भवति तदेनꣳ सादयति ॥४॥

अथ सप्तमे ऽहनि शुक्राग्रानेव गृह्णाति बार्हतं[3] वा एतदहर्यत्सप्तममेष 6.7 शुक्रो य एष तपत्येतदु वाव बृहत्तस्माच्छुक्राग्रान्गृह्णाति तं न सादयत्यन्यस्मा …दायाथेतरान्ग्रहान्गृहीत्वा यैवास्य वेला भवति तदेनꣳ सादयति ॥५॥

अथाष्टमे ऽहन्यैन्द्रवायवाग्रानेव[4] ग्रहान्गृह्णाति प्रज्ञातानेव ॥६॥

अथ नवमे ऽहन्याग्रयणाग्रान्गृह्णाति वैश्वदेवं वा एतदहर्यन्नवममात्मा 8.9 …ग्रयण आत्मो वै प्रजापतिः सर्वमु वा आत्मा सर्वमु वै विश्वे देवास्तस्मा- …यणाग्रान्गृह्णाति तं न सादयत्यन्यस्मा एव प्रदायाथेतरान्ग्रहान्गृहीत्वा यैवास्य …भवति तदेनꣳ हिंकृत्य सादयति ॥७॥

अथोत्तमे त्र्यह ऐन्द्रवायवाग्रानेव[2] ग्रहान्गृह्णाति प्रज्ञातानेवैवमेतान्ग्रहा- …ह्णाति ॥८॥

तदाहुर्न व्यूहेद्ग्रहानिति प्राणा वै ग्रहा नेत्प्राणान्त्संलोभयानीति तदु 10-13 …देवाङ्गानि वा अस्यैते यद्ग्रहा व्यत्यासं वा अयं पुरुषो ऽङ्गानि शेते तस्मात्प्र- …तदु[5] नैव[5] व्यूहेत्प्राणा वै ग्रहा नेत्प्राणान्त्संलोभयानीत्यत्र वा एते व्यूळ्हा …ऐन्द्रवायवाग्रान्प्रातःसवने गृह्णाति शुक्राग्रान्माध्यंदिने सवन आग्रयणाग्राꣳस् …तीयसवने तदेवैते व्यूळ्हा भवन्ति[6] तस्मान्नैव व्यूहेत् ॥९॥ षष्ठं ब्राह्मणम् ॥

1 ऐंद्रवा° B. 2 °वायवाग्रा° B C. 3 बार्हतं MSS. 4 °वायवाग्रा° C. 5 तदू नैव B My, तदू नैव C O W. 6 भवंति MSS.

M. IV. 5. 5

## K. V. 6. 7

एष वाव प्रजापतिर्यज्ञो य एष तायत एतस्मादेवेमाः प्रजाः प्रजाता एत- 1.2 …षु प्रजायन्ते ऽप्येतर्हि तदुपाꣳशुपात्रमेवान्वजाः प्रजायन्ते तद्वा एतत्पुनर्यज्ञे …यते तस्माद्विमाः प्रजाः पुनरभ्याकारं प्रजायन्ते ता वा एता नेदिष्ठं प्रजापतेः प्रजा

अनु प्रजायन्ते यदुपाꣳशुपात्रं तस्मात्त्रिः संवत्सरस्य विजायन्त उत त्रीꣳस्त्रीञ्ज-
यन्ति नेदिष्ठꣳ ह्येताः प्रजापतेः प्रजा अनु प्रजायन्ते[1] ॥१॥

3.4 अथान्तर्यामपात्रमेवान्ववयः प्रजायन्ते तद्वा एतत्पुनर्यज्ञे प्रयुज्यते तस्मा-
द्विमाः प्रजाः पुनरभ्याकारं प्रजायन्ते स यदुपाꣳशुं पूर्वं जुहोत्यन्तर्यामात्तस्माद्द्वज-
वयः[2] सꣳसृष्टा[3] यन्त्यजा एव पूर्वाः प्रतिपद्यन्ते तꣳ हि पूर्वं जुहोति यमेता अनु
प्रजायन्ते ॥२॥

7 अथ शुक्रपात्रमेवानु मनुष्याः प्रजायन्ते तद्वा एतत्पुनर्यज्ञे प्रयुज्यते तस्मा-
द्विमाः प्रजाः पुनरभ्याकारं प्रजायन्त एष वाव शुक्रो य एष तपत्येष उ वा इन्द्रस्त-
स्मात्पशूनामैन्द्रा मनुष्यास्तस्मादेषाꣳ सर्वेषामधिपतयः सर्वेषामीशत[4] ऐन्द्रा हि ॥३॥

8.10 अथर्तुपात्रमेवान्वेकशफं प्रजायते तद्वा एतत्पुनर्यज्ञे प्रयुज्यते तस्माद्विमाः
प्रजाः पुनरभ्याकारं प्रजायन्ते तद्वा इदमितीवर्तुपात्रं[5] तस्मादेकशफस्येतीव शिरः[6] ॥४॥

अथाग्रयणमुक्थ्यमादित्यपात्रमित्येतान्यनु गावः प्रजायन्ते तानि वा एतानि प्राण-
पुनर्यज्ञे प्रयुज्यन्ते तस्माद्विमाः प्रजाः पुनरभ्याकारं प्रजायन्ते ता वा एता भूयिष्ठानि
पात्राण्यनु प्रजायन्ते[7] यद्गावस्तस्मादेकैकꣳ संवत्सरे संवत्सरे जनयन्ति[8] भूयिष्ठा
पशूनां भूयिष्ठानि ह्येता पात्राण्यनु प्रजायन्ते ॥५॥

11 अथ द्रोणकलशे हारियोजनं[9] गृह्णाति प्रजापतिर्वै द्रोणकलशः प्रजापतिरे-
वैतदिमाः[10] प्रजाः सृष्ट्वा[11] ता अभ्यावर्तते ता अभिजिघ्रति ता अवति तस्माद्द्रोण-
कलशे हारियोजनं[9] गृह्णाति ॥६॥

तानि वा एतानि पात्राण्यन्विमाः प्रजाः प्रजायन्ते स यदेतानि पात्राण्य-
न्विमाः प्रजाः[12] प्रजायन्ते[12] तस्मात्पात्र्यः[13] प्रजापतिरित्याख्यायते ॥७॥

12 तानि वा एतानि पञ्च पात्राण्यन्विमाः प्रजाः प्रजायन्ते समानं तद्यदुपाꣳश्व-
न्तर्यामयोः शुक्रपात्रमृतुपात्रमाग्रयणमुक्थ्यं[14] पाङ्क्तो वै यज्ञः पाङ्क्ताः पशवः पञ्चर्तवः
संवत्सरस्य तस्मादेतानि पञ्च पात्राण्यन्विमाः प्रजाः प्रजायन्ते ॥८॥

तदाहुः षड्वा ऋतवः संवत्सरस्येति यदि वै षळृतवः संवत्सरस्यादित्यपा-
त्रमेवैषाꣳ षष्ठं भवति तेनैव[15] तं[15] काममाप्नोति यस्तत्र कामस्तद्वा एतदेकमेव[16]
पात्रमन्विमाः प्रजाः प्रजायन्त उपाꣳशुपात्रमेव प्राणो ह्युपाꣳशुः प्राणो हि प्रजापतिः
प्राणꣳ ह्येवान्विमाः प्रजाः प्रजायन्ते तस्मादुपाꣳशुपात्रमेवान्विमाः प्रजाः प्रजायन्ते
॥९॥ सप्तमं ब्राह्मणम् ॥ षष्ठो ऽध्यायः ॥

1 प्रजायंते MSS. 2 जुहोत्यंतर्यामा° B C; °जावयः MSS. 3 सꣳसृष्टा MSS. 4 °मीशत MSS. 5 इद-मितीव° MSS. 6 शिरः MSS. 7 प्रजायंते MSS. 8 जनयंति C O Or My, जनयंति W, जयंति B. Read probably जनयन्त्यः. 9 MSS. except C and Or, हार्योजनं. 10 Thus Or only, प्रजापतेरेवै° the other MSS. 11 सृष्टा B. 12 प्रजाः प्रजा° MSS. 13 तस्मात्पात्र्यः B. 14 °मुक्थं B, °मुक्थ्यं W. 15 तेनैतं B W. 16 एतदेकमेव B C.

K. V. 7. 1 M. IV. 6. 5

प्राणो ह वाव ग्रहः प्राणेन हीदꣳ सर्वं गृहीतं प्राणो वास्य सर्वस्य गृहीतस्त-द्ध प्राण एव ग्रहः ॥१॥

तस्य प्राणस्यान्नमेव ग्रहो ऽन्नेन ह्ययं प्राणो गृहीतो ऽन्नाद्धि प्राणो जायते तस्मादन्नमेव ग्रहः ॥२॥

तस्यान्नस्याप एव ग्रहो ऽद्भिर्हीदमन्नं गृहीतमद्भ्यो ह्यन्नं जायते तस्माद्वा-प एव ग्रहः ॥३॥

तासामपामग्निरेव ग्रहो ऽग्निना हीमा आपो गृहीता अग्नेर्ह्यापो जायन्ते तस्मादग्निरेव ग्रहः ॥४॥

तस्याग्नेः प्राण एव ग्रहः प्राणेन ह्ययमग्निर्गृहीतः प्राणाद्ध्यग्निर्जायते तस्माद्ध प्राण एव ग्रह एवमेता देवता अन्यो ऽन्यस्य गृहीता एवꣳ ह वा एतासां देवतानां गृहीतो[1] भवत्येवं वास्यैता देवता गृहीता भवन्त्येतासां देवतानाꣳ सायुज्यꣳ सलोकतां जयति ॥५॥ प्रथमं ब्राह्मणम् ॥

1 गृहीतो MSS.

M. IV. 6. 3

K. V. 7. 2

2 ऐन्द्राग्नेनैतद्व्यमित्याहुरग्निर्वै सर्वा देवता इन्द्रो वै यज्ञस्य देवता तत्सर्वाश्च देवता आप्नोति यो यज्ञस्य देवता[1] ॥१॥

3 अथो अप्याग्नेयमेवाग्निष्टोम आलभेत तद्धि सलोम यदाग्नेयमग्निष्टोम आलभेत यद्युक्थ्यः स्यादैन्द्राग्नं द्वितीयमालभेतैन्द्राग्नानि[1] ह्युक्थानि[1] यद्यु षोळशी

स्यादैन्द्रं तृतीयमालभेतेन्द्रो हि षोळशी यद्युवतिरात्रः स्यात्सारस्वतं चतुर्थमालभेत वाग्वै सरस्वती योषा वै वाग्योषो वै रात्रिस्तस्मात्सारस्वतं चतुर्थमालभेतैवम् यज्ञक्रतून्यथायथं व्याकरोति ॥२॥

1 अथो अप्येकादशिन्यैवेयादित्याहुस्तदाग्नेयं प्रथममालभते वारुणमुत्तममेवं पुनरभ्याकारं तद्य उदयनीये ऽतिरात्रे ऽतिरिच्येरꣳस्तानत्र सर्वानालभेत तथास्यैते ऽतिरिक्ताः सन्तो ऽनतिरिक्ता भवन्ति ॥३॥ द्वितीयं ब्राह्मणम् ॥

1 देवता MSS. 2 ग्नानि ह्युक्थ्यानि C.
3 चतुर्थ° B W O. 4 अप्यैकादशि° MSS. except Or.

M. IV. 6. 2 K. V. 7. 3

एतं वा एते गच्छन्ति य एष तपति ये सत्त्रमासत एष उ वाव स्वर्गो लोकस्तस्मादासीनान्त्स्वपतो[1] व्रजत[2] आहुरासत इत्या[3] हि सतो यन्ति ॥१॥

त एतꣳ षड्भिर्मासैर्यन्ति तस्मात्पराञ्चो ग्रहा गृह्यन्ते पराञ्चि स्तोत्राणि पराञ्चि शस्त्राणि ॥२॥

त एतꣳ[4] षष्ठे मासे गच्छन्ति तदेतस्य रूपं क्रियते[5] य एष तपत्युक्थ्यात्सामतो यजुष्टस्तस्मात्सौर्यं पशुमुपालभ्यमालभते सौर्यं ग्रहं गृह्णात्युदु त्यं जातवेदसमिति वाहश्रमस्य केतव इति वा त एतस्मिन्त्स्वर्गे लोके प्रतितिष्ठन्ति त एतस्मिन्त्स्वर्गे लोके प्रतिष्ठाय पुनरावर्तन्ते तस्मात्पुनर्ग्रहा[6] आवर्तन्ते[6] पुनः स्तोत्राणि पुनः शस्त्राणि[7] ते ऽस्मिन्मानुषे लोके प्रतितिष्ठन्ति यावदेषामिह मानुषमायुस्तस्मै ते यदामुं लोकं यन्त्यथैतमेव स्वर्गं लोकं यन्ति य एषामेष जितः स्वर्गो लोकः ॥३॥ तृतीयं ब्राह्मणम् ॥

1 Thus accented MSS. Read °स्वपतो ?
2 व्रजत MSS. 3 इत्या MSS. 4 एषाꣳ B.
5 क्रियते B C O. 6 Read ग्रहा आवर्तन्ते ? 7 °णि B W O.

M. IV. 6. 4 K. V. 7. 4

1-3 प्रजापतेर्ह वै प्रजाः ससृजानस्य पर्वाणि विसस्रꣳसुः स वै संवत्सर एव प्रजापतिस्तस्याहोरात्राण्येव पर्वाणि स एतैर्विस्रस्तैः[1] पर्वभिर्न सꣳहातुꣳ शशाक ॥१॥

तमु वै देवा अभिषज्यन्नेत ँ संवत्सरं तस्य पर्वाणि समदधुस्तस्य पर्वाणि
याथास्मा एतदन्नाद्यं प्रायच्छन्यदेतं महाव्रतीयं ग्रहमगृह्ण ँस्तदिममधिनोद्यद्वै
प्राणामशनं तद्देवानां व्रतम् ॥२॥

ते होचुर्महद्वा इदं व्रतमभूद्यदिममधिन्वीदिति तस्मान्महाव्रतीयो नाम
तैः स ँहितैः पर्वभिरिदमन्नाद्यमभ्युदतिष्ठद्यदिदं प्रजापतेरन्नाद्य ँ स एवमन्नादो
तथो वा एत आत्मानं भिषज्यन्ति ये सत्त्रमासते तेभ्य एतदन्नाद्यं प्रयच्छन्ति
महाव्रतीयं ग्रहं गृह्णन्ति स एवमन्नादो भवति यथैषो ऽन्नादः प्रजापतेः
ज्य ँ सलोकतां जयति ॥३॥

तं वै वैमृध्या गृह्णाति मृधो वा एतेषा ँ सर्वा नाष्ट्रा हता भवन्ति ये 4-6
मासते ऽथो वैश्वकर्मण्या विश्वं वा एतेषा ँ सर्वं कर्म कृतं भवति ये सत्त्र-
ते वि न इन्द्र मृधो जहीति वा वाचस्पतिं विश्वकर्माणमूतय इति वा यद्यु ऐन्द्रीं
कर्मणीं विन्देत्तयो गृह्णीयात् ॥४॥ M. IV. 5. 7

ता वा एताश्चतुस्त्रि ँशद्व्याहृतयो भवन्त्येताः प्रायश्चित्तयः स यदेता- 1-3
तुस्त्रि ँशद्व्याहृतयो भवन्त्येष वाव प्रजापतिर्यज्ञो य एष तायत एतस्माद्देवेमाः
प्रजाता एतमेवानु प्रजायन्ते ऽप्येतर्हि तदष्टौ वसव एकादश रुद्रा द्वादशा-
त्यास्त एकत्रि ँशदिमे द्यावापृथिव्यौ त्रयस्त्रि ँशे एते वै ते देवा यानाहुस्त्र-
स्त्रि ँशद्देवा इति प्रजापतिरेव चतुस्त्रि ँश एतद्वा इदमस्त्येतद्ध्यमृतं यद्ध्यमृतं
स्ति प्रजापतिर्ह्येष सर्व ँ हि प्रजापतिस्तस्माद्वा एताश्चतुस्त्रि ँशद्व्याहृतयो भवन्ति
हैता यज्ञतन्व इत्येक आचक्षत एताः प्रायश्चित्तीस्तान्येतानि यज्ञस्यैव पर्वाणि स
यज्ञस्तायमान एता देवता भवन्नेति ॥५॥

स यदि नु घर्मदुघा ह्वलेदथान्यामुपसंक्रामेयुस्तद्यामुपसंक्रामेयुस्तामग्रेण 4.5
दीक्षितशालां यत्र वैनामेतत्पिन्वयन्ति तदेनां प्राचीं वोदीचीं वा स्थापयितवै
तद्ये एते पुच्छकाण्डमभितः शिखण्डास्थिनी उच्चयाते तयोर्यद्दक्षिण ँ स्यात्त-
स्मिन् जुहुयादेताश्चतुस्त्रि ँशतमाहुतीरेताभिर्व्याहृतिभिः ॥६॥

स यदेवं जुहोति घर्मदुघा वै यज्ञं बिभर्ति स आह्वलत्येतावानु वै यज्ञो
वदेताश्चतुस्त्रि ँशदाहुतय एतावन्तो हि देवा यावन्तो हि देवास्तावान्यज्ञस्त-
स्यामेतं यज्ञं दधाति तथैता यज्ञतन्व एषा न्वत्र प्रायश्चित्तिः ॥७॥

अथ यत्रान्यत्र यज्ञस्य ह्वलेत्तदनुसमीक्ष्य यां देवतां मन्येतेयं देवतैतर्ह्ययं 6

यज्ञ इति तस्यै[17] जुहुयाद्यद्यह[18] प्रसुत आग्नीध्रे यदि दीक्षोपसत्स्वाहवनीये स यैव देवता भवत्येष यज्ञस्तर्हि तयैवैतत्पर्व[19] भिषज्यति[19] तया संदधाति तया शमयति ॥८॥

7 अथ यदि पृषदाज्यꣳ स्कन्देत्तदद्भिरनुनिनेतवै ब्रूयादद्भिर्वा इदꣳ सर्वमाप्तमद्भिरेवैनमेतदाप्नोत्यापो वै शान्तिः शान्तय एव[20] वैष्णववारुण्यर्चा[21] वरुणो[22] वा अर्पयिता वरुणो वै तदर्पयति यदिदं किं चर्च्छति[23] यज्ञो वै विष्णुस्तस्य वा एतदर्पयति स यश्चैवार्पयति[24] यस्य चार्पयति ताभ्यामेवैतत्पर्व भिषज्यति ताभ्याꣳ संदधाति ताभ्याꣳ शमयति तस्माद्वैष्णववारुण्यर्चा[21] ययोरोजसा स्कभिता रजाꣳसि वीर्येभिर्वीरतमा शविष्ठा । या पत्येते अप्रतीता सहोभिर्विष्णू अगन्वरुणा पूर्वहूताविति ॥९॥

8.9 अथाभिमृशति देवान्दिवमगन्यज्ञस्ततो मा द्रविणमष्टु मनुष्यानन्तरिक्षमगन्यज्ञस्ततो मा द्रविणमष्टु पितॄन्पृथिवीमगन्यज्ञस्ततो मा द्रविणमष्ट्विति यद्वै किं च स्कन्दत्येष्वेव तल्लोकेषु[25] प्रतितिष्ठति यतमं कतमं चैषां लोकानां यज्ञो ऽगꣳस्ततो मे भद्रमभूदित्येवैतदाशिषमाशास्त उत ह स्माहारुणिः किꣳ स यज्ञेन यजेतेति यो यज्ञस्यार्त्तेन[26] व्यृद्धेन श्रेयो नाभिगच्छेदित्येतेन[27] ह स्म तदाह[27] यदाशिषमुपगच्छति॥१०॥ चतुर्थं ब्राह्मणम् ॥

1 एवतैर्विस्रस्तैः B. 2 संवत्सरस्य पर्वाणि B W (B corrected into °रतस्य प°). 3 °दिममाधिन्वीदिति B. 4 °ज्ञादो B O. 5 तदेतं B W My. 6 वैश्व° W. 7 °पृथिव्यौ B, °पृथिव्यौ the other MSS. 8 एते MSS. 9 इदमस्ये° MSS.; °सृतं C. 10 यद्ध्यसृतं B O W, यद्ध्यमृतं C. 11 Emended; यज्ञंतन्व Or, यज्ञंतन्वत the other MSS. 12 Thus accented MSS. 13 Read probably उच्छयाते like the Mādhy. rec.; उत्शयाते Or. 14 आह्वलयत्ये° C. 15 Emended; तथैषा यज्ञंतन्वत एतान्वत्र प्रा° the MSS. 16 °तद्यंमुं B W. 17 तस्मै B W C My. 18 Thus (without accent however) Or, °यद्यहः B C O My W. 19 °त्पर्वभिर्भिषज्यति B. 20 एव B C O, एव W. 21 वैष्णवारुण्यर्चा MSS.

22 वरुणो B W C O. 23 See VII. 5. 1. 24.
24 यश्चैवा° B. 25 तंलो° MSS. except Or.
26 यज्ञस्यात्तेन C O (orig.) My Or, यज्ञःस्यात्तेन W, यज्ञः स्यात्तेन B O (sec. m.). 27 °तेन सहस्मात्त-दाह B W.

K. V. 7. 5

बृहस्पतिरकामयत तेजस्वी ब्रह्मवर्चसी स्यां प्र पुरोधां देवानामाप्नुयामिति ...तं स्तोममपश्यदेतꣳ सवं तेनायजत स तेजस्वी ब्रह्मवर्चस्यभवत्प्र पुरोधां ...तानामाप्नोत् ॥१॥

स यः कामयेत तेजस्वी ब्रह्मवर्चसी स्यां प्र पुरोधामाप्नुयामिति स एतेन ...त तेजस्वी हैव ब्रह्मवर्चसी भवति प्र पुरोधामाप्नोति ॥२॥

त्रिवृत्स्तोमो भवति तेजो वै ब्रह्मवर्चसं त्रिवृत्स्तोमस्तेज एवैतद्ब्रह्मवर्चसम-...न्द्धे तेजस्येव ब्रह्मवर्चसे प्रतितिष्ठति ॥३॥

रथंतरं पृष्ठं भवति तेजो वै ब्रह्मवर्चसꣳ रथंतरं तेज एवैतद्ब्रह्मवर्चसमवरुन्द्धे ...स्येव ब्रह्मवर्चसे प्रतितिष्ठति ॥४॥

अष्टाशतं स्तोत्रिया भवन्ति शतायुर्वा अयं पुरुषः शतवीर्यः शततेजाः ...मेवैतत्सꣳस्करोति ॥५॥

अष्टा उ वा इमा स्तोत्रिया भवन्त्यष्टाक्षरा वै गायत्री तेजो वै ब्रह्मवर्चसं ...त्री पुरुषमेवैतत्सꣳस्कृत्याथास्मिन्नेतत्तेजो ब्रह्मवर्चसं दधाति ॥६॥

बृहत्या संपद्यते बृहत्या वै देवाः स्वर्गं लोकꣳ समाश्नुवत तथो वा एष ...बृहत्यैव स्वर्गं लोकꣳ समश्नुते ॥७॥

आज्येनाभिषिञ्चति तेजो वा आज्यं तेज एवास्मिꣳस्तद्दधाति तद्वा आहु-...जो वा आज्यं नाज्येनाभिषिञ्चेदीश्वर एनं प्रदहेत्सोमेनैवाभिषिञ्चेदित्येष ह वा ...भिषिक्तो यत्सोमाभिषेकस्तद्वा आहुर्वज्रो वै सोमो न सोमेनाभिषिञ्चेन्नेदेतं ...ण हिनसानीति तदु सोमेनैवाभिषिञ्चेद्यथास्मै शिवः शान्तो भवति ग्रहोच्छिष्टेनैवा-...भिषिञ्चेत्स हि शान्त उपाह तं काममाप्नोति यत्सोमाभिषेके शिव उ अस्मै शान्तो ...ति ॥८॥

शुक्रामन्थिनोः सꣳस्रवेणाभिषिञ्चत्येतौ वा अनु सर्वꣳ सवनꣳ हूयते सर्वꣳ

ह्येतौ ग्रहौ सर्वत्वायैव कृत्स्नताया अथो प्रजननमु वा एतौ ग्रहौ प्रजायते ह[9] प्रजया पशुभिस्तस्माच्छुक्रामन्थिनोः सꣳस्रवेणाभिषिञ्चति ॥९॥

कृष्णाजिने ऽध्यभिषिञ्चत्यृक्सामनोर्वा एतद्ब्रह्मण आयतनं यत्कृष्णाजिनमृक्सामनोरेवैनं ब्रह्मण्यध्यभिषिञ्चति ॥१०॥

देवस्वो भवन्त्येतावन्तो वै देवानाꣳ सवा यद्देवस्वस्तैरेवैनमेतत्प्रसूतं तꣳ सवेनाभिषिञ्चति ॥११॥

त्रयस्त्रिꣳशद्दक्षिणा भवन्ति त्रयस्त्रिꣳशद्धै सर्वा देवताः सर्वासां देवतानामाप्तये ऽश्वश्चतुस्त्रिꣳशो दक्षिणानां भवति[7] प्रजापतिर्वै चतुस्त्रिꣳशो देवतानां प्राजापत्य उ वा अश्वस्तेन प्रजापतिमाप्नोति बार्हस्पत्यो ग्रहो ऽतिग्राह्यो भवति बार्हस्पत्यः पशुरुपालम्भ्यो भवति सवस्य समृद्ध्यै[8] ऽथो सवमेवैतद्व्याकरोति तथास्यैष सवः समृद्धो भवति[9] ॥१२॥ पञ्चमं ब्राह्मणम् ॥

1 तेनायजते B W, तेनायजते C. 2 अष्टशतं B. 3 अभि° MSS. 4 Read either काममाप्नोति or उप ह instead of उपाह. See XII. 4. 3. 3 (Mādhy.). 5 ह MSS. 6 Probably तꣳ is an interpolation. 7 भवति MSS. 8 समृद्धये C. 9 भवति C O.

M. IV. 6. 6

## K. V. 7. 6

1.2 देवा ह वै यज्ञं तन्वाना असुररक्षसानां दक्षिणत आसङ्गाद्बिभयां चक्रुस्ते होचुरसुररक्षसानां दक्षिणत आसङ्गाद्बिभ्यतो हन्त[1] यो नो वीर्यवत्तम इति स न इदं दक्षिणतो गोपायत्वथ वयमुत्तरतो ऽभये ऽनाष्ट्रे निवाते यज्ञं तनवामहा इति तथेति होचुः ॥१॥

4 ते हेन्द्रमूचुस्त्वं वै नो वीर्यवत्तमो ऽसीति त्वं न इदं दक्षिणतो गोपायाथ वयमुत्तरतो ऽभये ऽनाष्ट्रे निवाते यज्ञं तनवामहा इति ॥२॥

5 स होवाचेन्द्रः किं मम ततः स्यादिति ते होचुरेतदह ते ब्रह्मत्वमित्येषो[1] ते ब्राह्मणाच्छꣳसीयेति तस्माद्ब्रह्मण एव ब्राह्मणाच्छꣳसीया[2] तस्माद्ब्राह्मणाच्छꣳसिनं[3] प्रवृणत इन्द्रो ब्रह्मा ब्राह्मणादित्यैन्द्री ह्येषा होत्रा तस्माद्य एव ब्राह्मणानां वीर्यवत्तमः स ब्रह्मा स्याद्यो वा एषामनूचानतमः स एषां वीर्यवत्तमस्तदेषो

क्षिणतो गोपायत्यथैत उत्तरतो ऽभये ऽनाष्ट्रे निवाते यज्ञं तन्वते ॥३॥

स यत्रैष आह ब्रह्मन्त्स्तोष्यामः प्रशास्तरिति तद्ब्रह्मा जपत्येतत्ते देव 6
सवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे[4] तेन यज्ञमव तेन यज्ञपतिं तेन मामव । मनो
ज्योतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोतु । अरिष्टं यज्ञꣳ समिमं दधातु
विश्वे देवास इह मादयन्ताꣳ स्तुत सवितुः प्रसव इत्यसौ न्वेवैतस्य यजुषो बन्धुर्य
असौ दर्शपूर्णमासयोरथ यदाह स्तुत सवितुः प्रसव इति सविता वै देवानां
सविता स्तुत सवितृप्रसूता[5] इत्येवैतदाहैतावदेव ब्रह्मा जपेदित्याहुः ॥४॥

तद्वा[6] आहुर्देव सवितरेतद्बृहस्पते प्रेत्येतावदेव ब्रह्मा जपेदिति सविता 7
देवानां प्रसविता सवितारमेवैतत्प्रसवायोपधावति यदाह देव सवितरेतदिति बृह-
स्पते प्रेति बृहस्पतिर्वै देवानां ब्रह्मा तद्य एव देवानां ब्रह्मा तस्मा एवैतत्प्राह तस्मै निवे-
दयति तस्य[7] नार्तिर्न ह्वला भवति तस्मादाह बृहस्पते प्रेत्येतावदेव ब्रह्मा जपेत् ॥५॥

अथ मैत्रावरुणः प्रसूतो देवेन सवित्रा जुष्टं मित्रावरुणाभ्यामिति मैत्रा- 8
वरुणो वा एष मित्रावरुणौ वा अस्य स्वे देवते ताभ्यामेवैतज्जुष्टं करोति ताभ्यां
निवेदयति तस्मादाह जुष्टं मित्रावरुणाभ्यामिति ॥६॥ षष्ठं ब्राह्मणम् ॥ सप्तमो ऽध्यायः॥

1 हंत MSS. 2 °स्येषो B W O C (orig.) Or My, °स्येषा C (sec. m.). 3 °सीयात्तस्मा° MSS. except C and Or. 4 ब्रह्मणे C. 5 Emended; सवितुः प्रसूता MSS. 6 यद्वा C (orig.). 7 तस्या B C (orig.).

K. V. 8. 1 M. IV. 6. 1

प्रजापतिर्ह वा अꣳशुः स वा अस्यैष आत्मैवात्मा हि प्रजापतिः स यदꣳशुं 1
गृह्णन्त्यात्मानमेवास्यैतत्सꣳस्कुर्वन्ति तमस्यात्मानꣳ सꣳस्कृत्य तस्मिन्नेतान्प्राणान्द-
धति यथा यथास्यैते प्राणा ग्रहाः ॥१॥

स यस्यैतं गृह्णन्ति तस्यारम्भणवन्त[1] इव प्रतिष्ठिता इव प्राणा भवन्त्यथ 2
यस्यैतं न गृह्णन्त्यनारम्भणतरा इवास्यायततरा इव प्राणा भवन्ति स यस्यैतं गृह्णन्ति
स सर्वः कृत्स्न एव सर्वतनूरमुष्मिंल्लोके संभवति तस्माद्वा अꣳशुर्ग्रहीतव्यः ॥२॥

स यस्याहैतं गृह्णन्त्येष एवास्य तर्ह्यात्मा भवत्यथ यस्यैतं न गृह्णन्त्येष
एवास्य तर्हि सोम आत्मा भवति सोमो हि प्रजापतिः स यदेतस्यैतान्ग्रहान्गृह्णन्ति[2]

तदस्यैतास्मिन्नात्मन्येतान्प्राणान्दधाति यथा यथास्यैते प्राणा ग्रहाः स उ कृत्स्न एव सर्वतनूरमुष्मिंल्लोके संभवति ॥३॥

3 तमौदुम्बरेण पात्रेण गृह्णाति प्रजापतिर्वा एष प्राजापत्यो यदुदुम्बरः प्रजापतिर्वा अꣳशुस्तस्मादौदुम्बरेण गृह्णाति ॥४॥

4 चतुःस्रक्तिना गृह्णाति त्रय इमे लोकाः प्रजापतिमेवाति चतुर्थं[3] तस्माच्चतुःस्रक्तिना गृह्णाति ॥५॥

अथ यद्वेव चतुःस्रक्तिना गृह्णाति प्रजापतिर्वा एष दिशः स्रक्तयः सर्वास्वेवैतद्दिक्षु प्रजापतिं दधाति तस्माद्धिमाः प्रजा दिशि दिश्येव[4] प्रजायन्ते ॥६॥

अथ यद्वेव चतुःस्रक्तिना गृह्णाति प्रजापतिर्वा एष दिशः स्रक्तयः सर्वाभ्य एवास्मा एतद्दिग्भ्यो[4] ऽन्नाद्यमिन्द्रियं[5] वीर्यं दधाति तस्माच्चतुःस्रक्तिना गृह्णाति ॥७॥

5.6 स वै तूष्णीमेवाꣳशून्निवपति[6] तूष्णीं ग्रावाणमादत्ते तूष्णीमुपसृजति तूष्णीꣳ सकृदभिषुत्यानवानं जुहोति तदेनं प्रजापतिं करोत्यथ हिरण्यमभिव्यनित्यायुर्वा अमृतꣳ हिरण्यꣳ स यदेतस्य प्राणस्य प्रजापतेः प्राणन्वोदनन्वा वि वा लिशति क्षिणोति वायुर्वा अमृतꣳ हिरण्यं तदेवास्यायुषामृतेन संदधाति तच्छमयति तस्माद्धिरण्यमभिव्यनिति ॥८॥

7.8 तदु होवाच राम औपतस्विनिरुरुगा इतरं मह्यमाचार्यो ऽब्रवीदिति होवाच काममेव[7] प्राण्याच्चोदन्याच्चेति[7] यद्वाव[8] तूष्णीमꣳशून्निवपति तूष्णीं ग्रावाणमादत्ते[9] तूष्णीमुपसृजति तूष्णीꣳ[10] सकृदभिषुत्य जुहोति[9] तदेवैनं प्रजापतिं करोतीति होवाच तूष्णीं कर्मणैवेत्यथ हिरण्यमभिव्यनिति तस्योक्तो बन्धुः ॥९॥

9 तदु होवाच बुडिल आश्वतराश्विर्नैतमभिषुणुयादिति होवाचाभिषुणोति वा अन्याभ्यो देवताभ्यः स यदेनमभिषुणुयादित्यन्याभिरेनं[11] देवताभिरभ्यारोहयेदुद्धृत्यैव[12] गृह्णीयात्तदेवाभिषुतभाजनमिति[13] ॥१०॥

10 तदु होवाच याज्ञवल्क्यो ऽभिषुणुयादेवैतमिति होवाच न सोम इन्द्रमसुतो ममाद नाब्रह्माणो मघवानꣳसुतास इति वा ऋषिणाभ्यनूक्तमस्ति[14] यावद्वा एनं[15] नाभिषुण्वन्तीति नैवास्मिꣳस्तावद्रसं[16] दधाति न तावदलमाहुतये भवत्यथ यदैवैनमभिषुण्वन्तीत्यथैवास्मिन्रसं दधत्यथालमाहुतये भवति तस्मादेनमभिषुणुयादेवेति तं वा अभिषुण्वन्त्सकृदाभिषुणोति स यदहैनमभिषुणोति[17] तदा हास्मिन्रसं दधाति तथो अलमाहुतये भवति यद्वभिषुण्वन्त्सकृदभिषुणोति तथो एनम-

देवताभिनाभ्यारोहयति तस्मादेनमभिषुणुयादेवेति ॥११॥

तस्य द्वादश प्रथमगर्भाः[18] पष्ठौह्यो दक्षिणा द्वादश वै मासाः संवत्सरस्य 11
सरो वै प्रजापतिः प्रजापतिर्वा अंशुस्तस्माद्द्वादश प्रथमगर्भाः[18] पष्ठौह्यो
णाः ॥१२॥

ता गर्भैः सह चतुर्विंशतिर्भवन्ति चतुर्विंशतिर्वा अर्धमासाः संवत्स- 12.13
संवत्सरो वै प्रजापतिः प्रजापतिर्वा अंशुस्तस्माद्गर्भैः सह चतुर्विंशतिर्भ-
चतुर्विंशतिं ह त्वा एता ददौ प्रथमगर्भाः कौकुस्त[19] ऋषभमा-
ण्यम्[20] ॥१३॥

स वा एष नैव सर्वस्येव ग्रहीतव्य आत्मा ह्यस्यैष सर्वं ह्यात्मा नेत्सर्व- 14
सर्वं करवाणीति यो न्वेव ज्ञातस्तस्य ग्रहीतव्यो ऽथ यो ऽनूचानो ऽनूकेन
तस्य प्राप्तो भवति ॥१४॥

सहस्रे ग्रहीतव्यः सर्वं हि सहस्रं सर्वं ह्येष सर्ववेदसे ग्रहीतव्यः सर्वं 15
सर्ववेदसं सर्वं ह्येष सत्त्रे ग्रहीतव्यः सर्वं हि सत्त्रं सर्वं ह्येष वाजपेये
राजसूये विश्वजिति सर्वपृष्ठे ॥१५॥ प्रथमं ब्राह्मणम् ॥

1 Thus C O My Or; तस्यारंभणवत्तरा B W. 2 गृह्णंति B W C O. 3 Thus MSS. See III. 2. 1. 7. 4 दिश्येव MSS. 5 एतद्दिग्भ्योऽह्वाद्यामि° B. 6 Thus Or (without accent) only; तूष्णीमेवोपांशुह्नि° B C, तूष्णीमेवोपांशूह्नि° O My. 7 Thus (without accent) Or only; काममेव प्राणाह्वो° the other MSS. 8 तद्वाव C My. 9 °मादत्ते MSS. 10 जुहोति MSS. 11 यदेनमभिषुणु° MSS. 12 °हये- दुह्यत्यैव MSS. 13 °वाभिषुत° B W O. 14 °क्रमस्ति MSS. 15 एतं B O Or. 16 नैवास्मि° B W O. 17 यदहै° MSS. 18 प्रथमगर्भाः MSS. 19 कौकुस्थ Or, कउकथस्त the other MSS., and C originally. In C कथ is corrected on the margin into कु (कउकुस्त). Probably the correct reading

is कौकुस्त. 20 ऋ° W. See Introduction III, section 39 b.

M. XI. 5. 9 K. V. 8. 2

1 प्रजापतिर्ह वा अꣳशुः स वा अस्यैष आत्मैवात्मा हि प्रजापतिर्वागेवा दाभ्यः स यदꣳशुं गृहीत्वादाभ्यं[1] गृह्णात्यात्मानमेवास्यैतत्सꣳस्कृत्य तस्मिन्नेतां वा दधाति ॥१॥

2 अथ मनो ह वा अꣳशुर्वागदाभ्यः प्राण एवाꣳशुरुदानो[2] ऽदाभ्यश्चक्षु रेवाꣳशुः श्रोत्रमदाभ्यः स यदेतौ ग्रहौ गृह्णाति सर्वत्वायैव कृत्स्नतायै ॥२॥

3.4 अथ देवाश्च ह वा असुराश्चोभये प्राजापत्या अस्पर्धन्त[3] त एतस्मिन्नेव यज्ञे प्रजापतावस्पर्धन्तास्माकमयꣳ स्यादस्माकमयꣳ स्यादिति ततो देवा एतं ग्र दद्दशुरेतमदाभ्यं ते सवनानि प्रावृहन्त[4] ते सर्वं यज्ञꣳ समवृञ्जत निरभजन्नसुरा न्त्सपत्नान्यज्ञात् ॥३॥

5.6 ते होचुरदभाम वा एनानिति तस्माद्दाभ्यो न वै नो ऽदभन्निति तस्माद्वा दाभ्यो वागु वा अदाभ्यः सेयमदब्धा[5] वाक्तस्माददाभ्य एवꣳ ह वाव द्विषतः सपत्न सर्वं यज्ञꣳ संवृङ्क्त एवं द्विषन्तꣳ सपत्नꣳ सर्वस्माद्यज्ञान्निर्भजति बहिर्धा करोति यस्यै विदुष एतं गृह्णन्ति स येनैव पात्रेणाꣳशुं गृह्णाति तस्मिन्नेव पात्रे निग्राभ्याभ्यो ऽप आनीय तस्मिन्नेतानꣳशून्गृह्णाति ॥४॥

7 उपयामगृहीतो ऽस्यग्नये त्वा गायत्रच्छन्दसं गृह्णामीति गायत्रं प्रातःसवनं तत्प्रातःसवनं प्रवृहतीन्द्राय[6] त्वा त्रिष्टुप्छन्दसं गृह्णामीति त्रैष्टुभं माध्यंदिनꣳ सवनं तन्माध्यंदिनꣳ सवनं प्रवृहति[6] विश्वेभ्यस्त्वा देवेभ्यो जगच्छन्दसं गृह्णामीति जागतं तृतीयसवनं तत्तृतीयसवनं[7] प्रवृहत्यनुष्टुप्ते[6] ऽभिगर इति यद्वा ऊर्ध्वꣳ सवनेभ्यस्तदानुष्टुभं तदेवैतत्प्रवृहति[6] तं नाभिषुणोति वज्रो वै ग्रावा वागदाभ्यो नेद्वज्रेण वाचꣳ हिनसानीति ॥५॥

8-10 अꣳशूनेवाधूनोति व्रशीनां त्वा पत्मन्नाधूनोमि कुकूननानां[8] त्वा पत्मन्ना धूनोमि भन्दनानां त्वा पत्मन्नाधूनोमि मध्वन्तमानां त्वा पत्मन्नाधूनोमीत्येता वै दैव्या आपः स याश्चैव दैव्या आपो याश्चेमा मानुष्यस्ताभिरेवास्मिन्नेतदुभयीभी रसं दधाति शुक्रं त्वा शुक्र आधूनोमीति शुक्रꣳ ह्येनमेतच्छुक्र आधूनोत्यह्नो[9] रूपे सूर्यस्य रश्मि ष्विति तदह्नश्चैवैतद्रूपे सूर्यस्य च[10] रश्मिष्वाधूनोति ककुहꣳ रूपं वृषभस्य रोचते

सोमः'' सोमस्य पुरोगाः शुक्रः शुक्रस्य पुरोगा इति तत्सोममेवैतत्सोमस्य पुरोगां करोति'' शुक्रं शुक्रस्य पुरोगां यत्ते सोमादाभ्यं नाम जागृवि तस्मै त्वा गृह्णामीत्येतद्ध वा अस्यादाभ्यं नाम जागृवि यद्वाक् तद्वाचमेवैतद्वाचे गृह्णाति[13] तस्मा-तस्मै त्वा गृह्णामीति[14] ॥६॥

अथोपनिष्क्रम्य जुहोति तस्मै ते सोम सोमाय स्वाहेति तत्सोमायैवैतत्सोमं 11 करोति तथा वाचमग्नौ न प्रवृणक्त्यथ हिरण्यमभिव्यनिति तस्योक्त एव बन्धुस्तस्य त्रय एव दक्षिणाः ॥७॥

अथां शून्पुनरप्यर्जत्युशिक् त्वं देव सोमाग्नेः प्रियं पाथो ऽपीहि वशी त्वं देव 12 सोमेन्द्रस्य प्रियं पाथो ऽपीहि । अस्मत्सखा त्वं देव सोम विश्वेषां देवानां प्रियं पाथो ऽपीहीति सवनानि वा अदः प्रवृहति[15] तान्येवैतत्पुनराप्याययत्ययातयामानि करोति तैरयातयामभिर्यद्त ऊर्ध्वमसंस्थितं यज्ञस्य तत्तन्वते[16] ॥८॥ द्वितीयं ब्राह्मणम् ॥

1 ग्रहीत्वा° MSS. except Or. 2 °दानो B O W. 3 अस्पर्धंत त एत° B W O. 4 प्राबृ° My. 5 सेयमदब्धा MSS. 6 प्रबृ° C My. 7 तत्तृतीय-सवनं B W. 8 MSS. except My ककूननां. 9 Emended; आधूनोम्य° MSS. 10 Om. in C. 11 Thus MSS. differently from Weber's edition ( बृहन्सोमः ). 12 Read करोति ? 13 गृह्णाति MSS. 14 °मीति MSS. 15 प्रबृ° My. 16 तत्तन्वते MSS.

M. IV. 6. 9

## K. V. 8. 3

देवा ह वै सत्त्रं निषेदुः श्रियं गच्छेम यशः स्यामान्नादाः स्यामेति तेषां 1 हान्नाद्यमभिजितं तद्धैभ्यो[1] ऽपचिक्रमिषां[2] चकार पशवो वा अन्नाद्यं पशवो ऽन्नं ते हास्मा ऐभ्यो ऽपचिक्रमिषां चक्रुर्यद्वै न इमे श्रान्ता न हिंस्युः कथं स्विन्नः सक्ष्यन्त इति ॥१॥

तदु वै देवा अस्पृण्वत तद्गृहेषु न्ययच्छन्त[3] तथैभ्य एतदन्नाद्यं नापा- 2.3 क्रामत्तथो वा एत आसते सत्त्रं य आसते सत्त्रं श्रियं गच्छेम यशः स्यामान्नादाः स्यामेति तेषां हान्नाद्यमभिजितं तद्धैभ्यो ऽपचिक्रमिषति पशवो वा अन्नाद्यं

पशवो ऽन्नं ते हैभ्यो ऽपचिक्रमिषति यद्वै न इमे श्रान्ता न हिꣳस्युः कथꣳ स्विन्न सक्ष्यन्त इति ॥२॥

4.5 स गार्हपत्ये द्वे आहुती जुहोति गृहा वै गार्हपत्यस्तद्गृहेष्वेतद्दशानि नियच्छन्ते तथैभ्य एतदन्नाद्यं नापक्रामति तथो वा अस्मादशनमुपनिहितं तस्मादपचिक्रमिषति यद्वै मायं न हिꣳस्यात्कथꣳ स्विन्मा सक्ष्यत इति ॥३॥

6 स परस्तादग्र आददीत[1] द्विर्वा त्रिर्वा तदिदमशनं परस्तादर्वागुपनिवदति तद्वेद न वै मा हिनस्तीति तमुपनिःश्रयते स प्रियो ऽन्नस्य भवत्यन्नादो य एवं विद्वानेतद्व्रतं चरति ॥४॥

7 तद्वा एतद्दशमे ऽहनि क्रियत एतत्सत्त्रोत्थानं तदेको हैषां वाचंयमो भवत्यथेतरे वितिष्ठन्ते[7] वि[8] स[8] तिष्ठते[8] यो[8] वितिष्ठासते[8] ऽश्नाति स यो जिघत्सति ॥५॥

8 ते ऽपराह्ण गार्हपत्यमुपसमायन्ति तेष्वन्वारब्धेष्वध्वर्युर्जुहोति तदध्वर्योरेव[9] होमो[10] यद्यध्वर्युर्न[10] विद्याद्गृहपतिर्जुहुयाद्यदि गृहपतिर्न विद्यादपि य एव कश्च विद्यात्स जुहुयात् ॥६॥

स जुहोतीह रतिरिह रमध्वमिति पशूनेवैतदाहेह धृतिरिह स्वधृतिः स्वाहेति पशूनेवैतदाह ॥७॥

9 अथ द्वितीयां जुहोत्युपसृजन्धरुणं मात्र इत्यग्निमेवैतदस्यै पृथिव्या उपसृजन्नाह धरुणो मातरं धयन्नित्यग्निमेवैतादिमां[11] पृथिवीं धयन्तमाह रायस्पोषमस्मासु दीधरत्स्वाहेति पशवो वै रायस्पोषः पशूनस्मासु दीधरादित्येवैतदाह ॥८॥

10 ते प्राञ्चो निःसृप्योत्तरेण[12] परीत्य पश्चात्प्राञ्चो हविर्धानं प्रपद्यन्ते पुरस्ताद्वै प्रत्यञ्चस्तꣳस्यमाना अथैवꣳ सत्त्रोत्थाने ॥९॥

11 स उत्तरस्य हविर्धानस्य दक्षिणां कूबरीमभिपद्य[13] सत्त्रस्यर्द्धिरिति[14] तत्सामाभिगायत्युत्तरवेदेर्वोत्तरस्याꣳ श्रोणा उत्तरस्य त्वेव हविर्धानस्य दक्षिणां कूबरीमभिपद्य[13] तदेव[15] सत्त्रस्यर्द्धिमभिगायति[16] ॥१०॥

12 अगन्म ज्योतिरमृता अभूमेति ज्योतिर्ह्येते यन्ति ये सत्त्रमासते ऽमृता ह्येते भवन्ति दिवं पृथिव्या अध्यारुहामेति दिवꣳ[17] ह्येते पृथिव्या आरोहन्ति ये सत्त्रमासते ऽविदाम देवानिति देवान्ह्येते विन्दन्ति ये सत्त्रमासते स्वर्ज्योतिरिति निधन-

न्ति स्वर्ह्येते यन्ति ये सत्त्रमासते ज्योतिर्ह्येते भवन्ति तस्मात्स्वर्ज्योतिरिति
पावयन्ति स यः सत्त्रस्यर्द्धिमभिगायति राद्धिमेवैभ्य एतदाशास्ते राध्नु-
तित्रिरभिगीय[१८] साम ॥११॥

अथ दक्षिणस्य हविर्धानस्याधो ऽधो ऽक्षं प्राञ्चो निःसर्पन्ति युवं तमिन्द्रा- 14.13.15
पुरोयुधा यो नः पृतन्यादप तं तमिद्धतं वज्रेण तं तमिद्धतम्। दूरे चत्ताय
हन्तं यदिनक्षदस्माकं शत्रून्परि शूर विश्वतो दर्मा दर्षीष्ट[१९] विश्वत इत्येत-
च्छन्दसा[२०] सर्वं वा अत्यतिच्छन्दाः सर्वेणैवैतत्पाप्मानमपघ्नते[२१] तथैनान्पाप्मा[१९]
त्येत्यथ[२२] यदधो[२३] ऽधो ऽक्षं[२३] वज्रो वा अक्षो वज्रेणैवैतत्पाप्मानमपघ्नते[२१] तथै-
ना[१९] नाभ्यत्येति[२४] स यथाहिस्त्वचो निर्मुच्येतैवं सर्वस्मात्पाप्मनो निर्मुच्य
निःसर्पन्ति प्राञ्चो निःसृप्योत्तरेण परीत्य पुरस्तात्प्रत्यञ्चः सदः प्रसर्पन्ति
प्राञ्चस्तंस्यमाना अथैवं सत्त्रोत्थाने[२५] ॥१२॥

ते यथाधिष्ण्यं व्युपविशन्ति तदुद्गाता सामाभिगायति सर्पराज्ञ्या[१६] ऋक्षु 17.16a
स्तुतमनुपगीतं यथान्यो नोपशृणुयादति ह रेचयेद्यदन्यः प्रस्तुयादति ह
यदन्य उपगायेदति ह रेचयेद्यदन्य उपशृणुयात्तस्मात्स्वयंप्रस्तुतमनुपगीतं
न्यो नोपशृणुयात् ॥१३॥

स यदुद्गाता[२७] सामाभिगायति[२८] वाचो[२९] ह वै रसो ऽभिजितो देवानां
मां पृथिवीं पराङतिसिसृप्सां[३०] चकारेयं वै पृथिवी वाक्तस्या अस्या रस ओषधयो
स्पतयो यदिदमस्यामन्नाद्यं स इमां पृथिवीं पराङतिसिसृप्सां[३०] चकार तमेतेन
साम्नान्वस आप्त आवर्तत ता इमा अस्या ऊर्ध्वा ओषधयो वर्धन्त ऊर्ध्वा
स्पतयः ॥१४॥

तथो वा एतेषां वाचो रसो ऽभिजितः स इमां पृथिवीं पराङतिसिसृप्स- 16b
ति वै पृथिवी वाक्तस्या अस्या रस ओषधयो वनस्पतयो यदिदमस्यामन्नाद्यं
इमां पृथिवीं पराङतिसिसृप्सति तमेतेन साम्नाप्नुवन्ति स आप्त आवर्तते ता
अस्या ऊर्ध्वा ओषधयो वर्धन्त ऊर्ध्वा वनस्पतयः स यत्सर्पराज्ञ्या[३१] [३२] ऋक्ष्वियं[३३]
सर्पराज्ञ्यनयैवैतत्सर्वमाप्नुवन्ति[३४] ॥१५॥

अथ चतुर्होतॄन्होता व्याचष्टे तद्धोतुरेव व्याख्यानं होता हि स्तुतम- 18
शंसति यदि होता न विद्याद्गृहपतिर्व्याचक्षीत यदि गृहपतिर्न विद्यादपि य एव
विद्यात्स व्याचक्षीतैतद्वैतत्स्तुतमनुशंसति ॥१६॥

19 अथ वाकोवाक्यं[35] ब्रह्मोद्यं वदन्त्यध्वर्युमामन्त्र्य तदध्वर्योः प्रतिग ऽरात्सुरिमे[36] यजमाना भद्रमेभ्यो यजमानेभ्यो ऽभूदिति राद्धिमेवैभ्य एतदाशास राघ्नुवन्त्येवैतत् ॥१७॥

20 स यद्वाकोवाक्यं ब्रह्मोद्यं वदन्ति सर्वं वा एत[37] आप्नुवन्ति[37] सर्वम रुन्धते ये सत्रमासते ऽस्तोषत सामभिस्तत्तान्याप२ंस्तान्यवारुत्सताश२ंसिपुर्ऋ चस्तत्ता आप२ंस्ता अवारुत्सत प्राचारिषुर्यजुर्भिस्तत्तान्याप२ंस्तान्यवारुत्सता थैषामेतदनाप्तं[38] भवत्यनवरुद्धं[38] यद्वाकोवाक्यं ब्रह्म तदेवैतदाप्नुवन्ति तदवरुन्धत एतदु[39] चैवैतत्स्तुतमनुश२ंसति[40] तस्माद्वाकोवाक्यं ब्रह्मोद्यं वदन्ति[41] ॥१८॥

21 अथौदुम्बरी२ं समारभ्य सर्वे वाचंयमा आसत आस्तमेतोरादित्याद्वाग्वै यज्ञस्तदेतद्यज्ञं निर्धयन्ति[42] विदुहन्ति[43] यदेनया यज्ञं तन्वते तमेषामदः पुरैकैव उत्तरस्मा अह्न आप्यायति सो ऽप्राप्तो यज्ञो भवत्यपवृक्तस्तमेवैतत्सर्वमाप्याययति तयापीनया[44] वाचायातयामया[45] यदत ऊर्ध्वमस२ंस्थितं यज्ञस्य तत्तन्वते[46] ॥१९॥

22.23 स[47] यदौदुम्बरी२ं[47] समारभ्योर्ग्वा[48] उदुम्बर ऊर्जैवैतद्यज्ञमाप्याययन्त्य थास्तमित आदित्ये प्राञ्चो निःसृप्याग्रेण हविर्धानमासते तान्वाचंयमानेव वाचंयम प्रतिप्रस्थाता वसतीवरीभिः परिहरति स यस्मै कामाय दीक्षत[49] कामाय ह स वै पुर ऋषयो दीक्षन्ते ऽमुं कामं कामये[50] स मे ऽस्तु स मे समृध्यतामिति स हास्मै कामः समृध्यत उतो अनेककामो दीक्षते ॥२०॥

24 तस्यो[51] तस्य[51] जपो भूर्भुवः स्वरिति तद्वाच२ं सत्येन समर्धयति तया समृद्धयाशिष आशास्ते सुप्रजाः प्रजया भूयासमिति तत्प्रजामाशास्ते सुवीरो वीरैरिति तद्वीरानाशास्ते सुपोषः पोषैरिति तत्पुष्टिमाशास्त एवमस्मा एता आशिषः समृध्यन्ते ॥२१॥

25 अथ गृहपतिः सुब्रह्मण्यामाह्वयति यं वा गृहपतिर्ब्रूयात्सर्वे ह त्वेक आह्व यन्ति गृहपतिस्त्वेवाह्वयेद्यं वा गृहपतिर्ब्रूयात्तस्मिन्नुपहवमिच्छन्ते ऽथ समिधो ऽभ्यादधत्येतदेवैतत्कर्मान्ततः समिन्धते ॥२२॥ तृतीयं ब्राह्मणम् ॥

1 °भ्यो पचिक्रमिषां O W Or, °भ्यो परिचक्रमिषां C W My, °भ्यो परिचक्रमिवां B. 2 हैभ्यो MSS. 3 Thus ( without accent however ) Or only; नियछंत C O, नियछंत My, नियछंते B W (the accent

of the preceding गृहेषु has been emended accordingly). 4 अस्मादशनमुपनिहितं C, अस्मादशनमुपनिहितं B W O. 5 MSS. except Or insert न. 6 Emended; आदधीत MSS. 7 वतिष्ठंतेवतिष्ठते B. 8 यो वितिष्ठासते MSS. 9 तदध्वर्योन्वेव C O My. 10 होमो यद्य° B W C O. 11 धय° MSS. 12 निःसृप्योत्तरेण B W C O. 13 कुबरी° B. 14 सत्रस्यर्द्धिरिति B. 15 तदेव MSS. 16 °भि° MSS. 17 दिवं MSS. 18 °गीय MSS. 19 MSS. except O and Or दर्शिष्ट. 20 इत्येतयातिछंदसा MSS. 21 °नमपघ्नते MSS. 22 Thus (without accent) Or only; °पाप्मनोभ्यत्यथ the other MSS. ( C °पाप्मानो° ). 23 यदघो घोक्षं MSS. 24 Thus Or and C ( sec. m. ), पाप्मनोभ्यत्येति the other MSS. 25 °स्थानं B. 26 Thus Or only, °राज्ञा the other MSS. 27 य उद्गाता B W. 28 °भिगायति MSS. 29 वाचो B W. 30 पराङतिसि° MSS. 31 Thus (without accent) Or only; पराङतिसिसृप्सयंतीयं C O W My, पराङतिसिसृप्सयंतीयं B. 32 Thus (यद्) Or only; यः all the other MSS. 33 Thus Or; °रज्ञा ऋक्षीयं the other MSS. 34 Thus Or and C ( sec. m. ), सर्पराज्यनयैवैत° O C ( orig. ) My, सर्पराज्यमनयैत° B W. 35 वाको° MSS. except Or. 36 रास्सुरिमे MSS. 37 एत आप्नुवंति C O Or, एतमाप्नुवंति B W My. 38 °मेतदनाप्तं भव° MSS. 39 °रुंधत एतदु MSS. 40 °शंसति C O W, °शंसति B. 41 वदति C. 42 Thus Or

only; मिर्द्दंहति the other MSS. 43 विदूहंति MSS. 44 त्वनाप्यनया B, तयाप्यनया W. 45 वाचाया° MSS. 46 तत्तन्वते MSS. 47 स यद्दौ° B W, स यदौ° O C. 48 समारम्यो° MSS. 49 दीक्षते B W. 50 कामये MSS. 51 तस्यातस्य My.

M. IV. 6. 7 K. V. 8. 4

1.2 त्रयी वै विद्यर्चः सामानि यजूꣳष्येषा वै त्रयी विद्या तत इयमेवर्ग्वाग्वाच्यर्चन्तीयमु हि वाक् तेनेयमृग्य उ वै कश्चार्चत्यस्यामेव सो ऽर्चति तेनेयमृगन्तरिक्षमेव यजुर्द्यौरेव साम ताः सर्वा विद्याः सौम्ये ऽध्वरे ऽवक्लृप्यन्ते स य एवं विद्वान्त्सौम्येनाध्वरेण यजत इममेव लोकमृग्भिर्जयति यजुर्भिरन्तरिक्षꣳ सामभिर्दिवं यो वैवं विद्वानतो ऽप्येकतमं वेदमधीयन्नथापीतरयोर्वेदयोर्निर्मितमनुब्रूत एताम्वेव स जितिं जयति ॥१॥

3.4 अथैतद्वै तद्वाचः प्रजातꣳ सहस्रं यदिन्द्राविष्णू त्रेधा व्यैरयतां यदेषा त्रयी विद्या ततो द्वौ भागाविन्द्रो ऽभजतैकं[1] विष्णुरृचश्च सामानि[2] चेन्द्रो ऽभजत यजूꣳषि विष्णुस्तस्मादृक्सामभ्याꣳ सदसि कुर्वन्तीन्द्रो हि ते अभजतैन्द्रꣳ सदस्तस्माद्वेतꣳ सोमं विष्णुं यजुर्भिर्बिभ्रत्येतानि हि सो ऽभजत तद्वा एतेन यज्ञेन विष्णुना पुर इव चरन्ति तस्मात्पुरश्चरणं नाम ॥२॥

5 मनो ह वाव यजुर्वागेवर्क् च साम च तदिदं मन ऋते वाचो न प्राज्ञायत न हि तूष्णीं ध्यायतः कश्चनाजानाति[3] ॥३॥

6 ते ह देवा ऊचुर्वाचꣳ सदसो न वा इदं त्वदृते मनः प्रज्ञायत इति प्राची प्रेहीदं प्रज्ञपयेति ॥४॥

सा होवाच किं मम ततः स्यादिति ते होचुर्यत्किं च सौम्ये ऽध्वरे ऽवषट्कृतꣳ स्वाहाक्रियाता इति तत्त भाजनेनेति तस्माद्यत्किं च सौम्ये ऽध्वरे ऽवषट्कृतꣳ स्वाहाक्रियते तद्वाचो भाजनेन ॥५॥

7 सा प्राची प्रैत्सा तत्प्राज्ञपयदित्थमिदं कुरुतेत्थमिदं कुरुतेति वाचा हि प्रज्ञायते ततो मनश्च वाक् च सयुजावभवताम् ॥६॥

तस्मादपि वाचा हविर्धाने कुर्वन्ति यद्वा ऋचा कुर्वन्ति[4] तद्वाचा कुर्वन्ति यत्प्रातरनुवाकमन्वाहुर्यत्सामिधेनीर्यद्ग्राव्णो ऽभिष्टुवन्त्येवꣳ हि सयुजावभवताम् ॥७॥

तस्मादपि यजुषा सदसि कुर्वन्ति[1] यद्धिष्ण्यानुपकिरन्ति[2] यत्सदो ऽभित 8
हि सयुजावभवताम् ॥८॥

तद्धै परिश्रयन्ति हविर्धानं मिथुनाय तिरो मिथुनं चर्याता इति योषा वा 10
वृषाꣳशुः सोम एतस्मै तन्मिथुनाय परिश्रयन्त्येतन्मिथुनं तिरश्चर्याता इति ॥९॥

परिश्रयन्त्यु[6] वाव[6] सदो मिथुनाय तिरो मिथुनं चर्याता इति योषा वा 9
वृषा सामैवैतस्मै[9] तन्मिथुनाय परिश्रयन्त्येतन्मिथुनं[10] तिरश्चर्याता इति व्यृद्धं वै
मिथुनं येनाविश्चरन्ति तस्माद्यद्यपि पश्यन्ति स्वया जायया मिथुनीभवन्तमाग[11]
त्य भवति तस्माद्यो ऽन्यत्र द्वारः प्रेक्षेत हविर्धानस्य वा सदसो वा मा प्रेक्षथा
तं प्रतिषेधेयुर्यथा मिथुनं चर्यमाणं[12] पश्येदेवं तत्कामं तु द्वारा प्रेक्षेत देवकृतꣳ
त् ॥१०॥

स इमा योषा अपो वृषाꣳशुः सोमो ऽधिद्रवति हविर्धाने तस्मान्मिथुनात्त- 11.12
तसश्चन्द्रमा जायते ऽथेमां योषामृचं वृषा सामाधिद्रवति सदसि तस्मान्मिथु-
नाद्रेतसः सूर्यो जायते तेजो वा ऋक्तेजः सूर्यस्तेजस एवैतत्तेजो जायते यदृक्सा-
मꣳ सूर्य इन्द्र इति ह्येनमाहुरन्नमु वा आपो ऽन्नमꣳशुः[13] सोमो ऽन्नादेवास्मा
न्नं जनयति यच्चन्द्रमसं चन्द्रमा उ ह्येतस्यान्नं तद्वा ऋक्सामभ्यामेव यजमानं
तथाꣳशोश्च सोमादद्भ्यश्चास्मा[14] अन्नाद्यं[14] जनयत्येतद्वा एतज्जनयति[15] ॥११॥

मनो ह वाव यजुर्यज्ञो ह वाव यजुर्यजो ह नामैतद्यजुरित्याहुर्यजुषा ह वा अग्रे 13.14
यज्ञमतन्वताथर्ग्भिरथ सामभिस्तस्माद्प्येतर्ह्येवमेव यज्ञं तन्वते यजुर्भिरेवाग्रे
ग्भिरथ सामभिः सैषा देवैर्निर्धीततमा[16] विद्या यद्यजूꣳषि तस्मादस्या आशीः पदत-
निरुक्तानि निर्धीता ह्येषा देवैर्विद्या ॥१२॥

ते ह देवा ऊचुर्हन्तेमां विद्यां पुनराप्याययामेति तेनेयं विद्येतरे विद्ये प्रति- 15-18
भविष्यति तेनायं लोक इतरौ लोकौ प्रतिप्रति[17] भविष्यतीति तथेति होचुस्तां
उपाꣳशु जपामेति तामुपाꣳश्वजपꣳस्तेनैषा विद्येतरे विद्ये प्रतिप्रत्यभवत्तेनायं लोक
रौ लोकौ प्रतिप्रत्यभवत्तस्मादयमन्तरिक्षलोको निरुक्तः सन्पुनरनिरुक्तो निरुक्तानि
यजूꣳषि सन्ति पुनरनिरुक्तानि निरुक्तानि वै तेन यजूꣳषि यदेनानि[18] वाचाभि-
हरति निरुक्ता[19] हि वागनिरुक्तानि वै तेन यदेनानि[18] वाचाभिव्याहरन्नुपाꣳशु[20]
अनिरुक्तꣳ[20] हि तद्यदुपाꣳशु स यो हैतां विद्यामुपाꣳशु जपति स हैनामाप्याय-
तमु हैषाप्यायिता[21] पुनराप्याययत्यथ यो हैनामुच्चैर्जपति न हैनाꣳ स आप्या-

ययति तमु हैषानाप्यायिता[21] परुषं[23] करोति तस्मादुपांश्वेव जपेत् ॥१३॥

मनो ह वाव यजुस्तद्वा इदमनिरुक्तं मनो ऽनिरुक्तं हि तद्यदुपांशु तस्मादुपांश्वेव जपेत् ॥१४॥

19.20 मनो ह वाव यजुर्वागेवर्क् च साम च स य एषो ऽत्राध्वर्युर्यजुर्भिश्चरति सो ऽत्र मनो भवत्यथ यदृक्सामभ्यां चरन्ति ते[15] वाग्भवन्त्येवं[25] ह वा एतद्भवति तस्माद्यदैवाध्वर्युराहानुब्रूहीत्यथान्वाह[16] यदाह यजेत्यथ यजति[17] यदाहोपावर्तध्वमित्यथ स्तुवते न किं चनानभिगतमध्वर्युणा क्रियते न हि मनसानभिगतं वाग्वदति तद्वा इदं मनः पुर इव चरति तस्मात्पुरश्चरणं नाम पुर इव ह वै श्रिया यशसा भवति य एवमेतद्वेद ॥१५॥

21 सूर्यो ह वाव पुरश्चरणं तस्मात्प्राङ् तिष्ठन्हुत्वैतस्यैवावृतमन्वावर्तते प्रतिगीयैतस्यैवावृतमन्वावर्तते स एष एवैतद्रूपं भूतः संचरति तस्य नार्तिर्न ह्वला भवति स यो हैतांशक्नोत्यावृतं शक्नोति हैव भार्यां भर्तुमथो एतस्य सायुज्यं सलोकतां जयति ॥१६॥ चतुर्थं ब्राह्मणम् ॥ अष्टमो ऽध्यायः ॥ ग्रहकाण्डं समाप्तम् ॥

1 °र्दिवं MSS. 2 भजतैकं MSS. 3 सामानि MSS. 4 कश्चनजानाति W. 5 कुर्वंति MSS. 6 कुर्वंति MSS. 7 यद्धि° MSS. 8 Thus (without accent) Or; परिश्रयन्युवाव B W My, परिश्रयंत्युव C. 9 सामैवैतस्मै B W, सामैतस्मै O Or. 10 परिश्रयंतेतन्मिथुनं W. 11 °वंतमागृ B. 12 चर्यमाणं B W. 13 श्रमंशुः MSS. 14 Thus Or only, सोमादद्भिश्चास्माच्चाथं the other MSS. 15 °जनयंति C O My W Or (rightly ?). 16 °र्निर्धीततमा B W C. 17 प्रतिप्रति C. 18 यदेनानि B. 19 निरुक्तानि B. 20 °पांशु जपत्य° MSS. 21 Thus Or only, हैषाप्यायता the other MSS. 22 हैषानाप्यायता MSS. except Or. 23 पुरुषं B W. 24 त्राध्वर्यु° B. 25 ते वाग्भवत्येवं C, ते वाभवतोवं B,

ये वाग्भवंत्स्येव॑ Or, तं वाग्भवन्त्स्येव॑ My. 26 Thus Or only; तस्माद्यदिवाध्वर्यु॰ C O W My, तस्माद्यदिवाध्वर्यु॰ B. 27 जयति B, जपति My W. 28 मनसा MSS.

M. V. 1. 1 — K. VI. 1. 1

1 देवाश्च ह वा असुराश्चोभये प्राजापत्या अस्पर्धन्त ततो हासुरा अतिमानेन कस्मिन्नु वयं जुहुयामेति स्वेष्वेवास्येषु जुह्वतश्चेरुस्ते ह तथा जुह्वतः पराबभूवुस्तस्माद्ध नातिमानी स्यादित्याहुः पराभूतेरेतन्मुखं यो ऽतिमान इति ॥१॥

2 अथ ह देवा अनतिमानिन इवासुस्ते ऽन्यो ऽन्यस्मिन्नेव जुह्वतश्चेरुस्तेभ्यस्तथा जुह्वद्भ्यः प्रजापतिरात्मानं प्रददौ यज्ञो वै प्रजापतिः स एषामन्नमभवद्यज्ञो हि देवानामन्नम् ॥२॥

3 ते ह देवा ममायं भविष्यति ममायं भविष्यतीति हास्मिन्न संपादयां चक्रुस्ते होचुरसंपादयन्तो हन्तास्मिन्नाजिमजामहा इति स य उज्जेष्यति तस्य नो ऽयं भविष्यतीति तथेति तस्मिन्नाजिमाजन्त ॥३॥

4.5 स ह बृहस्पतिः सवितारमेव प्रसवायोपससारेमं मे प्रसुवेति त्वत्प्रसूत इममुज्जयानीति तथेति तमस्मै सविता प्रासुवत्तꣳ सवितृप्रसूत उदजयत्तेनायजत तेनेष्ट्वैतामेवोर्ध्वां दिशमुच्चक्राम तस्माद्यश्चैतद्वेद यश्च नैषोर्ध्वा दिग्बृहस्पतेरित्येवाहुरेताꣳ ह वा ऊर्ध्वां दिशमुत्क्रामति यो वाजपेयेन यजते ॥४॥

6 तेनो ह वै तत इन्द्र ईजे तेनेष्ट्वैतामेवोर्ध्वां दिशमुच्चक्रामैताꣳ ह वा ऊर्ध्वां दिशमुत्क्रामति यो वाजपेयेन यजत एवꣳ ह स्म य एतेन यज्ञेन यजन्त एताꣳ ह स्मैवोर्ध्वां दिशमुत्क्रामन्ति ॥५॥

7-9 तेनो ह वै तत ईज औपाविर्जानश्रुतेयः स ह प्रत्यवरुरोहोर्ध्वा ह स्मैव पुरा यन्ति स सर्वमभवत्सर्वमुदजयत्प्रजापतिꣳ ह्युदजयत्सर्वꣳ हि प्रजापतिः सर्वꣳ ह वाव भवति सर्वमुज्जयति प्रजापतिꣳ ह्युज्जयति सर्वꣳ हि प्रजापतिर्यो वाजपेयेन यजते तस्मादाहुर्नैतेन यज्ञेन यजेतेति सर्वं भवति सर्वमुज्जयति तस्य नैवेह किंचन परिशिष्यते पापीयसी प्रजा भवतीति ॥६॥

10 तदु यजेतैव य एतं क्लृप्तं यज्ञं विद्युर्ऋक्तः सामतो यजुष्टो ये ऽनूचानाः प्रजज्ञयः स्युस्ते हैतस्य यज्ञस्यर्त्विजः स्युः सैतस्य यज्ञस्य समृद्धिः स भोग्यो हैवास्मिन्मानुषे लोके भवति श्रेयस्यस्यात्मनः प्रजा भवति य एवं विद्वान्यजते तस्मादु यजेतैव ॥७॥

11 तद्यदेतेन बृहस्पतिरयजत तस्मादेष ब्राह्मणस्य यज्ञो ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणो ऽथ यदेनेनेन्द्रो ऽयजत तस्मादेष क्षत्रियस्य यज्ञः क्षत्रꣳ हीन्द्रः

[रा]मु हि क्षत्रियः ॥८॥

12.13 तद्राज्ञ एव राजसूयꣳ राजा हि राजसूयेनेष्ट्वा भवति न ब्राह्मणो राज्यायावरं राजसूयं परं वाजपेयꣳ राजा वै राजसूयेनेष्ट्वा भवति सम्राड् वाजपेयेनावरं वै [रा]ज्यं परꣳ साम्राज्यं कामयेत[10] वै राजा सम्राड् भवितुं परꣳ हि तन्न[11] सम्राड् राजा [भ]वितुं कामयेतावरꣳ[12] हि तत्तस्मादवरꣳ राजसूयं परं वाजपेयꣳ स यदेतेन [ए]तेनेष्ट्वा सर्वꣳ संवृङ्क्ते[13] तस्मात्सम्राण्नाम[14] ॥९॥

14-16 स एताꣳ सावित्रीमाहुतिं जुहोति कर्मणः कर्मणः पुरस्तादेव सवितः प्रसुव [प्र]सुवेमं भगाय । दिव्यो गन्धर्वः केतपाः केतं नः पुनातु वाचस्पतिर्नो अद्य वाजꣳ [स्व]दत्विति स यथैवादो बृहस्पतिः सवितारं प्रसवायोपससारैवमेवैष एतत्सवितारं [प्र]सवायोपधावति तमस्मै[15] सविता प्रसौति तꣳ[15] सवितृप्रसूत उज्जयति वाचस्पतिर्नो [अ]द्य वाजꣳ स्वदत्विति प्रजापतिर्वै वाचस्पतिरन्नं वाजः प्रजापतिर्न इदमन्नꣳ [स्व]दयत्वन्नꣳ[16] समर्धयत्वित्येवैतदाहाथाग्नीषोमीयेण पशुना चरित्वैतामाहुतिमुत्सृजत[17] [त]द्ध्येतं यज्ञमन्वारब्धो भवत्येतत्प्रसन्नः ॥१०॥ प्रथमं ब्राह्मणम् ॥

1 Thus Or only, कस्मै नु all the other MSS. (as III. 2. 7. 1). 2 इति MSS. 3 °त्तेनायजत O P. 4 यश्च नैपोर्ध्वा C P, यश्च नैषोर्ध्वा O. 5 दिग्बृहस्पतिरित्ये° O P (orig.). 6 औपाविर्जान° MSS. 7 °मुदजयत्तत्प्रजा° O P. 8 तस्य MSS. 9 प्रजज्ञय O P, प्रजज्ञिय My. 10 कामयेत B C W. 11 तन O P My. 12 कामयेता° B W. 13 संवृङ्ते B W, संवृङ्ते O P Or. 14 सम्राट् नाम B, सम्राद् नाम O P. 15 Thus also VI. 2. 1. 8. Read तद् instead of तम्. 16 स्वदयत्वन्नꣳ O P Or. 17 °त्सृजत B.

M. V. 1. 2

## K. VI. 1. 2

1 स वा अꣳशुं गृह्णाति स यदꣳशुं गृह्णाति सर्वत्वायैव कृत्स्नतायै तस्मादꣳ[शुं] गृह्णात्यथैतान्प्रज्ञातानाग्निष्टोमिकान्ग्रहान्गृह्णात्याग्रयणात् ॥१॥

2 अथ पृष्ठ्यान्गृह्णाति स यदेव देवाः[1] पृष्ठ्यैरुदजयꣳस्तदेवैतैर्यजमान उज्जयति ॥२॥

3 अथ षोलशिनं गृह्णाति स यदेवेन्द्रः षोलशिनोदजयत्तदेवैतेन यजमान उज्जयति ॥३॥

4 अथैतान्वाजपेयग्रहान्गृह्णाति ध्रुवसदं त्वा नृषदं[2] मनःसदम् ॥ उपयामगृहीतो ऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतममिति सादयत्ययं वै लोको ध्रुवो ध्रुवसदिममेवैतेन लोकमुज्जयति ॥४॥

5 अथाप्सुषदं त्वा घृतसदं व्योमसदम् ॥ उपयामगृहीतो ऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतममिति सादयत्ययं वै लोको व्योमेदमन्तरिक्षमेतमेवैतेन लोकमुज्जयति ॥५॥

6 अथ पृथिविसदं[3] त्वान्तरिक्षसदं दिविसदं[4] देवसदं नाकसदम् ॥ उपयामगृहीतो ऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतममिति सादयत्यसौ वै लोको देवसन्नाकसदसावेव[5] देवलोक एतमेवैतेन लोकमुज्जयति ॥६॥

7 अथापाꣳरसमुद्वयसꣳ सूर्यं सन्तꣳ समाहितम् । अपाꣳरसस्य यो रसस्तं वो गृह्णाम्युत्तमम् ॥ उपयामगृहीतो ऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतममिति सादयत्ययं वा अपाꣳ रस[6] उद्वया[6] यो ऽयं पवते स वा एष सूर्ये समाहितः स सूर्यात्पवत एतमेवैतेन रसमुज्जयति ॥७॥

8 अथ ग्रहा ऊर्जाहुतयो व्यन्तो विप्राय मतिम् ॥ तेषां विशिप्रियाणां वो ऽहमिषमूर्जꣳ समग्रभम् ॥ उपयामगृहीतो ऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतममिति सादयत्यूर्ग्वै रस ऊर्जमेवैतेन रसमुज्जयति ॥८॥

9 तान्वा एतान्पञ्च वाजपेयग्रहान्गृह्णाति प्रजापतिं वा एष उज्जयति यो वाजपेयेन यजते पञ्च वा ऋतवः संवत्सरस्य संवत्सरो वै प्रजापतिस्तत्प्रजापतिमुज्जयति ॥९॥

10 अथ खलु सप्तदश सोमग्रहान्गृह्णाति[7] सप्तदश सुराग्रहानुभे वा एते प्रजापतेरन्धसी यत्सोमश्च सुरा च ततः श्रीः सत्यं ज्योतिः सोमो ऽनृतं[8] पाप्मा तमः सुरा ते एवास्यैतेनोभे अन्धसी उज्जयति ॥१०॥

11.12 स सप्तदश सोमग्रहान्गृह्णाति सप्तदशो वै प्रजापतिः स यावानेव प्रजापति·

त्यस्य मात्रा तावतैवास्यैतच्छ्रियꣳ सत्यं ज्योतिरुज्जयति सप्तदश सुराग्रहान्त्स-
शो वै प्रजापतिः स यावानेव प्रजापतिर्यावत्यस्य मात्रा तावतैवास्यैतदनृतं पाप्मानं
उज्जयति ॥११॥

त उभये चतुस्त्रिꣳशद्भवन्ति त्रयस्त्रिꣳशद्वै सर्वे देवाः प्रजापतिश्चतुस्त्रिꣳ- 13
तत्सर्वाश्च देवता उज्जयति प्रजापतिं च ॥१२॥

अथ यत्रादः सोमं क्रीणन्ति तदप्येतां परिस्रुतं क्रीणाति केशवात्पुरुषान्न 14
एष स्त्री न पुमान्यत्केशवो यदह पुमाꣳस्तेन न स्त्री यद्वस्य केशास्तेन न
न् ॥१३॥

सीसेन क्रीणाति न वा एतद्धिरण्यं नायो यत्सीसं तस्मात्सीसेन
णाति ॥१४॥

अथ द्वौ खरौ कुर्वन्ति पश्चादक्षमन्यं[9] नेत्सोमग्रहाꣳश्च सुराग्रहाꣳश्च 15-17
सादयामेत्यथ यत्रादः प्रातः पूर्वया द्वारापः[10] प्रपादयन्ति तज्जघनेनाहृत्यापरया
तां[11] परिस्रुतं प्रपादयति[12] स पुरस्तादासीनो ऽध्वर्युर्गृह्णाति पश्चात्प्राङ् प्रति-
थाता स सोमग्रहमेवाग्रे गृह्णात्यथ सुराग्रहमेवं व्यत्यासं[13] गृहीतः सहोत्तमौ
तः स उपर्युपर्यक्षमध्वर्युर्धारयत्यधो ऽधः[14] प्रतिप्रस्थाता[15] स नादैव प्रत्यङ्ङ-
ध्वर्युरतिहरेन्न प्राङ् प्रतिप्रस्थाता ॥१५॥

स जपति संपृच स्थ सं मा भद्रेण पृङ्क्तेति नेत्पापेनेति ब्रवामेत्यथ पुन- 18.19
रतो विपृच स्थ वि मा पापेन पृङ्क्तेति स यथेषीकां विमुञ्जां[16] कुर्यादेवमेवै-
जमानꣳ सर्वस्मात्पाप्मनो विवृहतो ऽथ हिरण्मयेन पात्रेण मधुग्रहं गृह्णात्य-
थ्यमथ ध्रुवꣳ स यत्राद उत्तमꣳ सप्तदशꣳ स्तोत्रं तदेतान्त्सोमग्रहानृत्विजां
सेषु व्यानीय भक्षयन्त्यथ माध्यंदिने सवने मधुग्रहस्य चोच्यते सुराग्र-
णां च ॥१६॥ द्वितीयं ब्राह्मणम् ॥

1 देवाः O (but the accent is pŕṣṭhya, not pṛṣṭhyá, as Weber has it). 2 नृषदं O.
3 पृथिवीषदं O P, पृथिविषदं Or. 4 दिविषदं O P Or.
5 देवसदंन्नाकदसदसावेव O P, देवसन्नाकसदसावेव B.
6 रस उद्वया B Or, रसमुद्वया O P, रसमद्वया My.
7 °गृह्णाति O P C. 8 नृतं O P C (sec. m.).

9 पश्चाद° B O P W, 10 ह्वारापः MSS. 11 ह्वारैतां MSS. 12 °दयन्ति MSS. except O Or, 13 वित्यासं O P My. 14 धः MSS. 15 °स्थाता B W. 16 विसुंजां B W O P ( see also V. 3. 4. 13 ).

M. V. 1. 3 K. VI. 1. 3

1 स वा आग्नेयमेवाग्निष्टोमायालभते[1] ऽग्निष्टोममेव तेनोज्जयत्यैन्द्राग्नमुक्थेभ्य आलभत ऐन्द्राग्नानि ह्युक्थान्युक्थान्येव[1] तेनोज्जयत्यैन्द्रꣳ षोलशिन आलभत इन्द्रो हि षोलशी षोलशिनमेव तेनोज्जयति ॥१॥

2 अथैतꣳ सारस्वतमेतस्मा उत्तमाय सप्तदशाय स्तोत्रायालभते तदेतदनतिरात्रे सति रात्रे रूपं क्रियते सर्वं वा एष उज्जयति यो वाजपेयेन यजते ऽहोरात्रे उ वै संवत्सर एते हि परिप्लुवमाने संवत्सरं कुरुतः सर्वमु वै संवत्सरस्तत्सर्वमुज्जयति स यदह्नानतिरात्रो[3] भवति तेनाहरुज्जयति यद्वनतिरात्रे सति रात्रे रूपं क्रियते[4] तेनो रात्रिमुज्जयत्येवमुभे अहोरात्रे उज्जयति ॥२॥

3 अथैतां वशां पृश्निं मरुद्भ्य उज्जेषेभ्य आलभत इयं वै पृश्निर्यदस्यां मूलि चामूलं चोभयं तेनेयं पृश्निरस्यामु वा इदमन्नमस्याꣳ हीदमन्नाद्यमन्नाद्यमेवैतयोज्जयति स यन्मरुद्भ्यो विशो वै मरुतो देवविशमन्नमु वै विशास्तस्मान्मरुद्भ्य उज्जेषेभ्य उज्जितये स यद्यह मरुद्भ्य उज्जेषेभ्यो याज्यानुवाक्ये विन्देत्ते एव स्यातां यदि मरुद्भ्य उज्जेषेभ्यो याज्यानुवाक्ये न विन्देदपि मारुत्यावेव स्यातां दुर्वेदो वै वशा पृश्निर्यदि पृश्निं न विन्देदपि यैव का च वशा स्यात् ॥३॥

4 तस्या आवृद्यत्र होता माहेन्द्रं ग्रहमनुशꣳसति तदस्या वपया प्रचरेयुरेष वा इन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रो ऽप्यस्यैतन्निष्केवल्यमेव स्तोत्रं निष्केवल्यꣳ शस्त्रं क्षत्रमु वा इन्द्रो विशो[5] मरुतो[5] विशा[6] वै क्षत्रियो बलीयान्भवति क्षत्र एवैतद्बलं दधाति ॥४॥

5 अथ द्वेधावदानानि कृत्वा श्रपयति[7] स यदर्धस्यावदानं तस्योपस्तीर्य द्विर्द्विरवदायाभिघार्य प्रत्यनक्त्यवदानान्यथोपभृत्युपस्तीर्य सकृत्सकृदवदाय द्विरभिघारयति[8] स यदर्धानाꣳ सतां द्विरवद्यति तेनैषा कृत्स्ना भवति तेन प्रचरन्ति तेन देवविशमुज्जयत्यथ यदिदमर्धं तन्मानुष्यै विश[9] उपहरन्ति[9] तेन मनुष्यविशमुज्जयति[10] ॥५॥

तदु तथा न कुर्यादुद्ध्वलति वै स यो यज्ञपथादेत्येत्यु वा एष यज्ञपथाद्य एवं (6)
तोति तस्माद्यत्रैवेतरेषां पशूनां वपाभिः प्रचरेयुस्तदेवास्या वपया प्रचरेयुर्यत्रैवेतरेषां
शूनाꣳ हविर्भिः प्रचरेयुस्तदेवास्या हविषा प्रचरेयुर्न मानुष्यै विश उपहरेत्[11] ॥६॥

अथैतान्त्सप्तदश प्राजापत्यान्पशूनालभते ते सर्वे तूपरा भवन्ति सर्वे श्यामाः (7)
र्वे मुष्करा एतद्वै प्रत्यक्षं प्रजापतिमुज्जयति यदेतानालभते ऽन्नं वै प्रजापतिर्यदि
अन्नं प्रजापतिरेतद्वै प्रत्यक्षमन्नं यत्पशुर्यदि वै सोमः प्रजापतिरेष वै प्रत्यक्षꣳ
मो यत्पशुस्तत्प्रत्यक्षं प्रजापतिमुज्जयति ॥७॥

ते वै सप्तदश भवन्ति सप्तदशो[12] हि प्रजापतिः सर्वे तूपरा भवन्ति पुरुषो (8-10)
अयं नेदिष्ठं प्रजापतेः सो ऽयं तूपरो ऽविषाणस्तूपरो वा अविषाणः प्रजापतिस्त-
त्सर्वे तूपराः सर्वे श्यामा द्वे वै श्यामस्य रूपे[13] शुक्लं[13] चैव कृष्णं च द्वन्द्वमु वै
थुनं प्रजननं प्रजननमु वै प्रजापतिस्तस्मात्सर्वे श्यामाः सर्वे मुष्कराः प्रजननꣳ
मुष्करः प्रजननꣳ हि प्रजापतिस्तस्मात्सर्वे मुष्करास्तान्यद्येवꣳसमृद्धानेतान्पशू-
न्विन्देदेत[14] एव स्युर्यद्येवꣳसमृद्धान्न विन्देदपि य एव के च पशवः स्युः सर्वꣳ हि
जापतिः ॥८॥

अथैतेषामेवोत्तमं वाच आलभते यदि वै प्रजापतेः परमस्ति वागेव तत्तेनो (11)
वाचमुज्जयति[15] तदु तथा न कुर्यात्सर्वं वा इदं प्रजापतिर्यदिमे लोका एषो वा इयं
लोकेषु वाग्वदति[16] तेनो एव वाचमुज्जयति तस्मात्प्राजापत्या एव स्युः ॥९॥

तेषामावृद्यत्र मैत्रावरुणो वामदेव्यमनुशꣳसति तदेषां वपाभिः प्रचरेयुः (12)
जापतिर्वै वामदेव्यं प्राजापत्या उ वा एते तस्मादेषां तत्र वपाभिः प्रचरेयुः ॥१०॥

अथेष्टा अनुयाजाः[17] स्युरव्यूळ्हे स्रुचावथैषाꣳ हविर्भिः प्रचरेयुरेतद्वै प्रत्यक्षं (13)
जापतिमुज्जयति यदेतैः प्रचरन्त्यन्तो[18] वा एष यज्ञस्यान्तत एवैतत्प्रजापतिमुज्ज-
यत्यथ यद्धातः पुरा प्रचरेयुर्यथा यमध्वानमियात्तं[19] गत्वा क्व ततः[20] स्यात्तस्मादत्रैव
चरेयुः ॥११॥

तदु तथा न कुर्यादुद्ध्वलति वै स यो यज्ञपथादेत्येत्यु वा एष यज्ञपथाद्य एवं (14)
करोति तस्माद्यत्रैवेतरेषां पशूनां वपाभिः प्रचरेयुस्तदेवैषां वपाभिः प्रचरेयुर्यत्रैवेतरेषां
पशूनाꣳ हविर्भिः प्रचरेयुस्तदेवैषां हविर्भिः प्रचरेयुरेकानुवाक्यैका[21] याज्यैकदेवत्या
हि प्रजापतय इत्युपाꣳशूक्त्वा छागानाꣳ हविषामनुब्रूहीत्युच्चैः प्रजापतय इत्युपाꣳ-
शूक्त्वा छागानाꣳ हविषां प्रस्थितं प्रेष्येत्युच्चैः ॥१२॥ तृतीयं ब्राह्मणम् ॥

1 आग्नेयमेववावाग्निष्टो° O P. 2 °क्थान्येव B, ह्युक्थ्यान्युक्थ्यान्येव W. 3 यदाहानति° B O P (sec. m.). 4 क्रियते B W C P, क्रिय O. 5 विशो वै मरुतो O, विशा वै मरुतो P. 6 Thus O P Or, विशो B W C (see V. 3. 4. 4). 7 श्रपयति B. 8 द्विरभिघारयति B. 9 विश उपहरंति MSS. 10 मनुष्यविश° O P C. 11 उपहरेत् O P C. 12 सप्तदशो O P C (orig.). 13 रूपे शुक्लं B W. 14 मुष्करा° B W; °वꣳसमृद्धानेता° MSS. 15 वाचमु° O P. 16 वाग्वदति MSS. 17 अनुयाजाः B W. 18 प्रचरत्यंतो O P C My Or. 19 °ध्वानमीयात्तं MSS. except Or. 20 Thus Or, चततः C (sec. m.), चत the other MSS. 21 प्रचरेयुरेकानु° B.

M. V. 1. 4

## K. VI. 1. 4

1 तं वै माध्यंदिने सवने ऽभिषिञ्चति माध्यंदिने सवन आजिं धावन्त्येष वाव प्रजापतिर्यज्ञो य एष तायत एतमेवैतत्प्रजापतिं[1] यज्ञं[2] मध्यत उज्जयति ॥१॥

2 अगृहीते माहेन्द्रे ग्रह एष वा इन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रो ऽप्यस्यैतन्निष्केवल्यमेव स्तोत्रं निष्केवल्यꣳ शस्त्रमिन्द्रो वै यजमानः स्व एवैनं तदायतन उज्जयति तस्मादगृहीते माहेन्द्रे ग्रहे[1] ॥२॥

3 अथास्मै रथमुपावहरन्तीन्द्रस्य वज्रो ऽसीति वज्रो वा एष यद्रथ इन्द्रो वै यजमानो यजमानस्यासीत्येवैतदाह यदाहेन्द्रस्य वज्रो ऽसीति वाजसा इत्यन्नं वै वाजो[2] ऽन्नसा[3] इत्येवैतदाह त्वयायं वाजꣳ सेदिति त्वयायमन्नमुज्जयत्वित्येवैतदाह यदाह त्वयायं वाजꣳ सेदिति[4] ॥३॥

4 अथैनं धूर्गृहीतमन्तर्वेद्यभ्यववर्तयति[1] वाजस्य नु प्रसवे मातरं महीमित्यन्नं वै वाजो ऽन्नस्य नु प्रसवे मातरं महीमित्येवैतदाहादितिं नाम वचसा करामह इतीयं वा अदितिस्तस्मादाहादितिं नाम वचसा करामह इति यस्याभिदं विश्वं भुवनमाविवेशेत्यस्याꣳ हीदꣳ सर्वं भुवनमाविष्टं तस्यां नो देवः सविता धर्म साविषगिति तस्यां देवः सविता यजमानꣳ साम्राज्याय सुवतामित्येवैतदाह यजमानो हि धर्मो यदाह तस्यां नो देवः सविता धर्म साविषगिति[1] ॥४॥

अथैतानश्वान्त्स्नपयन्ति स यत्र वैवैनानेतत्स्नपयन्ति तद्वैनानेतेन यजुषा- 5
ऽभ्युक्षति स्नापितान्वोदानीतान्त्स यदेनानद्भिरभ्युक्षत्यद्भ्यो ह वा अग्रे ऽश्वः
संबभूव सो ऽद्भ्यः संभवन्नकृत्स्नः संबभूवाकृत्स्नो हि वै संबभूव तस्मान्नैव कदा
चन सर्वैः पद्भिः प्रतितिष्ठति स यदेवास्य तत्राप्स्वहीयत तेनैवैनमेतत्समर्धयति
कृत्स्नं करोति तस्मादद्भिरभ्युक्षति ॥५॥

सो ऽभ्युक्षति देवीरापो अपां नपाद्यो व ऊर्मिः प्रतूर्तिः ककुन्मान्वाजसास्ते- 6
नायं वाजꣳ सेदिति वाऽप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तिभिः । अश्वा भवत
वाजिन इति वा ॥६॥

अथ प्रतिहृत्य युनक्ति स दक्षिणायुग्यमेवाग्रे युनक्त्यथ सव्यायुग्यꣳ 7
सव्यायुग्यं वा अग्रे मानुषे युनक्त्यथैवं देवत्रा ॥७॥

स युनक्ति वातो वा वो मनो वेति वाताद्वै नाशीयो ऽस्ति मनसो नाशीयो 8
ऽस्ति तस्मादाह वातो वा वो मनो वेति गन्धर्वाः सप्तविꣳशतिः । ते अग्रे
ऽश्वमयुञ्जन्नित्येते वा अग्रे ऽश्वमयुञ्जन्यद्गन्धर्वाः सप्तविꣳशतिस्तद्वै ऽग्रे ऽश्वम-
युञ्जꣳस्ते त्वा युञ्जन्त्वित्यवैतदाह ते अस्मिन्जवमादधुरित्येते वा अग्रे ऽश्वे
जवमादधुर्यद्गन्धर्वाः सप्तविꣳशतिस्तद्वै ऽग्रे ऽश्वे जवमादधुस्ते त्वयि जवमाद-
धत्वित्येवैतदाह ॥८॥

अथ सव्यायुग्यं युनक्ति वातरꣳहा भव वाजिन्युज्यमान इति वातजवस- 9
मेवैनमेतन्मनोजवसं करोतीन्द्रस्येव दक्षिणः श्रियैधीति यथायमिन्द्रस्य दक्षिणः
श्रियैवं त्वं यजमानस्य श्रियैधीत्येवैतदाह युञ्जन्तु त्वा मरुतो विश्ववेदस इति
युञ्जन्तु त्वा देवा इत्येवैतदाह यदाह युञ्जन्तु त्वा मरुतो विश्ववेदस इत्या ते त्वष्टा
पत्सु जवं दधात्विति त्वाष्ट्रा हि पशवः स यस्यैव पशवो यः पशूनामीष्टे स ते
त्वष्टा पत्सु जवमादधात्वित्येवैतदाहाथ दक्षिणाप्रष्टिं युनक्ति सव्याप्रष्टिं वा अग्रे
मानुषे युनक्त्यथैवं देवत्रा ॥९॥

स युनक्ति जवो यस्ते वाजिन्निहितो गुहा यः श्येने परीत्तो अचरच्च वात 10
इति यस्ते जवो ऽप्यपनिहितो यः श्येने परीत्तो यो वात इत्येवैतदाह तेन नो
वाजिन्बलवान्बलेनेति तेन नो वीर्येणेत्येवैतदाह यदाह तेन नो वाजिन्बलवान्बलेनेति
वाजजिच्चैधि समने च पारयिष्णुरित्यन्नं वै वाजो ऽन्नजिच्च न एध्यसिꣳश्च नः समने

देवसमन[21] इमं यज्ञं प्रजापतिमुज्जयेत्येवैतदाह यदाह वाजजिच्चैधि समने च पारयिष्णुरिति ॥१०॥

11 त एत एव त्रयो युक्ताः स्युर्मानुषँ ह कुर्याद्यच्चतुर्थमुपयुञ्ज्याद्व्यृद्धं[23] वै तद्यज्ञस्य यन्मानुषं त्रिवै देवत्रा त्रिवृद्यज्ञस्त्रय इमे लोकास्तस्मादेत एव त्रयो युक्ताः स्युः प्रतिहृताधान[24] एवाभिप्रष्टियुगश्चतुर्थ[25] उपतिष्ठेत स यत्र दद्यात्तत्तं चतुर्थमुपयुज्य दद्यात् ॥११॥

12-14 अथैतँ सप्तदशशरावं[26] नैवारं चरुमाहरन्ति बार्हस्पत्यमन्नं वा एष उज्जयति यो वाजपेयेन यजत एतद्वै प्रत्यक्षमन्नं यच्चरुरोदनो ह्येष ओदनो हि प्रत्यक्षमन्नं तस्माच्चरुर्भवति सप्तदशशरावो[27] भवति[27] सप्तदशो हि प्रजापतिर्नैवारो भवत्येते वै ब्रह्मणा पच्यन्ते[28] यन्नीवारास्तस्मान्नैवारो भवति बार्हस्पत्यो भवति बृहस्पतिर्ह्येतमग्रे यज्ञमुदजयत्तस्माद्बार्हस्पत्यो भवति ॥१२॥

15 तमश्वानवघ्रापयति वाजिनो वाजजित[29] इति वाजिनो ह्येते वाजजित[30] इत्यन्नं वै वाजो ऽन्नजित इत्येवैतदाह वाजँ सरिष्यन्त इति सरिष्यन्तो हि भवन्ति बृहस्पतेर्भागमवजिघ्रतेति बार्हस्पत्यो ह्येष चरुर्भवति स यदश्वानवघ्रापयति वीर्यमेवैष्वेतद्दधात्यथो इदमन्नमिमं यज्ञं प्रजापतिमुज्जयानीति तथा हैतदन्नमेतं यज्ञं प्रजापतिमुज्जयति ॥१३॥ चतुर्थं ब्राह्मणम् ॥ प्रथमो ऽध्यायः ॥

1 °प्रजापतिर्यज्ञं MSS. except Or. 2 ग्रहे MSS. 3 Thus C ( वाजोंनसा ) and Or ( वाजोश्वसा ) only, वाजोंजसा B W O P, वाजोञसा My, वाजोजसा T. 4 सेदिति MSS. 5 °भ्यवव्रर्तयति O P. 6 °गिति W B O P C ( orig. ). 7 Thus Or ( without accent ); वेवैनानेत° B C W, वैनानेत° O P My, वैनामेत° T. 8 स्नपितान्वो° MSS. 9 °रभ्युक्षत्य° O P C. 10 न्यः संभवक्तृ° P ( orig. ), न्यः संभवत्यक्तृ° P ( sec. m. ), न्यः संभवत्यक्तृ° O T My, न्यः संभवश्चक्तृ° C, न्यः संबभूवंनक्तृ° Or. 11 °न्निरभ्युक्षति B W C O P. 12 तेग्रे O P. 13 श्वमयु° O P. 14 वाग्रे MSS. except Or. 15 जवमादधु° MSS. 16 °मनोजवसं

O P C. 17 Emended ( see VII. 3. 3. 6 ), °प्रष्टिं वै मामानुषे B, °प्रष्टिं वै मानुषे the other MSS. (Or युनक्ति न सव्याप्रष्टिꣳ सव्याप्रष्टि वै मानुषे). 18 परीतो B C P My W Or. 19 Emended; °युपनि° MSS. 20 परीतो B W C T Or My, परित्तो O, परितो P. 21 न B W C T My Or, न । O P. 22 Thus accented MSS. 23 °मुपयुज्या° MSS. except Or. 24 ? Thus MSS. (प्रतिहृधान My) except Or, which has प्रतिहिताधाना. 25 एवाभिः-प्रष्टियुगश्चतु° O P, एवाभिः प्रष्टिंयुगश्चतु° B W, एवाभिः प्रष्टिं-युगश्चतु° C My, एवाध्वप्रष्टियुगश्च° Or. Read एवाधिप्रष्टि° ? 26 सप्तदशशरावं O P C. 27 °शरावो वै भवति B. 28 पच्यंते B W. 29 वाजजित O P, वाजजित B ( first time ).

M. V. 1. 5

## K. VI. 2. 1

1 यदाजिं[1] धावन्तीममेव तेन लोकमुज्जयत्यथ यदन्तरिक्षे रथचक्रमुद्धितं ...मभिदध्मे[2] तद्ब्रह्मारोहति[3] तत्सामाभिगायत्यन्तरिक्षलोकमेव तेनोज्जयत्यथ यद्यूपꣳ ...रोहति दिवमेव तेनोज्जयति देवलोकमेव तस्माद्वा एतानि क्रियन्ते ॥१॥

2.3 स ब्रह्मारोहति रथचक्रं देवस्य वयꣳ सवितुः सवे सत्यसवसः । बृहस्प-...तेरुत्तमं नाकꣳ रुहेमेति यदि ब्राह्मणो यजेत ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणो ...यद्यु क्षत्रियो यजेत देवस्य वयꣳ सवितुः सवे सत्यसवसः । इन्द्रस्योत्तमं नाकꣳ ...रुहेमेति क्षत्रꣳ हीन्द्रः क्षत्रमु हि क्षत्रियः[4] ॥२॥

4.5 अथ त्रिरभिगायति साम त्रिरभिगीय[5] साम प्रत्यवरोहति देवस्य वयꣳ सवितुः सवे सत्यसवसः । बृहस्पतेरुत्तमं नाकमरुहामेति वेन्द्रस्योत्तमं नाकमरुहामेति वा ॥३॥

6 अथैतान्त्सप्तदश दुन्दुभीनुद्धनन्ति[6] प्रतीच आग्नीध्रादनूचो[7] वेद्यन्तं प्रजापतिं वा एष उज्जयति यो वाजपेयेन यजते वाग्वै प्रजापतिरेषा वै परमा वाग्या सप्तदशानां दुन्दुभीनां परमामेवैतद्वाचं परमं प्रजापतिमुज्जयति ते वै सप्तदश भवन्ति सप्तदशो हि प्रजापतिः ॥४॥

7-9 स यत्राद् आजिं धावन्ति तदेषामेकमाहन्ति बृहस्पते[7] वाजं जय बृहस्पतये वाचं वदत। बृहस्पतिं वाजं जापयतेति यदि ब्राह्मणो यजेत ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणो यद्यु क्षत्रियो यजेतेन्द्र वाजं जयेन्द्राय वाचं वदत। इन्द्रं वाजं जापयतेति क्षत्रᳫं हीन्द्रः क्षत्रमु हि क्षत्रियः ॥५॥

10-12 स यत्राद् आजिसृतो[8] रथा विमुच्यन्ते तदेषामेकमवमुञ्चत्येषा[9] वः सा सत्या संवागभूद्यया बृहस्पतिं वाजमजीजपत। अजीजपत बृहस्पतिं वाचं वनस्पतयो विमुच्यध्वमिति तदेकमवमुञ्चन्त्सर्वान्विमुञ्चति[10] ॥६॥

13.14 अथ यत्राद् आजिमवख्याप्य[11] रथाः पुनरायन्ति तद्राजन्यः प्रविध्यति सप्तदश प्रव्याधान्प्रजापतिं वा एष उज्जयति यो वाजपेयेन यजते यावान्वा एकः प्रव्याधस्तावाᳫंस्तिर्यङ् पुरुषो ऽथ यावन्तः सप्तदश प्रव्याधास्तावाᳫंस्तिर्यङ् प्रजापतिस्तस्मात्सप्तदश प्रविध्यति सप्तदशो हि प्रजापती राजन्यः प्रविध्यत्येष वै प्रजापतेर्नेदिष्ठो यद्राजन्य एष ह वा अस्य नेदिष्ठस्तस्मादेको बहूनामीष्टे तस्माद्राजन्यः प्रविध्यति तत्सप्तदशे प्रव्याधे काष्ठां निमिन्वन्ति सो ऽवगमो भवति ॥७॥

15.16 अथ यजमान आतिष्ठति रथं देवस्य वयᳫं सवितुः सवे सत्यसवसः। बृहस्पतेर्वाजजितो वाजं जेष्मेति स यथैवादो बृहस्पतिः सवितारं प्रसवायोपससारैवमेवैष एतत्सवितारं प्रसवायोपधावति तमस्मै[12] सविता प्रसौति तᳫं[12] सवितृप्रसूत उज्जयत्यथ य एतद्यजुर्वेद[13] सो ऽन्वातिष्ठति यदि वात्मना यजमानः ॥८॥

17 स दक्षिणायुग्यमुपस्पृशति वाजिनो वाजं जयतेति वाजिनो ह्येते वाजं जयतेत्यन्नं वै वाजो ऽन्नं जयतेत्येवैतदाहाध्वन स्कभ्नन्त इत्यध्वनो ह्येते स्कभ्नन्तो धावन्ति योजना मिमाना इति योजनशो[14] ह्यध्वानं मिमते काष्ठां गच्छतेत्यवगमं गच्छतेत्येवैतदाह यदाह काष्ठां गच्छतेति[15] ॥९॥

18-20 अथ खलु धावन्त्याजिमाघ्नन्ति[16] दुन्दुभीनभिगायति ब्रह्मा साम महान्घोषो भवत्यथैताभ्यां जगतीभ्यामध्वर्युरनु[17] वा मन्त्रयते जुहोति वा समान एव बन्धुर्यदि चानुमन्त्रयते यदि च जुहोत्येतानेवैतद्धावत[18] उपवाजयत्येतेषु वीर्यं दधाति यथो चैनानन्तरा नाष्ट्रा रक्षाᳫंसि न विन्देयुरेवमु चैवैषो ऽनु वा मन्त्रयते जुहोति वैष स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि। क्रतुं दधिक्रा अनु संतवीत्वत्पथामङ्काᳫंस्यन्वापनीफणत् ॥ उत स्मास्य द्रवतस्तुरण्यतः

न वेरनुवाति प्रगर्धिनः । श्येनस्येव ध्रजतो अङ्कसं परि दधिक्राव्णः सहोर्जा
त्रत इति[१८] ॥१०॥

अथैतेन तृचेनान्वेव मन्त्रयते न जुहोत्येतानेवैतद्धावत[१९] उपवाजयत्येतेषु 21-24
र्यं दधाति तिस्र उ वा इमाः पृथिव्य इयमेका परे द्वे ता उ चैवैतदुज्जयति[२०] शं
भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः । जम्भयन्तो ऽहिं वृकꣳ रक्षाꣳसि
सनेम्यस्मद्युयवन्नमीवाः ॥ ते नो अर्वन्तो हवनश्रुतो हवं विश्वे शृण्वन्तु
जिनो मितद्रवः । सहस्रसा मेधसाता इव त्मना महो ये धनꣳ समिथेषु
भ्रिरे ॥ वाजे वाजे ऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः । अस्य मध्वः
त मादयध्वं तृप्ता यात पथिभिर्देवयानैरित्यवगमं[२१] प्राप्य दक्षिणानन्वा-
नयति[२२] ॥११॥

अथैतेन बार्हस्पत्येन चरुणा चात्वाले प्रत्युपतिष्ठन्ते ऽन्नं वा एष उज्जयति 25
वाजपेयेन यजत एतद्वै प्रत्यक्षमन्नं यच्चरुरोदनो ह्येष ओदनो हि प्रत्यक्षमन्नं
साच्चरुर्भवति ॥१२॥

तमागत्याभिमृशति स यदेवैतदन्नमुज्जयति तेनैवैतत्सꣳस्पृशते तदा-
त्मनि कुरुते तदात्मनि धत्ते[२३] ॥१३॥

सो ऽभिमृशत्या मा वाजस्य प्रसवो जगम्यादित्यन्नं वै वाज आ मान्नस्य 26
सवो जगम्यादित्येवैतदाहेमे द्यावापृथिवी विश्वरूपे इतीमे हि द्यावापृथिव्यौ[२४]
जापतिरा मा गन्तं पितरा मातरा युवमिति पिता च हि माता च प्रजापतिरा
सोमो अमृतत्वाय गम्यादिति सोमो हि प्रजापतिस्तेनोदरमुपस्पृशत्यत्र ह्यन्नं
तितिष्ठति ॥१४॥

अथाश्वानवघ्रापयति वाजिनो वाजजित[२५] इति वाजिनो ह्येते वाजजित 27
न्नं वै वाजो ऽन्नजित इत्येवैतदाह वाजꣳ ससृवाꣳस इति सरिष्यन्त इति वा
प्र आह सरिष्यन्तो हि तद्भवन्त्यथात्राह ससृवाꣳस इति ससृवाꣳसो ह्यत्र
वन्ति बृहस्पतेर्भागमवजिघ्रतेति बार्हस्पत्यो ह्येष चरुर्भवति निमृजाना इति स
प्रे ऽश्वानवघ्रापयतीदमन्नमिमं यज्ञं प्रजापतिमुज्जयानीत्यथ यदत्रावघ्रापयतीदम-
न्नमिमं यज्ञं प्रजापतिमुदजैषमित्यथ यदाह निमृजाना इति यजमान एवैतदन्नाद्यमि-
न्द्रियं वीर्यं दधाति ॥१५॥

अथ पूर्वया द्वारा मधुग्रहं निष्क्रमयन्ति प्रतीच्या सुराग्रहानथैषामाजि- 28

सुता२[26] रथानामेकमन्वास्थितो भवति[27] राजन्यो वा[28] वैश्यो वा तस्मा इमं मधुग्रहं प्रयच्छति[29] हन्त ते ऽयमित्यथैषा२ सुराग्रहाणामेकमन्वारभ्याहैभिस्ते ऽयमेतं निष्क्रीणामीति[30] तद्यजमान एवैतच्छ्रूय२ सत्यं ज्योतिर्दधात्यथैतस्मिन्राजन्ये वा वैश्ये वानृतं पाप्मानं तमो दधाति तैः स भुङ्क्ते यथा स्वैः सद्भिरेवं यदि कामयते पिबति यदि कामयते परासिञ्चति यथा स्वान्त्सत एवमुपचरत्यथायं[31] यजमान इमं मधुग्रहं ब्रह्मणे ददाति ब्रह्मणे दददायुरेवामृतमात्मनि धत्ते ॥१६॥ प्रथमं ब्राह्मणम् ॥

1 यदार्जि B P, यदार्जि W C (pr. m.), यदार्जि (sec. m.) यदार्जिं or यदार्जिं O. 2 नाभिदघ्ने तद्ब्रह्मा° C (sec. m.), and Or, °दघ्ने ब्रह्मा° O, °दघ्ने (then follows one akṣara which is blotted out and replaced on the margin by स) ब्रह्मा° P. 3 क्षत्रियः B W O P C (orig.). 4 त्रिरभिगीय MSS. 5 °नुद्विघ्नंति O P, नुद्विघ्नन्ति My. 6 °दनूचो B W C, °दनूचो O P. 7 बृहस्पते MSS. 8 आजिश्रितो O P C My, आजिश्रुतो Or. 9 °मवमुंचत्ये° O P. 10 तदेकमवमुंचंस्सर्वा° P C (sec. m.), तदेकमवमुंचस्सर्वा° B, तदेकमवमुंचस्स° W, तदेकस्मवमुंचंस्सर्वा° O, °मुञ्चत्सर्वा° T My. 11 °स्याज्य B. 12 See on VI. 1. 1. 10. 13 °जुर्वेद MSS. 14 योजनशो C P. 15 °तेति B W O P C (orig.). 16 धावंत्या° B W C (sec. m.). 17 °ध्वर्युरनु MSS. 18 °तद्धावत MSS. 19 इति B W O P C (orig.). 20 वैवैत° O P, चैवैत° C (orig.) Or. 21 Thus the accent in C (sec. m.),° रित्यवगमं the other MSS. 22 °यामयति T, °यामयंति the other MSS. 23 धत्ते B W O P C (orig.). 24 °पृथिव्यौ MSS. 25 वाजजित O P. 26 °जिश्रुता२ O P C Or. 27 भवति C (sec. m.). 28 Omitted in B W. 29 प्रयछति O P,

प्रयछंति B W C My Or. 30 °हैभिस्ते यमेतं नि° O P C, °हैभिस्त यमेत नि° B W. Read °हैभिस्ते ?

31 एवमुपचरत्य° B W C, एवमुपवरत्य° O P.

K. VI. 2. 2 M. V. 2. 1

स वा आहवनीयमित्वा स्रुवेणैवाज्यस्थाल्या एता आहुतीर्जुहोत्यापये 1.2
हा स्वापये स्वाहापिजाय¹ स्वाहा क्रतवे स्वाहा। वसवे स्वाहाहर्पतये स्वाहा।
मुग्धाय स्वाहा मुग्धाय वैनꣳशिनाय स्वाहा विनꣳशिन आन्त्यायनाय स्वाहा-
आय भौवनाय स्वाहा भुवनस्य पतये स्वाहाधिपतये स्वाहेत्येता द्वादशाहुतीर्जु-
ति प्रजापतिं वा एष उज्जयति यो वाजपेयेन यजते द्वादश वै मासाः संवत्स-
र संवत्सरो वै प्रजापतिस्तत्प्रजापतिमुज्जयति ॥१॥

अथैनमेताः षट् क्लृप्तीर्वाचयति वा जुहोति वा समान एव बन्धुर्यदि 3.4
वाचयति यदि च जुहोत्यायुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन
ल्पताꣳ श्रोत्रं यज्ञेन कल्पतां पृष्ठं यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पतामिति
जापतिं वा एष उज्जयति यो वाजपेयेन यजते षड्वा ऋतवः संवत्सरस्य संव-
सरो वै प्रजापतिस्तत्प्रजापतिमुज्जयत्यथ यदेनं क्लृप्तीर्वाचयति कल्पयित्वैवैनं
मुज्जयति ॥२॥

स वा एषो ऽष्टाश्रिर्यूपो भवत्यष्टाक्षरा वै गायत्र्यग्निरु वै गायत्री गायत्र- 5-7
च्छन्दा³ ह्यग्निरग्निरु वै सर्वा देवतास्तेन देवलोकमुज्जयति ॥३॥

अथातीक्ष्णाग्रो यूपो भवति गर्तस्य रूपं पितृदेवत्यो वै गर्तस्तेन पितृलो-
कमुज्जयति ॥४॥

अथ गोधूमाश्वषालभाजनं⁴ भवति पुरुषो वा अयं नेदिष्ठं प्रजापतेः सो
ऽयमत्वक् पुरुष एत⁵ उ वा ओषधीनां नेदिष्ठाः पुरुषस्य यद्गोधूमा न ह्येतेषां
त्वगस्ति न पुरुषस्य तेन मनुष्यलोकमुज्जयति ॥५॥

स सप्तदशभिर्वासोभिर्वेष्टितो⁶ वा विनद्धो⁷ वा भवति सप्तदशो वै
प्रजापतिस्तस्मात्सप्तदशभिर्वासोभिर्वेष्टितो⁶ वा विनद्धो⁷ वा भवति सप्तदशारत्नि-
र्वाव भवति सप्तदशो हि प्रजापतिस्तत्प्रजापतिमुज्जयति ॥६॥

अथ यत्र यूपꣳ रोक्ष्यन्भवति तत्पत्नीमुदानयन्ति⁸ तामुदानेष्यन्तः कौशं 8
वा चण्डातकमभिपरिधापयन्ति⁹ कौशं वा वासो ऽस्ति वा अमेध्यं पत्न्या यदुवाङ्

नाभेः[१०] सेदं प्राची यज्ञं प्रसत्स्यन्ती[११] भवति पवित्रमु वै मेधः कुशास्तथो पवित्र-पूतैतन्मेध्या प्राची यज्ञं प्रसजति[१२] ॥७॥

9 अथ निश्रयणी[१३] कृता भवति तया यूपꣳ रोहति स इत्युदङ् रोहेत्तत्रैक इति दक्षिणा रोहयन्ति[१४] तदु तथा न कुर्यादुदगेव रोहयेदुदीची वै मनुष्याणां दिक् सा यजमानस्य तस्मादुदगेव रोहयेत् ॥८॥

10 स यूपꣳ रोक्ष्यन्जायामामन्त्रयते जाय एहि[१५] स्वो[१५] रोहावेति[१६] रोहावेति जाया प्रत्याह स यदेवं जायामामन्त्रयते ऽर्धो वा अस्यैष आत्मनो यज्जायार्धो हि वा अस्यैष आत्मनस्तस्माद्यावदेकाकी भवति[१७] नैव तावद्बहुर्भवति न प्रजायते ऽकृत्स्नो हि भवत्यसर्वो ऽथ यदैव जायां विन्दते ऽथैव बहुर्भवत्यथ प्रजायते[१८] कृत्स्नो हि भवति सर्वः स्वर्गमु वा इदं लोकꣳ रोक्ष्यन्भवति यो ऽस्यैष जितः स्वर्गो लोकस्तद्यदिदमस्यार्धमात्मनस्तेन संपद्यते तेन संपद्यैतां जितिमभ्युत्क्रामति[१९] यो[२०] ऽस्यैष[२०] जितः स्वर्गो लोकस्तथास्येह नात्मनः किं चन हीयते ॥९॥

11-13 स रोहति प्रजापतेः प्रजा अभूमेति प्रजापतेर्ह्येष प्रजा भवति यो वाजपेयेन यजते तस्मादाह प्रजापतेः प्रजा अभूमेति स्वर्देवा अगन्मेति गोधूमानभिमृशति[२१] स्वर्ह्येष देवानेति[२२] यो वाजपेयेन यजते स यद्गोधूमानभिमृशत्यन्नं[२३] वा एष उज्जयति यो वाजपेयेन यजत एतद्वै प्रत्यक्षमन्नं यद्गोधूमास्तदेतां गतिं गत्वा यो ऽस्यैष जितः स्वर्गो लोको यदेतदन्नमुज्जयति तेन सꣳस्पृशते तदात्मनि कुरुते तदात्मनि धत्ते तेनोदरमुपस्पृशत्यत्र ह्यन्नं प्रतितिष्ठति ॥१०॥

14.15 अथ यूपाग्रꣳ शिरो ऽतिहरति[२४] तेन देवलोकमुज्जयति तथास्याः[२५] प्रत्यवरूल्हं भवति यूपाग्रꣳ शिरो ऽतिहृत्य जपत्यस्मे वो अस्त्विन्द्रियमस्मे नृम्णमुत क्रतुः । अस्मे वर्चाꣳसि सन्तु व इति प्रजापतिं वा एष उज्जयति यो वाजपेयेन यजते सर्वं वा इदं प्रजापतिर्यदिमे लोका यदिमा दिशस्तत्प्रजापतिमुज्जित्यास्य[२६] सर्वस्येन्द्रियं वीर्यꣳ संवृङ्क्ते स यः संवृङ्क्ते तस्मात्सम्राण्णाम[२७] ॥११॥

16 अथैनमूषपुटैरनूदस्यन्त्यन्नं वा एष उज्जयति यो वाजपेयेन यजते ऽस्यामु वा इदमन्नमस्याꣳ हीदमन्नाद्यं पशवो वा ऊषा एतद्वै प्रत्यक्षमन्नं यत्पशवस्तस्मादूषपुटा भवन्ति ॥१२॥

17 अश्वत्थपलाशैरुपनद्धा[२८] भवन्ति मारुतो वा अश्वत्थो यदश्वत्थे तिष्ठत इन्द्रो

ल उपामन्त्रयत तेन मारुतो ऽश्वत्थो विशो वै मरुतो[29] ऽन्नमु वै विशस्तस्मादश्व-
पलाशैरुपनद्धा[30] भवन्ति ॥१३॥

विश्या अनूद्स्यन्त्यन्नꣳ हि विशः सप्तदश भवन्ति सप्तदशो हि प्रजापतिः
यदेवैतदन्नमुज्जयति तेनैवैनमेतत्सꣳस्पर्शयति तेन समर्धयति तदस्मि-
न्दधाति ॥१४॥

अथ पृथिवीं प्रत्यवेक्षमाणो जपति नमो मात्रे पृथिव्या इति यत्र ह वा अग्रे 18
बृहस्पतिरेतं यज्ञं प्रजापतिमुदजयत्तद्धास्याः पृथिव्या बिभयां चकार[31] प्रेव वा
अहमस्या[32] अच्योषीति[31] य इमं यज्ञं प्रजापतिमुदजैषं यद्वै मेयं नावधून्वीतेती-
यमु ह वै पृथिव्येतस्माद्बिभयां[33] चकार महद्वा अयं प्रापदिति य इमं यज्ञं प्रजापति-
मुदजैषीद्यद्वै मायं नावहणीयादिति तयैवैतत्संज्ञामकुरुत न हि माता पुत्रꣳ हिनस्ति
न पुत्रो मातरम् ॥१५॥

तथो वा एष एतदस्याः पृथिव्या बिभेति प्रेव वा अहमस्या[34] अच्योषीति[34] 19
य इमं यज्ञं प्रजापतिमुदजैषं यद्वै मेयं नावधून्वीतेतीयमु ह वै पृथिव्येतस्माद्बिभेति[33]
महद्वा अयं प्रापदिति य इमं यज्ञं प्रजापतिमुदजैषीद्यद्वै मायं नावहणीयादिति तयैवै-
तत्संज्ञां कुरुते न हि माता पुत्रꣳ हिनास्ति न पुत्रो मातरम् ॥१६॥

अथ हिरण्यमभ्यवरोहत्यायुर्वा अमृतꣳ हिरण्यमायुष्येवैनमेतदमृते ऽन्ततः 20-23
प्रतितिष्ठति ॥१७॥

अथास्मा एतामौदुम्बरीमासन्दीं निदधत्यग्रेण हविर्धानं जघनेनाहवनीयमु-
परिषद्यं वा एष जयत्यन्तरिक्षसद्यं यो वाजपेयेन यजते स यदेव जयत्युपरिषद्यम-
न्तरिक्षसद्यं तदेवैनमेतत्प्रापयति तदेनमुपर्यासीनमधस्ताद्विश इमाः प्रजा उपासत
औदुम्बरी भवत्यन्नं वा ऊर्गुदुम्बरस्तस्मादौदुम्बरी भवति ॥१८॥

तां बस्ताजिनेनास्तृणाति प्रजापतिं वा एष उज्जयति यो वाजपेयेन 24
यजत ऋषभो वै पशूनां प्रजापतिरन्न[35] वै प्रजापतिर्नेदिष्ठो यदजासु[31] यदजर्षभे[36]
स यमेवैतत्प्रजापतिमुज्जयति[36] तेनैवैनमेतत्सꣳस्पर्शयति तेन समर्धयति तस्माद्ब-
स्ताजिनेनास्तृणाति ॥१९॥

स आस्तृणातीयं ते राळिति राज्यमेवास्मा एतत्करोति राज्यमेनं प्रापय- 25
त्यथैनं बाहुगृहीतमधिनयति यन्तासि यमन इति यन्तारमेवैनं यमनमासां प्रजानां
करोत्यथोपवेशयति ध्रुवो ऽसि धरुण इति ध्रुवमेवैनं धरुणमेषु लोकेषु करोति

कृष्यै क्षेमाय रय्यै पोषायेति साधव इत्येवैतदाह ॥२०॥ द्वितीयं ब्राह्मणम् ॥

1 प्रजायै (instead of °पिजाय) My. 2 कल्पयित्वैवैनं B W C ( orig. ), कल्पयत्वेवैनं C ( sec. m. ), कल्पयत्वेवैनं O P. 3 गायत्रीछन्दो T, गायत्रछंदो the other MSS. 4 °चषाल° B W My, °चषाळ O P Or, O has also the sign answering to ळ. 5 एता B W C T. 6 °वांसोभिर्वेष्टितो MSS. 7 त्रिनद्धो MSS. 8 Emended; °नयति MSS, 9 °चंडातकम° MSS. 10 नाभे O P. 11 Thus Or only ( cp. IV. 8. 2. 1 ), प्रसस्यंती B W C, प्रसस्यंती O P My. 12 ? प्रसजति B W O P C, प्रसजति T My; for प्रसजति cp. VII. 2. 1. 1. 13 निःश्रय° B W C ( sec. m. ) Or. 14 रोहयति O, रोहंति B Or 15 एहि स्वो O, एहि स्वो P. 16 रोहावेति B W. 17 भवति B O P W. 18 प्रजापते O P C. 19 जितिमभ्युत्क्रामति B C My Or, जितिमप्युत्क्रामति O P. 20 यास्यैव O P. 21 °मृशति O. 22 Thus Or only, देवानिति the other MSS.; this points to a Saṃhitā° reading ( as the Taitt.) : स्वर्देवाऽ अगन्म. 23 °भिमृशत्य° B W O P C. 24 तिहरति O. 25 तथास्योः O. Read तथास्य or तथास्या- ? 26 °मुज्जित्यास्य O P C (orig. ). 27 °स्सम्राण्नाम B W C My Or, °स्सम्राट् नाम O P. 28 अश्वत्थ° B W O P. 29 मरुतो O P C (orig.). 30 °स्तस्मादश्वत्थ° B W. 31 चकार B W. 32 Thus C ( sec. m.) and Or only; cp. also VII. 3. 3. 18; अहमस्याध्योषीति the other MSS. 33 पृथिव्येत° MSS. 34 Thus

४१२

C (sec. m.) and without accent T and Or; अहमस्याच्योषीति the other MSS. 35 °पतिरन्न O, °पतिरन्नं P. 36 Thus C My, यद्जासु यद्वषभे O, यदजासुर्यदषभे P, यदजासु यदज ऋषभे B W Or. 37 °मुज्जयति B W O P C (orig.).

K. VI. 2. 3 M. V. 2. 2

स वै यदेतेन[1] बार्हस्पत्येन चरुणा प्रचरति तदिष्टा देवता भवत्यनिष्टः[2] 1
…ष्टकृद्यथास्मा एतदन्नं संभरत्येतत्सर्वौषधं[3] स यदस्मा एतदन्नं संभरत्यन्नं
एष उज्जयति यो वाजपेयेन यजते[4] ऽन्नपेयं[5] ह वै नामैतद्यद्वाजपेयमित्याहुः
यदेवैतदन्नमुज्जयति तदेवास्मा एतत्संभरति तेनैनमभिषिञ्चति तेन समर्धयति
…स्मिन्दधाति तस्मादस्मा एतदन्नं संभरति ॥१॥

औदुम्बरे चमसे ऽन्नं वा ऊर्गुदुम्बरो ऽन्नमु वा एतत्संभरति तस्मादौ- 2
…म्बरे चमसे[6] ॥२॥

सो ऽप एवाग्रे संभरत्यथ पयो ऽथ यथोपस्मारमन्नान्यन्नानि[7] तानि 3.4
…सप्तदश संभरेदित्याहुः सप्तदशो हि प्रजापतिरिति तदु यावन्त्येवोपस्मरेद्यावन्ति
…विन्देत्तावन्ति संभरेत् ॥३॥

तस्यास्यान्नस्य संभृतस्यैकमन्नमुद्धरेत्तदुद्ब्रुवीत[8] तन्नाश्नीयाद्यावज्जीवे-
…तावदपि वै प्रजापतेः सर्वमन्नमनवरुद्धमथ[9] कस्तस्मै मनुष्यो यत्सर्वमन्नमवरु-
…न्धीत[10] तथा ह नान्तं गच्छति तथा ज्योग्जीवति तदिह प्रजायै परिशिनष्टि ॥४॥

तस्यास्यान्नस्य संभृतस्यैता आहुतीर्जुहोति वाजप्रसव्या[11] अन्नं वा एष
उज्जयति यो वाजपेयेन यजते स याभ्यो देवताभ्य एता आहुतीर्जुहोति ता अस्मै
देवताः प्रीता एतदन्नं प्रसुवन्ति ताभिः प्रसूत उज्जयति तस्माद्वा एता
आहुतीर्जुहोति ॥५॥

स जुहोति वाजस्येमं प्रसवः सुषुवे ऽग्र इत्येताः सप्ताहुतीर्जुहोत्यथ 5-12
यदिदमन्नं परिशिष्टं भवति तेनैनमभिषिञ्चत्यन्नं वा एष उज्जयति यो वाजपेयेन
यजते स यदेवैतदन्नमुज्जयति तेनैवैनमेतदभिषिञ्चति तेन समर्धयति तदस्मिन्दधाति
तस्मादन्नमभिषिञ्चति[12] ॥६॥

सो ऽभिषिञ्चति देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ता- 13.14

भ्याम् । सरस्वत्यै वाचो[11] यन्तुर्यं तुर्य[11] दधामीति वाग्वै सरस्वती तदेनं वाच एव तुर्यं[12] तुर्य[13] दधातीति[14] तदु हैक आहुर्विश्वेषां त्वा देवानां तुर्यं तुर्यं दधामीति सर्वं वै विश्वे देवा इति तदेनमस्य सर्वस्य तुर्यं तुर्यं दधातीति[14] तदु तथा न ब्रूयात्सरस्वत्या इत्येव ब्रूयाद्वाग्वै सरस्वती वाग्वै प्रजापतिः सर्वं प्रजापतिस्तदेनमस्य सर्वस्य तुर्यं तुर्यं दधाति तस्मात्सरस्वत्या इत्येव ब्रूयात् ॥७॥

बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चामीति ब्रूयाद्यदि ब्राह्मणो यजेत ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मण इन्द्रस्य त्वा साम्राज्येनाभिषिञ्चामीति ब्रूयाद्यदि क्षत्रियो यजेत क्षत्रꣳ हीन्द्रः क्षत्रमु हि क्षत्रियः[15] ॥८॥

15 अथ सम्राळयमभूदिति त्रिरुद्वदति निवेदितमेवैनमेतत्सन्तं देवेभ्यो भूयो निवेदयत्ययं यौष्माक इतीमं गोपायतेमं वित्तेति देवान्ह्येष उपावर्तते यो वाजपेयेन यजते स देवतानामेवैको भवति ॥९॥

16 अथैनमेता उज्जितीर्वाचयति वा जुहोति वा समान एव बन्धुर्यदि च वाचयति यदि च जुहोति यद्देवैताभिरुज्जितिभिरेता देवता उदजयꣳस्तद्देवैताभिर्यजमान उज्जयति ॥१०॥

17 अग्निरेकाक्षरेण प्राणमुदजयत्तमुज्जेषं प्रजापतिः सप्तदशाक्षरेण सप्तदशꣳ स्तोत्रमुदजयत्तमुज्जेषमिति स यद्देवैताभिरुज्जितिभिरेता देवता उदजयꣳस्तद्देवैताभिर्यजमान उज्जयति ॥११॥

18.19.21 अथाहाग्नये स्विष्टकृते ऽनुब्रूहीत्यग्निꣳ स्विष्टकृतं यजेति वषट्कृते जुहोति स यदुभे आहुती अन्तरेणैतत्कर्म क्रियत एष वाव प्रजापतिर्यज्ञो य एष तायत एतस्यैवैनमेतत्प्रजापतेर्यज्ञस्य मध्यत आदधाति मध्यतो ऽभिषिञ्चत्यथेळामुपहूय मार्जयन्ते मार्जयित्वा माहेन्द्रं ग्रहं गृह्णाति माहेन्द्रं ग्रहं गृहीत्वा स्तोत्राय प्रमीवति स स्तोत्रमुपावहरति सो ऽन्ते स्तोत्रस्य भवत्यन्ते शस्त्रस्यात्मा वै स्तोत्रं प्रजा शस्त्रं तयोरेवैतदुभयोरन्ते भवति ॥१२॥

20 तद्धैके स्तोत्रमुपाकृत्याथैतत्कर्म[16] कुर्वन्ति तदु तथा न कुर्यादात्मा वै स्तोत्रं प्रजा शस्त्रं ताभ्याꣳ हैनं त उभाभ्यां प्रनाशयन्ति प्रधमन्ति[17] स पापीयानिष्ट्वा भवति तस्मात्पुरस्तादेवैतत्कर्म कृत्वान्त एव स्तोत्रस्य स्यादन्ते शस्त्रस्यात्मा वै स्तोत्रं प्रजा शस्त्रं तयोरेवैतदुभयोरन्ते भवति स श्रेयानिष्ट्वा भवति ॥१३॥ तृतीयं ब्राह्मणम् ॥ द्वितीयो ऽध्यायः ॥ वाजपेयकाण्डं समाप्तम् ॥

1 यद्देतेन O. 2 भवत्यनिष्ट O P, भवत्यनिष्टः B W C. Read भवत्यनिष्टः. 3 °भरत्येतस्सर्वौषध॰ C O P. 4 यजतेह्यपेय॰ O P C. 5 चमसे B W 6 यथोपस्मारमन्नान्यंन्नानि B W C My, यथोपस्मावमन्नान्य-'न्नानि O P, °रमन्यान्यन्यानि Or. 7 °तदुद्ब्रवीत B W C My, °तदुब्रवीत O P. 8 °न्नमनव° B W O P. 9 °न्नमवरुंधीत MSS. 10 Accent corrected; वाजप्रसव्या MSS., in C the accent blotted out. वाजप्रसव्या MSS.; in C the accent blotted out. 11 'धिंचति MSS. 12 वाचो यंतुर्ये तुर्यं O P, वाचो यंतुर्ये तुर्यं B W, वाचो यंतुर्ये तुर्यं C, °यन्तुये तुर्य T My. 13 Thus C B T, यंतुर्ये तुर्यं O P. 14 MSS. except C (sec. m.) Or and My : दधामीति. 15 क्षत्रियः B W O P C (orig.). 16 °ह्युपाकृत्वायै° MSS. 17 प्रथमति P Or, प्रथमंति O.

M. V. 2. 3

## K. VII. 1. 1

1 स वै पूर्णाहुतिं जुहोति स यत्पूर्णाहुतिं जुहोति सर्वं वै पूर्णं सर्वं परिगृह्य सूया इति स्वाहाकारेण जुहोत्यनिरुक्तो वै स्वाहाकारः सर्वं वा अनिरुक्तं तस्मात्स्वाहाकारेण जुहोति तस्यां वरं ददाति सर्वं वै वरः सर्वं परिगृह्य सूया इति स यदि कामयेत जुहुयादेतां यद्यु कामयेतापि नैवाद्रियेत ॥१॥

2 अथ श्वो भूते ऽनुमतये हविरष्टाकपालं पुरोळाशं निर्वपति तेन यथेष्ट्यैवं चरन्ति ते ये प्रत्यञ्चः शम्यायाः पिष्यमाणानां तण्डुलानामवशीयन्ते तान्त्सार्धं स्रुवे संवपत्यथ ये प्राञ्चस्ताननुमतये हविरष्टाकपालं पुरोळाशं श्रपयति तद्यानिमान्त्स्रुवे संवपति तानादायान्वाहार्यपचनादुल्मुकमादाय दक्षिणा परेत्य यदि तत्र स्वकृतं वेरिणं विन्देच्छ्वभ्रप्रदरं वा ॥२॥

3 तदग्निं समाधाय जुहोत्येष ते निर्ऋते भागस्तं जुषस्व स्वाहेतीयं वै निर्ऋतिरियं ह वै तं निर्ऋत्या पाप्मना गृह्णाति यं निर्ऋतिः पाप्मा विन्दति तामेवैतच्छमयति तथैनं सूयमानं निर्ऋतिः पाप्मा न विन्दत्यथ यत्स्वकृते वेरिणे जुहोति श्वभ्रप्रदरे वा तद्ध्यस्या निर्ऋतिगृहीतम् ॥३॥

4.5 अथानपेक्षमाणा आयन्त्यथानेनानुमतेर्हविषाष्टाकपालेन पुरोळाशेन प्रचरन्तीयं वा अनुमतिरियं ह वै तस्मा अनुमन्यते यस्तच्छक्नोति कर्म कर्तुं यच्चिकीर्षति तामेवैतत्प्रीणात्यनयानुमत्यानुमतः सूया इति स यदष्टाकपालो भवत्यष्टाक्षरा वै गायत्री गायत्र्यु वा इयं निदानेन तस्मादष्टाकपालो भवति स यत्समानस्यैव हविषो द्वेधा जुहोति यत्तदजामि भवतीयं ह्येवैतदुभयं तस्य वासो दक्षिणा यद्वै सवासा अध्वानं नोपधृष्णोति निधाय वै तद्वासो ऽतिमुच्यते तथैनं सूयमानमासङ्गः पाप्मा न विन्दति ॥४॥

6 अथ श्वो भूत आग्नावैष्णवमेकादशकपालं पुरोळाशं निर्वपति तेन यथेष्ट्यैवं चरन्ति स यदाग्नावैष्णवेन यजते ऽग्निर्वै सर्वा देवता अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वत्यग्निरु वा अवरार्ध्यो यज्ञस्य विष्णुः परार्धस्तत्सर्वाश्च देवता इति सर्वं च यज्ञं परिगृह्य सूया इति तस्मादाग्नावैष्णवेन यजते तस्य हिरण्यं दक्षिणाग्नेयो ह्येष यज्ञो ऽग्नेर्हि रेतो हिरण्यं य उ वै विष्णुर्यज्ञो वै सो ऽग्निरु वै यज्ञस्तदस्य तदाग्नेयमेव तस्मादस्य हिरण्य दक्षिणा ॥५॥

7 अथ श्वो भूते ऽग्नीषोमीयमेकादशकपालं पुरोळाशं निर्वपति तेन यथेष्ट्यैवं

न्ति स यदग्नीषोमीयेण यजत एतेन वा इन्द्रो वृत्रमहन्नेतेनो एव व्यजयत मस्य विजितिस्तथो वा एष एतेन पाप्मानं द्विषन्तं भ्रातृव्यꣳ हन्ति तथो एव जयते विजिते ऽभये ऽनाष्ट्रे सूया इति तस्योत्सृष्टो गौर्दक्षिणोत्सर्गꣳ[८] ह्येतं घ्नन्ति न्द्रमसं पौर्णमासेन ह्येतं घ्नन्त्यामावास्येनोत्सृजन्ति तस्मादस्योत्सृष्टो[९] गौर्द-णा ॥६॥

8 अथ श्वो भूत ऐन्द्राग्नं द्वादशकपालं पुरोळाशं निर्वपति तेन यथेष्ट्यैवं न्ति स यदैन्द्राग्नेन यजते यत्र ह वा इन्द्रो वृत्राय वज्रं प्रजहार तस्माद्ध वृत्र तुषस्तेज इन्द्रियं वीर्यमपचक्राम स एतेन तेजो वा अग्निरिन्द्रियं वीर्यमिन्द्र एते वीर्ये परिगृह्य ते आत्मन्यकुरुत ते आत्मन्यधत्त तथो वा एष एतेन तेजो वा ग्निरिन्द्रियं वीर्यमिन्द्र एते उभे वीर्ये परिगृह्य ते आत्मनि कुरुते ते आत्मनि धत्ते आत्मनि कृत्वा सूया इति तस्य ऋषभो ऽनड्वान्दक्षिणा स हि वहसाग्नेय आण्डा-यामैन्द्रः ॥७॥

9 अथ श्वो भूत आग्रयणेष्ट्या यजते सर्वान्वा एष यज्ञक्रतूनवरुन्द्धे सर्वा ीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्ट[१०] उ वा एष यज्ञो देवकृतो यदाग्र-णेष्टिरनया मे ऽपीष्टमसदनयापि[११] सूया इत्योषधिभ्यो वा एष सूयमानः सूयत इमा वोभयीरोषधीरनमीवा[१२] अकिल्बिषाः कुरुते ऽनमीवा अकिल्बिषा ओषधीरभि या इति तस्य प्रथमजो गौर्दक्षिणाग्र्यमिव हीदमिति[१३] ॥८॥

10 अथ श्वो भूते चातुर्मास्यैर्यजते सर्वान्वा एष यज्ञक्रतूनवरुन्द्धे सर्वा ीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्ट[१४] उ वा एष यज्ञो देवकृतो चातुर्मास्यान्येभिर्मे ऽपीष्टमसदेभिरपि[१५] सूया इति तस्माच्चातुर्मास्यैर्यजते ॥९॥

थमं ब्राह्मणम् ॥

1 यद्यू O P. 2 श्रपयति MSS. 3 तन्निर्ऋत्या B W, तन्नि° My. 4 पाप्मान W O P My, पाप्मानं B C. 5 अथानवेक्ष° My. 6 प्रचरंतीयं O P C, प्रचरतीयं B W My, प्रचरन्तीयं T. 7 यद् Omitted in B W. 8 °ह्मीणात्यनयानु° B W. 9 गायच्यु B W. 10 यत्तदजामि MSS. 11 Emended; यंवै MSS. 12 Emended; सवासाभ्वानं B W O P C, सवाससा-

ष्वानं T. 13 Emended; नोपधिष्णोति O P C, नोपधिष्णेति B W, नोपधिष्णोति T, नोपदिष्टोति My. 14 Emended; तंवासो MSS. 15 चरति B W. 16 यजते MSS. 17 अवराद्धो O P C, अवराद्धों T (cp. IV. 1. 3. 1). 18 Thus MSS. Read °णोत्सर्गं ? 19 तस्माद॰ O P. 20 देवसृष्ट MSS. 21 Thus accented MSS. here, but cp. section 9. 22 Conjecturally; इमा उ चैवो° B W O P C, इमा उवैवो° T My. 23 °मिति MSS. 24 Thus the accent in W O C, देवसृष्ट P, देवसृष्ट B. 25 पीष्टमस° O P.

M. V. 2. 4

## K. VII. 1. 2

1 स वै वैश्वदेवेन यजते स यद्वैश्वदेवेन यजते वैश्वदेवेन ह वै प्रजापतिः प्रजानां भूमानं ससृजे तथो वा एष एतद्वैश्वदेवेनैव प्रजानां भूमानं सृजते भूमानं प्रजानां सृष्ट्वा सूया इति[1] ॥१॥

2 अथ वरुणप्रघासैर्यजते वरुणप्रघासैर्ह वै प्रजापतिः प्रजा वरुणपाशात्प्रामुञ्चत्ता अस्यानमीवा अकिल्बिषाः प्रजाः[1] प्राजायन्त[2] तथो वा एष एतद्वरुणप्रघासैरेव वरुणपाशात्प्रजाः प्रमुञ्चति ता अस्यानमीवा अकिल्बिषाः प्रजाः प्रजायन्तेऽनमीवा अकिल्बिषाः प्रजा अभि[3] सूया इति[4] ॥२॥

3 अथ साकमेधैर्यजते साकमेधैर्ह वै देवा वृत्रं जघ्नुस्तैर्वैव व्यजयन्त येयमेषां विजितिस्तथो वा एष एतैः पाप्मानं द्विषन्तं भ्रातृव्यं हन्ति तथो एव विजयते विजितेऽभयेऽनाष्ट्रे सूया इति[5] ॥३॥

4 अथ शुनासीरीयेण यजत[6] उभावेतौ[7] रसौ[8] परिगृह्य सूया इत्यथ पञ्चवातीयं जुहोति तत्पञ्चधाहवनीयं व्यूहन्ति प्राञ्चमुदञ्चं प्रत्यञ्चं दक्षिणा मध्ये ॥४॥

5 तज्जुहोत्यग्निनेत्रेभ्यो देवेभ्यः पुरःसद्भ्यः स्वाहेति पुरस्ताद्यमनेत्रेभ्यो देवेभ्यो दक्षिणसद्भ्यः[8] स्वाहेति दक्षिणतो विश्वदेवनेत्रेभ्यो देवेभ्य पश्चात्सद्भ्यः स्वाहेति पश्चान्मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो वा देवेभ्य उत्तरसद्भ्यः स्वाहेत्युत्तरतः सोमनेत्रेभ्यो देवेभ्य उपरिषद्भ्यो[9] दुवस्वद्भ्यः स्वाहेति मध्ये ॥५॥

अथ पुनः सार्धं समुह्य जुहोति ये देवा अग्निनेत्राः पुरःसदस्तेभ्यः स्वाहा देवा यमनेत्रा दक्षिणसदस्तेभ्यः स्वाहा ये देवा विश्वदेवनेत्राः पश्चात्सदस्तेभ्यः हा ये देवा मित्रावरुणनेत्रा इति वा मरुन्नेत्रा इति वोत्तरसदस्तेभ्यः स्वाहा ये सोमनेत्रा उपरिषदो दुवस्वन्तस्तेभ्यः स्वाहेति ॥६॥ 6

स यदेवं जुहोति यत्र वै देवाः साकमेधैर्व्यजयन्त येयमेषां विजितिस्तद्धो-त्पिपते वा इमानि दिक्षु रक्षांसीति तेभ्यो वै प्रहरामेति तद्वज्रो वा आज्यं ज्रेणाज्येनैतद्देवा दिक्षु नाष्ट्रा रक्षांस्यवाघ्नंस्तेन व्यजयन्त येयमेषां विजिति-ो वा एष एतेन वज्रेणाज्येन दिक्षु नाष्ट्रा रक्षांस्यवहन्ति विजिते ऽभये ऽनाष्ट्रे इति तस्मादेताः पूर्वाः पञ्च जुहोति ॥७॥ 7

अथ यदपराः पञ्च जुहोति विवृहन्तीव वा एतदग्निं वीव लिशन्ति पञ्चधा व्यूहन्ति स यदेव तत्राग्नेर्वि वा लिशति क्षिणोति वा तदेवास्यै-पराहुतिभिर्भिषज्यति तत्संदधाति तच्छमयति तस्मादेता अपराः पञ्च जुहोति ॥८॥ 8

तस्य प्रष्टिवाहनो ऽश्वरथो दक्षिणा ते वै पञ्च वातास्त्रयो ऽश्वा द्वौ रथसारथी यो वै प्राणः स वातः स यदेते पञ्च प्राणन्तो दक्षिणा तस्मात्प-तीयं नाम ॥९॥ 9

तेन हाप्येतेन विष्ठाव्राजे भिषज्येदयं वाव प्राणो यो ऽयं पवते स अयमेक इवैव पवते सो ऽयं पुरुषे ऽन्तः प्रविष्टो दशधाविहितो दश वा एता हुतीर्जुहोति तदस्मिन्नेतान्दश प्राणान्क्लृप्तान्सर्वमायुर्दधाति स ह सर्वमेवायुरेति यदि हापि गतासुरिव भवत्या हैवैनेन हरति ॥१०॥ 10

अथ श्वो भूत एन्द्रतुरीयेण यजते तदाग्नेयमष्टाकपालं पुरोळाशं निर्वपति णं यवमयं चरुं रौद्रं गावेधुकमनडुह्या वहलाया एन्द्रं पयो भवति ॥११॥ 11.12

स यदेतेन यजत इन्द्राग्नी उ हैवैतत्समूदाते उत्पिपते वा इमानि रक्षांसीति तेभ्यो वै प्रहरावेति ताविन्द्राग्नी एतेन हविषा दिक्षु नाष्ट्रा रक्षांसि हतां तेन व्यजयेतां यैनयोरियं विजितिस्तथो वा एष एतेन हविषा दिक्षु नाष्ट्रा रक्षांस्यवहन्ति विजिते ऽभये ऽनाष्ट्रे सूया इति ॥१२॥

स होवाचाग्निस्त्रयो मम भागा अस्य हविषस्तुरीयं तवेति तथेति वेन्द्रः स यदाग्नेयो ऽष्टाकपालो भवति सो ऽग्नेरेको भागो ऽथ यद्वारुणो यवमयश्चरुर्भवति यो वै वरुणो ऽग्निर्वै स स उ एवास्यैको भागः स यद्यवमयो 13

भवति वरुण्या हि यवा अथ यद्रौद्रो गावेधुको भवति यो वै रुद्रो ऽग्निर्वै स[23] स
उ एवास्यैको भागः स यद्गावेधुको भवति वास्तव्यो हि स देवो वास्तव्या हि
गवेधुका अथ यदनळुह्या वहलाया ऐन्द्रं पयो भवति स इन्द्रस्य चतुर्थो भागः स
यो वै चतुर्थो भागस्तत्तुरीयꣳ स यत्तुरीयभागीन्द्र[24] एतस्य हविषस्तस्मादैन्द्रतुरीयं
नाम तस्य सैव वहला दक्षिणा सा वै वहसाग्नेयी यत्स्त्री सती वहति वरुणगृहीता
वै सा तद्भवति तदस्या वारुणमथ[25] यद्रौस्तेन रौद्र्यथ[26] यदस्या एतदैन्द्रं पयो भवति
तेनैन्द्र्येषा ह्येतत्सर्वं व्यश्नुते तस्मादस्यैषा दक्षिणा ॥१३॥

14 अथ श्वो भूते[27] ऽपामार्गहोमं जुहोत्यपामार्गैर्ह वै देवा नाष्ट्रा रक्षाꣳस्यप
मृजत तस्मादपामार्गा नाम तथो वा एष एतदपामार्गैरेव नाष्ट्रा रक्षाꣳस्यपमृष्टे विजिते
ऽभये ऽनाष्ट्रे सूया इति ॥१४॥

15 स पालाशे[28] वा स्रुवे वैकङ्कते वापामार्गतण्डुलानोप्यान्वाहार्यपचनादुल्मु
कमादाय प्राञ्चो वोदञ्चो वेत्वा जुहोति ॥१५॥

16 स उल्मुकमादत्ते[29] ऽग्ने सहस्व पृतना इति युधो वै पृतना युधः सहस्वे
त्येवैतदाहाभिमातीरपास्येति सपत्नो वा अभिमातिः सपत्नमपजहीत्येवैतदाह दुष्ट
रस्तरन्नरातीरिति दुष्टरो[30] ह्येष रक्षोभिर्नाष्ट्राभिस्तरन्नरातीरिति सर्वान्ह्येष[31] पाप्म
नस्तरति वर्चो धा यज्ञवाहसीति साधु यजमाने[31] धा[32] इत्येवैतदाह[31] ॥१६॥

17 अथ जुहोति देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ता
भ्यामित्युक्तो यजुषो बन्धुरुपाꣳशोर्वीर्येण जुहोमीति यज्ञमुखं वा उपाꣳशुर्यज्ञमुखे
नैवैतन्नाष्ट्रा रक्षाꣳसि हन्ति[33] हतꣳ रक्षः स्वाहेति तदेनेन नाष्ट्रा रक्षाꣳसि[34] हन्ति
स यां दिशमित्वा जुहोति तां दिशꣳ स्रुवं[35] प्रहरति रक्षसां त्वा वधायेति[36] रक्षाꣳ
सि ह्येतद्धन्ति ॥१७॥

18.19 स यद्येष पालाशः[37] स्रुवो भवति ब्रह्म वै पलाशो ब्रह्मणैवैतन्नाष्ट्रा रक्षाꣳ
सि हन्ति यद्यु वैकङ्कतो वज्रो वै विकङ्कतो वज्रेणैवैतन्नाष्ट्रा रक्षाꣳसि हन्त्यवधिष्म
रक्ष इति पुनरावर्तन्ते[38] रक्षाꣳसि ह्येतद्घ्नन्ति[39] ॥१८॥

20 तेन हाप्येतेन[40] विष्ठाव्राजे[41] प्रतिसरं कुर्वीत स यस्याꣳ स दिशि भवति
यस्मै जुहोति तां दिशं प्रतिपरेत्य[42] जुहोत्यमुष्य त्वा वधायामुमवधिष्मेति तमादि
शति प्रत्यक्फलो वा एष वृक्षः स ह तमेव तत्प्रत्यग्धूर्वति यदस्मै स किं च[43]
करोति ॥१९॥ द्वितीयं ब्राह्मणम् ॥

1 इति MSS. 2 प्रजाः प्राजायंत O P, प्रजाः प्रजायंते B W. 3 अभि O P. 4 इति MSS. 5 इति B W O. 6 यजत MSS. 7 उभावेवैतसौ O, उभावेवैतौसौ P. 8 दक्षिणास° C (orig.). 9 उपरिस° B W ( both times ), C ( second time ). 10 °स्तिपबते T. 11 विवा B W, विव T. 12 Read लिशन्ति ? 13 यदेव O P ( orig. ), यदेवं P ( sec. m. ). 14 तेनाप्येतेन O P, तेनहाप्येतेन B W C. 15 विष्टाव्राजे O P B W, विष्टाव्राजे C ( cp. VII. 1. 2. 19, VII. 2. 1. 11 ). 16 स अयमेक O. 17 हाप्यमातासु° O P. 18 भवति O P C. 19 हैवैत° B W. 20 उत्पिबते B (sec. m.), उत्पवते T. 21 °स्तुरीयं तवेति B W O P C My, °स्तुरीयंभवेति T. Read °स्तुरीयस्तवेति ? 22 भवति B C W, भवति O P. 23 सस MSS. 24 Read यत्तुरीयभागीन्द्र ? 25 वरुणमथ B W O, वारुण्यमथ C My, वारणमथ T. 26 रौद्री अथ B W C, रौद्रा अथ O P, रौद्री अथ T, ताद्री अथ My. 27 भूते MSS. 28 पलाशे B W (pr. m.), पलाशे T. 29 °मादत्ते MSS. 30 दुष्टरो B. 31 सर्वा° B C. 32 °माने वा इत्ये° B, °मान इत्ये° O, °माना इत्ये° T. 33 हंति B O C W. 34 रक्षाꣳसि B W O C. 35 स्नुवं B C W. 36 वधायेति B W O C. 37 पलाशः B W ( orig. ). 38 °वर्तते B O P W. 39 ह्मेतद्घ्नंति B W, ह्मेतद्घ्नंति O, ह्मेतद्घ्नंति P ( orig. ) but घ्नं blotted out. 40 हाप्येतेन B W. 41 विष्टा° MSS. except W. 42 प्रतिपरेत्य MSS. 43 चन O.

M. V. 2. 5

K. VII. 1. 3

1-4 स वा एतमाग्नावैष्णवमेकादशकपालं पुरोळाशं निर्वपत्यैन्द्रावैष्णवं च[रुं] वैष्णवं त्रिकपालं वा चरुं वैतेन श्वो भूते त्रिषंयुक्तेन यजते स यदेतेन यजते पुरुषान्हैवैतेन देवा उपेयुस्तथो वा एष एतेन पुरुषानेवोपैति पुरुषवान्त्सूया इति पुरुषवान्हि तच्छक्नोति कर्म कर्तुं यच्चिकीर्षति पुरुषैर्हि स तच्छक्नोति स यदाग्नावैष्णवो भवत्यग्निर्वै दाता तं दातारमिमाः प्रजा उपनिविष्टा वैष्णवा उ वै पुरुषास्तद्य एव दाता यं दातारमिमाः प्रजा उपनिविष्टास्तमेवैतत्प्रीणाति सो ऽस्मै प्रीतः पुरुषान्ददाति पुरुषान्त्संप्रयच्छति स पुरुषवान्त्सूयते ऽथ यदैन्द्रावैष्णवश्चरुर्भवतीन्द्रो वै यजमानो वैष्णवाः पुरुषाः स यानेवास्मा अग्निर्दाता पुरुषान्ददाति तैरेवैतत्संस्पृशते तानात्मनि कुरुते ऽथ यद्वैष्णवस्त्रिकपालो वा चरुर्वा भवति यानेवास्मा अग्निर्दाता पुरुषान्ददाति तेष्वेवैतदन्ततः प्रतितिष्ठति तस्य वामनो गौर्दक्षिणा तद्धि पशु[षु] वैष्णवꣳ रूपं यद्वामनस्य गोः ॥१॥

5-8 अथ श्वो भूत आग्नापौष्णमेकादशकपालं पुरोळाशं निर्वपत्यैन्द्रापौष्णं च[रुं] पौष्णं चरुमेतेन श्वो भूते त्रिषंयुक्तेन यजते स यदेतेन यजते पशून्हैवैतेन देवा उपे-युस्तथो वा एष एतेन पशूनेवोपैति पशुमान्त्सूया इति पशुमान्हि तच्छक्नोति कर्म कर्तुं यच्चिकीर्षति पशुभिर्हि स तच्छक्नोति स यदाग्नापौष्णो भवत्यग्निर्वै दाता तं दातारमिमाः प्रजा उपनिविष्टाः पौष्णा उ वै पशवस्तद्य एव दाता यं दातारमिमाः प्रजा उपनिविष्टास्तमेवैतत्प्रीणाति सो ऽस्मै प्रीतः पशून्ददाति पशून्त्संप्रयच्छति स पशुमान्त्सूयते ऽथ यदैन्द्रापौष्णश्चरुर्भवतीन्द्रो वै यजमानः पौष्णाः पशवः स याने-वास्मा अग्निर्दाता पशून्ददाति तैरेवैतत्संस्पृशते तानात्मनि कुरुते ऽथ यत्पौष्णश्च-रुर्भवति यानेवास्मा अग्निर्दाता पशून्ददाति तेष्वेवैतदन्ततः प्रतितिष्ठति तस्य श्यामो गौर्दक्षिणा द्वे वै श्यामस्य रूपे शुक्लं चैव कृष्णं च द्वन्द्वमु वै मिथुनं प्रजननं प्रजननमु वै पूषा पशवो हि पूषा प्रजननꣳ हि पशवस्तस्मादस्य श्यामो गौर्दक्षिणा ॥२॥

9-12 अथ श्वो भूते ऽग्नीषोमीयमेकादशकपालं पुरोळाशं निर्वपत्यैन्द्रासौम्यं चरुꣳ सौम्यं चरुमेतेन श्वो भूते त्रिषंयुक्तेन यजते स यदेतेन यजते वर्चो हैवैतेन देवा उपेयुस्तथो वा एष एतेन वर्च एवोपैति वर्चस्वी सूया इति न ह्यवर्चसो व्याप्त्या चनार्थो ऽस्ति स यदग्नीषोमीयो भवत्यग्निर्वै दाता तं दातारमिमाः प्रजा उपनिविष्टा वर्चो वै सोमस्तद्य एव दाता यं दातारमिमाः प्रजा उपनिविष्टास्तमेवैत-

णाति सो ऽस्मै प्रीतो[8] वर्चो ददाति वर्चः संप्रयच्छति स वर्चस्वी[9] सूयते ऽथ
द्रासौम्यश्चरुर्भवतीन्द्रो वै यजमानो वर्चः सोमः स यदेवास्मा अग्निर्दाता वर्चो
ति तेनैवैतत्स॑स्पृशते तदात्मनि कुरुते ऽथ यत्सौम्यश्चरुर्भवति यदेवास्मा
निर्दाता वर्चो ददाति तस्मिन्नेवैतदन्ततः प्रतितिष्ठति तस्य बभ्रुर्गौर्दक्षिणा तद्धि
षु सौम्य॑ रूपं यद्बभ्रोर्गोः ॥३॥

अथ श्वो भूते वैश्वानरं द्वादशकपालं पुरोळाशं निर्वपति वारुणं यवमयं 13-17
ताभ्यामन्वहं वा यजते समानबर्हिषी वैव भवतः स यद्वैश्वानरो भवति
त्सरो वै वैश्वानरः प्रजापतिः सो ऽयमासां प्रजानां भूमान॑ ससृजे तथो वा एष
दासां प्रजानां भूमान॑ सृजते[10] भूमानं प्रजाना॑ सृष्ट्वा सूया इत्यथ यद्द्वादश-
पालो भवति द्वादश वै मासाः संवत्सरस्य संवत्सरो वै वैश्वानरः प्रजापतिस्तस्मा-
द्वादशकपालो भवति[11] तस्यर्षभो दक्षिणर्षभो वै पशूनां प्रजापतिः संवत्सरो वै
श्वानरः प्रजापतिस्तस्मादस्यर्षभो दक्षिणाथ यद्वारुणो यवमयश्चरुर्भवति वरुण्याद्वै-
सर्वस्मात्किल्बिषादेनसो ऽन्ततो वरुणपाशात्प्रजाः प्रमुञ्चति ता अस्यानमीवा
किल्बिषाः प्रजाः प्रजायन्ते[12] ऽनमीवा अकिल्बिषाः प्रजा अभि सूया इति स
यवमयो भवति वरुण्या हि यवास्तस्य कृष्णं[13] वासो दक्षिणा तद्धि वारुणं यत्कृष्णं
सो यदि कृष्णं न विन्देदपि यदेव किं च वासः स्याद्ग्रन्थिभिर्हि[14] वासो वारुणं
रुणो हि ग्रन्थिः ॥४॥ तृतीयं ब्राह्मणम् ॥

1 यजते MSS. 2 Omitted in B W. 3 स पुरुषं MSS. 4 पशून्हैतेन O. 5 पशुमान्हि MSS. 6 भूते B O, भूते W. 7 ह्यवर्चसो B W. 8 प्रीतो B W O C. 9 वर्चस्वी MSS. 10 ससृजे O P. 11 भवति B W O C. 12 प्रजायंते B W O C. 13 कृष्णं B W O C. 14 स्याद्ग्र° MSS.

K. VII. 1. 4 M. V. 3. 1

स वै रत्निना॑ हविर्भिर्यजते स यद्रत्निना॑ हविर्भिर्यजत एतेभ्यो वा एष
सूयमानः सूयते यान्यस्यैतानि रत्नानि तानेवैतत्स्वाननपक्रमिनः[1] कुरुते ॥१॥

सो ऽग्नी समारोह्य सेनान्यो गृहानित्वाग्नये ऽनीकवते ऽष्टाकपालं पुरोळाशं 1
निर्वपत्यनीकं वा अग्निर्देवतानामनीकं वै सेनायाः सेनानीरेतद्वा अस्यैक॑ रत्नं

यत्सेनानीस्तस्मा एवैतेन सूयते तꣳ स्वमनपक्रमिणं कुरुते तस्य हिरण्यं दक्षिणाग्ने ह्येष यज्ञो ऽग्नेर्हि रेतो हिरण्यं तस्मादस्य हिरण्यं दक्षिणा ॥२॥

2 अथ श्वो भूते पुरोहितस्य गृहेषु बार्हस्पत्यं चरुं निर्वपति बृहस्पति देवानां पुरोहित एवमु वा एष एतस्य पुरोहित एतद्वा अस्यैकꣳ रत्नं यत्पुरोहि स्तस्मा एवैतेन सूयते[2] तꣳ स्वमनपक्रमिणं कुरुते तस्य शितिपृष्ठो[3] गौर्दक्षिणै ह्यूर्ध्वा[4] दिग्बृहस्पतेस्तदेष उपरिष्टादर्यम्णः[5] पन्थास्तस्मादस्य शितिपृष्ठो[3] गौ क्षिणा ॥३॥

3 अथ श्वो भूते सूयमानस्य गृहेष्वैन्द्रमेकादशकपालं पुरोळाशं निर्वपति क्ष वा इन्द्रः क्षत्रं वै सूयमानः क्षत्रमेवैतद्भवति तस्यर्षभो दक्षिणा तद्धि पशुष्वैन्द्रं रूपं यदृषभस्य[6] ॥४॥

4 अथ श्वो भूते[7] महिष्या[7] गृहेष्वादित्यं चरुं निर्वपतीयं वा अदितिः देवानां पत्न्येवमु वा एषैतस्य पत्न्येतद्वा अस्यैकꣳ रत्नं यन्महिषी तस्या एवैतेन सूय ताꣳ स्वामनपक्रमिणीं कुरुते तस्य धेनुर्दक्षिणा धेनुरिव वा इयं मनुष्येभ्यः सर्वान्का मान्दुग्धे सर्वान्वै कामान्धेनुर्दुग्धे मातेव वा इयं मनुष्याणां च पशूनां मातेव धेनुस् स्मादस्य धेनुर्दक्षिणा ॥५॥

5 अथ श्वो भूते सूतस्य गृहेषु वारुणं यवमयं चरुं निर्वपति सवो वै देवता वरुणः सवो वै मनुष्याणाꣳ सूतः[8] स यद्यवमयो भवति वरुण्या हि यवा एतद्वा अस्यैकꣳ रत्नं यत्सूतस्तस्मा एवैतेन सूयते[9] तꣳ स्वमनपक्रमिणं[10] कुरुते तस्याश्व दक्षिणा स हि वारुणो यदश्वः ॥६॥

6 अथ श्वो भूते ग्रामण्यो[11] गृहेषु मारुतꣳ सप्तकपालं पुरोळाशं निर्वपति विशो वै मरुतो देवविशं वैश्यो वै ग्रामणीः स यत्सप्तकपालो[12] भवति सप्त सप्त हि मारुतो गण[13] एतद्वा अस्यैकꣳ रत्नं यद्ग्रामणीस्तस्मा एवैतेन सूयते तꣳ स्वमनप क्रमिणं कुरुते तस्य पृषन्गौर्दक्षिणा भूमा वा एतद्रूपाणां यत्पृषतो गोर्विशो वै मरुतो भूमो[14] वै विद् तस्मादस्य पृषन्गौर्दक्षिणा ॥७॥

8 अथ श्वो भूते संग्रहीतुर्गृहेष्वाश्विनं[15] द्विकपालं पुरोळाशं निर्वपति समान योनी वा अश्विनौ समानयोनी वै सव्यस्थसारथी एतद्वा अस्यैकꣳ रत्नं यत्संग्रहीता तस्मा एवैतेन सूयते तꣳ स्वमनपक्रमिणं कुरुते तस्य यमौ गावौ दक्षिणा तौ हि

योनी भवतो यदि यमौ न विन्देदप्यन्वग्जावेव स्यातां ता उ हि समानयोनी
: ॥८॥

7 अथ श्वो भूते क्षत्तुर्गृहेषु सावित्रं द्वादशकपालं वाष्टाकपलं वा पुरोळाशं
पति सविता वै देवानां प्रसविता प्रसविता वै क्षत्तैतद्वा अस्यैकꣳ रत्नं यत्क्षत्ता
एवैतेन सूयते तꣳ स्वमनपक्रमिणं कुरुते तस्य श्येतो ऽनड्वान्दक्षिणैष वै
ता य एष तपति श्येत[16] इव ह्येष उद्यꣳश्च भवत्यस्तं च यन्वहत्यु[17] वा अनड्वा-
दित्यस्तस्मादस्य श्येतो ऽनड्वान्दक्षिणा ॥९॥

9 अथ श्वो भूते भागदुघस्य गृहेषु पौष्णं चरुं निर्वपति पूषा वै देवानां भाग-
ऽशनं पाणिभ्यामुपनिधातैवमु[18] वा एष एतस्य भागदुघ एतद्वा अस्यैकꣳ रत्नं
गदुघस्तस्मा एवैतेन सूयते तꣳ स्वमनपक्रमिणं कुरते तस्य श्यामो गौर्दक्षिणा
श्यामस्य रूपे शुक्लं चैव कृष्णं च द्वन्द्वमु वै मिथुनं प्रजननं प्रजननमु वै पूषा
वो हि पूषा प्रजननꣳ हि पशवस्तस्मादस्य श्यामो गौर्दक्षिणा ॥१०॥

10 अथ श्वो भूते ऽक्षावापस्य च गृहेभ्यो गोविकर्त्तस्य च गवेधुकाः समाहृत्य
मानस्यैव गृहेषु रौद्रं गावेधुकं चरुं निर्वपति ते वा एते द्वे नाना रत्ने सती सार्धꣳ[19]
स्यति[19] संपदः कामाय तथा हि संपत्संपद्यते स यद्गावेधुको भवति वास्तव्यो
स देवो वास्तव्या हि गवेधुकाः स यदेतेन यजत रुद्रो ह वा एतामभिमन्यते
ताꣳ सभायां दीव्यन्ते ऽग्निरु वै रुद्र एष उ वा अग्निर्यदधिदेवनं तस्यैते ऽङ्गारा
सा[20] एष हैतामभिमन्यते तमेवैतत्प्रीणाति सो ऽस्मै प्रीत एतामनुमन्यते तस्य
ा एतामनुमताꣳ सभायां घ्नन्ति[21] यो वा राजसूयेन यजते यो वैतदेवं वेदैते वा
य द्वे नाना रत्ने यदक्षावापश्च गोविकर्त्तश्च ताभ्यामेवैतेन सूयते तौ स्वावनपक्र-
णौ कुरुते तस्य दक्षिणासिर्नखरः कैसरेण दाम्नाक्षावपणं[22] प्रबद्धं[22] द्विरूपो गौस्तद्धि
र्भवति ॥११॥

11 अथ श्वो भूते पालागलस्य गृहेष्वध्वन आज्यस्य जुहोति जुषाणो ऽध्वाज्य-
वेतु स्वाहेति प्रहेयो[23] वै पालागलो ऽध्वानं वै प्रहित एत्येतद्वा अस्यैकꣳ रत्नं
पालागलस्तस्मा एवैतेन सूयते तꣳ स्वमनपक्रमिणं कुरुते तस्य दक्षिणा प्युक्ष्णो-
तं[24] धनुश्चर्ममया बाणवन्तो[25] लोहित उष्णीषस्तद्धि तस्य भवति ॥१२॥

12 तानि वा एतान्येकादश रत्नान्येकादशाक्षरा वै त्रिष्टुबिन्द्रियमु वै वीर्यं
ष्टुबिन्द्रियमेवैतद्वीर्यꣳ रत्नान्यभिसंपादयत्येतेभ्यो वा एष सूयतानः सूयते

यान्यस्यैतानि रत्नानि तानेवैतत्स्वाननपक्रमिणः कुरुते ॥१३॥

13 अथ श्वो भूते परिवृत्ताया गृहेषु कृष्णानां व्रीहीणां नैर्ऋतं चरुं निर्वपति या वा असूरपतिः[26] सा परिवृत्ता स नखैरेव निर्भिद्य श्रपयित्वा जुहोत्येष ते निर्ऋते भाग इति तं जुषस्व स्वाहेति निर्ऋतिमेवैतेन शमयति तथैनꣳ सूयमानं निर्ऋतिः पाप्मा न विन्दति स यत्परिवृत्ताया गृहेषु सा हि निर्ऋतिगृहीता तस्य दक्षिणा कृष्णा गौः पर्यायिणी परिमूर्णा त्रिस्तना[27] चराति[28] सा हि निर्ऋतगृहीताथाह मा मेऽघेशायां वात्सीदिति ताꣳ सर्वस्या[28] ईशाया बाधते[29] पाप्मानमेवैतदपहते सोऽपहतपाप्मा सूयते ॥१४॥ चतुर्थं ब्राह्मणम् ॥ प्रथमो ऽध्यायः ।

1 तानेवैत° B W. 2 सूयते MSS. 3 शिति° MSS. 4 ह्यूर्ध्वा MSS. 5 उपरिष्टादुर्यम्णः MSS. ( cp. VII. 4. 2. 12 ). 6 °अस्य MSS. 7 भूतेमहिष्या MSS. 8 सूतः MSS. 9 सूयते C. 10 क्रमिनं B O C ( orig. ). 11 ग्रामण्यो MSS. 12 Thus My only, यः instead of यत् the other MSS. 13 गण MSS. 14 भूमो O. 15 °गृंहेष्वाश्विनं MSS. 16 श्येत MSS. 17 यन्वहत्यु MSS. 18 पाणिभ्यामुपनिधातैवमु MSS. 19 सार्द्धꣳसमस्यति B W C, सार्द्धꣳसस्यति O. 20 यदक्षा MSS. 21 तम्रंति B, घंति O W C ( cp. VII. 3. 4. 22 ). 22 °वपणं प्रबद्धं O, °वपणं प्रबद्धं B W, °वपणं प्रबद्धं C. 23 प्रहेयो C O W, प्रहेयो B. 24 प्युक्ष्णोत्स्यूतं B, प्युक्ष्णोत्स्यूतं W, प्युक्ष्णोत्सुतं O C ( orig. ) My, प्युक्ष्णोत्सूवं O. 25 बाण° O C My, वाण° B T W. 26 ? असूरपतिः B W C My, असूरयति or °पति O P, असुरवतीः T. The word असूः ( childless ) seems to be contained in these words. Read perhaps या वा असूरयति. 27 ? Thus MSS. ( only चरति B W ). 28 सर्वस्य B W. 29 वाधते B W.

K. VII. 2. 1 M. V. 3. 2

स वा उपरिष्टाद्यज्ञानां सौमारौद्रेण यजते स यत्सौमारौद्रेण यजते 1.2
…र्भानुर्हासुरः[1] सूर्यं तमसा विव्याध स तमसा विद्धो न व्यरोचत तस्य सोमारुद्रौ
…मो ऽपजघ्नतुः स एषो ऽपहतपाप्मा तपति[2] तम उ वा एतं प्रविशति तमो वैष
…शति[3] यो[4] ऽयज्ञियान्यज्ञेन प्रसजत्ययज्ञियानु वा एष एतद्यज्ञेन प्रसजति विशं
…च्छूद्रांस्त्वत्स[5] यदेवैनं तत्र तमः प्रविशति यद्वैष तत्र तमः प्रविशति तस्य सोमा-
…तत्तमो ऽपहतः सो ऽपहतपाप्मा सूयते ॥१॥

स वै श्वेतायाः श्वेतवत्सायाः पयसि शृतो भवति कृष्णमिव वै तमस्तथा[6]
…हतस्तस्य[7] सैव दक्षिणा श्वेता श्वेतवत्सा ॥२॥

तेन हाप्येतेन[8] विष्ठाव्राजे[9] स यजेत यो ऽलं यशसे सन्न यशः स्याद्यो वा 3
…ब्रुवानः स वा अलं यशसे सन्न यशो भवति यदि स यशो न भवति तदस्य सोमा-
…रौ तत्तमो ऽपहतः स ह ज्योतिरेव‘ श्रिया यशसा भवति ॥३॥

स वै श्वेतायाः श्वेतवत्सायाः पयसि शृतो भवति कृष्णमिव वै तमस्तथा
…पहतस्तस्य सैव दक्षिणा श्वेता श्वेतवत्सा ॥४॥

अथ श्वो भूते मैत्राबार्हस्पत्येन यजते ह्वलति वै स यज्ञपथाद्यो ऽयज्ञियान्य- 4
…प्रसजत्ययज्ञियानु वा एष एतद्यज्ञेन प्रसजति विशं त्वच्छूद्रांस्त्वन्मित्राबृहस्पती[9]
…वै यज्ञपथो[9] ब्रह्म वै मित्रो ब्रह्म यज्ञो ब्रह्म वै बृहस्पतिर्ब्रह्मयज्ञस्त त्पुनर्यज्ञपथम-
…पद्यते[10] स यज्ञपथमपिपद्य[11] सूयते ॥५॥

तस्यावृद्या स्वयंप्रशीर्णा प्राची वोदीची वाश्वत्थी शाखा तस्या मैत्रं पात्रं 5
…द्वारुण्यं वा एतत्पात्रं यत्परशुवृक्णमथैतन्मैत्रं यत्स्वयंप्रशीर्णायाः ॥६॥

अथ दध्यातच्य हृतावासिच्य रथे निबध्य ब्रूयादेतेन देवीयध्वमिति[12] स 6
…त्र नवनीतमुदियात्तदाज्यं[13] स्याद्वारुण्यं वा एतदाज्यं यन्मथा मथितमथैतन्मैत्रं
…स्वयमुदितम् ॥७॥

अथ द्वेधा तण्डुलान्व्यूहेद्ये[14] परिभिन्नास्तान्त्सार्धं[15] तद्ये[15] ऽपरिभिन्नास्ते 7
…ाः स्युर्न ह वै मित्रः कं चन हिनस्ति[16] नो[17] ह मित्रं कश्चन हिनस्ति न हैनं कुशो
…कण्टको विभिनत्ति सर्वस्य ह्येव मित्रो मित्रं तस्माद्ये ऽपरिभिन्नास्ते मैत्राः स्युः ॥८॥

अथास्मिन्मैत्रे पात्र आज्यमानीय तदेतान्मैत्रांस्तण्डुलानावपति ते नैतं 8
…र्हस्पत्यं चरुं शृतमपिदधाति वरुण्यो वा एष चरुर्यो ऽग्निपक्वो ऽथैष मैत्रो

यत्स्वयꣳश्रृतस्तद्धैवोष्मणा श्रृतो भवति ॥९॥

तयोः समवद्यन्नाह मित्राबृहस्पतिभ्यामनुब्रूहीत्याश्राव्याह मित्राबृहस्पती यजेति वषट्कृते जुहोति तस्य गौरेव दक्षिणा ॥१०॥

तेन हाप्येतेन त्रिष्टाव्राजे[17] स यजेत यो ऽप्रतिगृह्यस्य वा प्रतिगृह्णीयादयाज्यं वा याजयेद्ध्वलति[18] वै स यो ऽप्रतिगृह्यस्य वा प्रतिगृह्णात्ययाज्यं वा याजयति[18] मित्राबृहस्पती उ वै यज्ञपथो ब्रह्म वै मित्रो ब्रह्म यज्ञो ब्रह्म वै बृहस्पतिर्ब्रह्म यज्ञस्तत्पुनः पन्थानमपिपद्यते[19] तथा न ह्वलति ॥११॥ प्रथमं ब्राह्मणम् ॥

1 °र्हासुरः MSS. 2 तपति B O. 3 °शति यो MSS. 4 See Introduction II section 1 b. 5 °स्तथापहतस्त° O. 6 हाप्येतेन B W. 7 विष्टाव्राजे MSS. 8 °रेव B W O. 9 °पथो O, °पथी B. 10 °मभिपद्यते O P My T. 11 °मभिपद्य MSS. (cp. infra K. 11 ). 12 देदी° MSS. except C. 13 °नीतमुदिय° MSS. 14 °द्ये MSS. 15 परिभिन्नास्तात्सार्द्धं तद्ये O P, परिभिन्नास्तांत्सार्द्धं तद्ये C, परिभिन्नास्तांत्साद्धीद्ये B (pr. m.), प्ररिभिन्नास्तांत्साद्धतद्दे B ( sec. m. ), °भिन्नास्तांत्सार्द्धंद्ये W, परिभिन्नास्तान्सार्द्धतद्ये T. 16 °स्ति नो MSS. 17 विष्टाव्राजे MSS. except W. 18 याजये° and याजयति MSS. 19 °मभिपद्यते T.

M. V. 3. 4 K. VII. 2. 2

1 स वा अपः संभरति स यदपः संभरति वीर्यमेवैतद्रसमपाꣳ संभरति तेनैनं वीर्येण रसेनापाꣳ संभृतेनाभिषिञ्चति तस्माद्वा अपः संभरति ॥१॥

2 औदुम्बरे चमसे ऽन्नं वा ऊर्गुदुम्बरो[1] ऽन्नमु वा आपस्तस्मादौदुम्बरे चमसे ॥२॥

3 स सारस्वतीरेव प्रथमाः संभरत्यपो देवा मधुमतीरगृभ्णन्नित्यपो देवा रसवतीरगृभ्णन्नित्येवैतदाहोर्जस्वती राजस्वश्चितानाः इति रसवतीरित्येवैतदाह यदाहौर्जस्वतीरिति राजस्वाश्चिताना इति याः प्रज्ञाता राजस्व[2] इत्येवैतदाह याभिर्मित्रावरुणा अभ्यषिञ्चन्नित्येताभिर्हि मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीरित्ये-

भिर्हीन्द्रमनयन्नत्यरातीस्ताभिरेनमाभिषिञ्चति[3] वाग्वै सरस्वती वाचैवैनं तदाभि-षिञ्चति वाचमेवास्मिन्नेताभिर्दधात्येता[4] उ वा एका आपस्ता एवैतत्संभरति ॥३॥

अथ चतुर्गृहीतमाज्यं गृहीत्वापो ऽभ्यवैति तौ यावेता ऊर्मी व्यर्दतस्तयो- 4-6 र्जुहोति स यः प्राङुदर्दति तास्मिन्जुहोति वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रममुष्मै देहीत्यथ यः प्रत्यङुदर्दति तास्मिन्जुहोति[5] वृषसेनो ऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा वृषसेनो ऽसि राष्ट्रदा राष्ट्रममुष्मै देहीति वीर्यं वा तदपां व्यर्दति पशौ वाभ्यवेत पुरुषे वा वीर्यमेवासामेतद्गृह्णाति वीर्येणैवैनमेतदभि-षिञ्चति वीर्यमेवास्मिन्नेताभिर्दधात्येता उ वा एका आपस्ता एवैतत्संभरति ॥४॥

अथ जुहोति स्यन्दमानास्वथैत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहाथैत स्थ 7 राष्ट्रदा राष्ट्राममुष्मै दत्तेति वीर्येण वा एता एतत्स्यन्दन्ते तस्मादेनाः स्यन्दमाना न कं चन प्रतिधारयति वीर्यमेवासामेतद्गृह्णाति वीर्येणैवैनमेतदभिषिञ्चति वीर्यमेवा-स्मिन्नेताभिर्दधात्येता उ वा एका आपस्ता एवैतत्संभरति ॥५॥

अथ याः स्यन्दमानानां[6] न्यतीरेण[6] प्रतीपं[6] स्यन्दन्ते तासु जुहोत्योजस्वती 8 स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहौजस्वती स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति वीर्येण वा एता ओजसा स्यन्दमाना[7] न्यतीरेण[7] प्रतीपं[7] स्यन्दन्ते वीर्यमेवासामोज एतद्गृह्णाति वीर्येणैवैनमेतदोजसाभिषिञ्चति वीर्यमेवास्मिन्नोज एताभिर्दधात्येता उ वा एका आपस्ता एवैतत्संभरति ॥६॥

अथ जुहोत्यपायत्यामापः[8] परिवाहिणी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहापः 9 परिवाहिणी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति भूमा वा एषो ऽपामिति ह्येष भूमापामि-दमत एवापच्छिद्य पुनरन्यामवाप्यावयन्त्यपि[9] हास्यान्यराष्ट्रीयो[10] राष्ट्रे भवत्यथो अस्यान्यराष्ट्रमवद्दतं[11] भवति तथास्मिन्भूमानं दधाति भूम्नैवैनमेतदभिषिञ्चति भूमा-नमेवास्मिन्नेताभिर्दधात्येता उ वा एका आपस्ता एवैतत्संभरति ॥७॥

अथ जुहोति नदीपतावपां पतिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहापां पतिरसि 10 राष्ट्रदा राष्ट्रममुष्मै देहीत्यपां वा एष पतिर्विश[12] एवैनमेताभिः पतिं करोति विश[12] एवैताभिः पतिर्भवत्येता उ वा एका आपस्ता एवैतत्संभरति ॥८॥

अथ जुहोति निवेष्ये[13] ऽपां गर्भो ऽसि राष्ट्रदा राष्ट्रं मे देही स्वाहापां गर्भो 11 ऽसि राष्ट्रदा राष्ट्रममुष्मै देहीत्यपां वा एष गर्भो विश एवैनमेताभिर्गर्भं करोति विश[14] एवैताभिर्गर्भो भवत्येता उ वा एका आपस्ता एवैतत्संभरति ॥९॥

13 अथ यदातपति[14] वर्षति तत्पिशीलैर्वोपगृह्णन्ति पात्रीभिर्वा तासु जुहोति सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति सूर्यवर्चसमेवैनमेताभिः करोति सूर्यवर्चा एवैताभिर्भवति ता वा एता असꣳश्लिष्टा आपो ऽप्राप्ता हीमां पृथिवीं भवन्त्यस्ति वा अस्याꣳ सꣳश्लिष्टं यदस्यामनृतं वदति मेध्यमेवैनमेताभिः करोत्येता उ वा एका आपस्ता एवैतत्संभरति ॥१०॥

12 अथ यः[15] स्यन्दमानानाꣳ स्थावरो ह्रदः[16] प्रत्यातपे[16] तस्मिन्जुहोति सूर्यत्वच स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यत्वच स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति सूर्यत्वचमेवैनमेताभिः[17] करोति सूर्यत्वगेवैताभिर्भवति[17] वरुणसवो[18] वा एष यद्राजसूयमेता वै वरुणगृहीता आपो याः स्यन्दमानानां न स्यन्दन्त एता उ वा एका आपस्ता एवैतत्संभरति ॥११॥

15 अथोदपानादुदाहृत्य तासु जुहोति व्रजक्षित स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा व्रजक्षित स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति या वा इमां परेणापस्ता वा एता अपासु चैवैताः[19] सर्वत्वाय कृत्स्नतायै संभरत्येता उ वा एका आपस्ता एवैतत्संभरति ॥१२॥

16 अथ जुहोति प्रुष्वासु वाशा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा वाशा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेत्यन्नं वा एता आप इति ह्येता अन्नमाप इदं[20] यदसावादित्यो ऽग्निर्भूत इमा ओषधीरिदमन्नाद्यं निर्दहति[21] तदेता अभ्यवयत्यः[22] शमयन्ति यद्येता नाभ्यवेयुः पराङेवासावादित्यो ऽग्निर्भूत इमा ओषधीरिदमन्नाद्यं निर्दहेत्तेनैता अन्नमापो ऽन्नेनैवैनमेतदभिषिञ्चत्यन्नमेवास्मिन्नेताभिर्दधात्येता उ वा एका आपस्ता एवैतत्संभरति ॥१३॥

14 अथ जुहोति वैशन्तासु मान्दा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा मान्दा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति विशमेवास्मा एताभिः[23] स्थावरामनपक्रमिणीं करोति सा वै समृद्धा विड्या स्थावरानपक्रमिण्येता उ वा एका आपस्ता एवैतत्संभरति ॥१४॥

18 अथ जुहोत्युल्ब्यासु[24] शक्वरी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शक्वरी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति पशवो वा एता आपः पशुभिरेवैनमेतदभिषिञ्चति पशूनेवास्मिन्नेताभिर्दधात्येता उ वा एका आपस्ता एवैतत्संभरति ॥१५॥

19 अथ जुहोति पयसि जनभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा जनभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति पशवो वा एता आपः पशुभिरेवैनमेतदभिषिञ्चति पशूनेवास्मिन्नेताभिर्दधात्येता उ वा एका आपस्ता एवैतत्संभरति ॥१६॥

20 अथ जुहोति घृते विश्वभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा विश्वभृत स्थ

राष्ट्रदा राष्ट्रममुष्मै दत्तेति पशूनां वा एष रसः पशूनामेवैनमेतद्रसेनाभिषिञ्चति पशूना-
वास्मिन्रसमेताभिर्दधात्येता उ वा एका आपस्ता एवैतत्संभरति ॥१७॥

अथ जुहोति मधुनि शैष्ठा[25] स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शैष्ठा[25] स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेत्यपां च वा एष रस ओषधीनां चापां चैवैनमेतद्रसेनाभिषिञ्चत्योष-
धीनां चापां चैवास्मिन्रसमेताभिर्दधात्योषधीनां चैता उ वा एका आपस्ता एवैतत्सं-
भरति ॥१८॥ 17

अथाञ्जलिना मरीचीरध्यर्जत्यापः स्वाराज्ञी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेत्येता आपः स्वाराज्यो यत्मरीचयस्ता एता अन्यो ऽन्यस्य श्रेष्ठ्यायातिष्ठमाना उत्तराधरा भवन्त्यो यन्ति स्वाराज्यमेवास्मिन्नेताभिर्दधाति स्वाराजैवैताभिर्भवति[26] तद्धै स्वाराज्यं यस्यान्यो[27] न[27] व्यवेष्टिनिविघ्न[27] प्रतिराजा तत्स्वाराज्यमेवास्मिन्नेताभिर्दधाति स्वारा-
जैवैताभिर्भवत्येता[26] उ वा एका आपस्ता एवैतत्संभरति ॥१९॥ 21

ता वा एताः सप्तदशापः संभरति सप्तदशो वै प्रजापतिः प्रजापतिर्वा एष तत्प्रजापतिमेवैनं तत्करोति षोळशस्वप्सु जुहोति षोळशाहुतीर्जुहोति तद्द्वात्रिंꣳ-
शदथ द्वयीषु न जुहोति[28] सारस्वतीषु च मरीचिषु च तच्चतुस्त्रिंꣳशत्त्रयस्त्रिंꣳशद्वै सर्वे देवाः प्रजापतिश्चतुस्त्रिंꣳसस्तत्प्रजापतिमेवैनं[29] तत्करोति ॥२०॥ 22.23

स यद्धुत्वा हुत्वा गृह्णाति वज्रो वा आज्यꣳ स्तृत्वा[30] स्तृत्वैवैना[30] एतत्स्वी-
कृत्य ताः स्वाः सतीर्गृह्णाति स यत्सारस्वतीषु न जुहोति वज्रो वा आज्यं वाक् सरस्वती नेद्वज्रेण वाचꣳ हिनसानीत्यथ यन्मरीचिषु न जुहोत्यनद्धेव वा एतद्यन्म-
रीचयो नेदनद्धाहुतिं[31] जुहवानीति[31] ॥२१॥ 24-26

ताः समवनयति सं मधुमतीर्मधुमतीभिः पृच्यन्तामिति सꣳ रसवत्यो रसवतीभिः पृच्यन्तामित्येवैतदाह महि क्षत्रं क्षत्रियाय वन्वाना इति क्षत्रियायैवैत
त्क्षत्रमाशास्ते यदाह[32] महि क्षत्रं क्षत्रियाय वन्वाना इति[33] ॥२२॥ 27

अथ सादयत्यग्रेण मैत्रावरुणस्य धिष्ण्यमनाधृष्टाः सीदत सहौजसेत्यना-
धृष्टाः सीदत रक्षोभिर्नाष्ट्राभिरित्येवैतदाह सहौजसेति सवीर्या इत्येवैतदाह महि क्षत्रं क्षत्रियाय दधतीरिति क्षत्रियायैवैतत्क्षत्रमाशास्ते यदाह[32] महि क्षत्रं क्षत्रियाय दधतीरिति ॥२३॥ द्वितीयं ब्राह्मणम् ॥ 28

1 ऊर्गुदुंबरो O. 2 राजस्व MSS. 3 °षिंचंति B O. 4 वाचमे° MSS. 5 °जुहोति B W. 6 स्यंद-

मानानां न्यतीरेण C O P, स्यंदमानानां प्रतीरेण B, स्यंदमानानां न्प्रतोरेण W, स्यन्दमानानान्न्यतीरेण T, स्यंदमानानान्यतीरे My. 7 Thus C O P W ( orig. ), स्यंदमाना न्युतीरेण B, स्यंदमानान्प्रतीरेण W ( sec. m. ), स्यंदमानानां न्यतीरेण My; T broken off. 8 Thus MSS. 9 Conjecturally; पुनरन्यायवाप्यवयंत्यपी C, पुनरन्यायवाप्यवयंत्यपि B W O and without accent My, पुनरन्न्यायवाप्यवयन्त्यपि T. 10 Emended conjecturally, हास्यांनृराष्ट्रीयो O C, हास्यान्नराष्ट्रीयो B W My, हास्यान्नराष्टीयो T. 11 Conjectural reading; अस्यान ( sec. m. अस्यांन B ) राष्ट्रमवहृतं B W, अस्यातराष्ट्रमवहृतं O, अस्यांनराष्ट्रमवहृतं My, अस्यांनराष्ट्रमवहृतं C. 12 Read विश्व instead of विश ? 13 निवेष्व B. 14 यदातपति MSS. except C ( orig. ). 15 या O ( sec. m. याऽ ), या C ( orig. ) My. 16 ह्रदः प्रत्यातापे B W O C. 17 सूर्यत्वच° and सूर्यत्वगे° MSS. 18 वरुणसवो B W O C ( cp. VII. 3. 3. 2 ). 19 अपामुवेवैताः O ( read perhaps अपामुवेवैताः i. e. अपाम् । उ । एव । एताः ). 20 इदं B W O C. 21 निर्दहति MSS. 22 °वयंत्यः MSS. 23 एताभि C. 24 °त्युल्बासु O. 25 शैष्टाः B, शैष्टा O P My. 26 Thus ( only °र्भवति ) MSS. Read perhaps स्वराजैवै°. 27 Uncertain reading; °न्यो न व्यवेष्टिनिवन्न with a curve above व ( meaning °वेष्टिनिविन्न ) B, °न्यो न व्यवेष्ठिनिविन्न W, °न्यरोव्यर्वेष्टीनिवन्न O, °न्परोव्यवेष्टिनिविन्न P, °न्यो न व्यवेष्ठि- ( or ष्टी )निविनि T. 28 जुहोति B. Read जुहोति ? 29 प्रजापतिश्चतु° MSS. 30 स्वित्वा स्वित्वैवैना O C T, स्तृत्वा स्तृत्वैवैना B W. 31 नेदनद्धाहुतिर्जुहवानीति O P,

नेदनद्धावर्तिं जुहवानीति B W C, नेदनद्धाहुतीजुं T.

32 यदाह supplied by me. 33 इति MSS.

K. VII. 2. 3 M. V. 3. 3

स वै यदेतस्याग्नीषोमीयस्य पशोर्वपया प्रचरन्त्यथैतमग्नीषोमीयं पुरोळाशमनुनिर्वपति तमनु पुरोळाशमेतानि हवीꣳषि निर्वपति यान्येतानि देवस्वाम् ॥१॥ 1

स वै सवित्रे सत्यप्रसवायाष्टाकपालं वा द्वादशकपालं वा पुरोळाशं निर्वपति प्लाशुकानाꣳ सविता वै देवानां प्रसविता तमेवैतत्प्रीणाति स एनं प्रीतः प्रसौति तेन प्रसूतः[1] सूयते स यत्प्लाशुकानां भवति क्षिप्रं मा प्रसुवादिति[2] ॥२॥ 2

अथाग्नये गृहपतये ऽष्टाकपालं पुरोळाशं निर्वपत्याशूनामग्निर्वै गृहपतिः स गार्हपत्यस्येष्टे श्रीरु वै गार्हपत्यं यावतो यावत ईष्टे तद्य एव गृहपतिर्यो गार्हपत्यस्येष्टे[3] तमेवैतत्प्रीणाति स एनं प्रीतः श्रिये[4] गार्हपत्याय सुवति गार्हपत्यं प्रापयति स यदाशूनां भवति क्षिप्रं मा गार्हपत्याय सुवात्क्षिप्रं[5] गार्हपत्यं प्रापयादिति तस्मादाशूनां भवति ॥३॥ 3

अथ सोमाय वनस्पतये श्यामाकं चरुं निर्वपति द्वयानि वै वानस्पत्यानि वक्राण्यनस्यानि च रथ्यानि च तेभ्यो न्वेवैतदुभयेभ्यो ऽरिष्टं[6] करोति सोमो वै वनस्पतिः स ओषधीनां वनस्पतीनामीष्टे तमेवैतत्प्रीणाति स एनं प्रीत ओषधिभ्यो वनस्पतिभ्यः सुवति स यच्छ्यामको भवत्येता वै प्रत्यक्षतमाꣳ[7] सोमस्यौषधयो यच्छ्यामाकास्तस्माच्छ्यामाको भवति ॥४॥ 4

अथ बृहस्पतये वाचे[8] नैवारं चरुं निर्वपति बृहस्पतिर्वै वाच ईष्टे तमेवैतत्प्रीणाति स एनं प्रीतो वाचे सुवति स यन्नैवारो भवति ब्रह्म वै बृहस्पतिरेते वै ब्रह्मणा पच्यन्ते यन्नीवारास्तस्मान्नैवारो भवति ॥५॥ 5

अथेन्द्राय ज्येष्ठाय हायनानामेकादशकपालं[9] पुरोळाशं निर्वपतीन्द्रो वै ज्येष्ठः[10] स[10] ज्यैष्ठ्यस्येष्टे[11] तद्य एव ज्येष्ठो यो ज्यैष्ठ्यस्येष्टे तमेवैतत्प्रीणाति स एनं प्रीतः श्रिये ज्यैष्ठ्याय सुवति ज्यैष्ठ्यं प्रापयति स यद्धायनानां भवत्यातिष्ठा[12] वा इन्द्रो देवतानामतिष्ठा[12] ओषधीनाꣳ[13] हायनास्तस्माद्धायनानां भवति ॥६॥ 6

अथ रुद्राय पशुपतये रौद्रं गावेधुकं चरुं निर्वपति रुद्रो वै पशुपतिः स पशूनामीष्टे तमेवैतत्प्रीणाति स एनं प्रीतः पशुभ्यः सुवति स यद्गावेधुको भवति वास्तव्यो हि स देवो वास्तव्या हि गवेधुकाः ॥७॥ 7

8 अथ मित्राय सत्यायाम्बानां चरुं निर्वपति ब्रह्म वै मित्रः सत्यस्तमेवैतत्प्रीणाति स एनं प्रीतो ब्रह्मणे सुवति स यदाम्बानां भवति वरुण्या वा एता ओषधयो याः कृष्टाज्जाता अथैते मैत्रा यदाम्बास्तस्मादाम्बानां भवति ॥८॥

9 अथ वरुणाय धर्मपतये वारुणं यवमयं चरुं निर्वपति वरुणो वै धर्मपतिः स धर्मस्येष्टे श्रीरु वै धार्मपत्यं यो हि श्रेष्ठस्तं धर्म उपयन्ति तद्य एव धर्मपतिर्यो धर्मस्येष्टे[14] तमेवैतत्प्रीणाति स एनं प्रीतः श्रिये धार्मपत्याय सुवति धार्मपत्यं प्रापयति स यद्यवमयो भवति वरुण्या हि यवाः ॥९॥

10 तानि नानैव गृह्णाति नानावघ्नन्ति[15] नाना पिꣳषन्ति नानाधान्यानि[16] हि भवन्ति ह्वोतो एवान्वाह होता यजति सर्वाण्युपाꣳशु तदिष्टा देवता भवत्यनिष्टः[17] स्विष्टकृत् ॥१०॥

11 अथैनं दक्षिणं पाणिमभिपद्य वाचयति सविता त्वा प्रसवानाꣳ सुवतामग्निर्गृहपतीनाꣳ सोमो वनस्पतीनाम् । बृहस्पतिर्वाच इन्द्रो ज्यैष्ठ्याय रुद्रः पशूनां मित्रः सत्याय वरुणो धर्मपतीनाम् ॥११॥

12 इमं देवा असपत्नꣳ सुवध्वमितीमं देवा अभ्रातृव्यꣳ सुवध्वमित्येवैतदाह महते क्षत्राय महते ज्यैष्ठ्यायेति नात्र तिरोहितमिवास्तीमममुममुष्य[18] पुत्रममुष्याः पुत्रमिति यतश्चैव संभवति यतश्च जायते तत एवैनमेतत्सुवत्यस्यै विश इति यस्या विशो भवत्येष वः कुरवो राजेति यदि कौरव्य[19] एष वः पञ्चाला राजेति यदि पाञ्चालः सोमो ऽस्माकं ब्राह्मणानाꣳ राजेति तदस्मा इदꣳ सर्वमाद्यं करोति ब्राह्मणमेवापोद्धरति तस्माद्ब्राह्मणो नाद्यः[20] सोमराजा हि सः ॥१२॥

14.13 ता वा एताः सर्वा द्विनामानो[21] देवता भवन्ति द्वन्द्वं वै वीर्यं यदा हि द्वितीयमुपयुते ऽथ वीर्यवत्तरो भवति सवीर्या[22] एनमिति वीर्यवत्यो देवताः सुवतामित्येता उ वै देवताः सवस्येशते[23] या एतत्प्रीणाति ता[24] एनं प्रीताः सुवते स यदेनमेता देवताः सुवत[25] एताभिः प्रसूतः सूयते तस्माद्देवस्व[26] इत्याख्यायन्त एष ह्यस्य पूर्वाभिषेकस्तदेनमेताभिः[27] प्रसूतꣳ श्वो भूते ऽभिषिञ्चति ॥१३॥

15 अथाहाग्नये स्विष्टकृते ऽनुब्रूहीत्यग्निꣳ स्विष्टकृतं यजेति वषट्कृते जुहोति स यदुभे आहुती अन्तरेणैतत्कर्म क्रियत एष वाव प्रजापतिर्यज्ञो य एष तायत एतस्यैवैनमेतत्प्रजापतेर्यज्ञस्य मध्यत आदधाति मध्यतो ऽभिषिञ्चत्यथेळामुपह्य[28] मार्जयन्ते ॥१४॥ तृतीयं ब्राह्मणम् ॥

1 प्रसूतः MSS. 2 °दिति B W O. 3 °पत्यस्येष्टे MSS. 4 श्रिये O. 5 Emended; सुवाक्षिप्रं O C, सुवक्षिप्रं B W, सुवाक्षिप्रं My T. 6 रिर्षि O, रिष्टिं My (cp. VII. 3. 3. 14). 7 प्रत्यक्षतमा॰ O C My, प्रत्यक्षतमाः B W (cp. V. 2. 1. 20). 8 वाचे MSS. 9 हायनाना° MSS. 10 Emended; ज्येष्टस्य B W, ज्येष्टस्यै O, ज्येष्ठस्य C T My. 11 °स्येष्टे B W. 12 °तिष्टा B O. 13 Emended; °तिष्ठौ- (or ष्ठो) षधीना॰ MSS. 14 धर्मस्येष्टे MSS. 15 नानावन्नंति MSS. 16 नानाधान्यानि MSS. 17 भवत्यनिष्टः O, भवंत्यनिष्टः B W C. 18 °मस्रुमस्रुत्व B O. 19 कौरव्य MSS. 20 Thus accented also VII. 3. 2. 3. 21 Thus B W C and without accent My T, द्विनामो O. 22 सुवीर्या B W. 23 सवस्येशते MSS. 24 Thus emended; या MSS. 25 सुवत MSS. 26 °देवस्व MSS. 27 Thus (पूर्वाभि°) MSS. Read probably पूर्वाभि°, cp. Mādhyandina IX. 4. 3. 16. 28 °सुपहूय MSS.

K. VII. 2. 4 M. V. 3. 5

1 तं वै माध्यंदिने सवने ऽभिषिञ्चति[1] स यदेनं माध्यंदिने सवने ऽभिषिञ्चत्येष[2] ाव प्रजापतिर्यज्ञो य एष तायत एतस्यैवैनमेतत्प्रजापतेर्यज्ञस्य मध्यत आदधाति ध्यतो ऽभिषिञ्चति तस्मादेनं माध्यंदिने सवने ऽभिषिञ्चति[3] ॥१॥

2 अगृहीते माहेन्द्रे ग्रह एष वा इन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रो ऽप्यस्यै- तन्निष्केवल्यमेव स्तोत्रं निष्केवल्य[4] शस्त्रं द्वयेन वा एष इन्द्रो यच्च क्षत्रियो यच्च यज- ानः स्व एवैनं तदायतने ऽभिषिञ्चति तस्मादगृहीते माहेन्द्रे[5] ग्रहे[5] ॥२॥

3 अथाग्रेण[6] मैत्रावरुणस्य धिष्ण्यं तदस्मै शार्दूलचर्मोपस्तृणाति[7] सोमस्य त्विषिरसीति यत्र वा अद इन्द्र[8] सोमो ऽत्यपवत ततः शार्दूलः समभवत्तस्मादाह ोमस्य त्विषिरसीति[9] ॥३॥

4 अथास्मै पार्थानि जुहोति स यदस्मै पार्थानि जुहोति पृथी[7] ह वै वैन्यः प्रथमो मनुष्याणामभिषिषिचे[8] सो[9] ऽकामयत सर्वमन्नाद्यमवरुन्धीयेति यच्च ग्राम्यं यच्चारण्यमिति तस्मा एतान्यजुहवुः स सर्वमन्नाद्यमवारुन्द्ध[10] यच्च ग्राम्यं यच्चारण्यमपि हास्यारण्याः पशवो हवमेयुरसावेहि[11] राजा त्वा पक्ष्यत[12] इति तथा सर्वमन्नाद्यमवरुरुध[13] एवं ह वाव सर्वमन्नाद्यमवरुन्द्धे यच्च ग्राम्यं यच्चारण्यं यस्यैवं विदुष एतानि जुह्वति स यदेतानि पृथ्यै वैन्यायाजुहवुस्तस्मात्पार्थानि[14] नाम ॥४॥

5.6 तानि वै द्वादश जुहोति द्वादश वै मासाः संवत्सरस्य तस्माद्द्वादश जुहोति षट् पुरस्तादभिषेकस्य जुहोति षळुपरिष्टादेष वाव प्रजापतिर्यज्ञो य एष तायत एतस्यैवैनमेतत्प्रजापतेर्यज्ञस्य मध्यत आदधाति मध्यतो ऽभिषिञ्चति तस्मात्षट् पुरस्तादभिषेकस्य जुहोति[15] षळुपरिष्टात्तद्यानि पुरस्तादभिषेकस्य षड् जुहोति बृहस्पतिस्तेषामुत्तमो ऽथ यान्युपरिष्टादभिषेकस्य षड् जुहोतीन्द्रस्तेषां प्रथमो ब्रह्म वै बृहस्पतिः क्षत्रमिन्द्रो ब्रह्मणा चैवैतत्क्षत्रेण चोभाभ्यामनन्तर्हिताभ्यां परिवृंहति[16] तस्य नार्तिर्न ह्वला भवति ब्रह्मणा च क्षत्रेण चोभयतः परिगृहीतस्य[17] ॥५॥

7 स जुहोत्यग्नये स्वाहेति तेजो वा अग्निस्तेजसैवैनं तदभिषिञ्चति सोमाय स्वाहेति क्षत्रं वै सोमः क्षत्रेणैवैनं तदभिषिञ्चति सवित्रे स्वाहेति सविता वै देवानां प्रसविता सवितृप्रसूत एवैनं तदभिषिञ्चति सरस्वत्यै स्वाहेति वाग्वै सरस्वती वाचैवैनं तदभिषिञ्चति पूष्णे स्वाहेति पशवो वै पूषा पशुभिरेवैनं तदभिषिञ्चति बृहस्पतये स्वाहेति ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैनं तदभिषिञ्चत्येतानि पुरस्तादभिषेकस्य षड् जुहोत्यथाभिषिक्ते[18] जुहोति ॥६॥

9.10 इन्द्राय स्वाहेतीन्द्रियं वै वीर्यमिन्द्र इन्द्रियेणैवैनं तद्वीर्येणाभिषिञ्चत्यंशाय स्वाहेति वीर्यं वा अंशो वीर्येणैवैनं तदभिषिञ्चति श्लोकाय स्वाहेति वीर्यं वै श्लोको वीर्येणैवैनं तदभिषिञ्चति घोषाय स्वाहेति वीर्यं वै घोषो वीर्येणैवैनं तदभिषिञ्चति भगाय स्वाहेति वीर्यं वै भगो वीर्येणैवैनं तदभिषिञ्चत्यर्यम्णे स्वाहेत्यस्यैवैनमेतत्सर्वस्यार्यमणं करोति[19] सो[19] ऽस्य सर्वस्यार्यमा भवति तद्यान्येतान्युपरिष्टादभिषेकस्य षड् जुहोत्यादित्यनामानीत्येतान्याख्यायन्ते ऽथैतान्यभिषेचनीयानि पात्राण्युपनिहितानि[20] भवन्ति ॥७॥

11 तत्पालाशं भवति तेन ब्राह्मणो[21] ऽभिषिञ्चति ब्रह्म वै पलाशो ब्रह्म वै ब्राह्मणस्तस्मात्पालाशेन[21] ब्राह्मणो[21] ऽभिषिञ्चति ॥८॥

औदुम्बरेण स्रुव ऊर्ग्वै स्रुवं यावद्ध[13] स्रुवं[21] भवति न हि तावदशनायति[24] 12
तस्मादौदुम्बरेण[25] स्रुवः ॥९॥

नैयग्रोधपादेन[26] मिन्द्रयः[27] पद्भिर्वै न्यग्रोधः प्रतिष्ठितो मित्रेण वै क्षत्रं प्रतिष्ठितं 13
तस्मान्नैयग्रोधपादेन[28] मिन्द्रयः[29] ॥१०॥

आश्वत्थेन वैश्यो मारुतो वा अश्वत्थो यदश्वत्थे तिष्ठत इन्द्रो मरुत 14
उपामन्त्रयत तेन मारुतो ऽश्वत्थो विशो वै मरुतो[30] ऽन्नमु वै विशस्तस्मादाश्वत्थेन
वैश्यः[31] ॥११॥

अथ सुषिरे इव हिरण्ये कृते भवतस्ते पवित्रयोः प्रोते भवतो[32] सो न्वेव 15
पवित्रयोर्बन्धुता[33] ये वासौ दर्शपूर्णमासयोरथ[34] यत्सुषिरे इव हिरण्ये प्रोते भवत
आयुर्वा अमृतꣳ हिरण्यमायुरेवैतदमृतमेतास्वभिषेचनीयास्वप्सु दधाति तस्माद्धिरण्ये
प्रोते भवतः[35] ॥१२॥

स उत्पुनाति सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभि- 16-18
रिति सो ऽसावेवैतस्य यजुषो बन्धुरनिभृष्टमसि[36] वाचो बन्धुस्तपोजा इत्यनाधृष्टा
स्थ रक्षोभिर्नाष्ट्राभिरित्येवैतदाह यदाहानिभृष्टमसीति वाचो बन्धुरिति यावद्धै पुरुष
आपो भवन्ति तावद्धै वाचा वदति तस्मादाह वाचो बन्धुरिति तपोजा[37] इत्यग्नेर्वै
धूमो जायते धूमादभ्रमभ्राद्वृष्टिरग्निरुवै तपस्तस्मादाह तपोजा[37] इति सोमस्य
दात्रमसीति यदा वा अद्भिः सोमꣳ राजानमुपसृजन्त्यथ[38] वै[38] सो[38] ऽलमाहुतये[38]
भवदलं[38] भक्षाय तस्मादाह सोमस्य दात्रमसीति स्वाहा राजस्व[39] इति तदेना एतेन
स्वाहाकारेण पुनाति ॥१३॥

अथैतेष्वभिषेचनीयेषु पात्रेषु व्यानयति सधमादो द्युम्निनीराप एता इत्यन- 19
तिमानिन्य इत्येवैतदाह यदाह सधमाद इति द्युम्निनीरिति वीर्यवत्य इत्येवैतदाहा-
नाधृष्टा अपस्यो वसाना इत्यनाधृष्टा रक्षोभिर्नाष्ट्राभिरित्येवैतदाह पस्त्यासु चक्रे वरुणः
सधस्थमिति क्षत्रं वै वरुणो विशः पस्त्या विक्षु चक्रे वरुणः प्रतिष्ठामित्येवैतदाहापाꣳ
शिशुर्मातृतमास्वन्तरित्यपाꣳ ह्येष शिशुर्भवति[40] यो राजसूयेन यजते तस्मादाहापाꣳ
शिशुर्मातृतमास्वन्तरिति[41] ॥१४॥

अथैनमेतानि वासाꣳसि परिधापयति तत्वार्प्यमिति[42] वासो भवति 20
तस्मिन्त्सर्वाणि यज्ञरूपाणि निष्यूतानि भवन्ति तदेनं परिधापयति क्षत्रस्योल्बम-
सीति क्षत्रस्य वा एतदुल्बꣳ स यदेव क्षत्रस्योल्बं तत एवैनमेतज्जनयति ॥१५॥

21 अथ पाण्डुं क्षत्रस्य जराय्वसीति क्षत्रस्य वा एतज्जरायु स यदेव क्षत्रस्य जरायु तत एवैनमेतज्जनयति ॥१६॥

23 अथ सꣳहृत्य पुरस्तादुष्णीषमवगूहति क्षत्रस्य नाभिरसीति क्षत्रस्य वा एषा नाभिः स यैव क्षत्रस्य नाभिस्तत एवैनमेतज्जनयति ॥१७॥

24.22 तद्धैके समन्तं परिवेष्टयन्ति तदु तथा न कुर्यात्पुरस्तादेवावगूहेत्पुरस्ताद्धीयं नाभिरथाधिवासं क्षत्रस्य योनिरसीति क्षत्रस्य वा एषा[४३] योनिः सा[४४] यैव क्षत्रस्य योनिस्तत एवैनमेतज्जनयति स यदेनमेतानि वासाꣳसि परिधापयति जनयत्येवै तज्जातमेनमभिषिञ्चामीति ॥१८॥

25.26 तद्धैके परिधाप्यैव पुनर्निधायाथ दीक्षितवसनं परिधापयन्ति तदु तथ न कुर्यादङ्गानि वा अस्यैतानि जन्वो[४५] ऽङ्गैर्हैनꣳ[४५] सजन्वा[४५] व्यर्धयति तस्माद एवैकतमं वसीत तथा हैनमङ्गैर्जन्वा[४६] न व्यर्धयति वरुण्यमु वै दीक्षितवसन तथ वरुण्याद्दीक्षितवसनात्प्रमुच्येत स यत्रावभृथमभ्यवैति तदेतत्प्रतिवेशं पार्श्वतो ऽन्वभ्य वहरन्ति तदु सलोम क्रियते ऽथात एवैकतमं वसानः पुनरुदैति तान्यनुबन्ध्याया वा वशायां ददात्युदवसानीयायां[४७] वेष्टौ ॥१९॥

27 अथास्मै धनुरुज्ज्यं[४८] करोतीन्द्रस्य वार्त्रघ्नमसीति वार्त्रघ्नं वा एतद्यद्धनुर्ह्येन वा एष इन्द्रो यश्च क्षत्रियो यश्च यजमानस्तस्मादाहेन्द्रस्य वार्त्रघ्नमसीति त्वयायं वृत्रं वध्यादिति त्वयायं द्विषन्तं भ्रातृव्यꣳ हन्त्वित्येवैतदाह यदाह त्वयायं वृत्रं वध्यादिति[४९] ॥२०॥

28 अथ बाहू विमार्ष्टि[५०] मित्रस्यासि वरुणस्यासीति बाहोर्वै धनुर्बाहुभ्यां वै मैत्रावरुणो राजन्यस्तस्मादाह मित्रस्यासि वरुणस्यासीति[५१] ॥२१॥

29 अथास्मा इषूस्तिस्रः प्रयच्छति तिस्रो ह वा इषव इदं नु यया समर्पणेन पराभिनत्ति सैका सेयं पृथिवी सैषा रुजा नामाथ यया विद्धः शिश्यानो[५२] जीवति वा म्रियते वा सा द्वितीया तदिदमन्तरिक्षꣳ[५३] सैषा द्रुवा[५४] नामाथ ययापैव राध्नोति सा तृतीया[५५] सासौ[५५] द्यौः सैषा क्षुपा नामैता हि वै तिस्र इषवस्तस्मादस्मा इषूस्तिस्रः प्रयच्छति स यदस्मा इषुधनुः प्रयच्छति[५६] धनुर्वै राजन्यस्य वीर्यं धनुषा हि राजन्यो वीर्यं करोति[५७] जात एवास्मिन्नेतद्वीर्यं दधाति सवीर्यमेनमिति वीर्यवन्तमभिषिञ्चामीति[५८] ॥२२॥

अथैनमभिमृशति पातैनं प्राञ्चं पातैनं प्रत्यञ्चं पातैनं तिर्यञ्चं दिग्भ्यः पातेति सर्वाभ्य एवास्मा एतद्दिग्भ्यो[9] ऽशरव्यं करोति तस्मै सर्वाभ्यो दिग्भ्यो[10] ऽशरव्यं भवति ॥२३॥ 30

अथैनमाविदो वाचयत्याविर्मर्या इत्यनिरुक्तमनिरुक्तो वै प्रजापतिस्तदेनं प्रजापतय आवेदयति सो ऽस्मा एतꣳ सवमनुमन्यते तेनानुमतः सूयते ॥२४॥ 31

आवित्तो अग्निर्गृहपतिरिति ब्रह्म वा अग्निस्तदेनं ब्रह्मण आवेदयति सो ऽस्मा एतꣳ सवमनुमन्यते तेनानुमतः सूयते ॥२५॥ 32

आवित्त इन्द्रो वृद्धश्रवा इति क्षत्रं वा इन्द्रस्तदेनं क्षत्रायावेदयति सो ऽस्मा एतꣳ सवमनुमन्यते तेनानुमतः सूयते ॥२६॥ 33

आवित्तः पूषा विश्ववेदा इति पशवो वै पूषा तदेनं पशुभ्य आवेदयति ते ऽस्मा एतꣳ सवमनुमन्यन्ते तैरनुमतः सूयते ॥२७॥ 35

आवित्तौ मित्रावरुणौ धृतव्रताविति प्राणोदानौ वै मित्रावरुणौ तदेनं प्राणोदानाभ्यामावेदयति तावस्मा एतꣳ सवमनुमन्येते ताभ्यामनुमतः सूयते ॥२८॥ 34

आवित्ते द्यावापृथिवी विश्वशम्भू इति तदेनमाभ्यां द्यावापृथिवीभ्यामावेदयति ययोरिदꣳ सर्वमधि ते अस्मा एतꣳ सवमनुमन्येते ताभ्यामनुमतः सूयते ॥२९॥ 36

आवित्तादितिरुरुशर्मेतीयं वा अदितिस्तदेनमस्यै पृथिव्या आवेदयति सास्मा एतꣳ सवमनुमन्यते तयानुमतः सूयते स यदेनमेताभ्यो देवताभ्य आवेदयत्येताभिरनुमतः[11] सूयते तस्मादाविदो[12] नाम तस्माद्वैनमाविदो वाचयति ॥३०॥ चतुर्थं ब्राह्मणम् ॥ द्वितीयो ऽध्यायः ॥ 37

1 °षिंचंति C. 2 भिषिंचत्येष B O, भिषिंचत्येष C, भिषिंचत्येष W; My everywhere singular. 3 °षिंचंति O C T. 4 माहेंद्रे ग्रहे B, महेंद्रे O. 5 अथाग्रेण O, अथाग्रेण B C, अथाग्रेण W. 6 शार्दूल° B W. 7 °सीति MSS. 8 Emended; पृथ्वी B W My, पृथिवी O C, पृथिवी T. 9 °मत्यिषिषिवे सो O, °मभिषिंचेत्सो B W, °मभिषिंचे सो T. 10 °मवारुंध्य B, °मवरुंध O. 11 हव° MSS. 12 Emended; वक्ष्यत MSS. 13 Emended; °मवरुोध O, °मवारु-

रोध B W, °मवरुरोध C. 14 वैन्यायाज्° MSS. 15 No accent in the MSS. 16 परिबृंहति T. 17 परिगृहीतस्य O W C, परिगृहीतस्य B. 18 °स्तथा-भिषिक्ते MSS. 19 करोति सो B W O, करोति सो C. 20 °पनिहितानि O, °पनिहितानि B W, °ण्युपनिहितानि C. 21 ब्राह्मणो or ब्राह्मणो in the MSS. 22 °स्मात्पालाशेन B W, °स्मात्पलाशेन O. 23 Emended; यावध्यस्वं O P, यावध्यंस्वं B, यावंध्यस्वं W, यावद्धयस्वं C, यावद्धयसं T, यावद्यस्वं My. 24 तावदशनायति MSS. 25 °ण MSS. 26 नैग्यग्रोधपादेन MSS. 27 मित्रियः B W C ( sec. m. ), मित्रियः T. 28 तस्मान्नैयग्रोधपादेन B. 29 मित्रियः or मित्रियः MSS. 30 मरुतो B W. 31 वैश्यः B W O. 32 भवतो W C, भवतो B O. 33 °बंधुता MSS. 34 दर्शपौर्ण° B W T. 35 भवतः MSS. 36 B My insert इति. 37 तपोजा C. 38 Thus MSS. Read perhaps °स्थ वै सो ऽलमाहुतये भवस्यलं. 39 Thus accented in MSS. 40 °भंवति MSS. 41 °रिति MSS. 42 तत्तार्यमिति B W My, तत्तार्पमिति O, तत्तार्प्यमिति T. 43 एष B W. 44 स B W C, स O My, सा T. 45 जन्वों-गैहैंन९ सजंन्वा B W, जन्वोंगैहैंन९ सजन्वा C, जन्वोगैहैंन९ सजन्वा O P. Read probably अन्वो. 46 हैनमंगैर्जन्वा B W C, हैनमंगैर्जन्वा O. 47 ददात्यु° O C, ददात्यु° B W. 48 धनुरुज्यं B W O C T. 49 °द्दिति MSS. 50 निमार्ष्टि T. 51 °सीति MSS. 52 शिष्यानो MSS. 53 °रिक्ष९ MSS. 54 द्वा O, द्वा C My, उ (?) वा T. 55 तृतीया सासौ B W C, तृतीया सासौ O. 56 प्रय° MSS. 57 करोति

MSS. 58 °मेति MSS. 59 एतद्दिग्भ्यो MSS.
60 दिग्भ्यो B C, सर्वाभ्यो दिग्भ्यो W. 61 आवेदय
MSS. 62 °दाविदो MSS.

K. VII. 3. 1 M. V. 4. 1

स वै केशवस्य पुरुषस्य लोहायसमास्य आविध्यत्यवेष्टा दन्दशूका इति 1
सर्वान्वा एष दन्दशूकानतिमुच्यते सर्वान्वधान्त्सर्वान्मृत्यून्यो राजसूयेन यजते तद्य
एव दन्दशूको यो ऽन्यो मृत्युर्यो वधस्तमेवैनमेतदतिनयति तस्य नान्यान्तरेणार्तिर्न
त्ता भवति स जरा मृत्युरेव भवति ॥१॥

स यत्केशवस्य पुरुषस्य न वा एष स्त्री न पुमान्यत्केशवो नो वा एते 2
क्रिमयो नाक्रिमयो यद्दन्दशूकाः स यल्लोहायसं लोहिता इव हि दन्दशूकाः ॥२॥

अथैनं दिशः समारोहयति प्राचीमारोह गायत्री त्वावतु रथंतरꣳ साम 3
त्रिवृत्स्तोमो वसन्त ऋतुर्ब्रह्म द्रविणम् ॥३॥

दक्षिणामारोह त्रिष्टुप्त्वावतु बृहत्साम पञ्चदश स्तोमो ग्रीष्म ऋतुः 4
क्षत्रं द्रविणम् ॥४॥

प्रतीचीमारोह जगती त्वावतु वैरूपꣳ साम सप्तदश स्तोमो वर्षा 5
ऋतुर्विड् द्रविणम् ॥५॥

उदीचीमारोहानुष्टुप्त्वावतु वैराजꣳ सामैकविꣳश स्तोमः शरदृतुः फलं 6
द्रविणम् ॥६॥

ऊर्ध्वामारोह पङ्क्तिस्त्वावतु शाक्वररैवते सामनी त्रिणवत्रयस्त्रिꣳशौ 7
स्तोमौ हेमन्तशिशिरा ऋतू वर्चो द्रविणमिति ॥७॥

स यदेनमेवं दिशः समारोहयति यद्दतून्यत्स्तोमान्यच्छन्दाꣳसि यत्सामा- 8
न्यृतूनां वा एतत्संवत्सरस्य रूपमृतूनेवैनमेतत्संवत्सरꣳ समारोहयति स ऋतून्त्संव-
त्सरꣳ समारुह्य सर्वमिदमुपर्युपरि भवति नास्मात्किं चन वरं भवत्यर्वागेवास्मा-
दन्यत्सर्वं भवति ॥८॥

अथ जघनेन शार्दूलचर्म सीसं निहितं भवति तत्प्रत्यस्यति प्रत्यस्तं नमुचेः 9.10
शिर इति नमुचिर्ह वै नामासुर आस तꣳ हेन्द्रो निविव्याध तस्य निविद्धस्य
पदा शिरो ऽभितष्ठौ स यच्छिरसोद्वाघत स एष उच्छुङ्क इव पदस्तत्प्रचिच्छेद
तद्ध स्म देवाननु भाषमाणं चरति कैष्यथ न मे मोक्ष्यध्व इति ततो ह देवा एतं

वज्रं ददृशुर्यत्सीसं[8] तेन तदपजघ्नस्तस्मादेतत्सृतजवं[9] यत्सीस१ँ हिरण्यरूप१ँ सदनर्घं[10] मृदु निर्वीर्य१ँ सृतजव१ँ[11] ह्येतत्तथो वा एष एतेन वज्रेण नाष्ट्रा रक्षा१ँस्यपहन्ति[12] विजिते ऽभये ऽनाष्ट्रे सूया इति[13] ॥९॥

11 अथ शार्दूलचर्मारोहति सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयादिति शार्दूलत्विषिमेवास्मिन्नेतद्दधाति[14] ॥१०॥

12 अथाधस्तात्पदो रुक्ममुपोहति मृत्योः पाहीति ते ये ऽस्यां पृथिव्यां मृत्यवस्तेभ्य एवैनमेतदन्तर्दधाति ॥११॥

13 अथ शतवितृण्णं वा रुक्ममाहरन्ति नववितृण्णं वा स यद्ध[15] शतवितृण्णो भवति शतायुर्वा अयं पुरुषः शतवीर्यः शततेजास्तस्मान्नु शतवितृण्णो यद्यु नववितृण्णो नव वा इमे पुरुषे प्राणास्तस्मान्नववितृण्णः ॥१२॥

14 तमधिनिदधात्योजो ऽसि सहो ऽस्यमृतमसीत्योजो ह्येतत्सहो ह्येतदमृत१ँ ह्येतत्स यदुभयतो[16] रुक्मौ करोत्यायुर्वा अमृत१ँ हिरण्यमायुषैवैनमेतदमृतेनोभयतः परिगृह्णाति तस्य नार्तिर्न ह्वला भवत्यायुषामृतेनोभयतः परिगृहीतस्य ॥१३॥

15 अथ बाहू उद्गृह्णाति हिरण्यरूपा उषसो विरोक उभा इन्द्रा उदितः सूर्यश्च । आरोहतं वरुण मित्र गर्तमिति बाहू वै मित्रावरुणावात्मो[17] वै गर्तस्तस्मादाहारोहतं वरुण मित्र गर्तमिति ततश्चक्षाथामदितिं दितिं चेति ततः पश्यत१ँ स्वं चारणं चेत्येवैतदाह यदाह ततश्चक्षाथामदितिं दितिं चेति ॥१४॥

16.17 तदाहुर्मित्रो[18] ऽसि वरुणो ऽसीत्येतावतैव[19] बाहू उद्गृह्णीयादिति बाहू हि मित्रावरुणाविति स यदेनमूर्ध्वबाहुमभिषिञ्चति रसो वा अयं वीर्यं तेज इदमपा१ँ संभृतं येनैनमेतदभिषिञ्चति बाह्वोरु वै राजन्यस्य वीर्यं बाहुभ्या१ँ हि राजन्यो वीर्यं करोति नेन्मे ऽय१ँ रसो वीर्यं तेज इदमपा१ँ संभृतं बाहू व्लिनान्नेन्मे बाह्वोर्वीर्यं प्रमुष्णादिति[20] तस्मादेनमूर्ध्वबाहुमभिषिञ्चति ॥१५॥ प्रथमं ब्राह्मणम्

1 पङ्क्ति॰ C. 2 भवति MSS. but cp. VII. 3. 2. 6. 3 नामासुररक्षसमास T. 4 Thus emended; cp. II. 7. 2. 2, निविद्धः B W C, निविधधः O, निविद्ध T My. 5 ॰बाधत O C T. 6 कैष्यथ MSS. 7 मोक्ष्यध्व MSS. 8 ॰र्यत्सीसं B. 9 ॰तच्छृतजवं B W C My, ॰तच्छृतभवं O, ॰तच्छृतिभवं T. 10 सदनर्घं

MSS. 11 Thus C, °स्त° B W O, °श्रुत° My. 12 °स्यवहंति B W O C My, °स्यवंति T. 13 इति MSS. 14 Thus (°स्त्रिषि°) MSS. 15 यद्युद B. 16 °भयतो B W O C (orig.). 17 °स्मा B W. 18 तदाह मित्रो B W. 19 °स्तेतावैते B W. 20 प्रसुष्णादिति O C, प्रसुळादिति B W, but B with ष्णा on the margin.

K. VII. 3. 2 M. V. 4. 2

स वै पुरस्तादध्वर्युर्वा पुरोहितो वाभिषिञ्चति पश्चादितरे[1] ॥१॥ 1

सो ऽभिषिञ्चति सोमस्य त्वा द्युम्नेनाभिषिञ्चामीति वीर्येणेत्येवैतदाह यदाह सोमस्य त्वा द्युम्नेनाभिषिञ्चामीत्यग्नेर्भ्राजसेति वीर्येणेत्येवैतदाह सूर्यस्य वर्चसेति वीर्येणेत्येवैतदाहेन्द्रस्येन्द्रियेणेति वीर्येणेत्येवैतदाह मरुतामोजसेति वीर्येणेत्येवैतदाह क्षत्राणां क्षत्रपतिरेधीति राज्ञामधिराज एधीत्येवैतदाह यदाह क्षत्राणां क्षत्रपतिरेधीत्यति दिद्यून्पाहीतीषवो वै दिद्युत इषुवधमेवैनमेतदतिनयति[2] तस्मादाहाति दिद्यून्पाहीति ॥२॥ 2

इमं देवा असपत्नꣳ सुवध्वमितीमं देवा अभ्रातृव्यꣳ सुवध्वमित्येवैतदाह महते क्षत्राय महते ज्यैष्ठ्यायेति नात्र तिरोहितमिवास्ति महते जानराज्यायेति महते जनानाꣳ राज्यायेत्येवैतदाहेममसुममुष्य पुत्रममुष्याः पुत्रमिति यतश्चैव संभवति यतश्च जायते तत एवैनमेतत्सुवत्यस्यै विश इति यस्या विशो भवत्येष वः कुरवो राजेति यदि कौरव्य[3] एष वः पञ्चाला राजेति यदि पाञ्चालः[4] सोमो ऽस्माकं ब्राह्मणानाꣳ राजेति तदस्मा इदꣳ सर्वमाद्यं करोति ब्राह्मणमेवोपोद्धरति तस्माद्ब्राह्मणो नाद्यः[5] सोमराजा हि सः ॥३॥ 3

अथेममभिषेकं कृष्णविषाणयानुविनयति रसो वा अयं[6] वीर्यं तेज इदमपाꣳ संभृतं येनैनमेतदभिषिञ्चति स मे सर्वमात्मानमनुव्ययत्वेनं[7] कृत्स्नः सर्वतनूः सꣳस्पृशा इति तस्मादनुविनयति[8] ॥४॥ 4

सो ऽनुविनयति प्र पर्वतस्य वृषभस्य पृष्ठादिति यथा वै पर्वत इदꣳ सर्वमतिष्ठावा यथर्षभः पशूनामतिष्ठावैवं वा एष सर्वमतिष्ठावा भवति[9] यो राजसूयेन यजते तस्मादाह प्र पर्वतस्य वृषभस्य पृष्ठादिति नावश्चरन्ति स्वसिच इयानाः । ता 5

आवच्छ्रन्नधरागुदक्ता अहिं बुध्न्यमनु रीयमाणा इत्ययं वा अहिर्बुध्न्यस्तमेता[10] अनु[10] स्यन्दन्ते[10] तस्मादाहाहिं बुध्न्यमनु रीयमाणा इति[11] ॥५॥

6 अथान्तरेव[12] शार्दूलचर्मणि विष्णुक्रमान्क्रमते विष्णोर्विक्रमणमसि विष्णोर्विक्रान्तमसि विष्णोः क्रान्तमसीतीमे वै लोका विष्णोर्विक्रमणं विष्णोर्विक्रान्तं विष्णोः क्रान्तमिमानेवैनमेतल्लोकान्त्समारोहयति स इमांल्लोकान्त्समारुह्य सर्वमिदमुपर्युपरि भवति नास्मात्किं चन वरं भवत्यर्वागेवास्मादन्यत्सर्वं भवति ॥६॥

7 अथ ब्राह्मणस्य पात्रे संस्रवान्त्समवनयति राजानमेवैतदनु ब्राह्मणं यशस्करोति तस्माद्राजानमनु ब्राह्मण एव यशो ऽथो ब्रह्मण एवैतदिमाः[13] प्रजा बलिं हारयति तस्माद्ब्रह्मणः प्रजा रद्धा इत्याहुः ॥७॥

8 तदु स प्रतिहिताय पुत्राय प्रयच्छत्ययं मे पुत्र इदं कर्मेदं वीर्यमनुसंतनोत्विति तथा हास्यैष पुत्र एतत्कर्मैतद्वीर्यमनुसंतनोति तथैष एतस्मान्न पापीयान्भवति ॥८॥

9 तस्मिन्नन्वारब्धे गार्हपत्ये जुहोति प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्त्वयमयममुष्य पितेत्याहुर्यः[14] पुत्रस्तं पितरं करोति[15] यः पिता तं पुत्रं तदेनयोर्वीर्ये व्यतिषजति तथैष एतस्मान्न पापीयान्भवत्ययममुष्य[16] पितेत्याह तदेनयोर्वीर्ये व्यतिषज्याथ[17] यथायथं करोति य एव पिता तं पितरं यः पुत्रस्तं पुत्रं[18] वयं स्याम पतयो रयीणां स्वाहेत्याशिषमेवैतदाशास्ते ॥९॥

10 अथ यो ऽयमतिरिक्तः संस्रवश्चष्ये[19] भवति तमाग्नीध्रे जुहोत्यतिरिक्तो वा एष संस्रवो ऽतिरिक्त उ वा आग्नीध्रो गार्हपत्ये हि हवींषि श्रपयन्त्याहवनीये जुह्वत्यतिरिक्त एवैतदतिरिक्तं दधात्येतस्मा उ वा एतद्देवाय जुहोत्येषो एतस्य देवस्य दिक्तस्मादाग्नीध्रे जुहोति स जुहोति रुद्र यत्ते क्रवि परं नाम तस्मै हुतमस्यमेष्टमसि[20] स्वाहेति ॥१०॥ द्वितीयं ब्राह्मणम् ॥

1 °द्वितरे MSS. 2 इषुवधमे° B W. 3 कौरव्य B W, कौरव्य O C. 4 पंचालः B. 5 Thus also VII. 2. 3. 12. 6 अयं MSS. 7 Thus C My, °नमनुमव्ययत्स्येनं B W, °नमनुवयंस्येनं O P, °नमनुव्ययस्येन T (anuvyayati, Subjunctive). 8 °नयति

MSS. 9 भवति MSS. 10 °स्तमेता अनुस्यंदते B, °स्तमेता अनुस्यंदंते C W My, °स्तमेत्रात्तजनस्यंदंते O, °स्तमेता अनु स्यन्दते T. 11 इति MSS. 12 °रेव B W O, °रेणव C. 13 °दिमाः B O. 14 Thus MSS. Read perhaps पितेत्याह यः. 15 करोति B W. 16 Instead of अयममुष्य we expect असावस्य. 17 व्यतिषजत्यथ O P. 18 पुत्रं MSS. 19 °श्रप्ये O P, °श्रयो B W. 20 हुतमस्येमेष्ट° O.

K. VII. 3. 3 M. V. 4. 3

स वै स्वस्य गाः शतं वा परःशता वोत्तरेणाग्नीध्रꣳ सꣳरुणद्धि ताः 1.2 ꣳरुध्याथास्मै रथमुपावहरति स यदस्मै रथमुपावहरति वरुणाद्धाभिषिषिचानाद्भर्गो ऽपचक्रामेन्द्रियं वै वीर्यं भर्ग इन्द्रियꣳ हैवास्माद्वीर्यमपचक्राम शश्वद्ध यदेवैतत्तेजो वीर्यꣳ रस एषो ऽपाꣳ संभृतस्तद्धैवास्य शश्वद्भर्गो निर्जघान ॥१॥

तमु वै वरुणो ऽन्वैच्छत्तं पशुष्वन्वविन्दत्तस्मात्पशवो यशो यदेषु वरुण इन्द्रियं वीर्यमन्वविन्दत्तदनुविद्य तदात्मन्यकुरुत तदात्मन्यधत्ताथ यदेष एतत्कर्म करोति नाहवैतस्मादभिषिषिचानात्तथेन्द्रियं वीर्यमपक्रामतीति[1] वरुणो[2] ऽकरोदिति[1] वैवैष[1] एतत्करोति वरुणसवो[3] ह्येष यद्राजसूयमथो यदस्मादभिषिषिचानादिन्द्रियं वीर्यं पशूनभ्यपक्रामति[4] तदेवैतदात्मनि कुरुते तदात्मनि धत्ते ॥२॥

अथ यदस्मै रथमुपावहराति यद्वै क्षत्रियादपक्रामति रथेन वै स तदनुयुङ्क्ते[5] 3 रथेन तत्स्पृणोति यदस्य स्पर्तव्यं[6] तस्मादस्मै रथमुपावहराति ॥३॥

स उपावहरतीन्द्रस्य वज्रो ऽसीति वज्रो वा एष यद्रथो द्वयेन वा एष 4.5 इन्द्रो यच्च क्षत्रियो यच्च यजमानस्तस्मादाहेन्द्रस्य वज्रो ऽसीति[7] ॥४॥

अथैनं धूर्गृहीतमन्तर्वेद्यभ्यववर्तयति तमग्रेण पत्नीशालं[8] जघनेन सदस्तदेनं युनक्ति मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनग्मीति[9] बाहू वै मित्रावरुणौ बाहुभ्यां वै मैत्रावरुणो राजन्यस्तस्मादाह मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनग्मीति[9] ॥५॥

स दक्षिणायुग्यमेवाग्रे युनक्त्यथ सव्यायुग्यꣳ सव्यायुग्यं वा अग्रे मानुषे युनक्त्यथैवं देवत्रा[10] दक्षिणाप्रष्टिमेवाग्रे[11] युनक्त्यथ सव्याप्रष्टिꣳ सव्याप्रष्टिं वा अग्रे मानुषे युनक्त्यथैवं देवत्रा ॥६॥

6.7 तमेवं चतुर्भिर्युक्त्वा येनैतद्दक्षिणा[११] यन्ति तेन वर्तते तमग्रेणाग्नीध्रं जघनेन चात्वालं तदेनमुद्यच्छति[१२] तदेनं यजमान आतिष्ठत्यव्यथायै त्वा[१३] स्वधायै त्वेत्यनार्तायै त्वाह्वलाया इत्येवैतदाह यदाहाव्यथायै त्वेति स्वधायै त्वेति रसाय त्वेत्येवैतदाहारिष्टः फल्गुन इत्यनार्त इति तदाह यदाहारिष्ट इति फल्गुन इति ह्येन वा एष इन्द्रो यश्च क्षत्रियो यश्च यजमान एतद्धा इन्द्रस्य गुह्यं नाम यदर्जुन इति तत्को ऽर्हति तस्य गुह्यं नाम ग्रहीतुमिति परोक्षमिवाहारिष्टः फल्गुन इति[१४] ॥७॥

8 अथ दक्षिणायुग्यमुपस्पृशति मरुतां प्रसवेन जयेति विशो वै मरुतो देवविशं विशा वै क्षत्रियस्तदाप्नोति यदीप्सति विशा तज्जयति यज्जिगीषति विशः[१५] प्रसवेन जयेत्येवैतदाह यदाह मरुतां प्रसवेन जयेति[१६] ॥८॥

9 अथ गवां मध्य[१७] उद्यच्छत्यापाम मनसेति स[१८] यावदाशो[१८] ह मनसा तदाप्नोति[१९] यदीप्सति तावदाशास्तदाप्नोति[१८] यदस्मादिन्द्रियं वीर्यमपक्रान्तं भवति तस्मादाहापाम मनसेति ॥९॥

10 समिन्द्रियेणेति गामुपस्पृशति स यदस्मादभिषिषिचानादिन्द्रियं वीर्यं पशूनभ्यपक्रामति तदेवैतदात्मनि कुरुते तदात्मनि धत्ते तस्मादाह समिन्द्रियेणेति[२०] ॥१०॥

11.12 अथाह जिनाम्यहमिमाः स्वा इमाः कुर्व[२१] इति[२१] स यदेवꣳ स्वं जिनाति यद्वै पुरुषादपक्रामति स्वꣳ हैवास्य तत्प्रथममभ्यपक्रामति[२२] स यदस्मादभिषिषिचानादिन्द्रियं वीर्यꣳ स्वमभ्यपक्रामति तदेवैतदात्मनि कुरुते तदात्मनि धत्ते स्वादु चैवैतदिन्द्रियं वीर्यं वृङ्क्ते तस्मा उ तावतीर्वा भूयसीर्वा पुनः प्रतिददाति क्रूरमिव वा इदं करोति यज्जिनाति न वा एष क्रूरकृत्यायै राजसूयेन यजते[२३] यदेव भद्रं कुर्याद्भद्रं वदेत्तस्मा एवालं तस्मादस्मै तावतीर्वा भूयसीर्वा पुनः प्रतिददाति ॥११॥

13.14 अथ दक्षिणानन्वायामयति[२४] सो ऽग्रेण यूपं पर्यास्यद्य[२५] येनैतद्दक्षिणा[२६] यन्ति तेन वर्तते तमग्रेण पत्नीशालं जघनेन सदस्तदेनमुद्यच्छति मा त इन्द्र ते वयं तुराषाळयुक्तासो अब्रह्मता विदसाम । तिष्ठा रथमधि यद्वज्रहस्ता[२७] रश्मीन्देव युवसे स्वश्वानिति रश्मयो वा एते यदभीशवस्तान्ह्येतदुद्यच्छति[२८] तस्मादाह रश्मीन्देव युवसे स्वश्वानित्यथ युक्त एव रथे रथविमोचनीयानि जुहोति स यद्रथविमोचनीयानि जुहोति तृप्तो ऽयं प्रीतो रथो विमुच्याता[२९] इति ॥१२॥

15 स जुहोत्यग्नये गृहपतये स्वाहेति स यदेवास्याग्नेयं तदेवास्यैतेन प्रीणाति

ऽसि[३०] वा अस्याग्नेयानि तान्येवैतत्प्रीणाति श्रीरु वै गार्हपत्यं यावतो यावत ईष्टे मेवास्यैतद्गार्हपत्यꣳ राज्यꣳ[३१] रथो ऽभि[३२] विमुच्यते ॥१३॥

सोमाय वनस्पतये स्वाहेति द्वयानि वै वानस्पत्यानि चक्राण्यनस्यानि च 16 नि च तेभ्यो न्वेवैतदुभयेभ्यो ऽरिष्टं करोत्यथो यदेवास्य वानस्पत्यं तदेवास्यै- प्रीणाति दारूणि वा अस्य वानस्पत्यानि तान्येवैतत्प्रीणाति क्षत्रमु वै सोमः मेवास्यैतद्राज्यꣳ रथो ऽभि विमुच्यते ॥१४॥

इन्द्रस्येन्द्रियाय स्वाहेति स यदेवास्यैन्द्रं तदेवास्यैतेन प्रीणाति सव्यस्थो[३४] 18 अस्यैन्द्रस्तमेवैतत्प्रीणातीन्द्रियमु वै वीर्यमिन्द्र इन्द्रियमेवास्यैतद्वीर्यꣳ राज्यꣳ[३५] ऽभि विमुच्यते ॥१५॥

मरुतामोजसे स्वाहेति स यदेवास्य मारुतं तदेवास्यैतेन प्रीणाति सर्वो 17.19 एष मारुतश्चत्वारो ऽश्वा द्वौ सव्यस्थसारथी[३६] रथः[३७] सप्त सप्त वै मरुतां गणास्त- मेवैनमेतत्प्रीणाति[३७] विशो वै मरुतो ऽन्नमु वै विशो विशमेवास्यैतदन्नाद्यꣳ यꣳ रथो ऽभि विमुच्यते स यद्रथविमोचनीयानि जुहोति तृप्तो ऽयं प्रीतो रथो ख्याता इत्यथास्मा उपर्येव रथे[३८] तिष्ठते[३८] वाराह्या[३९] उपानहा उपमुञ्चति ॥१६॥

अग्नौ ह वै देवा घृतकुम्भं प्रवेशयां चक्रुस्ततो वराहः संबभूव तस्मान्मेदुरो हस्तस्मादाहुर्वराहे वै गावः संजानत इति स यद्धोत[४] वराहे गावः संजानते[४१] देव तत्पयसि स्वे[४१] रसे[४१] सजानते तत्पशूनामेवैनमेतद्रसे प्रतिष्ठापयति पशूनामे- रसमन्नरसमेतद्दधाति तस्मादस्मै वाराह्या उपानहा उपमुञ्चति ॥१७॥

अथ पृथिवीं प्रत्यवेक्षमाणो जपति[४२] पृथिवि मातर्मा मा हिꣳसीर्मो अहं 20 मिति वरुणो हाभिषिषिचानो[४४] ऽस्याः पृथिव्या बिभयां चकार[४५] प्रेव वा अहमस्या[४६] च्योषीति[४६] यो ऽभ्यषिचे यद्वै मेयं नावधून्वीतेतीयमु ह वै पृथिव्येतस्माद्बिभयां[४७] चकार महद्वा अयं प्रापदिति[४८] यो ऽभ्यषेचि यद्वै मायं नावदृणीयादिति तयैवैतत्सं- ज्ञामकुरुत न हि माता पुत्रꣳ हिनस्ति न पुत्रो मातरम् ॥१८॥

तथो वा एष एतदस्याः पृथिव्या बिभेति[४५] प्रेव वा अहमस्या[४६] अच्योषीति[४६] 21 ऽभ्यषिचे यद्वै मेयं नावधून्वीतेतीयमु ह वै पृथिव्येतस्माद्बिभेति[४७] महद्वा अयं पदिति[४८] यो ऽभ्यषेचि यद्वै मायं नावदृणीयादिति तयैवैतत्संज्ञां कुरुते न हि माता पुत्रꣳ हिनस्ति न पुत्रो मातरम् ॥१९॥

अथावतिष्ठति हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोण- 22

सत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहदित्येतयातिच्छन्दसा सर्वं वा अत्यतिच्छन्दास्तथैवैनं पाप्मा नान्ववैति ॥२०॥

23 अथ सहैव[50] संग्रहीत्रा रथमाददते त[51] रथवाहणे निदधाति[52] ततः[53] सो[54]ऽवाङुपप्रवते[55] स यदत्र संग्रहीता नावतिष्ठति नेत्त[56] संग्रहीता लोकमन्ववतिष्ठाय[57]सुषुवाण इति तस्मादत्र संग्रहीता नावतिष्ठति ॥२१॥

24 अथ पूर्वाग्नेर्दक्षिणां प्रस्यन्दीमनु[53] तच्छतमानौ प्रवृत्ता[54] उद्बद्धौ[55] भवत उदुम्बरशाखोपगूळ्हा[56] ॥२२॥

25 तावभिमृशतीयदस्यायुरस्यायुर्मे देहीत्यन्यतरं[57] युङ्ङसि वर्चो ऽसि वर्चो मे देहीत्यन्यतरमायुर्वा[57] अमृत[58] हिरण्यमायुरेवैतदमृतमात्मनि धत्ते ॥२३॥

26 अथोदुम्बरशाखामूर्गस्यूर्जं मे[58] धेहीत्यूर्ग्वा उदुम्बर ऊर्जमेवैतदात्मनि धत्ते ॥२४॥

27 अथास्मा एतां मैत्रावरुणीं पयस्यामाहरन्ति तस्यामस्य बाहू उपावहरतीन्द्रस्य वां बाहू वीर्यकृता उपावहरामीत्यूर्ध्वबाहुं वा एनमदो ऽभिषिञ्चत्येष उ वै पशूनां रसो यत्पयस्या तत्पशूनामेवैनमेतद्रसे बाहू प्रतिष्ठापयति पशूनामेवास्य रसं बाह्वोर्दधाति स यदाहेन्द्रस्य वां बाहू इति द्वयेन वा एष इन्द्रो यच्च क्षत्रियो यच्च यजमानस्तस्मादाहेन्द्रस्य वां बाहू इति वीर्यकृता[55] उपावहरामीति वीर्यकृतौ[60] ह्येतौ बाहू यौ सुषुवाणस्य स यदेषा मैत्रावरुणी पयस्या भवति बाहू हि मित्रावरुणौ बाहुभ्यां[61] हि मैत्रावरुणो राजन्यस्तस्य शतमानौ प्रवृत्तौ दक्षिणाथोत्तरस्य कर्मणः पूर्वाग्निवाहानां[61] द्वावनड्वाहौ दक्षिणा ॥२५॥ तृतीयं ब्राह्मणम् ॥

1 °पक्रामतीति B W C, °वक्रामतीति O P. 2 वरुणोकरोदिति स्वेवैष B, वरुणोकरोति स्वेवैष O. 3 वरुणसवो C O W, वरुणसवो B. 4 Thus B (pr. m.) W (orig.) T, °भ्युपक्रामति the other MSS. 5 Thus accented in the MSS. Read तदनु? 6 स्मर्तव्यं B, यदस्य स्प° C. 7 सीति MSS. 8 पत्नीशालं MSS. 9 युनज्मीति O C My. 10 देवत्रा दक्षिण° MSS. (cp. VI. 1. 4. 9). 11 येनैतदक्षिणा B O, येनैनन्दक्षिणा T, येनैवद्दक्षिणा My. 12 °नमुद्यच्छति B W.

13 स्वेति B. 14 इति MSS. 15 विशः MSS. 16 जयेति B O. 17 मध्य C. 18 The accent emended hesitatingly, स यावदाशो and °तावदाश° the MSS. 19 तदाप्नोति MSS. 20 °णेति B W C. 21 कुर्वंति O P ( orig. ), कुर्वत इति T. 22 तत्प्रथमामिमामभ्यप° MSS. except My ( तत्प्रथमामभ्य° ) and T ( तत्प्रथमामिमाम्यप° ). 23 यजते C. 24 दक्षिणानन्वा° O. 25 Without accent in the MSS. 26 येनैतद्दक्षिणा MSS. except O. 27 A difference from Saṃhitā-text not noted by Weber (यद्, cp. T. Br. II. 7. 16. 2). 28 °तच्छति O. 29 विमुच्यता B W O T. 30 Emended; वाहा॰सि MSS. 31 राज्य॰ O W C, राज॰ B. 32 भि omitted in B W. 33 °रमैतेन B. 34 सव्यस्था T. 35 Omitted in B, राज्य॰रथो W. 36 Thus accented W, °सारथीरथः C B, °सरथीरथः O P. 37 गणास्त° B W C, गणस्त° O. 38 रथे तिष्ठते B W C, रथे तिष्ठते O P. 39 Without accent in the MSS. 40 यद्घोत MSS. 41 संजानते MSS. 42 स्वेरसे MSS. 43 जपति MSS. 44 ह्राभिषि° MSS. 45 चकार MSS. 46 अहमस्याच्योषीति MSS., cp. VI. 2. 2. 15. 47 पृथिव्ये° MSS. 48 प्रापदिति B W C, प्रापदिति O. 49 बिभेति MSS. 50 सहैव MSS. 51 निदधाति B W O. 52 ततः सोवाक्प° C O. 53 प्रस्यं( or प्रस्पं ? )दी° B O, प्रस्यंदी° C, प्रस्थंदी° W, प्रस्यंदी° P ( orig. ) प्रस्पंदी° P (sec. m.), पस्यन्दी° T My. 54 प्रवृत्ता, O P C My, प्रवत्ता B W T. 55 उद्बद्धौ MSS. 56 उदुंबरशाखो° O. 57 देही° against the Saṃhitā ? 58 Thus, in

accordance with the Saṃhitā T only, मयि O W C, मयि B My. 59 °कृता B W (sec. m.). 60 कृतौ (omitting वीर्यं) B W (orig.). 61 See also VII. 3. 4. 24, VII. 4. 3. 4.

M. V. 4. 4

K. VII. 3. 4

1 स वै यदेतया मैत्रावरुण्या पयस्यया प्रचरति तदिष्टा देवता भवत्यनिष्ट[...] स्विष्टकृदथास्मा एतामासन्दीं निदधत्यग्रेण मैत्रावरुणस्य धिष्ण्यमुपरिषद्यं वा एष करोति जयत्यन्तरिक्षसद्यं यो राजसूयेन यजते स यदेव[3] जयत्युपरिषद्यमन्तरिक्षसद्यं तदेवैनमेतत्प्रापयति तदेनमुपर्यासीनमधस्ताद्विश इमाः प्रजा उपासते सा वितृण्णा इति वा भवति परितृण्णेति[4] वा खादिरी[5] तां निदधति[6] सा हि भारती प्रज्ञाता यद्यु त[...] न विन्देयुरपि[7] यामेव कां च निदध्युः ॥१॥

2 स निदधाति स्योनासि सुषदासीति साध्व्यसीत्येवैतदाह[8] यदाह स्योनासि सुषदासीति ॥२॥

3 अथैनामधिवासेनास्तृणाति क्षत्रस्य योनिरसीति क्षत्रस्य वा एषा योनिर्यदधिवासस्तस्मादाह[9] क्षत्रस्य योनिरसीति[10] ॥३॥

4 अथैनं बाहुगृहीतमधिनयति स्योनामासीद सुषदामासीदेति साध्वीमासीदेत्येवैतदाह क्षत्रस्य योनिमासीदेति क्षत्रस्य वा एषा योनिः सा[11] यैव क्षत्रस्य योनिस्तस्या[12] एवैनमेतद्दधाति[13] ॥४॥

5 अथैनमुपवेशयति निषसाद धृतव्रत इति धृतव्रतेनेव वा एतेन भवितव्यं यो राजसूयेन यजते न ह्येष सर्ववदनाय न सर्वकर्मणे यदेव भद्रं कुर्याद्यद्भद्रं वदेत्तस्मा एवालमथो यो ऽनुब्रूते[13] धृतव्रतेनैवापि तेन भवितव्यं न ह्येष सर्ववदनाय न सर्वकर्मणे यदेव भद्रं कुर्याद्यद्भद्रं वदेत्तस्मा एवालं तस्मादाह धृतव्रत इति वरुणः पस्त्यास्वेति क्षत्रं वै वरुणो विशः पस्त्या विक्ष्वेवैनमेतत्प्रतिष्ठापयति[14] साम्राज्याय सुक्रतुरिति साम्राज्याय ह्येष सुक्रतुः सूयते[15] ॥५॥

6 अथास्मा अक्षान्पञ्चादधत्यभिभूरस्ययानामित्यभिभूर्वा[16] एषो ऽन्यान्[...] यान्यत्कलिरस्यैवैनमेतत्सर्वस्याभिभुवं[17] करोति[18] सो ऽस्य सर्वस्याभिभूर्भवति[...] तस्मादाहाभिभूरस्ययानामित्येतास्ते पञ्च दिशः कल्पन्तामिति तस्मादिमाः सर्वा दिशः कल्पयति ॥६॥

अथैनं पृष्ठतो दण्डैर्घ्नन्ति तदेनं दण्डवधमतिनयति[११] तस्माद्राजादण्ड्यो[१०] त्येति[१०] हि[१०] स[१०] दण्डवधमथ वरं वृणीते ऽमुं कामं कामये[११] स मे ऽस्तु स मे समृध्यतामिति स हास्मै कामः समृध्यते ऽथ ब्रह्माणमामन्त्रयते ब्रह्मप्रसूतो वाचं वदानीति ॥७॥ 7.8

स आमन्त्रयते ब्रह्मन्निति त्वं ब्रह्मासीति ब्रह्मा प्रत्याह सवितासि[११] सत्यप्रसव इति वीर्यमेवास्मिन्नेतद्दधाति सवितारमेवैनमेतत्सत्य प्रसवं करोति ॥८॥ 9

ब्रह्मन्नित्येवामन्त्रयते त्वं ब्रह्मासीत्येव ब्रह्मा प्रत्याह वरुणो ऽसि सत्यौजा इति वीर्यमेवास्मिन्नेतद्दधाति वरुणमेवैनमेतत्सत्यौजसं करोति ॥९॥ 10

ब्रह्मन्नित्येवामन्त्रयते त्वं ब्रह्मासीत्येव ब्रह्मा प्रत्याहेन्द्रो ऽसि विशौजा इति वीर्यमेवास्मिन्नेतद्दधातीन्द्रमेवैनमेतद्विशौजसं करोति ॥१०॥ 11

ब्रह्मन्नित्येवामन्त्रयते त्वं ब्रह्मासीत्येव ब्रह्मा प्रत्याह रुद्रो ऽसि सुशेव इति वीर्यमेवास्मिन्नेतद्दधाति रुद्रमेवैनमेतत्सुशेवं[१३] करोति रुद्रो वा अस्य सर्वस्येष्ट[१४] एष उ वा अस्य सर्वस्येष्टे ऽस्यैवैनमेतत्सर्वस्येशानꣳ शमयति तस्मादेषो ऽस्य सर्वस्येशानो मृळयति ॥११॥ 12

अथ ब्रह्मन्नित्येवामन्त्रयते त्वं ब्रह्मासीत्येव ब्रह्मा प्रत्याहानिरुक्तं परिमितं वा अस्मिन्निदं पुरा वीर्यं दधाति यन्निरुक्तं परिमितꣳ हि तद्यन्निरुक्तꣳ सर्वं वा अनिरुक्तमपरिमितमु वै सर्वं तदपरिमितमेवास्मिन्नेतत्सर्वं वीर्यं दधाति स वै पञ्च कृत्व आमन्त्रयते संवत्सरसंमितो[१५] यज्ञः[१५] पञ्चर्तवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च कृत्व आमन्त्रयते ॥१२॥ 13

अथ सुमङ्गलनामानमामन्त्रयते[१६] प्रियंकर श्रेयस्कर भूयस्करेति ब्रह्मप्रसूतः[१७] कल्याणीं मानुषीं वाचं वदानीति[१८] ॥१३॥ 14

अथास्मै स्फ्यं प्रयच्छत्यध्वर्युर्वा पुरोहितो वेन्द्रस्य वज्रो ऽसि तेन मे रध्येति वज्रो वा एष[१९] यत्स्फ्यस्तदेतेन वज्रेण ब्राह्मणो राजन्यमबलीयाꣳसमात्मनः कुरुते यो ह वै राजन्यो[१०] ऽबलीयान्ब्राह्मणाद्भवति[१०] बलीयान्ह द्विषतो भवत्यथ यो ह राजन्यो[१०] बलीयान्ब्राह्मणाद्भवति[१०] बलीयान्हास्माद्द्विषन्भवति तस्माद्राजन्येनाबलीयसैव ब्राह्मणाद्भवितव्यम् ॥१४॥ 15

तमु स प्रयच्छति भ्रात्र इन्द्रस्य वज्रो ऽसि तेन मे रध्येति तेनो राजा 16

राजभ्रातरमबलीयाꣳसमात्मनः कुरुते ॥१५॥

17 तमु स प्रयच्छति सूताय वा स्थपतये वेन्द्रस्य वज्रो ऽसि तेन मे रध्येति तेनो राजभ्राता सूतं वा स्थपतिं वाबलीयाꣳसमात्मनः कुरुते ॥१६॥

18 तमु स प्रयच्छति ग्रामण्य इन्द्रस्य वज्रो ऽसि तेन मे रध्येति तेनो सूतो वा स्थपतिर्वा ग्रामण्यमबलीयाꣳसमात्मनः कुरुते ॥१७॥

19.20 तमु स प्रयच्छति सजातायेन्द्रस्य वज्रो ऽसि तेन मे रध्येति तेनो ग्रामणी सजातमबलीयाꣳसमात्मनः कुरुते सो ऽन्तः ॥१८॥

स यदेवं प्रयच्छति यथापूर्वमेवैतदिमाः[31] प्रजाः कल्पयत्यपापवस्यसं तस्माद्धिमाः प्रजा यथापूर्वं क्लृप्ता अपापवस्यसं तमयꣳ सजातः[31] प्रतिप्रस्थात्रे ह्रव प्रयच्छति तेनो प्रतिप्रस्थाता शुक्रस्य पुरोरुचाधिदेवनं करोत्यत्ता वै शुक्रो ऽत्तारमेवैनमेतत्करोति[33] ॥१९॥

21 अथ मन्थिनः पुरोरुचा विमितं विमिन्वन्त्याद्यो वै मन्थ्यत्तारमेवैनमेतत्कृत्वा[34] तस्मा एतदन्नं जनयति स वै समृद्धो ऽत्ता यस्यान्नमस्त्यथ हिरण्यमुपास्याधिदेवने जुहोति न वा अनग्नावाहुतिर्हूयते ऽग्निरु वा एतद्रेतो यद्धिरण्यं तथास्यैषाग्निमत्याहुतिर्हुता भवति ॥२०॥

22 स जुहोत्यग्निः पृथुर्धर्मणस्पतिरित्येष वा अग्निः पृथुर्धर्मणस्पतिर्यदधिदेवनं तस्माद्यमन्यत्र[35] धर्मं न विजानन्ति[36] सभामितत्येवाहुरेष[37] हि पृथुर्धर्मणस्पतिर्जुषाणो अग्निः पृथुर्धर्मणस्पतिराज्यस्य हविषो वेतु स्वाहेति ॥२१॥

23 स यदेवं जुहोति रुद्रो ह वा एतामभिमन्यते यामेताꣳ सभायां दीव्यन्ते ऽग्निरु वै रुद्र एष उ वा अग्निर्यदधिदेवनं तस्यैते ऽङ्गारा यदक्षा[38] एष हैतामभिमन्यते तमेवैतत्प्रीणाति सो ऽस्मै प्रीत एतामनुमन्यते तस्य ह वा एतामनुमताꣳ सभायां घ्नन्ति[39] यो वा राजसूयेन यजते यो वैतदेवं वेद[40] ॥२२॥

अथाक्षान्निवपति स्वाहाकृताः सूर्यस्य रश्मिभिर्यतध्वꣳ सजातानां मध्यमेष्ठ्यायेति स्वानाꣳ श्रैष्ठ्यायेत्येवैतदाह यदाह सजातानां मध्यमेष्ठ्यायेति[41] ॥२३॥

24.25 अथाहाग्नये स्विष्टकृते ऽनुब्रूहीत्यग्निꣳ स्विष्टकृतं यजेति वषट्कृते जुहोति स यदुभे आहुती अन्तरेणैतत्कर्म क्रियत एष वाव प्रजापतिर्यज्ञो य एष तायत एतस्यैवैनमेतत्प्रजापतेर्यज्ञस्य मध्यत[41] आदधाति[42] मध्यतो ऽभिषिञ्चत्यथैळामुपहूय[43] मार्जयन्ते तस्य पूर्वाग्निवाहानां द्वावनड्वाहौ दक्षिणा ॥२४॥ चतुर्थं ब्राह्मणम् ॥

तृतीयो ऽध्यायः ॥

1 भवत्यनिष्टः B W O. 2 एव B. 3 यदेव जयस्तु° MSS. 4 परि° MSS. 5 खादिरी MSS., but cp. II. 3. 2. 18. 6 °दधाति MSS. except T. 7 विंदेयुरपि MSS. 8 साध्यसी B W O C T. 9 °वासस्त° MSS. 10 °सीति MSS. 11 स MSS. except T. 12 Thus MSS. Read योनिस्तस्यामेवैन°. 13 जुव्रूते MSS. 14 विश्वेवै° C, विश्वैवै° O. 15 सूयते O. 16 अक्षान्पंचादधत्य° B W, अक्षान्पंचादधत्य° C, अक्षान्पंचादधत्य° O. Read perhaps अक्षान्पञ्चावपत्य°. °भूरस्ययाना° B W C, °भूरस्ययाना° O. 17 °भिभवं B W, °भिम्वं C, °भिश्व O P, °भिम्यं My. Read perhaps °भिम्वं ? 18 करोति MSS. 19 Read °नयन्ति ? 20 Emended; °दंड्योत्येते हि स C O W, °दंड्योत्येते हि स B My. 21 कामये O. 22 Cp. K. Z. XXXI. 25. 23 रुद्रमेवै° MSS. 24 °ह्वे MSS. 25 °तो यज्ञः O C, °तो यज्ञः B W. 26 सुमंगलनामानमा° MSS. 27 ब्रह्मप्रसुतः B, ब्रह्मप्रसुतः O W C. 28 °नीति MSS. 29 एष MSS. 30 राजन्यो बली° MSS. 31 यथापूर्वमे° MSS. 32 सजातः MSS. 33 °रमेवैनंतस्क° B W O C, °रमेवैतत्क° T, °रमेनंतत्क° My. 34 मंध्य° MSS. 35 °घमन्यत्र MSS. Read perhaps तस्माद्यन्यत्र. 36 विजानंति MSS. 37 सभामित्येवाहुरेष C, सभामित्येतेवाहुरेष B, (sec. m.). The words seem to be : सभाम् । इत । इति । एव । आहुः । एष. 38 यदक्षा MSS. 39 ह्वंति O C. 40 वेद MSS. 41 °येति MSS. 42 मध्यत आद° B W. 43 °थेळा(ला)मुपहूय MSS.

K. VII. 4. 1 M. V. 4. 5

वरुणाद्धाभिषिषिचानाद्भर्गो ऽपचक्राम वीर्यं वै भर्ग एष एव यज्ञो विष्णुः 1

शश्वद्ध यदेवैतत्तेजो वीर्यं[९] रस एषो ऽपां[८] संभृतस्तद्धैवास्य शश्वद्धर्गं
निर्जघान ॥१॥

2 तमु वै वरुणो ऽन्वैच्छत्तमेताभिर्देवताभिरनुसमसर्पत्सवित्रा प्रसवित्र्यानु
सरस्वत्या वाचा त्वष्ट्रा रूपैः पूष्णा पशुभिरिन्द्रेणास्मै बृहस्पतिना ब्रह्मणा वरुणेनौज
साग्निना तेजसा सोमेन राज्ञा विष्णुना देवतया दशम्यैनमन्वविन्दत्तमनुविद्य[१] तमरुणो
त्मन्यकुरुत तमात्मन्यधत्त तथो वा एनमेष एतद्विष्णुनैव[२] देवतया दशम्यानुविन्दतिच्छति
तमनुविद्य तमात्मनि कुरुते तमात्मनि धत्ते ॥२॥

3-5 स वा एष दशमे ऽहनि प्रसुतो भवति[४] दशम्या ह्येनं देवतयात्वविन्दत्तणो
स्माद्दशपेयो दश दशैकैकं चमसमनुप्रसृप्ता भवन्ति तस्मान्वेव[५] दशपेयो दश सोम
पान्पितामहाननुसंख्याय प्रसर्पति स[६] हास्य[६] सोमपीथमश्नुते यो दश सोमपान्पित
महाननुसंचष्टे[७] ॥३॥

तदु तद्ब्राह्मणस्त्रीनेव चतुरः पञ्च षड्यान्वेवैता[८] एव देवता अनुसंख्या
प्रसर्पेदेताभिर्वा एनं देवताभिर्वरुणो ऽनुसमसर्पदेताभिरेनमाप्नोदेताभिरेवास्यैष[९] एत
त्सोमपीथमश्नुते तस्मादेता एव देवता अनुसंख्याय प्रसर्पेत् ॥४॥

6 स यत्रादो ऽभिषेचनीयस्योदवसानीययेष्ट्या यजते तदेत[८] सावित्रं द्वाद
शकपालं वाष्टाकपालं वा पुरोळाशं निर्वपति सविता वै देवानां प्रसवित
सवितृप्रसूतो वा एनं तद्वरुणो ऽनुसमसर्पत्तथो वा एनमेष एतत्सवितृप्रसूत
एवानुस[८]सर्पति तदेकमेव पुण्डरीकं प्रयच्छति सा दक्षिणा ॥५॥

7 अथ श्वो भूते सारस्वतं चरुं निर्वपति वाग्वै सरस्वती वाचो[१०] वा एनं
तद्वरुणो ऽनुसमसर्पत्तथो वा एनमेष एतद्वाचैवानुस[८]सर्पति तदेकमेव पुण्डरीकं
प्रयच्छति ॥६॥

8 अथ श्वो भूते त्वाष्ट्रं दशकपालं पुरोळाशं निर्वपति त्वष्ट्रा[११] वा एनं तद्रूपै
र्वरुणो ऽनुसमसर्पत्तथो वा एनमेष एतत्त्वष्ट्रैव[११] रूपैरनुस[८]सर्पति तदेकमेव पुण्डरीकं
प्रयच्छति ॥७॥

9 अथ श्वो भूते पौष्णं चरुं निर्वपति पशवो वै पूषा पशुभिर्वा एनं तद्वरुणो
ऽनुसमसर्पत्तथो वा एनमेष एतत्पशुभिरेवानुस[८]सर्पति तदेकमेव पुण्डरीकं
प्रयच्छति ॥८॥

अथ श्वो भूत ऐन्द्रमेकादशकपालं पुरोळाशं निर्वपतीन्द्रियं[13] वै वीर्यमिन्द्र इन्द्रियेण वा एनं तद्वीर्येण वरुणो ऽनुसमसर्पत्तथो वा एनमेष एतदिन्द्रियेणैव वीर्येणानुसꣳसर्पति तदेकमेव पुण्डरीकं प्रयच्छति ॥९॥ 10

अथ श्वो भूते बार्हस्पत्यं चरुं निर्वपति ब्रह्म वै बृहस्पतिर्ब्रह्मणा वा एनं वरुणो ऽनुसमसर्पत्तथो वा एनमेष एतद्ब्रह्मणैवानुसꣳसर्पति तदेकमेव पुण्डरीकं प्रयच्छति ॥१०॥ 11

अथ श्वो भूते वारुणं यवमयं चरुं निर्वपति स येन हौजसेदमिमाः प्रजा वरुणो गृह्णाति[14] तेनैवैनं[15] तदोजसा वरुणो ऽनुसमसर्पत्तथो वा एनमेष एतत्तेनैवौजसानुसꣳसर्पति तदेकमेव पुण्डरीकं प्रयच्छति ॥११॥ 12

तासु सप्तस्विष्टिषु सप्त पुण्डरीकाणि प्रयच्छत्युप पञ्च प्रयच्छति तामस्मै द्वादशपुण्डरीकाꣳ स्रजं कृत्वापिनह्यति सा दीक्षा तद्यानि बिसानि तान्यस्याः पृथिव्या रूपं वधका अन्तरिक्षस्य पुण्डरीकाणि नक्षत्राणां तद्दिवो रूपं यन्नक्षत्राणामेभिरेवैनं लोकैर्दीक्षयति सर्वे[16] वा इमे लोकाः सर्वेणैवैनं तद्दीक्षयत्यथ यद्द्वादश पुण्डरीकाणि भवन्ति द्वादश वै मासाः संवत्सरस्य सर्वमु वै संवत्सरः सर्वेणैवैनं तद्दीक्षयति ॥१२॥ 13.14

अथ यत्रादो[17] ऽभिषेचनीये[18] क्रीणन्ति तत्क्रीत्वैवैनं द्वेधोपनह्यति[19] द्वेधोपनह्य परिवहन्ति पर्युह्यान्यतरमहात्रासादयत्यन्यतरं पुरोहितस्य वा गृहेषु ब्रह्मणो वा हृत्वा निदधति स यं[20] तं[20] पुरोहितस्य वा गृहेषु ब्रह्मणो वा हृत्वा[21] निदधति[21] तत्राहृत्यासन्द्यामासाद्य[22] प्रपाद्यातिथ्येन चरन्त्यातिथ्येन[23] चरित्वोपसद्भिः ॥१३॥ 15

तद्धैके हवीꣳष्येवैतानि[24] निर्वपन्त्याग्नेयमष्टाकपालं पुरोळाशꣳ सौम्यं चरुं वैष्णवं त्रिकपालं वा चरुं वा तदु तथा न कुर्याद्ध्वलति वै स यो यज्ञपथादेत्येत्यु वा एष यज्ञपथाद्य एवं करोति तस्मादाज्यहविष[25] एव स्युः ॥१४॥ 16.17

स वा आग्निं यजति तेजो वा अग्निस्तेजसा वा एनं तद्वरुणो ऽनुसमसर्पत्तथो वा एनमेष एतत्तेजसैवानुसꣳसर्पति ॥१५॥ 18

अथ सोमं यजति क्षत्रं वै सोमः क्षत्रेण वा एनं तद्वरुणो ऽनुसमसर्पत्तथो वा एनमेष एतत्क्षत्रेणैवानुसꣳसर्पति ॥१६॥

अथ विष्णुं यजति विष्णुना वा एनं तद्देवतया दशम्या वरुणो ऽन्वविन्दत्तमनुविद्य तमात्मन्यकुरुत तमात्मन्यधत्त तथो वा एनमेष एतद्विष्णुनैव देवतया दशम्यानुविन्दति तमनुविद्य तमात्मनि कुरुते तमात्मनि धत्ते ॥१७॥

19 स वा एष सप्तदशो भवति सप्तदशो हि प्रजापतिः प्रजापतिर्ह्येष तस्मात्
सप्तदशो भवति ॥१८॥

20 तद्द्वादश[21] प्रथमगर्भाः पष्ठौह्यस्ता ब्रह्मणो[17] दक्षिणा द्वादश वै मास
संवत्सरस्य संवत्सरो यज्ञः प्रजापतिस्तस्माद्द्वादश प्रथमगर्भाः पष्ठौह्यो दक्षिणा ॥१९॥

21 ता गर्भैः सह चतुर्विंशतिर्भवन्ति चतुर्विंशतिर्वा अर्धमासाः संवत्सर
संवत्सरो यज्ञः प्रजापतिस्तस्माद्गर्भैः सह चतुर्विंशतिर्भवन्ति ॥२०॥

22.23 हिरण्मयीं स्रजमुद्गात्रे रुक्मं होत्रे हिरण्मयान्प्रकाशानध्वर्युभ्याम
प्रस्तोत्रे वशां मैत्रावरुणायर्षभं ब्राह्मणाच्छंसिने वाससी नेष्टृपोतृभ्यामन्यतो
यवाचितमच्छावाकायानड्वाहमग्नीधे ता वा एता द्वादश वा त्रयोदश वा दक्षि
ददाति द्वादश वा वै त्रयोदश वा संवत्सरस्य मासाः संवत्सरो यज्ञः प्रजापतिस्त
प्रत्यक्ष यज्ञं प्रजापतिमाप्त्वा तं परिगृह्य तमात्मनि कुरुते तमात्मनि धत्ते ॥२१॥ प्र
ब्राह्मणम् ॥

1 °द्गर्गं MSS. 2 °मनुविद्य MSS. 3 एतद्विष्णुनैव O W (sec. m.) C, एतद्विनैव B W (orig.). 4 भवति MSS. 5 तस्मान्वेव B W O C My, तस्माद्वेव T. 6 सहास्य MSS. 7 °संचष्टे MSS. 8 Thus hesitatingly emended (षट् । यान् । वा । इव । एताः; on यान् cp. Delbrück, A. I. S. section 285); षड्या वेवैता B W, षड्यावेहती O, षड्यावैवेहती P, षड्यावैता C, षड्वावेवैता My, षड्ग्यावेवैता T. 9 Emended; °ताभिरेनमाप्नोताभिरेवा° B W, °ताभिरेनमाप्नोत्ताभिरेवा° C My, °ताभिरेनमाप्नोताभिरेवा° O P, °ताभिरेनमात्ताभिरेवा° T. 10 वाचा O C. 11 त्वष्टा MSS. 12 °त्वष्टेव MSS. 13 निर्वपती° MSS. 14 Thus MSS. 15 तेवैनं B W. 16 सर्वा B, सर्वे T. 17 यत्रादो MSS. 18 Thus emended; °नीयं the MSS. 19 द्वेषोपनह्यति MSS. 20 यंतं MSS. 21 हत्वानिद° MSS. 22 तमस्वाह B, तमस्याह° T. 23 Thus

accented in B W, चरुंस्याति° O C. 24 °ष्ये° MSS.
25 तस्मादाज्यहविष MSS. 26 तद्वादश MSS. except
C. 27 ब्रह्मणो MSS.

K. VII. 4. 2 M. V. 5. 1

आग्नेयो ऽष्टाकपालो भवति तं पुरस्तादासादयत्यैन्द्र एकादशकपालो भवति 1
क्षिणत आसादयति सौम्यो वा चरुर्वैश्वदेवश्चरुर्भवति तं पश्चादासादयति
वरुणी पयस्या भवति तामुत्तरत आसादयति बार्हस्पत्यश्चरुर्भवति तं मध्य
ादयति तेषां वा एतेषां पञ्चानाᳪ हविषां पञ्च बिलानि स यदेतेषां पञ्चानाᳪ
ां पञ्च बिलानि तस्माच्चरुः पञ्चबिल इत्याख्यायते ॥१॥

स यदेतेन यजते यदेवैनमदो दिशः समारोहयति यद्दतून्यत्स्तोमान्य- 2
दाᳪसि यत्सामानि तत एवैनमेतेन निष्क्रीणाति यद्धैतेन न यजेत ह्व्येद्वाह
त वा प्र वा पतेत्तस्मादेतेन यजते ॥२॥

सो ऽनेनाग्नेयेनाष्टाकपालेन पुरोळाशेन प्रचरति यदेवैनं प्राचीं दिशᳪ 3
रोहयति यद्दतून्यत्स्तोमान्यच्छन्दाᳪसि यत्सामानि तत एवैनमेतेन निष्क्रीणाति
ुत्वैवाहुतिᳪ सᳪस्त्रवं बार्हस्पत्ये ऽवनयति ॥३॥

अथानेनैन्द्रेणैकादशकपालेन पुरोळाशेन प्रचरति सौम्येन वा चरुणा स 4
णैतयोश्चरन्ति यदेवैनं दक्षिणां दिशᳪ समारोहयति यद्दतून्यत्स्तोमान्यच्छन्दाᳪ-
यत्सामानि तत एवैनमेतेन निष्क्रीणाति स हुत्वैवाहुतिᳪ सᳪस्त्रवं बार्हस्पत्ये
यति ॥४॥

अथानेन वैश्वदेवेन चरुणा प्रचरति यदेवैनं प्रतीचीं दिशᳪ समारोहयति 5
ून्यत्स्तोमान्यच्छन्दाᳪसि यत्सामानि तत एवैनमेतेन निष्क्रीणाति स हुत्वैवा-
ᳪ सᳪस्त्रवं बार्हस्पत्ये ऽवनयति ॥५॥

अथानया मैत्रावरुण्या पयस्यया प्रचरति यदेवैनमुदीचीं दिशᳪ समारो- 6
ति यद्दतून्यत्स्तोमान्यच्छन्दाᳪसि यत्सामानि तत एवैनमेतेन निष्क्रीणाति स
वाहुतिᳪ सᳪस्त्रवं बार्हस्पत्ये ऽवनयति ॥६॥

अथानेन बार्हस्पत्येन चरुणा प्रचरति यदेवैनमूर्ध्वां दिशᳪ समारोहयति 7
तून्यत्स्तोमान्यच्छन्दाᳪसि यत्सामानि तत एवैनमेतेन निष्क्रीणाति
यद्धुत्वा हुत्वा सᳪस्त्रवं बार्हस्पत्ये ऽवनयति सर्वाभ्य एवास्मा एतद्दिग्भ्यो
ाद्यं बलिᳪ हारयति तᳪ सर्वाभ्यो दिग्भ्यो ऽन्नाद्यं बलिरुपसमैति ॥७॥

8 तस्यास्याग्नेयस्याष्टाकपालस्य हिरण्यं दक्षिणाग्नेयो ह्येष यज्ञोऽग्नेर्हि रेतो हिरण्यं तस्मादस्य हिरण्यं दक्षिणा तदग्नीधे ददात्यग्निर्ह्येष निदानेन यदग्नीत्तस्मात्तदग्नीधे ददाति ॥८॥

9 अथास्यैन्द्रस्यैकादशकपालस्यर्षभो दक्षिणा तद्धि पशुष्वैन्द्रꣳ रूपं यदृषभस्य यद्यु सौम्यश्चरुः स्याद्बभ्रुर्गौर्दक्षिणा स्यात्तद्धि पशुषु सौम्यꣳ रूपं यद्बभ्रोर्गोः स यतर एतयोर्भवति तं ब्रह्मणे ददाति ब्रह्मा हि दक्षिणतो यज्ञस्याभिगोप्ता ॥९॥

10 अथास्य वैश्वदेवस्य चरोः पृषन्गौर्दक्षिणा भूमा वा एतद्रूपाणां यत्पृषतो गोर्भूमो वै विश्वे देवास्तस्मादस्य पृषन्गौर्दक्षिणा तꣳ होत्रे ददाति भूमो हि होता ॥१०॥

11 अथास्या मैत्रावरुण्याः पयस्याया वशा दक्षिणा सा हि मैत्रावरुणी यद्वशा यदि वशां न विन्देदपि याप्रवीता सा स्यादप्रवीतो हि वशा भवति तामध्वर्यवे ददाति प्राणोदानौ वै मित्रावरुणौ प्राणोदाना उ वा अध्वर्यू तस्मात्तामध्वर्यवे ददाति ॥११॥

12 अथास्य बार्हस्पत्यस्य चरोः शितिपृष्ठो गौर्दक्षिणैषा ह्यूर्ध्वा दिग्बृहस्पतेस्तदेष उपरिष्टादर्यम्णः पन्थास्तस्मादस्य शितिपृष्ठो गौर्दक्षिणा तं ब्रह्मणे ददाति बृहस्पतिर्वै देवानां ब्रह्मैवमु वा एष एतस्य ब्रह्मा तस्मात्तं ब्रह्मणे ददाति ॥१२॥

तेन हाप्येतेन विष्ठाव्राजे ऽन्नाद्यकामो यजेत सर्वाभ्य एवास्मा एतद्दिग्भ्यो ऽन्नाद्यं बलिꣳ हारयति तꣳ सर्वाभ्यो दिग्भ्यो ऽन्नाद्यं बलिरुपसमैति स सर्वासां दिशामन्नादो भवति ॥१३॥ द्वितीयं ब्राह्मणम् ॥

M. V. 5. 2

## K. VII. 4. 3

1 स वै प्रयुजाꣳ हविर्भिर्यजते स यत्प्रयुजाꣳ हविर्भिर्यजत ऋतून्हैवैतत्सुषुवाणः प्रयुङ्क्ते त एनमृतवो युक्ता वहन्ति ॥१॥

2 तानि वै द्वादश भवन्ति द्वादश वै मासाः संवत्सरस्य तस्माद्द्वादश भवन्ति तैर्मासि मासि यजते मासि मास्येवैतदृतून्युङ्क्ते त एनमृतवो युक्ता वहन्ति ॥२॥

तदु नाद्रियेत शम्यापराव्याधꣳ शम्यापराव्याधमेव षड्भिर्हविर्भिः प्राग्यजमान एति तदृतून्प्राचो युङ्क्ते त एनमृतवो युक्ताः प्राञ्चं वहन्ति शम्यापराव्याधꣳ शम्यापराव्याधमेव षड्भिर्हविर्भिः पुनर्यजमान एति तदृतून्प्रतीचो युङ्क्ते त एनमृतवो युक्ताः पुनरावहन्ति ॥३॥

3.4 तदु नाद्रियेत समानबर्हीꣳष्येव पूर्वेद्युः षड्ढवीꣳषि निर्वपेत्तदृतून्प्राचो युङ्क्ते

तमृतवो युक्ताः प्राञ्चं वहन्ति तेषां पूर्वाग्निवाहानां द्वावनड्वाहौ दक्षिणा वहन्ति मृतवो युक्ता वहत्यनड्वान्युक्तः समानबर्हीꣳष्येव श्वो भूते षड्ढवीꣳषि निर्वपेत्त-त्प्रतीचो युङ्क्ते त एनमृतवो युक्ताः पुनरावहन्ति तेषां पूर्वाग्निवाहानां द्वावनड्वाहौ णा वहन्ति ह्येनमृतवो युक्ता वहत्यनड्वान्युक्तः ॥४॥

ते य ऊर्ध्वाः शैशिरादा प्रावृषो ये ते षण्मासास्तेषाꣳ रूपं पूर्वाणि षड्ढवीꣳ- 3-5 यथा ग्रैष्मायेति प्राङ् याया अथ य ऊर्ध्वाः प्रावृष आ शैशिराद्ये ते षण्मासास्तेषाꣳ मुत्तराणि षड्ढवीꣳषि यथा वार्षिकायेति प्रत्यङ् यायास्तद्ध स्मैतत्पुरैव कुरुपञ्चाला हुर्ऋतवो वा अस्मान्युक्ता वहन्तीत्यृतून्वा वयं युक्माननुचराम इत्येते ह स्म तदाहु सूययाजिनो हि तेषाꣳ राजान आसुः ॥५॥ तृतीयं ब्राह्मणम् ॥

K. VII. 4. 4 M. V. 5. 2

श्येनीं विचित्रगर्भामदितय आलभत इयं वा अदितिरस्या एवैनमेतया गर्भं 8 त्यस्या एवैतया गर्भो भवति तस्यावृद्येयं वशाया अष्टापद्यास्तस्य तादृश्येव र्दक्षिणा ॥१॥

पृषतीं विचित्रगर्भां मरुद्भ्य आलभते विशो वै मरुतो देवविशं विश एवैन- 9 या गर्भं करोति विश एवैतया गर्भो भवति तस्यावृद्येयं वशाया अष्टापद्यास्तस्य दृश्येव गौर्दक्षिणा ॥२॥

तदाहुर्यामिमामदितय इत्यालभत इत्यादित्येभ्य एतामालभेतेति सर्वं वा 10 दित्या इति सर्वस्यैवैनमेतया गर्भं करोतीति सर्वस्यैवैतया गर्भो भवतीति तस्य वावृत्सा दक्षिणाथ यामिमां मरुद्भ्य इत्यालभत इति विश्वेभ्य एतां देवेभ्य आल-तेति सर्वं वै विश्वे देवा इति सर्वस्यैवैनमेतया गर्भं करोतीति सर्वस्यैवैतया गर्भो वतीति तस्य सैवावृत्सा दक्षिणा ॥३॥ चतुर्थं ब्राह्मणम् ॥ चतुर्थोऽध्यायः ॥

K. VII. 5. 1 M. V. 5. 4

स वै श्येतमाश्विनमालभते श्येताविव ह्यश्विनावविं मल्हाꣳ सारस्वती- 1 ऋषभमिन्द्राय सुत्राम्णे तद्धि पशुष्वैन्द्रꣳ रूपं यदृषभस्य तान्यद्येवꣳसमृद्धानेतान्प-न्विन्देदेत एव स्युर्यद्येवꣳसमृद्धान्न विन्देदप्यजा एव स्युस्त उ वाव सुपरिचरतरा जा रोहित उ तर्ह्याश्विनः स्यात् ॥१॥

स यदेतैर्यजते यत्र वै विश्वरूपं त्वाष्ट्रमिन्द्रो जघान तद्ध त्वष्टा क्रुद्धः 7 विन्मे पुत्रमवधीदित्यपेन्द्रꣳ सोममाजह्रे स हेत्थमेव प्रसुत आस यथैवायं प्रसुत

एवꣳ हैव प्रसुत आसापेन्द्रः ॥२॥

8 स हेन्द्र ईक्षां चक्र इदं वाव मा यज्ञादन्तर्यन्तीति स यथा बलीयानबलीयस एवꣳ सहसैवाभिद्रुत्यानुपहूत एव द्रोणकलशाच्छुक्रं भक्षयां चकार स हैनं जिहिꣳस विष्वङ् हास्य प्राणेभ्यो दुद्राव मुखाद्धैव न दुद्रावाथान्येभ्यः सर्वेभ्यः प्राणेभ्यस्तस्मात्प्रायश्चित्तिरभवन्न ह प्रायश्चित्तिरभविष्यद्यन्मुखात्प्रत्यङ्ङद्रोष्यत् ॥३॥

9. 10 चत्वारो वै वर्णा ब्राह्मणो राजन्यो वैश्यः शूद्रो न हात एकतमश्चन भवति यः सोमं वमति यद्धात एकतमश्चित्स्यात्स्याद्ध प्रायश्चित्तिः स यदस्य नस्तो ऽद्रवत्ततः सिꣳहः समभवद्यत्कर्णाभ्यां ततो वृको यदस्मादवाचः प्राणात्ततः शार्दूलज्येष्ठाः श्वापदाः संबभूवुरथ यदनेन प्रजननेनैत्सा परिस्रुदभवदथ त्रिर्निरष्ठीवत्ततः कर्कन्धु कुवलं बदरमिति संबभूवैतत्ततः समभवद्यदस्य विष्वङ् प्राणेभ्यो ऽद्रवत् ॥४॥

11 स वा इन्द्रः सर्वेणैव व्यार्ध्यत सोमेन हि व्यार्ध्यत सर्वꣳ हि सोमः सोमेन सर्वेण व्यृद्धः प्रमयुरिव चचार मङ्कुरिव तमु वा अश्विनावभिषज्यतां तमनेन सर्वेण व्यृद्धं पुनः समार्धयताꣳ स तादृङ्वेष्वाभवच्छ्रेयान्वा ॥५॥

12.13 ते होचुः सुत्रातं बतैनमत्रासतामिति यमनेन सर्वेण व्यृद्धं पुनः समार्धयिष्यामिति तस्मात्सौत्रामणी नाम तस्मादु सोमातिपवितमेतया याजयेयुः सर्वेण वा एष व्यृध्यते यꣳ सोमो ऽतिपवते सोमेन हि व्यृध्यते सर्वꣳ हि सोमस्तमनेन सर्वेण व्यृद्धं पुनः समर्धयति स तादृङ्वेष्वा भवति श्रेयान्वा ॥६॥

14 अथ यदेष एतया यजते नाहैवैतꣳ सोमो ऽतिपवते न केन चन व्यृध्यते सर्वाꣳस्त्वा एष यज्ञक्रतूनवरुन्द्धे सर्वा इष्टीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्ट उ वा एष यज्ञो देवकृतो यत्सौत्रामण्यनया मे ऽपीष्टमसदनयापि सूया इति तस्मात्सौत्रामण्या यजते ॥७॥

15 स यदेष आश्विनः पशुर्भवत्यश्विनौ वा एनं तदभिषज्यतां तथो वा एनमेष एतदश्विभ्यामेव भिषज्यति ॥८॥

16 अथ सारस्वतो वाग्वै सरस्वती वाचो वा एनं तदश्विनावभिषज्यतां तथो वा एनमेष एतद्वाचैव भिषज्यति ॥९॥

17 अथैन्द्र इन्द्रो यज्ञस्य देवता सा यैव यज्ञस्य देवता तयैवैनं तदश्विनावभिषज्यतां तथो वा एनमेष एतत्तयैव भिषज्यति ॥१०॥

तेषु पशुषु श्रप्यमाणेषु सिꣳहलोमानि वृकलोमानि शार्दूललोमानीत्यावपति यावतां चान्येषाꣳ श्वापदानां लोमान्यभ्याप्नोत्येतद्वै ततः समभवद्यदस्य विष्वङ् प्राणेभ्यो ऽद्रवत्तेनैवैनमेतत्समर्धयति कृत्स्नं करोति ॥११॥ 18

तदु तथा न कुर्यादुल्कया ह स न खिन्या पशूननुषुवति य एतानि पशुषु श्रप्यमाणेष्वावपति तस्मात्परिस्रुत्येवावपेत्तथा होल्कया नखिन्या पशून्नानुषुवति तथो एनं तेन समर्धयति यत्ततः समभवत्तस्मात्परिस्रुत्येवावपेत् ॥१२॥ 19

अथैतां परिस्रुतꣳ संदधाति ताꣳ सꣳहितामभिमृशत्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वेति स यथैवादो देवतायै हविर्गृह्णन्नादिशत्येव-मेवैतद्देवताया आदिशति सा यदागच्छत्यथ प्रचरति तदूह्नावग्नी भवतो नेदग्नाहुतीश्च सुराहुतीश्च सह जुहवामेत्युत्तरस्यां वेद्या उत्तरवेदिमुपकिरत्युद्धत एवेतरमुपस-माहितो भवति ॥१३॥ 20.21

अथैतां परिस्रुतमाहरन्ति तां कुशपवित्रेण पवयति पवित्रं वै मेघः कुशाः पवित्रपूतया मेध्यया प्रचराणीति ॥१४॥ 22

स पवयति वायोः पूतः पवित्रेण प्रत्यङ् सोमो अतिस्रुतः । इन्द्रस्य युज्यः सखेति तदावपति कर्कन्धुसक्तून्कुवलसक्तून्बदरसक्तूनित्येतद्वै ततः समभवद्यच्चि-र्निरष्ठीवत्तेनैवैनमेतत्समर्धयति कृत्स्नं करोति ॥१५॥

अथैतान्ग्रहान्गृह्णाति स त्रीन्वा गृह्णात्येकं वा स यद्ध त्रीन्गृह्णात्येतयैव समान्या पुरोरुचा गृह्णाति यद्युवेकं गृह्णाति विग्राहं गृह्णात्येकं त्वेव गृह्णीयादेका हि पुरोरुगेकानुवाक्यैका याज्या तस्मादेकमेव गृह्णीयात् ॥१६॥ 23

स गृह्णाति कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय । इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमउक्तिं न जग्मुः ॥ उपयामगृहीतो ऽस्याश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्ण इत्यथाहाश्विभ्याꣳ सरस्वत्या इन्द्राय सुत्राम्णे ऽनुब्रूहीति ॥१७॥ 24

सो ऽन्वाह युवꣳ सुराममाश्विना नमुचा आसुरे सचा । विपिपाना शुभस्पती इन्द्रं कर्मस्वावतमित्याश्राव्याहाश्विनौ सरस्वतीमिन्द्रꣳ सुत्रामाणं यजेति ॥१८॥ 25

स यजति पुत्रमिव पितरा अश्विनोभेन्द्रावथुः काव्यैर्दꣳसनाभिः । यत्सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णगिति वषट्कृते जुहोत्यनुवषट्कृते जुहोति ॥१९॥ 26

27 अथ शतवितृण्णं वा कुम्भमाहरन्ति नववितृण्णं वा स यद्यह शतवितृण्णो भवति शतायुर्वा अयं पुरुषः शतवीर्यः शततेजास्तस्मान्नु शतवितृण्णो यद्यु नववितृण्णो नव वा इमे पुरुषे प्राणास्तस्मान्नववितृण्णः ॥२०॥

28 तꣳ शिक्योद्युतं दक्षिणमग्निमुपर्युपरि धारयन्ति तादिमां परिशिष्टां परिस्रुतमासिञ्चति ॥२१॥

तं विश्चोतन्तमुपतिष्ठते पितृणाꣳ सोमवतां तिसृभिर्ऋग्भिः पितृणां बर्हिषदां तिसृभिर्ऋग्भिः पितृणामग्निष्वात्तानां तिसृभिर्ऋग्भिर्यत्र वा अद इन्द्रꣳ सोमो ऽत्यपवत तद्यदस्य व्यृद्धस्य पितॄनगच्छत्तूया वै पितरस्तद्देवास्यैतेन समीरयति तदाप्याययति तेनैनꣳ समर्धयति तस्मादेवमुपतिष्ठते ॥२२॥

29.30 अथैतꣳ सावित्रं द्वादशकपालं वाष्टाकपालं वा पुरोळाशं निर्वपति सविता वै देवानां प्रसविता सवितृप्रसूतौ वा एनं तदश्विनावभिषज्यतां तथो वा एनमेष एतत्सवितृप्रसूत एव भिषज्यति ॥२३॥

31 वारुणं द्वादशकपालं वरुणो वा अर्पयिता वरुणो वै तदर्पयति यदिदं किं चर्च्छति तमेवैतत्प्रीणाति स एनं प्रीतस्तेन समर्धयति येनार्पयति ॥२४॥

32 ऐन्द्रमेकादशकपालमिन्द्रो यज्ञस्य देवता सा यैव यज्ञस्य देवता तयैवैनं तदश्विनावभिषज्यतां तथो वा एनमेष एतत्तयैव भिषज्यति ॥२५॥

33 स यदि सोमातिपवितमेतया याजयेयुरिष्टा अनुयाजाः स्युरव्यूळ्हे स्रुचावथैतैर्हविर्भिः प्रचरेयुः पश्चार्द्धे सोमो ऽतिपवते जघनार्धो वा एष यज्ञस्य मेध उ वा एतद्यदेतानि हवीꣳषि तदेनमेतेन मेधसा पश्चादपिदधात्याश्विनेनो तर्हि द्विकपालेन पुरस्तात्प्रचरेयुः ॥२६॥

34.35 तदु तथा न कुर्यादध्वलति वै स यो यज्ञपथादेत्येत्यु वा एष यज्ञपथाद्य एवं करोति तस्माद्यत्रैवेतरेषां पशूनां वपाभिः प्रचरेयुस्तदेवैतैर्हविर्भिः प्रचरेयुस्तस्य नपुꣳसको गौर्दक्षिणा न वा एष स्त्री न पुमान्यन्नपुꣳसको नो वा एष सोमो न सुरा यत्परिस्रुद्यदाहास्या ग्रहान्गृह्णन्ति स यदग्नौ जुह्वति तेन न सुरा यदु न भक्षयन्ति तेन न सोमो ऽश्वा वा रथवाही सा वै न स्त्री न पुमान्यदश्वा रथवाही यदह रथं वहति तेन न स्त्री यदु स्त्री तेन नाश्वः ॥२७॥ प्रथमं ब्राह्मणम् ॥

M. V. 5. 3 K. VII. 5. 2

1 स वा एतेनाभिषेचनीयेनेष्ट्वा संवत्सरं केशान्न वपते स यत्केशान्न वपते

त्सो वा अयं वीर्यं तेज इदमपाꣳ संभृतं येनैनमेतदभिषिञ्चति तस्याभिषिक्तस्यैको ऽभिषेकः केशान्प्रथमान्गच्छति स यद्ध केशान्वपेत जिह्माꣳ हैताꣳ श्रियं विनाशयेद्व्युदुह्यात्तस्मात्केशान्न वपते ॥१॥

स वै संवत्सरं न वपते संवत्सरसंमितो हि व्रतचर्या तस्मात्संवत्सरं न वपते ऽथ खलु संवत्सर एतेन व्रतविसर्जनीयेन यजते केशवपनीयेन स एषोपयोग इति स्तोमः ॥२॥ 2

तस्यैकविꣳशं प्रातःसवनꣳ सप्तदशं माध्यंदिनꣳ सवनं पञ्चदशं तृतीयसवनꣳ सहोक्थैः सह षोळशिना सह रात्र्या त्रिवृद्राथंतरः संधिरेवमेष क्लृप्तो भवति स यदेवमेष क्लृप्तो भवत्येतं वा एष गच्छति य एष तपति यो राजसूयेन यजते तदेतां गतिं गत्वा यो ऽस्यैष जितः स्वर्गो लोक इमां प्रतिष्ठां प्रत्यवैति यावदस्येह मानुषमायुस्तस्यैतत् ॥३॥ 3

यदेकविꣳशं प्रातः सवनं भवत्येकविꣳशो वा एव य एष तपति द्वादश वै मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविꣳशः स एतेनैकविꣳशेन प्रातः सवनेनैतस्मादेकविꣳशादपयुङ्क्ते ॥४॥ 4

स सप्तदशं प्रत्यवैति सप्तदशात्पञ्चदशं पञ्चदशात्त्रिवृतमियं वै त्रिवृदियं प्रतिष्ठा तदस्यामेव प्रतिष्ठायामन्ततः प्रतितिष्ठति ॥५॥

रथंतरं पृष्ठं भवतीयं वै रथंतरमियं प्रतिष्ठा तदस्यामेव प्रतिष्ठायामन्ततः प्रतितिष्ठति ॥६॥ 5

स एतेनेष्ट्वा निवर्तयत एव केशान्न वपते यद्ध वपेतैताꣳ ह श्रियं जिह्मां विनाशयेद्व्युदुह्यात्तदात्मन्येवैतच्छ्रियं नियुङ्क्ते आत्मन्येवैतच्छ्रियं धत्ते तस्मान्निवर्तयत एव केशान्न वपते ॥७॥ 6

अथोपानद्भ्यामवचरत्युपानद्भ्यां वैवासन्दीमासन्द्या वोपानह्वा उपानद्भ्यां वा यानं यानाद्वोपानहौ सर्वꣳ ह्येष उपर्युपरि भवति यो राजसूयेन यजते ॥८॥ 7

द्वितीयं ब्राह्मणम् ॥

M. V. 5. 5

K. VII. 5. 3

वृत्रे ह वा इदꣳ सर्वमास यदृचो यद्यजूꣳषि यत्सामानि तद्ध सर्वं वृत्र एवास तमु हेन्द्रो जिघाꣳसां चकार ॥१॥ 1

स होवाचेन्द्रो विष्णुं प्रहरिष्यामि वा अहमस्मै वृत्राय वज्रमिति तस्य मे 2

त्वमनुष्ठ्यावेति तथेति होवाच प्रहर तस्य ते ऽहमनुष्ठ्यावेति तस्मा अस्मै वृत्रायेन्द्रो वज्रमुद्ययाम स हायं वृत्रो ऽस्माद्वज्रादुद्यताद्बिभयां चकार ॥२॥

3 स होवाच मा नु मे प्रहार्षीरित्यस्त्यु न्वा इदं मयि वीर्यं तन्नु ते प्रयच्छानीति तथेति तस्मै यजूꣳषि प्रायच्छत्तस्मै द्वितीयमुद्ययाम ॥३॥

4 स होवाच मा न्वेव मे प्रहार्षीरित्यस्त्यु न्वा इदं मयि वीर्यं तन्नु ते प्रयच्छानीति तथेति तस्मा ऋचः प्रायच्छत्तस्मै तृतीयमुद्ययाम ॥४॥

5.6 स होवाच मा न्वेव मे प्रहार्षीरित्यस्त्यु न्वा इदं मयि वीर्यं तन्नु ते प्रयच्छानीति तथेति तस्मै सामानि प्रायच्छदथ यो ऽस्य योनिराशय आस तमनुपरामृश्य लुलोप सैषेष्टिरभवदेषा त्रैधातवी स यदेतस्यां योनावेतस्मिन्नाशय एषा त्रयी विद्या त्रिधातुरिवाशयद्धातुश इव तस्मात्त्रैधातवी नाम तस्मादप्येतर्ह्येनया त्रय्या विद्ययैवमेव यज्ञं तन्वते यजुर्भिरेवाग्रे ऽथर्ग्भिरथ सामभिरेवꣳ ह्येनामिन्द्राय प्रायच्छत् ॥५॥

7.8 स वा एष ऐन्द्रावैष्णवो द्वादशकपालः पुरोळाशो भवतीन्द्रो हि वज्रमुदयच्छद्विष्णुरन्वतिष्ठताथ यद्द्वादशकपालो भवति द्वादश वै मासाः संवत्सरस्य संवत्सरसंमिता वा एषेष्टिस्तस्माद्द्वादशकपालो भवति ॥६॥

9 तमुभयेषां व्रीहियवानां गृह्णाति स व्रीहिमयमेवाग्रे पिण्डमधिश्रयति तद्यजुषाꣳ रूपं क्रियते ऽथ यवमयं तदृचाꣳ रूपं क्रियते ऽथ व्रीहिमयं तत्साम्नाꣳ रूपं क्रियत एवमेष योनिराशय एतस्यास्त्रय्या विद्याया रूपं क्रियते तद्यदेतद्द्विस्त्रिधात्विव भवति धातुश इव तस्मात्त्रैधातवी नाम ॥७॥

10 सैषा राजसूययाजिन उदवसानीयेष्टिः स्यात्सर्वान्वा एष यज्ञक्रतूनवरुन्द्धे सर्वा इष्टीरपि दर्विहोमान्यो राजसूयेन यजते तस्य यज्ञो यातयामेव भवति सो ऽस्मात्पराङिव भवत्येतावानु वै यज्ञो यावत्येषा त्रयी विद्यैतया हि त्रय्या विद्यया यज्ञं तन्वते तत्पुनर्यज्ञमारभते तथास्यायातयामा यज्ञो भवति तथास्मान्न पराङ् भवति ॥८॥

12 अथो यः सहस्रं दद्यात्तस्यैषोदवसानीया स्याद्रिरिचान इव वा एष एतद्भवति यः सहस्रं ददिवानेतद्वै तद्वाचः प्रजातꣳ सहस्रं यदिन्द्राविष्णू त्रेधा व्यैरयेतां यदेषा त्रयी विद्या स एतेन सहस्रेण पुनराप्यायते तथास्यायातयामा यज्ञो भवति तथास्मान्न पराङ् भवति ॥९॥

13 अथो ये दीर्घसत्त्रमासीरन्त्संवत्सरं वा भूयो वा तेषामेषोदवसानीया स्या-

त्सर्वं वै तेषामाप्तं भवति ये दीर्घसत्त्रमासते संवत्सरं वा भूयो वा सर्वमु वा एषेष्टि-स्तस्मात्तेषामेषोदवसानीया स्यात् ॥१०॥

अथो एनयाभिचरेदेतया ह वै भद्रसेनमाजातशत्रवमारुणिरभिचचार क्षिप्रं किलैनयास्तृणुतेति होवाच याज्ञवल्क्यो ऽपि वा एनयेन्द्रो वृत्रस्यास्थानमच्छिनदपि ह वा अस्यास्थानं छिनत्ति य एनयैवंविद्वानभिचरति ॥११॥

अथो एनया भिषज्येद्यं न्वेकेन वा यजुषैकया वर्चैकेन वा साम्ना भिषज्येत्तं न्वगदं कुर्यादथ किं यं त्रय्या विद्यया यथा त्रय्या विद्यया भिषज्येदेवं तत्स यदि ह्यापि गतासुरिव भवत्या हैवैनया हरति तत् ॥१२॥ 15

त्रयः शतमानाः प्रवृत्तास्ते ब्रह्मणो दक्षिणा न वै ब्रह्मा स्तुते नाश्रावयति न शꣳसत्यथ यशो न वै हिरण्यमश्नन्ति नैनेन किं चन कुर्वन्त्यथ यशास्तिस्रो धेनवो होतुर्भूमा हि तिस्रो धेनवो भूमो हि होता त्रीणि वासाꣳस्यध्वर्योस्तनुत इव ह्यध्व-र्युर्यज्ञं तन्वत इव वासाꣳसि त्रयश्चानड्वाहो वहति ह्यध्वर्युर्युक्तो वहत्यनड्वान्युक्तो गां वाजं वाग्नीधे ददाति ता वा एता द्वादश वा त्रयोदश वा दक्षिणा ददाति द्वादश वा वै त्रयोदश वा संवत्सरस्य मासाः संवत्सरो यज्ञः प्रजापतिस्तदेतं प्रत्यक्षं यज्ञं प्रजापतिमाप्त्वा तं परिगृह्य तमात्मनि कुरुते तमात्मनि धत्ते ॥१३॥ तृतीयं ब्राह्मणम् ॥ 16-19

पञ्चमो ऽध्यायः ॥ राजसूयकाण्डं समाप्तम् ॥

## DISTINCTIVE READINGS OF THE KĀṆVA TEXT OF BOOKS 8-16 ( = BOOKS 6-14 M. )

*General differences.*

1. Where the Kāṇva Saṃhitā differs from the Mādhyandina Saṃhitā, a corresponding difference is to be noted in the Brāhmaṇa also.

2. Before sibilant plus consonant in external combination, the K. recension has everywhere anunāsika, while tha M. recension has anusvāra, thus : तस्मिꣳस्ते K., तस्मिंस्ते M.

3. The Kāṇva has, instead of ड, invariably either ळ or ल. So also mostly in the Āraṇyaka, although Roer prints ड.

4. The Kāṇva generally retains visarga before initial st, sp, sk, etc.

5. Kāṇva reads mostly तृच, not ( as does M. ) त्रिच.

6. Kāṇva writes ꣳ ३, not ( as does M. ) ꣳ २.

7. Kāṇva regularly writes the yajus देवस्य त्वा…हस्ताभ्यामाददे as follows : देवस्य त्वा…हस्ताभ्यां । आददे.

*The Kāṇva readings which differ from those of the corresponding Mādhyandina passage.*

Since only the Mādhyandina text is actually published the numbers at the left of the following pages refer of course to the Mādhyandina text. Then comes the distinctive reading of the Kāṇva text. I have not thought it worth while to give the M. reading ( since this can at once be found in Weber's edition ) nor the K. reference ( since this can be found in the Tabular Concordance ).

Simple misprints of accents in Weber's edition have generally been left unnoticed.

*Distinctive readings of Kāṇva recension in M. Book 6.*

VI. 1. 1[1] तपसा ऋषꣳस्तस्मादृषयः

1[4] ससानां not ससानां; यत्सर्वस्मिन्नात्मन्नश्रयन्त तस्मादु शरीरम्

1[13]…स श्रान्तस्तेपानो मृदमसृजत सो ऽवेदन्यद्वा एतद्रूपं भूयो वै भवति श्राम्याण्येवेति स श्रान्तस्तेपानः शुष्कापमसृजत सो ऽवेदन्यद्वा एतद्रूपं भूयो वै भवति श्राम्याण्येवेति स श्रान्तस्तेपान ऊषसिकतमसृजत सो ऽवेदन्यद्वा एतद्रूपं भूयो वै भवति श्राम्याण्येवेति स श्रान्तस्तेपानः शर्करमश्मानमयो हिरण्यमोषधिवनस्पत्यसृजत

2[18]…संवत्सरः सो ऽथ या अस्य ताः पञ्च…

2[31]…यत उपस्पृश्य यजुर्वदतीति हैक आहुः…

2. 2[40]…यज्ञो भिषज्यितो ( var. भिषज्जितो ) भवतीति…

VI. 3. $1^{14}$...स्वर्गेयाय ( as the Saṃhitā )

$3^{8}$ ... निचिकीषत ( instead of निचिकीष, an error in Weber's edition ? )

$3^{11}$ ... भूमेर् instead of भूम्यै

$3^{13}$ ... अब्रुवन्किमिममभ्युत्क्रमयिष्याम इति ...

4. $4^{4}$ ... शिवो ( instead of शिखा, an error in Weber's edition ? )

$4^{8}$ ... अपां वा एष गर्भः ( instead of अपाᳬह्येष गर्भः )

$4^{18}$ ... ऽगिमादधाति सिकता

6. $1^{22}$ तानि हैक उखा°

$2^{1}$ s. f. ... वीर्यवत्तरः

$3^{9}$ s. f. ...पृतनासु सासहिः ( one of the MSS. as M. )

7. $2^{4}$...कविर्विश्वा रूपाणि ( one of the MSS. as M. )

8. $1^{14}$...दैव्यो ऽतिथिः ( दैवो a misprint of Weber's ? )

$2^{9}$...यूयाद् ( instead of युयाद् )

*Distinctive Kāṇva readings in M. Book 7.*

VII. 1. $1^{9}$...नो वा अग्निः ( instead of न वा अ° )

$1^{15}$...नो वा अस्थिषु ( instead of न वा अ° )

$1^{43}$...योना अभारुखे° ( as the Saṃhitā )

2. $1^{16}$ s. f. ...तावत्तन्नवति ( instead of तावतैव...°मपहते )

$2^{1}$... परिग्राहेण

$2^{8}$...विकृषति न पक्षपुछेष्वात्मᳬस्तदन्नं...

$2^{11}$...रथवाहणमित्येतद्धि...

$2.^{19}$...इमे चत्वारः शीर्षन्निरुक्ताः

$3^{8}$...सजोषसा अश्विनेति ( as the Saṃhitā )

$4^{17}$...पच्यते स यत्कृष्ट एव...

3. $1^{9}$...विक्रियते ऽस्माद्वेतसो...

$1^{31}$...इत्येतद्विचित्रोतयो...( cp. Ind. Stud., Vol. X, $408^{5}$ )

$1^{42}$...उत्सन्नं ( instead of उत्सन्ने )

$2^{17}$...स्याद्यदि नाश्वो ऽप्यनड्वानेव स्यादा°

$2^{17}$... °मारोहेद्यमु वा आत्मना...

4. $1^{42}$... °तदुपदधातीन्द्राग्नी उ वै सर्वे...

$2^{28}$...विराट् च हेमौ लोकौ स्वराट् च तावेतज्ज्योतिर्धारयतो नानोपदधाति...

4. $2^{24}$...विराट् च हेमौ ( instead of विराड्वहेमौ );... प्रजातिमेव ( two MSS. instead of प्रजापतिमेव )

$2^{29}$...वासन्तिका ऋतू इति ( as the Saṃhitā )

5. $1^{8}$...अपां गम्भन्त्सीदेति ( a misprint in Weber's edition )

$1^{21}$...महान्भूत्वा ( instead of महा भूत्वा )

$1^{27}$...°ञ्यैस्त्वꣳसतैषा ( a misprint in Weber's edition )

$2^{32}$...°त्सहस्राक्ष ( as the Saṃhitā )

$2^{36}$...देवतमग्रमायन्निति

*Distinctive Kāṇva readings in M. Book 8.*

II. 1. $2^{10}$...°श्चासृजन्तैतावानु वै सर्वो...

$4^{1}$...यत्प्राणान्बिभ्रति...

2. $1^{5}$...°तास्त्वा देवता...

$1^{16}$...ग्रैष्मा ऋतू इति ( as the Saṃhitā )

3. $1^{8}$ इन्द्राग्नी

$2^{5}$...वार्षिका ऋतू इति, and 6: ...शारदा ऋतू इति ( as the Saṃhitā; but in K. 7 as the Mādhyandina text )

4. $1^{10}$...स पञ्चदशाहान्या° ( omitting च )

$1^{17}$...त्रयोदश मासाः ...

$2^{2}$ sqq. ... मृत्योः before स्पृ°

$2^{8}$ s. f. पाप्मनो ( a misprint in Weber's edition )

$2^{6, 8, 9}$...वातः स्पृ°, गर्भाः स्पृ°, °दोजः स्पृ°

$2^{9}$...अदितेर्भागो ( as the Saṃhitā )

$2^{14}$...हैमन्तिका ऋतू इति ( id. )

$3^{12}$ शूद्रार्या असृज्ये° ( id. )

5. $1^{4}$...तद्यदेताभिरेतं लोक°

$1^{13}$...चितिरग्निरु ब्रह्म ( omitting वै )

7. $2^{16}$...बृहस्पतिरस्मिन्योना असीष° ( as the Saṃhitā ) ; ... अनुष्टुब्वाग्विन्द्र

*Distinctive Kāṇva readings in M. Book 9.*

XI. 1. $1^{24}$...मा भेर्मो रोङ्क्षो ( as the Saṃhitā )

2. $1^{1}$...उपवसथ्ये ऽह्नग्रा° ( thus accented; instead of उपवसथीये )

$3^{9}$...समिद्धे अग्ना अधि ( as the Saṃhitā )

$3^{10}$...श्रीमणाः ( id. )

IX. 2. $3^{20}$ अथोपातियन्तीन्द्रं...

$3^{28}$...चतुरियक्ष्यमाणा... ( thus M., as the Saṃhitā, the other MSS. read as Mādhyandina )

3. 4...वाजप्रसव्य ( thus accented throughout!, instead of °प्रसवीय )

4. $4^{3}$...युनग्मि ( one MS., as the Saṃhitā ); तेन गमेम ( omitting वयं, as the Saṃhitā )

$4^{4}$...पक्षा अजरौ ( as the Saṃhitā )

$4^{4}$...°स्यपहꣳस्यम इति यथैव यजुस्तथा बन्धुस्ताभ्यां पतेम...

$4^{18}$...एते यजुषी ( instead of एन य° )

5. $1^{18,28}$...ऊचुर् ( instead of अब्रुवन् )

$1^{47}$...कृणवाथाविर° ( one MS., as the Saṃhitā )

$1^{50}$...नो ( instead of णो, as is also the reading of the Mādhyandina Saṃhitā; a misprint of Weber's ? )

$1^{57}$...तस्मिन्दक्षिणां ददाति...( instead of दधाति, a misprint of Weber's ? )

$1^{62}$...यो न्वा इमं ( instead of यो न्वेव )

$1^{64}$...दध्यांपाति°...;...चिकीषामहा इति

$2^{14}$...वि वा मृत्ये° ( one MS., the other MSS. स्त्रि° )

*Distinctive Kāṇva readings in M. Book 10.*

X. 1. $1^{6}$ ते यदा स्तुवते यदानुशꣳसति omitted.

$4^{10}$...°रथवाहणि° both times.

3. $3^{8}$...भूत्वेळयति, with ळ most of the MSS., with ल one MS.

4. $3^{15-17}$ एकचत्वारिꣳशद°, एकसप्तति°, सप्तचत्वारिꣳशद° ( cp. K. Z. XXXI, p. 26 )

$4^{2}$...सहस्रसंवत्सरस्य ( cp. ib. p. 28 )

5. $5^{2}$...यद्य हैनं ( instead of यद्यहैनं )

*Distinctive Kāṇva readings in M. Book 11.**

XI. 4. $1^{6}$...श्मश्रूण्यौपपक्षाणि

$2^{1}$...°त्प्रतिप्रति ( instead of °प्रति° )

No other variants of any significance.

*Distinctive Kāṇva readings in M. Book 12.*

XII. 1. $3^{23}$...°र्यैथामपात्रमुदक आसिक्ते विमृत्येदेवꣳ हैव ते विमृत्येयुरु°

3. $3^{10,14}$...सहस्रसंवत्सरस्या ( cp. K. Z. XXXI, page 28 )

*See also Kāṇva recension, Kāṇḍa 3.

XII. 4. $2^{9}$...तत्र ब्रूयात्प्रासिचत ( better reading ; aorist ! )

5. $1^{18}$...प्रजिजनयिषेत्ता° ( cp. K. Z. l. c. p. 26 )

7. $2^{1}$...वावाश्चं वा ( the better reading )

$3^{9}$ वायोः पूतः पवित्रेण प्राङ् सोमो अतिद्रुत इति सोमवामिनः पुनाति (as the Saṃhitā)

$3^{10}$ वायोः पूतः पवित्रेण प्रत्यङ् सोमो अतिद्रुत इति सोमातिपूतस्य ( as the Saṃhitā )

$3^{22}$...वि मा पापेन ( instead of पाप्मना ) पृङ्क्तेति ( id. )

8. $1^{4}$...सरस्वतीमश्विना इन्द्रम° ( as the Saṃhitā )

$2^{8}$...प्रतिदर्शम° ( but some MSS. प्रती° )

$3^{8}$...क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसीति ( as the Saṃhitā )

*Distinctive Kāṇva readings in M. Book 13.*

XIII. 1. $2^{2}$...सꣳस्क्रियते ( instead of सꣳस्त्रियते )

$2^{9}$...यो ऽश्वमेधेन यजते...

$3^{5}, 6^{8}$...°त्पशोः स्क°

$3^{8}$...जुहुयात्पशु°

2. $2^{5}$ अश्विना अधो° ( as the Saṃhitā )

$2^{12}$...सꣳस्करोति...

$8^{2}$ म्रन्स्यु वा...

$8^{5}$...नैभ्यः प्राणा अपक्रामन्त्या° ( cp. Ind. Stud. vol. X, p. $409^{4}$ );...प्रोर्णवाथा...
( as the Saṃhitā )

3. $1^{4}$...प्रत्यदध्युर्युश्चतुष्टो°

$4^{5}$...आयास्या ( instead of आयस्यो )

$6^{4}$...होतऽयांरे...

4. $1^{15}$...पृथन्वत्यन्या ( cp. K. Z. vol. XXXI, page 26 )

$2^{2}$...यज्ञवसमृद्धो...

$2^{13}$...प्रमीये ( instead of प्रमियै )...; त्रिष्टुभौ भवत इन्द्रियं वै...

$2^{16}$...तयन्न ( instead of तयंन )...; पराङ्वेदꣳ ( instead of परागे° )

5. $2^{2}$... °पनिपातयन्त्य° ; ... संप्रोर्णवन्ति; प्रोर्णवाथा°

6. $1^{11}$... °मे च लोकाः सं° ( a misprint of Weber's )

7. $1^{1}$ s.f. ...सर्वेषां भूतानाꣳ श्रैष्ठ्यꣳ...

8. $1^{1}$ अथास्मै कल्याणं कुर्वन्ति omitted.

$1^{5}$... °स्त्क्तीनि ताः श्मशानानि...

XIII. 8. $1^{10}$ s. f. ...करवाणीति

$1^{15}$ s. f. ...तद्वद्धं ( instead of तद्बद्धं ), but 8. $3^{10}$ तद्वद्ध beside तद्वद्धं

$1^{19}$... °सृष्टाभिः स्प°

$2^{6}$...जघनार्धेन दक्षिणाग्रे°...

$3^{2}$...अथैनं निर्वपति...

$4^{8}$...प्रतरता सखायः ( with the Saṃhitā )

$4^{9}$...चारु गव्यं ( rightly ! )

$4^{10}$...पुराण्यासन्दी...

*Distinctive Kāṇva readings in M. Book 14.*

**XIV. 1. $1^{11}$...वीरो ऽपादिति...**

$1^{14}$s. f. ...यदिदं किं चादन्ति ( probably better )

$1^{20}$ s. f. ...भवतीति

$1^{23}$...वेदेतमभिष्टीवानीति

$2^{2}$...कृष्णाजिने संभरति ( rightly, cp. VI. 4. $1^{6}$; Eggeling's translation of th passage S. B. E. XLIV, should be corrected accordingly and his note on page 448 cancelled )

$2^{5}$...समभवद्यज्ञो वै विकङ्कतो यज्ञेनैवैं°

$2^{10}$...वम्रिय ( accent uncertain; instead of वम्र्य, with the Saṃhitā )

$2^{11}$...इयत्यग्र आसीरिति° ( perhaps a Saṃhitā difference )

$2^{12}$...पूयन्निवाशयत and ( the second time)°वाशयत

$2^{13}$...स्नौषीदिति ( instead of स्तौषीदिति; the K. reading undoubtedly th better one ); अथ यदेनमिन्द्र ओजसा...

$2^{14}$...पाङ्क्ताः पशवः ( instead of पाङ्क्तः पशुः )

$2^{17}$...शीर्ष्णो इत्यसावेव बन्धुरथ प्रयौति मखाय त्वा मखस्य त्वा शीर्ष्णे इत्यसावेव बन्धुर मृत्पिण्डमपादाय...

$2^{21}$...एतदकुर्वन्यथा...( instead of °कुर्वत यथा )

$3^{12}$...after आसादयति follows: उत्तरो वै प्रजा तस्मादुत्तरत आसादयति ॥

$3^{19}$...°रेवात्मन्धत्ते तथो ह स सर्वमायुरेति

$3^{27}$...तदिदं क्षत्रं विशा परि°...

$3^{33, 34}$...विद्याद्यथा त्वेव रुचितः स्यात्तथा धवितव्यमथैत°

$4^{16}$ s. f. ...योषा पत्नी मिथुनेनैवैनमेतत्प्रजननेन समर्धयति कृत्स्नं करोति

2. 1 Kaṇḍikā 3 is preceded by 4.

XIV. 2. 1[7]...गौरथोष्वैराह्वयति ( the better reading ! );...असावेहि, thrice.

1[8]...इन्द्रस्य प्रिया पत्न्यसावेतस्या उष्णीषो...; तदाह तमेवास्या एतत्करोति

1[9] अथ वत्सग्रुपार्जति पूषासीत्ययं वै पूषा यो ऽयं पवत एष वा इदंॅ सर्वं पुष्यति यदिदं किं च वर्षत्येष वा एतासां प्रप्यायिता तस्मादाह पूषासीति ॥

1[11, 19] अश्विनावेवैतदाह omitted.

1[18]...गोः क्षीरमा° ( thus accented ! )

2[1]...नाष्ट्रा रक्षांॅसि ( instead of र° ना° ); एवैष ( instead of एवैनमेष )

2. 2[2, 3] s. f. ...स्वाहेति

2[8] s. f. ...एवमस्यैष उद्धार ऋते देवेभ्यः

2[13] ( init. )...महावीरे प्रत्यानयति ( cp. Kaṇḍikā 40 )

2[16]...सर्वान् ( instead of विश्वान्, with the Saṃhitā )

2[19] अथ ब्रह्मामन्त्रयते...

2[23]...नमस्करोति ( instead of निह्नुते )

2[27]...वृष्ट्यै पिन्वस्वेत्येवैतदाह...

2[28]...यजमानस्योर्ध्वो वा एष एतत्पिन्वित्वाथ यां दिशं...

2[46]...सर्वस्येव ( instead of सर्वस्मा इव )

2[47]...सर्वमेष सर्ववेदसे प्रवृञ्ज्यात्सर्वं वै सर्ववेदसंॅ सर्वमेष वाजपेये राजसूये प्रवृञ्ज्यात्सर्वंॅ हि तत्सत्त्रे प्रवृञ्ज्यात्सर्वं वै सत्त्रंॅ सर्वमेष विश्वजिति सर्वपृष्ठे प्रवृञ्ज्यात्सर्वं वै विश्वजित्सर्वपृष्ठः सर्वमेष एतान्यस्य प्रवर्जनान्यतो नान्यत्र ॥

3. 1[12]...तस्माष्ट्रा एवैतद्र°

1[21] s. f. त्रीणि...°श्वेतद्दधाति omitted.

1[27] अथ चात्वाले ऽप उपस्पृशति सुमित्रिया न आप ओषधयः सन्त्वित्ति यावद्वा एतेन प्रचरन्त्यापश्च ( thus accented ! ) ह वा अस्मात्तावदोषधयश्चापक्रम्येव तिष्ठन्ति ( thus accented ) तदु ताभिर्मित्रधेयं कुरुते दुर्मित्रास्तस्मै etc.

1[28] s. f. ...तेजो मयि धेहीत्यग्निमेवैतया समिन्धे स एनंॅ समिद्धस्तेजसा समिन्धे

2[16] s. f. त्रयोदशैता आहुतीर्जुहोति...;...संवत्सरो वै प्रजापतिः

2[2, 18-20]...यत्किं चिद्विवृल्हं ( instead of यत्किं च वि° )

——:o:——

The distinctive readings of the Āraṇyaka are not given here, as both recensions are accessible ( the Mādhyandina in Weber's edition, the Kāṇva in the Bibliotheca Indica ). A few remarks may here suffice. The Kāṇva text in Röer's

edition has throughout the *ḍ* in such words as *ṣoḍaśa* etc., whilst the MSS. present as often as not the *ḷ*. A curious point may be noticed in XIV. 9. 1. 12–16 ( M. ), where in the Kāṇva recension the ablative *āhutyai* occurs as against *āhuteḥ* of the Mādhyandinas. There, then, the roles of the two Śākhās ( see Introduction, chapter III, section 23a ) seem to be reversed. Also see footnote 1 in section 3, chapter IV of the Introduction.



The Śatapatha Brāhmaṇa in the Kāṇvīya Recension

DR. W. CALAND
DR. RAGHU VIRA



The Yajus Saṃhitā, one of the four main divisions of the Saṃhitā literature consists of sacrificial formulas, chiefly in prose, and is designed for the use of the Adhvaryu priest and his assistants who perform the manual part of the sacrifice, muttering mantras during each act of the appropriate formula. The author of the Mahābhāṣya records that Yajus had one hundred and one recensions. Of the two main divisions of the Yajus into Śukla (White) and Kṛṣṇa (Black), the Śukla Yajurveda, known as the Vājasaneyi Saṃhitā has two recensions : that of the Mādhyandinas and that of the Kāṇvas. The Vājasaneyi Saṃhitā possesses a single Brāhmaṇa (a theological treatise) named Śatapatha which has come down to us in two recensions, one of the Mādhyandinas and another of the Kāṇvas.

The present treatise contains in Nāgarī script the text of the first [illegible]ven Kāṇḍas of the Śatapatha Brāhmaṇa [illegible] the Kāṇ[illegible]a recension which run paral[illegible] to the [illegible] five Kāṇḍas of the Mādh[illegible]ndina recen[illegible] sion and which differ cons[illegible]erably from each other. For the rema[illegible]ing Kāṇḍas of the Brāhmaṇa, there bei[illegible] no marked difference, the editor has [illegible]ven only [illegible] list of the distinctive rea[illegible]ngs of th[illegible] Kāṇva text.

The text as presented here is divide[illegible] into seven Kāṇḍas viz. (1) Ekapāt, [illegible] Haviryajña, (3) Uddhāri, (4) Adhva[illegible] (5) Graha, (6) Vājapeya and (7) R[illegible] sūya.

Apart from the Text, collated from [illegible] MSS. the book contains an exhaus[illegible] and critical Introduction which consi[illegible] of 102 pages and is divided into five cha[illegible] ters. Ch. I deals with the Vedic liter[illegible] ture and the Kāṇvīya Śatapatha Brāh[illegible] maṇa. Ch. II describes the MSS. of th[illegible] Kāṇvīya Śatapatha Brāhmaṇa. Ch. I[illegible] notices the Grammatical peculiarities in[illegible] cluding accentuation, phonology, mo[illegible] phology, lexicography and Syntax of th[illegible] Kāṇva recension. Ch. IV observes the relation of the Kāṇva books 1-7 to the Mādhyandina text 1-5 as well as to the Black Yajurveda and other texts. Ch. V examines the remaining book which the Kāṇvas possess in common with the Mādhyandinas. It is followed by a Tabular concordance of the distinctive readings of the Kāṇva text.

ISBN : 0 89581 972 4

Rs. : 200 (Cloth)
150 (Paper)